अर्धं हरति कामिन्याः शक्तिबुद्धिप्रतापिनी ।
असद्वृत्तिश्च मूढानां हन्त्यायुषमहर्निशम् ॥ १७३ ॥

आयु बिजली के समान चञ्चल है । इस अज्ञान से भला किसे धैर्य हो सकता है । अधिक से अधिक वह सौ वर्ष तक जीता है । उसमें भी उसकी आधी आयु निद्रा में बीत जाती है । ताप उत्पन्न करने वाली कामिनी में आसक्त बुद्धि उसकी आधी आयु ले बीतती है । इतना ही नहीं, उसकी असद्वृत्ति दिन रात उसके आयु को नष्ट करने में लगी रहती है ॥ १७२-१७३ ॥

बाल्यरोगजरादुःखैः सर्वं [१] तदपि निष्फलम् ।
स्त्रीपुत्रपितृमात्रादिसम्बन्धः केन हेतुना ॥ १७४ ॥
दुःखमूलो हि संसारः स यस्यास्ति स दुःखितः ।
अस्य त्यागः कृतो येन स सुखी नात्र संशयः ॥ १७५ ॥

इस प्रकार कभी अज्ञान से, कभी रोग से और कभी बुढ़ापे के दुःख से उसकी सारी आयु बीत जाती है । उससे वह कुछ भी फल नहीं प्राप्त करता । स्त्री, पुत्र, पिता एवं मातादि का सम्बन्ध किस कारण करना चाहिये, जब संसार दुःख का मूल ही है । इसलिये जो अपने हृदय में संसार को बसाता है वह दुःखी है । जिसने इस संसार का त्याग कर दिया, वही सुखी है, इसमें संशय नहीं है ॥ १७४-१७५ ॥

सुखदुःखपरित्यागी [२] कर्मणा किं न लभ्यते ।
लोकाचारभयार्थं हि यः करोति क्रियाविधिम् ॥ १७६ ॥
ब्रह्मज्ञाताहमखिले [३] ये जपन्ति निरादराः ।
सांसारिकसुखासक्तं ब्रह्मज्ञोस्मीति वादिनम् ॥ १७७ ॥
त्यजेत् तं सततं धीरश्चाण्डालमिव दूरतः ।

सुख दुःख का परित्याग कर देने वाला महापुरुष अपने कर्म से क्या नहीं प्राप्त कर लेता । जो लोकाचार के भय से सांसारिक कार्य करता रहता है और बिना श्रद्धा के अपने को इस संसार में ब्रह्म का ज्ञाता मानता है और सांसारिक सुख में आसक्त होकर भी अपने को 'ब्रह्मज्ञोऽस्मि' ऐसा मानता है धैर्यवानपुरुष को उसे सदैव चाण्डाल के समान दूर से ही त्याग कर देना चाहिये ॥ १७६-१७८ ॥

गृहारण्यसमालोके गतव्रीडा दिगम्बराः ॥ १७८ ॥
चरन्ति गर्दभाद्याश्च व्रतिनस्ते भवन्ति किम् ।
तृणपर्णोदकाहाराः सततं वनवासिनः ॥ १७९ ॥
हरिणादिमृगाश्चैव तापसास्ते भवन्ति किम् ।

घर में अथवा अरण्य में निर्लज्ज नङ्गे गर्दभादि चरते रहते हैं तो क्या उससे वे व्रती

---

१. वर्जम्—क० । २. सुखदुःखपरित्यागः कर्मणा केन लभ्यते—क० ।
३. ब्रह्मज्ञाताहमात्मानं ये वदन्ति निरादाराः—क० ।

कहे जा सकते हैं ? वन में रह कर निरन्तर तृण और पत्ते का आहार करने वाले हरिणादि जङ्गली जीव क्या तपस्वी कहे जा सकते हैं ? ॥ १७८-१७९ ॥

**शीतवातातपसहा भक्ष्याभक्ष्यसमा अपि ॥ १८० ॥**
**चरन्ति शूकराद्याश्च व्रतिनस्ते भवन्ति किम् ।**

शीत, वात और घाम सहने वाले तथा भक्ष्याभक्ष्य को समान समझने वाले शूकर आदि चरते रहते हैं क्या उससे वे व्रती कहे जायेंगे ? ॥ १८०-१८१ ॥

**आकाशे पक्षिणः सर्वे भूतप्रेतादयोऽपि च ॥ १८१ ॥**
**चरन्ति रात्रिगाः सर्वे खेचराः किं महेश्वराः ।**

आकाश में सभी पक्षी उड़ते रहते हैं भूत प्रेतादि भी आकाश मार्ग से चलते रहते हैं तो क्या रात्रि में गमन करने वाले ये सभी खेचर महेश्वर कहे जायँगे ? ॥ १८१-१८२ ॥

**आजन्ममरणान्तञ्च गङ्गादितटनीस्थिताः ॥ १८२ ॥**
**मण्डूकमत्स्यप्रमुखा व्रतिनस्ते भवन्ति किम् ।**
**एतज्ज्ञाननिविष्टाङ्गाः यदि गच्छन्ति पण्डिताः ॥ १८३ ॥**
**तथापि कर्मदोषेण नरकस्था भवन्ति हि ।**
**कौटिल्यालससंसर्गवर्जिता [1] ये भवन्ति हि ॥ १८४ ॥**
**प्राप्नुवन्ति मम स्थानं मम भक्तिपरायणाः ।**

जन्म से ले कर मरण पर्यन्त गङ्गादि सुरसरितों में रहने वाले मण्डूक एवं मत्स्यादि प्रमुख जन्तु क्या व्रती कहे जायेंगे ? इस प्रकार के ज्ञान का विवेचन कर यदि पण्डित जन अज्ञ बने हुए हैं, तो भी कर्म के दोष से उनके हाथ कुछ नहीं लगता और वे अन्ततः नरकगामी ही होते हैं । किन्तु कुटिलता, आलस्य और संसर्ग दोषों को छोड़कर जो मेरी भक्ति में लगे रहते हैं, वे मेरा स्थान प्राप्त कर लेते हैं ॥ १८२-१८५ ॥

**ऊर्द्ध्वं व्रजन्ति भूतानि शरीरमतिवाहिकम् ॥ १८५ ॥**
**निजदेहाभिशापेन नानारूपो भवेन्नरः ।**
**शरीरजैः कर्मदोषैर्याति स्थावरतां [2] नरः ॥ १८६ ॥**
**इह दुश्चरितैः केचित् केचित् पूर्वकृतैस्तथा ।**
**प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्ययम् ॥ १८७ ॥**

ऐसे तो सारे प्राणी अतिवाहिक शरीर धारण कर ऊपर जाते ही हैं । क्योंकि अपने देह के कर्मानुसार मनुष्य नाना रूप में जन्म लेता है । ( शरीर से होने वाले कर्म से कोई जीव दुष्ट गति प्राप्त करता है ) । किसी का दुश्चरित्र इस जन्म का होता है तो किसी का पूर्वजन्म का होता है । ( पूर्वजन्म का ) दुरात्मा मनुष्य जन्म में भी रूपविपर्यय ( कुरूपता ) प्राप्त करता है ॥ १८६-१८७ ॥

---

१. कौटिल्यं च अलससंसर्गश्चेति द्वन्द्वः, ताभ्यां वर्जिता इत्यर्थः ।

२. याति दुष्टाङ्कतिं नरः—ख० ।

गुरुपादविहीना ये ते नश्यन्ति ममाज्ञया ।
गुरुर्मूलं[१] हि मन्त्राणां गुरुर्मूलं परन्तपः ॥१८८॥
गुरोः प्रसादमात्रेण सिद्धिरेव न संशयः ।

जो गुरुचरणकृपा से रहित हैं वे मेरी आज्ञा से विनष्ट हो जाते हैं । वस्तुतः गुरुचरणपादुका नष्ट होने से रक्षा करती है अतः गुरुचरणसेवा सबसे बड़ा तप है । गुरु के प्रसन्न होने मात्र से सारी सिद्धि प्राप्त हो जाती है इसमें संशय नहीं ॥ १८८-१८९ ॥

अहं गुरुरहं देवो मन्त्रार्थोऽस्मि न संशयः ॥१८९॥
भेदका नरकं यान्ति नानाशास्त्रार्थवर्जिताः ।
सर्वासामेव विद्यानां दीक्षा मूलं यथा प्रभो ॥१९०॥
गुरुमूलस्वतन्त्रस्य गुरुरात्मा न संशयः ।

मैं ही गुरु हूँ, मैं ही देव हूँ, मैं ही मन्त्रार्थ हूँ, नाना शास्त्रों के अर्थ को न जानने वाले जो लोग इनमें भिन्न बुद्धि रखते हैं वे नरक में पड़ते हैं । हे प्रभो ! सभी विद्याओं की प्राप्ति का मूल जैसे दीक्षा है, वैसे ही स्वतन्त्र का मूल गुरु है किं बहुना गुरु ही आत्मा है इसमें संशय नहीं ॥ १८९-१९१ ॥

आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥१९१॥
आत्मना क्रियते कर्म भावसिद्धिस्तदा भवेत् ।
हीनाङ्गी कपटी रोगी बह्वाशी[२] शीलवर्जितः ॥१९२॥
मय्युपासनमास्थाय[३] उपविद्यां सदाभ्यसेत् ।
धनं धान्यं सुतं वित्तं राज्यं ब्राह्मणभोजनम् ॥१९३॥
शुभार्थं सम्प्रयोक्तव्यं नान्यचिन्ता वृथाफलम् ।
नित्यश्राद्धरतो मर्त्यो धर्मशीलो नरोत्तमः ॥१९४॥

अपनी ही आत्मा अपना बन्धु है और अपनी ही आत्मा अपना शत्रु है । अपने द्वारा जिस कर्म को जिस भाव से किया जाता है उसी भाव से सिद्धि मिलती है । चाहे हीनाङ्ग, कपटी, रोगी एवं बहुभोजी तथा शीलरहित ही साधक क्यों न हो मेरी उपासना करते हुये उसे उपविद्या का अभ्यास करते रहना चाहिये । धन, धान्य, सुत, वित्त, राज्य तथा ब्राह्मण भोजन अपने कल्याण के लिये प्रयुक्त करना चाहिये । अन्य की चिन्ता नहीं करनी चाहिये क्योंकी वह निष्फल है । नित्यश्राद्ध करने वाला धर्मशील मनुष्य सभी मनुष्यों में श्रेष्ठ है ॥ १९१-१९४ ॥

महीपालः प्रियाचारः पीठभ्रमणतत्परः ।
पीठे पीठे महाविद्यादर्शनं यदि लभ्यते ॥१९५॥
तदा तस्य करे सर्वाः सिद्धयोऽव्यक्तमण्डलाः ।
अकस्माज्जायते सिद्धिर्महामायाप्रसादतः ॥१९६॥

---

१. गुरुस्थलीहतत्राणां गुरुर्मूलं परन्तपः—क० ।

२. बहु अश्नाति तच्छीलः । ३. ममोपासनम्—क० ।

पवित्र आचरण वाला, मेरे सिद्धपीठों में भ्रमण करने वाला महीपाल यदि मेरे उन उन पीठों में जाकर मेरा दर्शन करे, तो अव्यक्त ( सूक्ष्म ) मण्डल में रहने वाली समस्त सिद्धियाँ उसके हस्तगत हो जाती हैं, क्योंकि महामाया के प्रसन्न होने पर अकस्मात् सिद्धि प्राप्त हो जाती है ॥ १९५-१९६ ॥

**महावीरो महाधीरो दिव्यभावस्थितोऽपि वा ।**
**अथवा पशुभावस्थो मन्त्रपीठं विवासयेत् ॥ १९७ ॥**
**क्रियायाः फलदं प्रोक्तं भावत्रयमनोरमम् ।**
**तथा च युगभावेन दिव्यवीरेण भैरव ॥ १९८ ॥**

**भाव प्रशंसा**—अथवा, महावीरभाव में अथवा महाधीर साधक को दिव्यभाव में स्थित होने से सिद्धि मिलती है, अथवा पशुभाव में स्थित मन्त्रज्ञ साधक मुझे अपने हृदयरूपी पीठ में निवास करावे तब सिद्धि प्राप्त होती है । मनोरमभावत्रय ( पशुभाव, वीरभाव और दिव्यभाव ) ही क्रिया को सफल बनाते हैं, अथवा, हे भैरव ! दिव्यभाव और वीरभाव भी क्रिया को फलवती बनाते हैं ॥ १९७-१९८ ॥

**प्रपश्यन्ति महावीराः पशवो हीनजातयः ।**
**न पश्यन्ति कलियुगे शास्त्राभिभूतचेतसः ॥ १९९ ॥**
**अपि वर्षसहस्रेण शास्त्रान्तं नैव गच्छति ।**
**तर्काद्यनेकशास्त्राणि अल्पायुर्विघ्नकोटयः ॥ २०० ॥**

हीन जाति में उत्पन्न पशुभाव वाले तथा वीर भाव वाले मुझे प्राप्त करते हैं । किन्तु शास्त्रों से अभिभूत चित्त वाले इस कलियुग में मेरा दर्शन नहीं प्राप्त कर सकते । कोई हजारों वर्ष पर्यन्त लगे रहने पर भी शास्त्रों का अन्त नहीं प्राप्त कर सकता । एक तो तर्कादि अनेक शास्त्र हैं और अपेक्षाकृत मनुष्य की आयु अत्यन्त स्वल्प है तथा उसमें भी करोड़ों विघ्न हैं ॥ १९९-२०० ॥

**तस्मात् सारं विजानीयात् क्षीरं हंस इवाम्भसि ।**
**कलौ च दिव्यवीराभ्यां नित्यं तद्गतचेतसः ॥ २०१ ॥**
**महाभक्ताः प्रपश्यन्ति महाविद्यापरं पदम् ।**

इस कारण जिस प्रकार हंस जल में से क्षीर को अलग कर लेता है उसी प्रकार शास्त्रों के सार का ज्ञान कर लेना चाहिए । इस घोर कलियुग में दिव्य और वीरभाव के सहारे अपने चित्त का महाविद्या में लगाये हुये मेरे महाभक्त महाविद्या के परम पद का दर्शन कर लेते हैं ॥ २०१-२०२ ॥

**साधवो मौनशीलाश्च[१] सदा साधनतत्पराः ॥ २०२ ॥**
**दिव्यवीरस्वभावेन पश्यन्ति मत्पदाम्बुजम् ।**
**भावद्वयं ब्राह्मणानां [२]महासत्फलकाङ्क्षिणाम् ॥ २०३ ॥**

---

१. मुनेर्भवो मौनम्, मौनं शीलं येषां ते ।
२. मोक्षसत्फलकांक्षिणाम्—क० ।

**अथवा चावधूतानां भावद्वयमुदाहृतम् ।**
**भावद्वयप्रभावेण महायोगी भवेन्नरः ॥ २०४ ॥**
**मूर्खोऽपि वाक्पतिः श्रेष्ठो भावद्वयप्रसादतः ।**

मौन धारण करने वाले सर्वदा साधन में लगे हुये सज्जन दिव्य और वीरभाव के स्वभाव से मेरे चरण कमलों का दर्शन कर लेते हैं । बहुत बड़े उत्तम फल की आकांछा रखने वाले ब्राह्मणों को दो भाव ग्राह्य है अथवा अवधूतों के लिये भी दो ही भाव कहे गये हैं । इन दो भाव के प्रभाव से साधक मनुष्य महायोगी हो जाता है । किं बहुना, भाव द्वय को सिद्ध कर लेने पर मूर्ख भी वाचस्पति हो जाता है ॥ २०२-२०५ ॥

**ये जानन्ति महादेव मम तन्त्रार्थसाधनम् ॥ २०५ ॥**
**भावद्वयं हि वर्णानां ते रुद्रा नात्र संशयः ।**
**भावुको भक्तियोगेन्द्रः सर्वभावज्ञसाधनः ॥ २०६ ॥**
**उन्मत्तजडवन्नित्यं निजतन्त्रार्थपारगः ।**

हे महादेव ! जो तन्त्रार्थ से सिद्ध किये गये सभी वर्णों के लिए विहित दो भाव को जानते हैं, वे साक्षात् रुद्र हैं, इसमें संशय नहीं । भावद्वय सभी भावज्ञों का साधन है । भाव को जानने वाले साधक भक्तियोग के इन्द्र हैं वे अपने तन्त्रार्थ के पारदर्शी होते हैं । नित्य उन्मत्त और जड़ के समान बने रहते हैं ॥ २०५-२०७ ॥

**वृक्षो वहति पुष्पाणि गन्धं जानाति नासिका ॥ २०७ ॥**
**पठन्ति सर्वशास्त्राणि दुर्लभा भावबोधकाः ।**
**प्रज्ञाहीनस्य पठनमन्धस्यादर्शदर्शनम् ॥ २०८ ॥**
**प्रज्ञावतो धर्मशास्त्रं बन्धनायोपकल्पते ।**

( जो भाव नहीं जानते वे इस प्रकार हैं ) जैसे वृक्ष फूल धारण करता है किन्तु उसकी गन्ध नासिका ही जानती है । इसी प्रकार तत्त्वशास्त्र के पढ़ने वाले तो बहुत हैं पर भाव के जानकार कोई कोई होते हैं । जिस प्रकार बुद्धिहीन की पढ़ाई और अन्धे को आदर्श ( दर्पण ) का दर्शन, व्यर्थ होता है उसी प्रकार प्रज्ञावानों को भी धर्मशास्त्र का ज्ञान बन्धन का कारण हो जाता है ॥ २०७-२०९ ॥

**तत्त्वमीदृगिति भवेदिति शास्त्रार्थनिश्चयः ॥ २०९ ॥**
**अहं कर्ताऽहमात्मा च सर्वव्यापी निराकुलः ।**
**मनसेति स्वभावञ्च चिन्तयत्यपि वाक्पतिः ॥ २१० ॥**

यह तत्त्व इस प्रकार हो सकता है यही शास्त्रार्थ का निश्चयज्ञान है । इस प्रकार वाक्पति अपने मन से मैं कर्त्ता हूँ, मैं आत्मा हूँ, मैं सर्वव्यापी हूँ इस प्रकार के स्वभाव की चिन्ता करते हैं ॥ २०९-२१० ॥

**सौदामिनीतेजसो वा सहस्रवर्षकं[१] यदा ।**

---

१. सौदामिनी तेजसा वा सहस्तचषकं यथा—क० ।

प्रपश्यति महाज्ञानी एकचन्द्रं सहस्रकम् ॥ २११ ॥
कोटिवर्षशतेनापि यत्फलं लभते नरः ।
एकक्षणमङ्घ्रिरजो [१] ध्यात्वा तत्फलमश्नुते ॥ २१२ ॥

जब सौदामनी के समान ( क्षणिक ) तेज से युक्त शास्त्र ज्ञानी एक सहस्रवर्ष पर्यन्त देखता है तभी ( तन्त्रवेत्ता एवं भावज्ञ ) महाज्ञानी एक चन्द्र को सहस्र चन्द्र के समान देखता है । करोड़ों वर्ष तक इस प्रकार तपस्या करने से मनुष्य जो फल प्राप्त करता है वह सभी फल मेरे चरणों के रज का एक क्षण मात्र ध्यान करने से उसे प्राप्त हो जाता है ॥ २११-२१२ ॥

विचरेद्यदि सर्वत्र केवलानन्दवर्धनम् ।
कामरूपं महापीठं त्रिकोणाधारतैजसम् ॥ २१३ ॥
जलबुद्बुद्शब्दान्तमनन्तमङ्गलात्मकम् ।
स भवेन्मम दासेन्द्रो गणेशगुहवत्प्रियः [२] ॥ २१४ ॥

यदि कोई आनन्द बढ़ाने वाले एवं त्रिकोण के आधार में ( कुण्डलिनी ) स्थित तेज वाले मेरे कामरूप पीठ में, जहाँ जल के बुद्बुद के समान शब्द होता है तथा जो अनन्त मङ्गलात्मक है, वहाँ सर्वत्र विचरण करे तो वह गणेश और कार्त्तिकेय के समान मेरा प्रिय बन कर मेरा दास हो जाता है और भक्तों में इन्द्र बन जाता है ॥ २१३-२१४ ॥

कंकालाख्या—साट्टहासा—विकटाक्षोपपीठकम् ।
विचरेत् साधकश्रेष्ठो मत्पादाब्जं यदीच्छति ॥ २१५ ॥
ज्वालामुखीमहापीठं मम प्रियमतर्कवित् ।
यो भ्रमेन्मम तुष्ट्यर्थं स योगी भवति ध्रुवम् ॥ २१६ ॥

यदि कोई साधक मेरे चरणकमलों को प्राप्त करना चाहता है तो साट्टहास एवं विकटाक्ष रूप उपपीठ, जिसका नाम कङ्काल है वहाँ पर विचरण करे । ज्वालामुखी नाम का महापीठ मेरा अत्यन्त प्रिय है जो मेरी संतुष्टि के लिये वहाँ भ्रमण करता है वह निश्चय ही योगी हो जाता है ॥ २१५-२१६ ॥

भावद्वयादिनिकरं ज्वालामुख्यादिपीठकम् ।
भ्रमन्ति ये साधकेन्द्रास्ते सिद्धा नात्र संशयः ॥ २१७ ॥
भावात् परतरं नास्ति त्रैलोक्यसिद्धिमिच्छताम् ।
भावो हि परमं ज्ञानं ब्रह्मज्ञानमनुत्तमम् ॥ २१८ ॥

दोनों भावों का खान रूप ज्वालामुख्यादिपीठ में जो साधकेन्द्र भ्रमण करते हैं वे अवश्य ही सभी साधकों में श्रेष्ठ एवं सिद्ध हो जाते हैं इसमें संशय नहीं । त्रैलोक्य की सिद्धि चाहने वालों के लिये भाव से बढ़ कर और कोई पदार्थ नहीं क्योंकि भाव ही परमज्ञान और सर्वोत्तम ब्रह्मज्ञान है ॥ २१७-२१८ ॥

---

१. एकक्षणमदङ्घ्रिरजो—क० ।
२. गणेशश्च गुहश्च ताभ्यां तुल्यः । गुहः = कार्तिकेयः । सूतवत्प्रियः—क० ।

कोटिकन्याप्रदानेन वाराणस्यां शताटनैः ।
किं कुरुक्षेत्रगमने यदि भावो न लभ्यते ॥ २१९ ॥
गयायां श्राद्धदानेन नानापीठाटनेन किम् ।
नानाहोमैः क्रियाभिः किं यदि भावो न लभ्यते ॥ २२० ॥
भावेन ज्ञानमुत्पन्नं ज्ञानान्मोक्षमवाप्नुयात् ।

यदि भाव का ज्ञान नहीं हुआ तो करोड़ों कन्या दान से किं वा वाराणसी की सौ बार परिक्रमा से अथवा कुरुक्षेत्र में यात्रा करने से क्या लाभ ? भावद्वयज्ञान के बिना गया में श्राद्ध एवं दान से या अनेक पीठों में भ्रमण करने से भी कोई लाभ नहीं । बहुत क्या कहें, यदि भाव ज्ञान नहीं हुआ तो अनेक प्रकार के होम और क्रिया से भी क्या ? भाव से ज्ञान उत्पन्न होता है । ज्ञान होने पर मोक्ष की प्राप्ति होती है ॥ २१९-२२१ ॥

आत्मनो [१] मनसा देव्यागुरोरीश्वरमुच्यते [२] ॥ २२१ ॥
ध्यानं संयोजनं प्रोक्तं मोक्षमात्ममनोलयम् ।

**गुरु महिमा**—आत्मा से, मन से एवं वाणी से गुरु ईश्वर कहा जाता है । ध्यान ही सायुज्य है और मन को लय कर देना 'मोक्ष' कहा जाता है ॥ २२१-२२२ ॥

गुरोः प्रसादमात्रेण शक्तितोषो महान् भवेत् ॥ २२२ ॥
शक्तिसन्तोषमात्रेण मोक्षमाप्नोति साधकः ।
गुरुमूलं जगत्सर्वं गुरुमूलं परन्तपः ॥ २२३ ॥
गुरोः प्रसादमात्रेण मोक्षमाप्नोति सद्वशी ।

गुरु की प्रसन्नता मात्र से यहाँ ( कुण्डलिनी ) शक्ति अत्यन्त संतुष्ट हो जाती है और जब साधक पर शक्ति संतुष्ट हो जाती है तो उसे 'मोक्ष' अवश्य प्राप्त हो जाता है ॥ २२२-२२३ ॥

इस सारे संसार का मूल गुरु है । समस्त तपस्याओं का मूल गुरु है । उत्तम और जितेन्द्रिय साधक गुरु के प्रसन्न होने मात्र से मोक्ष प्राप्त कर लेता है ॥ २२३-२२४ ॥

न लङ्घयेद् गुरोराज्ञामुत्तरं न वदेत् तथा ॥ २२४ ॥
दिवारात्रौ गुरोराज्ञां दासवत् परिपालयेत् ।
उक्तानुक्तेषु [३] कार्येषु नोपेक्षां कारयेद् बुधः ॥ २२५ ॥

इसलिये साधक गुरु की आज्ञा का कभी उल्लंघन न करे तथा उनका उत्तर न दे । दिन रात दास के समान गुरु की आज्ञा का पालन करे । बुद्धिमान साधक उनके कहे गये अथवा बिना कहे कार्यों की उपेक्षा न करे ॥ २२४-२२५ ॥

गच्छतः प्रयतो गच्छेद् गुरोराज्ञां न लङ्घयेत् ।
न शृणोति गुरोर्वाक्यं शृणुयाद् वा पराङ्मुखः ॥ २२६ ॥

---

१. आत्मना मनसा वाचा गुरावीश्वर उच्यते—ख० ।
२. सन्मते—क० । ३. उक्तानि च अनुक्तानि च, उक्तानुक्तानि तेषु ।

**अहितं वा हितं वापि रौरवं नरकं व्रजेत् ।**
**आज्ञाभङ्गं गुरोर्दैवाद् यः करोति विबुद्धिमान् ॥ २२७ ॥**
**प्रयाति नरकं घोरं शूकरत्वमवाप्नुयात् ।**

उनके चलते रहने पर स्वयं भी नम्रतापूर्वक उनका अनुगमन करे और उनकी आज्ञा का कभी उल्लंघन न करे । जो गुरु की अहितकारी अथवा हितकारी बात नहीं सुनता अथवा सुन कर अपना मुंह फेर लेता है वह रौरव नरक में जाता है । दैवात् यदि बुद्धिरहित पुरुष अपने गुरु की आज्ञा का उल्लंघन करता है वह घोर नरक में जाता है और शूकर योनि प्राप्त करता है ॥ २२६-२२८ ॥

**आज्ञाभङ्गं तथा निन्दां गुरोरप्रियवर्तनम् ॥ २२८ ॥**
**गुरुद्रोहञ्च यः कुर्यात् तत्संसर्गं न कारयेत् ।**
**गुरुद्रव्याभिलाषी [1] च गुरुस्त्रीगमनानि च ॥ २२९ ॥**
**पातकञ्च भवेत् तस्य प्रायश्चित्तं न कारयेत् ।**
**गुरुं दुष्कृत्य [2] रिपुवन्निर्हरेत् परिवादतः ॥ २३० ॥**
**अरण्ये निर्जने देशे स भवेद् ब्रह्मराक्षसः ।**

जो गुरु की आज्ञा का उल्लङ्घन, गुरुनिन्दा, गुरु को चिढ़ाने वाला, अप्रिय व्यवहार तथा गुरुद्रोह करता है उसका संसर्ग कभी नहीं करना चाहिये । जो गुरु के द्रव्य को चाहता है, गुरु की स्त्री के साथ सङ्गम करता है उसे बहुत बड़ा पाप लगता है अतः उसका कोई प्रायश्चित्त नहीं है । जो निन्दा के द्वारा गुरु का शत्रुवत् अहित करता है वह अरण्य में एवं निर्जन स्थान में ब्रह्मराक्षस होता है ॥ २२८-२३१ ॥

**पादुकाम् आसनं वस्त्रं शयनं भूषणानि च ॥ २३१ ॥**
**दृष्ट्वा गुरुं नमस्कृत्य आत्मभोगं न कारयेत् ।**
**सदा च पादुकामन्त्रं जिह्वाग्रे यस्य वर्तते ॥ २३२ ॥**
**अनायासेन धर्मार्थकाममोक्षं लभेन्नरः ।**
**श्रीगुरोश्चरणाम्भोजं [3] ध्यायेच्चैव सदैव तम् ॥ २३३ ॥**
**भक्तये मुक्तये वीरं नान्यभक्तं ततोऽधिकम् ।**

गुरु का खड़ाऊँ, आच्छादन, वस्त्र, शयन तथा उनके आभूषण देखकर उन्हे नमस्कार करे और अपने कार्य में कभी भी उसका उपयोग न करे । जिस मनुष्य के जिह्वा के अग्रभाग में सदैव गुरुपादुका मन्त्र विद्यमान रहता है वह अनायास ही धर्म, अर्थ, काम और मोक्ष को प्राप्त कर लेता है । शिष्य को अपने भोग तथा मोक्ष के लिये गुरु के चरण कमलों का सदैव ध्यान करना चाहिये । हे वीर भैरव! उससे बढ़ कर अन्य कोई भक्ति नहीं है ॥ २३१-२३४ ॥

---

१. गुरोर्द्रव्यं गुरुद्रव्यम्, तद् अभिलषति तच्छीलः ।
२. गुरुं हुँकृत्य रिपुवन्निर्गत्य परिवादतः—क० ।
३. चरणौ अम्भोजमिव, उपमितं व्याघ्रादिभिरिति समासः ।

एकग्रामे स्थितः शिष्यो गत्वा तत्सन्निधिं[१] सदा ॥ २३४ ॥
एकदेशे स्थितः शिष्यो गत्वा तत्सन्निधिं[२] सदा ।
सप्तयोजनविस्तीर्णं मासैकं प्रणमेद् गुरुम् ॥ २३५ ॥

यदि शिष्य और गुरु एक ही ग्राम में निवास करते हों तो शिष्य को चाहिये कि वह तीनों संध्या में जाकर अपने गुरु को प्रणाम करे । यदि एक ही देश में गुरु और शिष्य के निवास में सात योजन का अन्तर हो तो शिष्य को महीने में एक बार जा कर उन्हें प्रणाम करना चाहिये ॥ २३४-२३५ ॥

श्रीगुरोश्चरणाम्भोजं यस्यां दिशि विराजते ।
तस्यां दिशि नमस्कुर्यात् कायेन मनसा धिया ॥ २३६ ॥
विद्याङ्गमासनं मन्त्रं मुद्रां तन्त्रादिकं प्रभो ।
सर्वं गुरुमुखाल्लब्ध्वा सफलं नान्यथा भवेत् ॥ २३७ ॥

श्री गुरु का चरण कमल जिस दिशा में विद्यमान हो उस दिशा में शरीर से ( दण्डवत् प्रणाम द्वारा ), मन से तथा बुद्धि से नमस्कार करे । हे प्रभो ! वेदाङ्गादि विद्या, पद्मासनादि आसन, मन्त्र, मुद्रा और तन्त्रादि ये सभी गुरु के मुख से प्राप्त होने पर सफल होते हैं अन्यथा नहीं ॥ २३६-२३७ ॥

कम्बले कोमले वापि प्रासादे संस्थिते तथा ।
दीर्घकाष्ठेऽथवा पृष्ठे गुरुञ्चैकासनं त्यजेत् ॥ २३८ ॥
श्रीगुरोः पादुकामन्त्रं मूलमन्त्रं स्वपादुकाम् ।
शिष्याय नैव देवेश प्रवदेद् यस्य कस्यचित् ॥ २३९ ॥

कम्बल पर, कोमल स्थान ( चारपाई आदि ) पर, प्रासाद पर, दीर्घ काष्ठ पर अथवा किसी की पीठ पर गुरु के साथ एव आसन पर न बैठे । हे देवेश ! श्री गुरु का पादुका मन्त्र, उनका दिया हुआ मूल मन्त्र और अपना पादुका मन्त्र जिस किसी के शिष्य को नहीं बताना चाहिये ॥ २३८-२३९ ॥

यद् यदात्महितं वस्तु तद्द्रव्यं नैव वञ्चयेत् ।
गुरोर्लब्ध्वा एकवर्णं तस्य तस्यापि सुव्रत ॥ २४० ॥
भक्ष्यं वित्तानुसारेण गुरुमुद्दिश्य यत्कृतम् ।
स्वल्पैरपि महत्तुल्यं भुवनाद्यं दरिद्रताम् ॥ २४१ ॥
सर्वस्वमपि यो दद्याद् गुरुभक्तिविवर्जितः ।
नरकान्तमवाप्नोति भक्तिरेव हि कारणम् ॥ २४२ ॥

जो अपनी हित में आने वाली वस्तु हो उसे न दे कर गुरु को कदापि प्रवञ्चित नहीं

---

१. त्रिसन्धिं प्रणमेत् गुरुम्—क० ।

२. सन्निधिं मुदा—क० ।

करना चाहिये । हे सुव्रत ! न केवल दीक्षागुरु को, किन्तु जिससे एक अक्षर का भी ज्ञान किया हो उसको भी प्रवञ्चित न करे । गुरु के उद्देश्य से अपने वित्तानुसार जो भक्ष्य निर्माण किया जाता है उसका स्वल्पभाग भी बहुत महान् होता है । किन्तु जो गुरु की भक्ति से विवर्जित भुवनादि, किं बहुना, सर्वस्व भी प्रदान करे तो वह दरिद्रता और नरक प्राप्त करता है क्योंकि दान में भक्ति ही कारण है ॥ ३४०-२४२ ॥

**गुरुभक्त्या च शक्रत्वमभक्त्या शूकरो भवेत् ।**
**गुरुभक्तः[1] परं नास्ति भक्तिशास्त्रेषु सर्वतः ॥ २४३ ॥**
**गुरुपूजां विना नाथ कोटिपुण्यं वृथा[2] भवेत् ॥ २४४ ॥**

**॥ इति [3]श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सर्वविद्यानुष्ठाने सिद्धिमन्त्रप्रकरणे भैरवीभैरवसंवादे प्रथमः पटलः ॥ १ ॥**



गुरु में भक्ति रखने से ऐन्द्र ( महेन्द्र ) पद तथा भक्ति न रखने से शूकरत्व प्राप्त होता है । सभी जगह भक्तिशास्त्र में गुरु भक्ति से बढ़ कर और कोई उत्कृष्ट नहीं है । हे नाथ ! गुरु पूजा के बिना करोड़ों पुण्य व्यर्थ हो जाते हैं इसलिये गुरुभक्ति करनी चाहिये ॥ २४३-२४४ ॥

**॥ श्री रुद्रयामल के उत्तरतन्त्र में महातन्त्रोद्दीपन के भावप्रश्नार्थबोधनिर्णय में सर्वविद्या-अनुष्ठान में सिद्धमन्त्र प्रकरण में भैरवीभैरव संवाद के प्रथम पटल की डॉ॰ सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ १ ॥**



---

१. विद्याङ्गं शासनम्—क० । २. कोटिपुण्यं वृथाचयम्—क० ।

३. अतः सर्वजने ख्यातं गुरुणा सिद्धिमाप्नुयात् ।
गुरुस्त्रीपुत्रबन्धूनां दोषं नैव प्रकाशयेत् ॥
भक्षयेन्नैव तद्द्रव्यं दत्तं नैव परित्यजेत् ।—क० अधिकः पाठः ।

# अथ द्वितीय: पटल:

भैरवी उवाच

अथात: सम्प्रवक्ष्यामि सर्वदर्शनविद्यया ।
सर्वज्ञ परमानन्दो दयाबीज भयङ्कर ॥ १ ॥
शृणुष्वैकमना:[१] शम्भो कुलाचारविधिं शृणु ।
पशूनां व्रतभङ्गादौ विधिं प्रथमत: प्रभो ॥ २ ॥

**भैरवी ने कहा**—हे सर्वज्ञ ! हे परमानन्द ! हे दयामय ! हे भयङ्कर ! अब मैं इसके बाद सर्वदर्शन की विद्या से युक्त कुलाचार की विधि कहती हूँ । हे शम्भो ! उसे सावधान चित्त हो कर श्रवण कीजिए । हे प्रभो ! सर्वप्रथम पशुभाव के व्रत में विघ्न पड़ने पर जिस विधान का पालन करना चाहिए उसे सुनिए ॥ १-२ ॥

व्रतभङ्गे नित्यभङ्गे नित्यपूजादिकर्मणि ।
सहस्रं प्रजपेन्मन्त्री व्रतदोषोपशान्तये ॥ ३ ॥
नित्यश्राद्धं तथा सन्ध्यावन्दनं पितृतर्पणम् ।
देवतादर्शनं पीठदर्शनं तीर्थदर्शनम् ॥ ४ ॥
गुरोराज्ञापालनञ्च देवतानित्यपूजनम् ।
पशुभावस्थितो मर्त्यो महासिद्धिं लभेद् ध्रुवम् ॥ ५ ॥

**कुलाचारविधि**—नियम के भङ्ग में, नित्यकर्म में तथा नित्य पूजा में बाधा पड़ने पर मन्त्रज्ञ साधक को व्रत दोष की शान्ति के लिए एक सहस्र जप करना चाहिए ऐसे नित्य श्राद्ध सन्ध्यावन्दन पितृ तर्पण देवता दर्शन पीठदर्शन, तीर्थदर्शन, गुरु की आज्ञा का पालन, इष्टदेव का नित्य पूजन करने वाला पशुभाव में स्थित मनुष्य निश्चय ही महासिद्धि प्राप्त करता है ॥ ३-५ ॥

पशूनां प्रथमो भावो वीरस्य वीरभावनम् ।
दिव्यानां दिव्यभावस्तु तेषां भावास्त्रय: स्मृता: ॥ ६ ॥
स्वकुलाचारहीनो य: साधक: स्थिरमानस: ।
निष्फलार्थी[२] भवेत् क्षिप्रं कुलाचारप्रभावत: ॥ ७ ॥

पशुओं के लिए प्रथम पशुभाव, वीरों के लिए वीरभाव तथा दिव्य साधकों के लिए दिव्यभाव इस प्रकार तीन भाव कहे गए हैं । जो साधक स्वकुलाचार से हीन किन्तु स्थिर चित्त है वह शीघ्र ही कुलाचार के प्रभाव से निष्फल अर्थ वाला हो जाता है ॥ ६-७ ॥

---

१. एकमेकविषयकं मनो यस्य स: ।  २. निष्फलमर्थयते तच्छील: ।

भैरव उवाच

केनोपायेन भगवतीचरणाम्भोजदर्शनम् ।
प्राप्नोति पद्मवदने पशुभावस्थितो नरः ॥ ८ ॥
तत्प्रकारं सुविस्तार्य कथ्यतां कुलकामिनि ।
यदि भक्तिर्दृढा मेऽस्ति यदि स्नेहोऽस्ति मां प्रति ॥ ९ ॥

**भैरव ने कहा**—हे कमलमुखि ! हे कुलकामिनि ! पशुभाव में स्थित मनुष्य को किस प्रकार भगवती के चरण कमलों का दर्शन प्राप्त होता है ? यदि आपके प्रति मेरी दृढ़ भक्ति तथा मेरे प्रति आपका स्नेह है तो उसका प्रकार अर्थात् उसकी विधि विस्तारपूर्वक मुझसे कहिए ॥ ८-९ ॥

महाभैरवी उवाच

प्रभाते च समुत्थाय अरुणोदयकालतः ।
निशाष्टदण्डपर्यन्तं पशूनां भाव ईरितः ॥ १० ॥
प्रातः [1]शय्यादिकं कृत्वा पुनः शय्यास्थितः पशुः ।
गुरुं सञ्चिन्तयेच्छीर्षाम्भोजे साहस्रके दले ॥ ११ ॥

**पशुभाव—महाभैरवी ने कहा**—प्रातः काल में उठने पर अरुणोदयकाल से पूर्व ८ दण्ड रात्रिपर्यन्त पशुभाव का समय कहा गया है । प्रातःकालिक नित्य क्रिया के पश्चात् पशुभाव में संस्थित साधक पुनः शय्या पर बैठकर अपने शिरःकमल में स्थित सहस्रार दल में अपने गुरु का इस प्रकार ध्यान करे ॥ १०-११ ॥

**विमर्श**—अष्टदण्ड—प्रायः ब्राह्ममुहूर्त का समय । ४ से ६ बजे तक का काल ।

तरुणादित्यसङ्काशं तेजोबिम्बं महागुरुम् ।
अनन्तानन्तमहिमासागरं शशिशेखरम् ॥ १२ ॥
महाशुभ्रं भासुराङ्गं द्विनेत्रं द्विभुजं विभुम् ।
आत्मोपलब्धिविषमं तेजसा शुक्लवाससम् ॥ १३ ॥

**गुरुध्यान**—मध्याह्न कालीन सूर्य के समान तेजो बिम्ब वाले, महा महिमा के सागर, अपने मस्तक पर चन्द्रमा को धारण किए हुए महागुरु शङ्कर का ध्यान करे । अत्यन्त स्वच्छ, देदीप्यमान अङ्ग वाले, दो नेत्र तथा दो भुजाओं वाले, सर्वव्यापक, आत्मतत्त्व का साक्षात्कार करने में अद्वितीय, महातेजस्वी शुक्लाम्बर विभूषित गुरु का ध्यान करे ॥ १२-१३ ॥

आज्ञाचक्रोद्‌र्ध्वनिकरं कारणं जगतां मुखम् ।
धर्मार्थकाममोक्षाङ्गं वराभयकरं विभुम् ॥ १४ ॥

आज्ञाचक्र से ऊपर विराजमान, जगत् के मुख्य कारण, धर्म, अर्थ, काम और मोक्ष इस प्रकार पुरुषार्थ चतुष्टय रूप अङ्ग वाले, हाथ में वर और अभयमुद्रा धारण करने वाले श्री गुरु का ध्यान करे ॥ १४ ॥

---

१. प्रातः क्रियादिकं कृत्वा—क० ।

प्रफुल्लकमलारूढं सर्वज्ञं जगदीश्वरम् ।
अन्तःप्रकाशचपलं वनमालाविभूषितम् ॥ १५ ॥
रत्नालङ्कारभूषाढ्यं देवदेवं सदा भजेत् ।
अन्तर्यागक्रमेणैव पद्मपुष्पैः समर्चयेत् ॥ १६ ॥

विकसित कमल पर आरूढ़, सर्वज्ञ, जगदीश्वर, अन्तः प्रकाश से देदीप्यमान वनमाला से विभूषित, रत्ननिर्मित अलङ्कार से भूषित इस प्रकार के देवाधिदेव गुरु का सदा भजन करे । तदनन्तर अन्तर्याग क्रम ( मानसोपचारों ) से कमल पुष्पों द्वारा उनकी अर्चना करे ॥ १५-१६ ॥

एकान्तभक्त्या प्रणमेदायुरारोग्यवृद्धये ।
अथ मध्ये जपेन्मन्त्रमाद्यन्तप्रणवेन च ॥ १७ ॥
मध्ये वाग्भवमायोज्य गुरुनाम ततः परम् ।
आनन्दनाथशब्दान्ते गुरुं ङेऽन्तं समुद्धरेत् ॥ १८ ॥
नमः शब्दं ततो ब्रूयात् प्रणवं सर्वसिद्धिदम् ।
महागुरोर्मनुं जप्त्वा सर्वसिद्धीश्वरो भवेत् ॥ १९ ॥

फिर अपने आयु और आरोग्य की वृद्धि के लिए एकमना भक्ति युक्त हो कर उन्हें प्रणाम करे । इसके बाद आद्यन्त प्रणव लगाकर मध्य में वाग्भव ( ऐं ), फिर गुरु का नाम, फिर आनन्दनाथ शब्द के अन्त में गुरु शब्द की चतुर्थी, तदनन्तर 'नमः' शब्द लगाकर सर्वसिद्धि प्रणव का उच्चारण करे । इस प्रकार महान् सिद्धि देने वाले गुरु मन्त्र का जप करने से साधक संपूर्ण सिद्धियों का स्वामी बन जाता है ॥ १७-१९ ॥

**विमर्श**—जैसे किसी के गुरु का नाम सदाशिव है तो मन्त्र का स्वरूप इस प्रकार जानना चाहिए—ॐ ऐं सदाशिव आनन्दनाथगुरवे नमः ॐ ।

वाक्सिद्धिर्वदनाम्भोजे[१] गुरुमन्त्रप्रभावतः ।
शतमष्टोत्तरं नित्यं सहस्रं वा तथाष्टकम् ॥ २० ॥
प्रजप्यार्पणमाकृत्य प्राणायामत्रयञ्चरेत् ।
वाग्भवेन ततः कुर्यात् प्राणायामविधिं मुदा ॥ २१ ॥
अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ २२ ॥

इस गुरुमन्त्र के जप के प्रभाव से साधक के मुख कमल में वाक्सिद्धि हो जाती है । उसकी विधि इस प्रकार है, नित्य १०८ बार अथवा १००८ बार इस मन्त्र का जप कर गुरु को जप निवेदित करे । फिर वाग्भव ( ऐं ) मन्त्र से प्राणायाम में कही गई विधि के अनुसार तीन प्राणायाम करे । तदनन्तर इस प्रकार प्रार्थना करे—

चराचर में व्याप्त रहने वाले और अखण्ड मण्डल स्वरूप वाले ( जो ब्रह्म है उस ) तत्पद ( ब्रह्म ) के स्थान का जिसने दर्शन कराया उन श्री गुरु को हमारा नमस्कार है ॥ २०-२२ ॥

---

१. वदत्यनेनेति वदनं मुखम्, तद् अम्भोजं कमलमिव इति वदनाम्भोजम्, तत्र ।

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ २३ ॥
देवतायाः दर्शनस्य कारणं करुणानिधिम् ।
सर्वसिद्धिप्रदातारं श्रीगुरुं प्रणमाम्यहम् ॥ २४ ॥

जिन्होने अपनी ज्ञानाञ्जन की शलाका से अज्ञान रूपी अन्धकार से अन्धे लोगों के चक्षु में प्रकाश दे कर उसे खोल दिया है उन गुरु को नमस्कार है । जो देवता के दर्शन में एक मात्र कारण तथा करुणा के निधान हैं, सब प्रकार की सिद्धि प्रदान करने वाले उन श्री गुरु को मैं प्रणाम करता हूँ ॥ २३-२४ ॥

वराभयकरं नित्यं श्वेतपद्मनिवासिनम् ।
महाभयनिहन्तारं गुरुदेवं नमाम्यहम् ॥ २५ ॥
महाज्ञानाच्छापिताङ्गं नराकारं वरप्रदम् ।
चतुर्वर्गप्रदातारं[1] स्थूलसूक्ष्मद्वयान्वितम् ॥ २६ ॥

अपने हाथों में वर और अभय मुद्रा धारण किए हुए, श्वेत पद्मासन पर आसीन तथा महाभय ( अहङ्कार ) का विनाश करने वाले एवं नित्य ऐसे गुरुदेव को मैं नमस्कार करता हूँ । जिनका एक एक श्री अङ्ग महान् ज्ञान से आच्छादित है, जो मात्र आकृति से ही मनुष्य हैं, न केवल वरदाता किन्तु चतुवर्ग के भी प्रदाता हैं ॥ २५-२६ ॥

सदानन्दमयं देवं नित्यानन्दं निरञ्जनम् ।
शुद्धसत्त्वमयं सर्वं नित्यकालं कुलेश्वरम् ॥ २७ ॥
ब्रह्मरन्ध्रे महापद्मे तेजोबिम्बे निराकुले ।
योगिभिर्ध्यानगम्ये च चक्रे शुक्ले विराजिते ॥ २८ ॥
सहस्रदलसङ्काशे कर्णिकामध्यमध्यके ।
महाशुक्लभासुरार्ककोटिकोटिमहौजसम् ॥ २९ ॥
सर्वपीठस्थममलं परं हंसं परात्परम् ।
वेदोद्धारकरं नित्यं काम्यकर्मफलप्रदम् ॥ ३० ॥
सदा मनःशक्तिमायालयस्थानं पदद्वयम् ।
शरज्ज्योत्स्नाजालमालाभिरिन्दुकोटिवन्मुखम्[2] ॥ ३१ ॥

स्थूल और सूक्ष्म दोनों प्रकारों में विद्यमान, सदानन्दमय, नित्यानन्द, निरञ्जन, शुद्ध सत्त्व गुण से युक्त साधकों के लिए सर्वत्र और नित्य काल अर्थात् कुलेश्वर हैं । ब्रह्मरन्ध्र महामद्म में योगियों के द्वारा ध्यानगम्य, अत्यन्त निराकुल, तेजोबिम्ब स्वरूप श्वेताकार महा पद्मरूप शुक्ल चक्र जिसमें सहस्रदल है उसकी कर्णिका के मध्य भाग में विराजित महाशुक्ल, भासमान, करोड़ों सूर्य के समान प्रभा वाले, स्वच्छ पीठ पर आसीन, परात्पर

१. चत्त्वारो वर्गा धर्मार्थकाममोक्षाख्याः, तेषां प्रदातारम् ।
२. शोभेन्दुकोटिवन्मुखम्—क० ।

वेदोद्धारकर्ता, नित्यस्वरूप, काम्य कर्मों का फल देने वाले, परमहंस स्वरूप, जिनके दोनों चरण कमल मन की शक्ति तथा माया के विलय के स्थान हैं तथा जिनका मुख शरच्चन्द्रिका के रश्मिजाल समूहों वाले करोडों चन्द्रविम्बों के समान हैं ॥ २६-३१ ॥

**वाञ्छातिरिक्तदातारं सर्वसिद्धीश्वरं गुरुम् ।**
**भजामि तन्मयो भूत्वा तं हंसमण्डलोपरि ॥ ३२ ॥**
**आत्मानं च निराकारं साकारं ब्रह्मरूपिणम् ।**
**महाविद्यामहामन्त्रदातारं परमेश्वरम् ॥ ३३ ॥**
**सर्वसिद्धिप्रदातारं गुरुदेवं नमाम्यहम् ।**

जो वाञ्छा से भी अतिरिक्त फल देने वाले तथा सभी सिद्धियों के ईश्वर हैं, इस प्रकार के हंस मण्डल के ऊपर विराजमान श्री गुरु का मैं एकाग्रचित्त से भजन करता हूँ । जो आत्मस्वरूप, निराकार, साकार ब्रह्म के स्वरूप, महाविद्या, महामन्त्र के प्रदाता हैं, परमेश्वर हैं, समस्त सिद्धियों को देने वाले हैं—ऐसे गुरुदेव को मैं नमस्कार करता हूँ ॥ ३२-३४ ॥

**कायेन मनसा वाचा ये नमन्ति निरन्तरम् ॥ ३४ ॥**
**अवश्यं श्रीगुरोः पादाम्भोरुहे ते वसन्ति हि ।**
**प्रभाते कोटिपुण्यञ्च प्राप्नोति साधकोत्तमः ॥ ३५ ॥**
**मध्याह्ने दशलक्षञ्च सायाह्ने कोटिपुण्यदम् ।**

जो साधक अपने श्री गुरु के चरण कमलों में काय, मन और वाणी से निरन्तर नमन करते हैं वे श्रीगुरु के उन चरण कमलों में अवश्य ही निवास करते हैं । उत्तम साधक को प्रभात में नमस्कार करने से करोड़ों गुना पुण्य, मध्याह्न में दश लक्ष गुना पुण्य तथा सायङ्काल में नमस्कार करने से करोड़ों गुना फल प्राप्त होता है ॥ ३४-३६ ॥

**प्रातःकाले पठेत् स्तोत्रं ध्यानं [1] वा सुसमाहितः ॥ ३६ ॥**
**तदा सिद्धिमवाप्नोति नात्र कार्या विचारणा ॥ ३७ ॥**

जो लोग प्रातःकाल में एकाग्रचित्त हो कर निम्न गुरुस्तोत्र का पाठ करते हैं अथवा उनका ध्यान करते हैं, वे अवश्य ही सिद्धि प्राप्त करते हैं । साधक को इसमें विचार की आवश्यकता नहीं है ॥ ३६-३७ ॥

**शिरसि [2] सितपङ्कजे तरुणकोटिचन्द्रप्रभं**
**वराभयकराम्बुजं सकलदेवतारूपिणम् ।**
**भजामि वरदं गुरुं किरणचारुशोभाकुलं**
**प्रकाशितपदद्वयाम्बुजमलक्तकोटिप्रभम् ॥ ३८ ॥**

**गुरुस्तोत्र**—शिरःप्रदेश में श्वेत कमल पर पूर्णमासी के करोड़ों चन्द्रमा के समान प्रकाशमान, हाथ में वर और अभय की मुद्रा से युक्त करकमल वाले, सर्वदेव स्वरूप, वरदाता,

---

१. ध्यानन्याससमन्वितः—क० । २. ओं शिवः स्थितसुपङ्कजे—क० ।

जिनके दोनों चरण कमल करोड़ों अलक्तक प्रभा के समान ( अरुणिम हुए से ) प्रकाशित हैं ऐसे मनोहर किरणों की शोभा से व्याप्त श्री गुरुदेव का मैं भजन करता हूँ ॥ ३८ ॥

**जगद्भयनिवारणं भुवनभोगमोक्षप्रदम्**
**गुरोः पादयुगाम्बुजं जयति यत्र योगे जयम् ।**
**भजामि परमं गुरुं नयनपद्ममध्यस्थितं**
**भवाब्धिभयनाशनं [1]शमनरोगकायक्षयम् ॥ ३९ ॥**

संसार के सम्पूर्ण भय को दूर करने वाले, इस लोक के समस्त भोग तथा परलोक में मोक्ष देने वाले, जिसके मिल जाने पर जय की प्राप्ति होती है, इस प्रकार के परम गुरु के दोनों चरण कमलों का मैं भजन करता हूँ, जो नेत्र कमलों के मध्य में स्थित हैं, संसार समुद्र के भय को नाश करने वाले हैं तथा रोगों को शान्त करने वाले एवं शरीर की क्षीणता को दूर करने वाले हैं ॥ ३९ ॥

**प्रकाशितसुपङ्कजे मृदुलषोडशाख्ये प्रभुं**
**परापरगुरुं भजे सकलबाह्यभोगप्रदम् ।**
**विशालनयनाम्बुजद्वयतडित्प्रभामण्डलं**
**कडारमणिपाटलेन्दुबिन्दुबिन्दुकम् ॥ ४० ॥**

अत्यन्त कोमल षोडश दल नाम वाले, विकसित पङ्कज पर विराजमान प्रभु एवं समस्त बाह्य भोग संपादन करने वाले श्रेष्ठ गुरु का मैं भजन करता हूँ । जिनके दोनों विशाल नेत्र कमलों से विद्युत्प्रभापुञ्ज इस प्रकार निर्गत हो रहा है मानो पीले वर्ण के मणियों के समूहरूपी चन्द्रमा से चिनगारी के कण प्रकाशित हो रहे हों उन गुरु का मैं भजन करता हूँ ॥ ४० ॥

**चलाचलकलेवरं प्रचपलदले द्वादशे**
**महौजसमुमापतेर्विगतदक्षभागे हृदि ।**
**प्रभाकरशतोज्ज्वलं सुविमलेन्दुकोट्याननं**
**भजामि परमेष्ठिनं गुरुमतीव वारोज्ज्वलम् [2] ॥ ४१ ॥**

उमापति शङ्कर के दक्षिण भाग में हृदय पर विराजमान, हिलते हुए द्वादश कमल पर चलाचल कलेवर वाले परमेष्ठी गुरु का मैं भजन करता हूँ । जो हमारी गति तथा हमारे आलम्बन हैं जिनका मुख सैकड़ो सूर्य के समान उज्ज्वल तथा स्वच्छ, करोड़ों चन्द्रमा के समान मनोहर तथा अत्यन्त तेजस्वी रूप से विराजमान हैं उन गुरु का मैं भजन करता हूँ ॥ ४१ ॥

**गुर्वाद्यञ्च शुभं मदननिदहनं हेममञ्जरीसारं**
**नानाशब्दाद्[3]भुताह्लादितपरिजनाच्चारुचक्रत्रिभङ्गम् [4] ।**

---

१. शमनयोगकामक्षयम्—क० । रोगश्च कायक्षयश्च रोगकायक्षयौ, शमनं रोगकायक्षययोर्येन तम् । २. गुरुगतिवरालोम्बनम्—मु० ।
३. नानाशब्दैः अद्भुतमाह्लादितो यः परिजनस्तस्मात् ।
४. चक्रादिभङ्गम्—क० ।

**नित्यं ध्यायेत् प्रभाते अरुणशतघटाशोभनं योगगम्यं**
**नाभौ पद्मेऽतिकान्ते दशदलमणिभे भाव्यते योगिभिर्यत् ॥ ४२ ॥**

नाभि स्थान में मणि के समान चमकीले द्वादश पत्र वाले, कमल पर योगीजन जिनका ध्यान करते हैं, प्रभात में सैकड़ों अरुणघटा के समान लाल वर्ण से सुशोभित, योगगम्य उस तेज का ध्यान करना चाहिए जो सुवर्ण निर्मित मञ्जीर का सार, काम को भस्म करने वाला, अपने अद्भुत शब्दों से परिजनों को आह्लाद उत्पन्न करने के कारण अत्यन्त मनोहर, वक्र तथा तीन भंगियो वाला है उस कल्याणकारी आदि गुरु ( शङ्कर ) को मेरा नमस्कार है ॥ ४२ ॥

**या माता मयदानवादिस्वभुजा निर्वाणसीमापुरे**
**स्वाधिष्ठाननिकेतने रसदले वैकुण्ठमूले मया ।**
**जन्मोद्धारविकारसुप्रहरिणी [1] वेदप्रभा भाव्यते**
**कन्दर्पार्पितशान्तियोनिजननी विष्णुप्रिया शाङ्करी ॥ ४३ ॥**

**स्वाधिष्ठान** में स्थित ६ पत्तों वाले कमल पर अधिष्ठित तथा वैकुण्ठमूल में मय दानवादि के द्वारा अपनी भुजा से निर्मित, निर्वाण, सीमापुर में निवास करने वाली, जो माता जीवों को जन्म से उद्धार करती है, उनके विकारों को नष्ट करती हैं, वेद प्रभा के समान भासमान, कन्दर्प के द्वारा समर्पित, अतिशान्ति की योनि, सबकी माता, सबका कल्याण करने वाली एवं विष्णु प्रिया हैं, उन ( महालक्ष्मी स्वरूपा ) देवी को नमस्कार है ॥ ४३ ॥

**या [2]भाषाननकुण्डली कुलपथाच्छामाभशोभाकरी**
**मूले पद्मचतुर्दले कुलवती निःश्वासदेशाश्रिता ।**
**साक्षात्काङ्क्षितकल्पवृक्ष[3]लतिका [4]सूद्भाषयन्ती प्रिया**
**नित्या योगिभयापहा विषहरा गुर्वम्बिका भाव्यते ॥ ४४ ॥**

**मूलाधार** में चतुर्दल पद्म पर अधिष्ठित, कुल में निवास करने वाली, निःश्वास देश में समाश्रित, जिसका मुख कुण्डली ( सर्पिणी ) के समान भासमान है, जो कुल पथ में अत्यन्त प्रकाश से शोभा करने वाली तथा वाञ्छा की कल्पलतिका है, नित्या तथा योगी जनों के भय को दूर करने वाली, विषहारिणी एवं श्रेष्ठ अम्बिका के रूप में ध्यान गम्य है उन उमा को नमस्कार है ॥ ४४ ॥

**ऊद्ध्वाम्भोरुहनिःसृतामृतघटी मोदोद्वलाप्लाविता**
**गुर्वास्या परिपातु सूक्ष्मपथगा तेजोमयी भास्वती ।**
**सूक्ष्मा साधनगोचरामृतमयी मूलादिशीर्षाम्बुजे**
**पूर्णा चेतसि भाव्यते भुवि कदा माता सदोद्धर्वामगा [5] ॥ ४५ ॥**

जो मूलाधार से शीर्षस्थ सहस्रदल कमल पर्यन्त ऊपर की ओर रहने वाले कमल से

---

१. घोरहरिणी—क० । २. ताम्रानन—क० ।
३. साक्षात् काङ्क्षितो यः कल्पवृक्षः ( शिवः ) तत्र लतिका इवेत्यर्थः ।
४. सुप्ता स्वयम्भू प्रिया—क० । ५. सदोर्ध्वाङ्गमा—क०, सदावामगा—ख० ।

उत्पन्न, अमृतमय कलश से आमोदातिरेक पूर्वक आप्लावित हैं वो गुरुमुखी देवी हमारी रक्षा करें। जो सुषुम्ना रूप सूक्ष्मपथ से चलने वाली, तेजोमयी, भासमान होती हैं, जो अत्यन्त सूक्ष्म योगसाधन से गोचरा एवं अमृतमयी है, ऐसी परम सुन्दरी मातृभूता पराम्बा कब चेतनापुरी की भूमि में हमारे द्वारा ध्यातव्य होंगी ? ॥ ४५ ॥

**स्थितिपालनयोगेन ध्यानेन पूजनेन वा ।**
**यः पठेत् प्रत्यहं व्याप्य[1] स देवो न तु मानुषः ॥ ४६ ॥**

**गुरुस्तव की फलश्रुति**—वह स्थिति तथा पालनकर्ता हैं, इस प्रकार के बुद्धियोगपूर्वक ध्यान से अथवा पूजन से जो साधक इस गुरुस्तव का प्रातःकाल में पाठ करता है, वह वस्तुतः देवता है, मनुष्य कदापि नहीं है ॥ ४६ ॥

**कल्याणं धनधान्यं च कीर्तिमायुर्यशःश्रियम् ।**
**सायाह्ने च प्रभाते च पठेद्यदि सुबुद्धिमान् ॥ ४७ ॥**
**स भवेत् साधकश्रेष्ठः कल्पद्रुमकलेवरः ।**

यदि कोई श्रेष्ठ साधक सायङ्काल अथवा प्रभातकाल में इस स्तोत्र का पाठ करे तो वह कल्याण का भागी, धन-धान्य, कीर्ति, आयु तथा श्री प्राप्त करता हैं। वह बुद्धिमानों में श्रेष्ठ होता है और कल्पवृक्ष के समान कामनाओं की पूर्ति करने वाला होता है ॥ ४७-४८ ॥

**स्तवस्यास्य [2]प्रसादेन वागीशत्वमवाप्नुयात् ॥ ४८ ॥**
**पशुभावस्थिता ये तु तेऽपि सिद्धाः न संशयः ।**

बहुत क्या कहना ? इस स्तोत्र की कृपा से वह वाचस्पतित्व प्राप्त करता है। किं बहुना पशुभाव में स्थित सभी ध्यातव्य इस स्तव के प्रभाव से सिद्ध हो जाते हैं, इसमें संशय नहीं ॥ ४८-४९ ॥

**आदौ साधकदेवश्च सदाचारमतिः सदा ॥ ४९ ॥**
**पशुभावस्ततो वीरः सायाह्ने दिव्यभाववान् ।**

प्रथम प्रहर में वह साधकों में श्रेष्ठ, सदैव सदाचार युक्त बुद्धि वाला होकर पशुभाव में स्थित रहता है। फिर वीरभाव में, तदनन्तर सांयकाल में दिव्यभाव संपन्न हो जाता है ॥ ४९-५० ॥

**एतेषां भाववर्गाणां गुरुर्वेदान्तपारगः ॥ ५० ॥**
**शान्तो दान्तः कुलीनश्च विनीतः शुद्धवेषवान् ।**
**शुद्धाचारः सुप्रतिष्ठः शुचिर्दक्षः सुबुद्धिमान् ॥ ५१ ॥**
**आश्रमी [3]ध्याननिष्ठश्च मन्त्रतन्त्रविशारदः ।**
**निग्रहानुग्रहे[4] शक्तो वशी मन्त्रार्थजापकः ॥ ५२ ॥**

इन तीनों भावों का ज्ञाता गुरु वेदान्त का पारगामी विद्वान् होना चाहिए। शान्त, दान्त

---

१. प्राप्य—क० । २. प्रभावेन—क० । ३. ज्ञाननिष्ठश्च—क० ।
४. निग्रहश्चानुग्रहश्चानयोः समाहारः । अथवा निग्रहेण सहितो निग्रहसहितः, स चासावनुग्रहश्च निग्रहानुग्रहः, मध्यमपदलोपिसमासः ।

( जितेन्द्रिय ), उत्तम कुल वाला, विनयशील, शुद्ध वेष वाला, शुद्ध आचरण वाला, उत्तम स्थिति में रहने वाला, शुचि, दक्ष, बुद्धिमान्, आश्रम धर्म का पालन करने वाला, ध्यान में निष्ठा रखने वाला, मन्त्र तथा तन्त्र शास्त्रों का विशारद, शिष्य के ऊपर निग्रह और अनुग्रह करने में सर्वथा समर्थ, जितेन्द्रिय, मन्त्रों के अर्थ का ज्ञानपूर्वक जप करने वाला गुरु होना चाहिए ॥ ५०-५२ ॥

**निरोगी निरहङ्कारो विकाररहितो महान् ।**
**पण्डितो वाक्पतिः श्रीमान् सदा यज्ञविधानकृत् ॥ ५३ ॥**
**पुरश्चरणकृत् सिद्धो हिताहितविवर्जितः ।**
**सर्वलक्षणसंयुक्तो [1]महाजनगणादृतः ॥ ५४ ॥**
**प्राणायामादिसिद्धान्तो ज्ञानी मौनी विरागवान् ।**
**तपस्वी सत्यवादी च सदा ध्यानपरायणः ॥ ५५ ॥**
**आगमार्थविशिष्टज्ञो निजधर्मपरायणः ।**
**अव्यक्तलिङ्गचिह्नस्थो भावको भद्रदानवान्[2] ॥ ५६ ॥**
**लक्ष्मीवान् धृतिमान्नाथो गुरुरित्यभिधीयते ।**

स्वस्थ, अहङ्काररहित, ( कामक्रोधादि ) विकारों से सर्वथा दूर रहने वाला, महान्, पण्डित, वाणी की कला में दक्ष, श्रीसंपन्न, सर्वथा यज्ञ-विधानवेत्ता, पुरश्चरण करने वाला, सिद्ध, हित एवं अहित से विवर्जित, सर्वलक्षण युक्त, महाजनों से आदृत, प्राणायामादि का सिद्धान्ती, ज्ञानी, मौनी, वैराग्ययुक्त, तपस्वी, सत्यवादी, सर्वथा ध्यानपरायण, आगमार्थ का विशेष रूप से ज्ञान रखने वाला, अपने धर्म में परायण, लिङ्ग तथा चिन्ह से अपने को अव्यक्त रखने वाला, होनहार, उत्तम दान देने वाला, लक्ष्मीवान्, धैर्यशाली और प्रभुतासम्पन्न लक्षणों वाला गुरु होना चाहिए ॥ ५३-५७ ॥

**शिष्यस्तु तादृशो भूत्वा सद्गुरुं पर्युपाश्रयेत् ॥ ५७ ॥**
**वर्जयेच्च परानन्दरहितं रूपवर्जितम् ।**
**कुष्ठिनं क्रूरकर्माणं निन्दितं रोगिणं गुरुम् ॥ ५८ ॥**
**अष्टप्रकारकुष्ठेन गलत्कुष्ठिनमेव च ।**
**शिवत्रिणं जनहिंसार्थं सदार्थग्राहिणं तथा ॥ ५९ ॥**

**शिष्य के लक्षण**—शिष्य भी इन्ही उपरोक्त लक्षणों से युक्त हो कर सद्गुरु की सेवा में संलग्न रहे । श्रेष्ठ शिष्य परानन्दरहित, कुरूप, कुष्ठी, क्रूरकर्मा, निन्दित तथा रोगी को गुरु न बनावे । आठ प्रकार के कुष्ठों से ग्रस्त, गलित्कुष्ठी, शिवत्ररोग ( सफेद कोढ़ ) से संयुक्त, हिंसा करने वाला तथा सदैव धन चाहने वाले को गुरु न बनावे ॥ ५७-५९ ॥

**स्वर्णविक्रयिणं चौरं बुद्धिहीनं सुखर्वकम् ।**
**श्यावदन्तं कुलाचाररहितं शान्तिवर्जितम् ॥ ६० ॥**
**सकलङ्कं नेत्ररोगैः पीडितं परदारगम् ।**
**असंस्कारं प्रवक्तारं स्त्रीजितं चाधिकाङ्गकम् ॥ ६१ ॥**

---

१. महाज्ञान—क० । २. 'भद्रवान्' इत्यत्र यश्चेति पूर्तिः कर्तव्या ।

स्वर्ण विक्रयी, चोर, मूर्ख, अत्यन्त तुच्छ, काले दाँत वाले, कुलाचार से रहित तथा शान्तिवर्जित एवं चञ्चल पुरुष को गुरु न बनावे । पापी, नेत्ररोग से पीड़ित, परदारगामी, संस्कार रहित वाणी बोलने वाला, स्त्री के वश में रहने वाला एवं ( छः अंगुली आदि ) अधिक अङ्ग वाले को गुरु न बनावे ॥ ६०-६१ ॥

**कपटात्मानकं हिंसाविशिष्टं बहुजल्पकम् ।**
**बह्वाशिनं हि कृपणं मिथ्यावादिनमेव च ॥ ६२ ॥**
**अशान्तं[१] भावहीनं च पञ्चाचारविवर्जितम् ।**
**दोषजालैः पूरिताङ्गं पूजयेन्न गुरुं बिना ॥ ६३ ॥**

कपटात्मा, हिंसक, बहुत एवं व्यर्थ बोलने वाले, बहुत भोजन करने वाले, कृपण तथा झूठ बोलने वाले को गुरु नहीं बनावे । अशान्त, भावहीन, पञ्चाचार विवर्जित एवं दोषों से परिपूर्ण अङ्ग वाले गुरु की पूजा न करे ( किन्तु पिता की पूजा करे ) ॥ ६२-६३ ॥

**गुरौ मानुषबुद्धिं तु मन्त्रेषु लिपिभावनम् ।**
**प्रतिमासु शिलारूपं विभाव्य नरकं व्रजेत् ॥ ६४ ॥**
**जन्महेतू हि पितरौ पूजनीयौ प्रयत्नतः ।**
**गुरुर्विशेषतः पूज्यो धर्माधर्मप्रदर्शकः ॥ ६५ ॥**

गुरु में मनुष्य बुद्धि, मन्त्र में लिपि की भावना तथा प्रतिमा में पत्थर की भावना करने वाला साधक रौरव नरक में जाता है । यतः माता पिता जन्म देने में हेतु हैं, अतः प्रयत्नपूर्वक उनकी पूजा करनी चाहिए । गुरु की विशेष रूप से इसलिए पूजा करनी चाहिए क्योंकि वे धर्म और अर्धम के प्रदर्शक हैं ॥ ६४-६५ ॥

**गुरुः पिता गुरुर्माता गुरुर्देवो गुरुर्गतिः ।**
**शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ॥ ६६ ॥**
**गुरोर्हितं प्रकर्तव्यं वाङ्मनःकायकर्मभिः[२]।**
**अहिताचरणाद् देव विष्ठायां जायते कृमिः ॥ ६७ ॥**

गुरु पिता है, गुरु माता हैं, गुरु देवता हैं, गुरु ही गति हैं । शिव के रुष्ट होने पर गुरु रक्षा कर सकते हैं । किन्तु गुरु के रुष्ट होने पर कोई भी रक्षा नहीं कर सकता है । शिष्य को वाणी, मन, काय तथा कर्म के द्वारा अपने गुरु का हित संपादन करना चाहिए । गुरु का अहित करने से शिष्य को विष्टा का कृमि बनना पड़ता है ॥ ६६-६७ ॥

**मन्त्रत्यागाद् भवेन्मृत्युर्गुरुत्यागाद् दरिद्रता ।**
**गुरुमन्त्रपरित्यागाद् रौरवं नरकं व्रजेत् ॥ ६८ ॥**
**गुरौ सन्निहिते यस्तु पूजयेदन्यदेवताम् ।**
**प्रयाति नरकं घोरं सा पूजा विफला भवेत् ॥ ६९ ॥**

---

१. असाधुम्—क० । २. वाङ्मनःकायानां कर्मभिरिति द्वन्द्वगर्भषष्ठीतत्पुरुषः ।

मन्त्र के त्याग से मृत्यु होती है, गुरु के त्याग से दरिद्रता आती है, गुरु और मन्त्र दोनों के त्याग से रौरव नरक में जाना पड़ता है । गुरु के सन्निहित रहने पर जो अन्य देवता का पूजन करता है, उसकी पूजा निष्फल होती है और उसे घोर नरक में जाना पड़ता है ॥ ६८-६९ ॥

**गुरुवद् गुरुपुत्रेषु गुरुवत् तत्सुतादिषु ।**
**अविद्यो वा सविद्यो वा गुरुरेव तु दैवतम् ॥ ७० ॥**
**अमार्गस्थोऽपि मार्गस्थो गुरुरेव तु दैवतम् ।**
**उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदो गुरुः ॥ ७१ ॥**

गुरुपुत्र में गुरुवद् बुद्धि रखे । इसी प्रकार उनकी कन्याओं में भी गुरु के समान् बुद्धि रखनी चाहिए । गुरु चाहे विद्या रहित हो अथवा सविद्य हो गुरु ही देवता है ऐसा समझना चाहिए । गुरु चाहे विमार्गगामी हो, चाहे मार्गगामी हो, गुरु में देवता बुद्धि रखनी चाहिए । जन्म देने वाले पिता तथा वेदज्ञान का उपदेश करने वाले पिता इन दोनों में ज्ञान देने वाले पिता रूप गुरु सर्वश्रेष्ठ कहे गए हैं ॥ ७०-७१ ॥

**तस्मान्मन्येत सततं पितुरप्यधिकं गुरुम् ।**
**गुरुदेवाधीनश्चास्मि[१] शास्त्रे मन्त्रे कुलाकुले ॥ ७२ ॥**

इसलिए गुरु को अपने पिता से भी अधिक सम्मान देना चाहिए । शिष्य को यह सोंचना चाहिए कि शास्त्र में, मन्त्र में तथा कुलाकुल ( कुण्डलिनी के उत्थान ) में मैं सर्वदा अपने गुरुदेव के वश में हूँ ॥ ७२ ॥

**नाधिकारी भवेन्नाथ श्रीगुरोः पदभावकः ।**
**गुरुर्माता पिता स्वामी बान्धवः सुहृत् शिवः ॥ ७३ ॥**
**इत्याधाय मनो नित्यं भजेत् सर्वात्मना गुरुम् ।**
**एकमेव परं ब्रह्म स्थूलशुक्लमणिप्रभम् ॥ ७४ ॥**

**भैरवी ने कहा**—हे नाथ ! गुरु के चरण कमलों की सेवा करने वाला मनुष्य विद्या का अधिकारी होता है, क्योंकि गुरु, माता, पिता, स्वामी, बान्धव, सुहृद् एवं शिव स्वरूप हैं । इस प्रकार का विचार कर शिष्य को चाहिए कि वह सर्वात्मना अपने गुरु की सेवा करे और उसे सोंचना चाहिए कि स्थूल एवं शुक्ल मणि की प्रभा वाले गुरु ही एकमात्र परब्रह्म हैं ॥ ७३-७४ ॥

**सर्वकर्मनियन्तारं गुरुमात्मानमाश्रयेत् ।**
**गुरुश्च सर्वभावानां भावमेकं न संशयः ॥ ७५ ॥**
**निःसन्दिग्धं गुरोर्वाक्यं संशयात्मा[२] विनश्यति ।**
**निःसंशयी गुरुपदे सर्वत्यागी पदं व्रजेत् ॥ ७६ ॥**

---

१. गुरुदेवं विना चास्मिन् शास्त्रे मन्त्रे कुलाकुले ।
सोऽधिकारी भवेन्नाथ श्रीगुरोः पादसेवकः ।।—क० ।

२. संशयापन्नश्चासौ आत्मा चेति मध्यमपदलोपिसमासः ।

सभी कर्मों के नियन्ता गुरु को अपनी आत्मा में स्थान देना चाहिए । सभी भावों में गुरु विषयक भावना सर्वश्रेष्ठ भावना है—इसमें संशय नहीं । गुरु की आज्ञा में संशय नहीं करना चाहिए । उसमें संशय करने वाला विनष्ट हो जाता है । जो गुरु की आज्ञा का पालन संशय रहित हो कर करता है वह सर्वत्यागी पद तक पहुँच जाता हैं ॥ ७५-७६ ॥

**खेचरत्वमवाप्नोति मासादेव न संशयः ।**
**सद्गुरुमाश्रितं शिष्यं वर्षमेकं प्रतीक्षयेत् ॥ ७७ ॥**
**सगुणं निर्गुणं वापि ज्ञात्वा मन्त्रं प्रदापयेत् ।**
**शिष्यस्य लक्षणं सर्वं शुभाशुभविवेचनम् ॥ ७८ ॥**

गुरु की सेवा में निरत रहने वाला शिष्य एक मास के भीतर ( गुरु कृपा से ) खेचरत्व को प्राप्त कर लेता है, इसमें संशय नहीं । गुरु को चाहिए कि एक वर्ष पर्यन्त शिष्य को अपने आश्रय में रखकर उसकी परीक्षा करें । फिर उसके गुण और दोषों के लक्षण का एवं उसके शुभाशुभ का विचार कर उसे मन्त्र प्रदान करें ॥ ७७-७८ ॥

**अन्यथा विप्रदोषेण सिद्धिपूजाफलं दहेत् ।**
**कामुकं कुटिलं लोकनिन्दितं सत्यवर्जितम् ॥ ७९ ॥**
**अविनीतमसमर्थं प्रज्ञाहीनं रिपुप्रियम्[१]।**
**सदापापक्रियायुक्तं विद्याशून्यं जडात्मकम् ॥ ८० ॥**
**कलिदोषसमूहाङ्गं वेदक्रियाविवर्जितम् ।**
**आश्रमाचारहीनं चाशुद्धान्तःकरणोद्यतम् ॥ ८१ ॥**
**सदा श्रद्धाविरहितमधैर्यं क्रोधिनं भ्रमम् ।**
**असच्चरित्रं विगुणं परदारातुरं सदा ॥ ८२ ॥**
**असद्बुद्धिसमूहोत्थमभक्तं द्वैतचेतसम् ।**
**नानानिन्दावृताङ्गं[२] च तं शिष्यं वर्जयेद् गुरुः ॥ ८३ ॥**

ऐसा न करने से विशिष्ट दोषों के कारण साधक की सिद्धि और पूजा का फल दोनों ही विनष्ट हो जाता है । कामी, कुटिल, लोकनिन्दित, झूठ बोलने वाले, उच्छृखंल स्वभाव वाले, सामर्थ्यहीन, बुद्धिहीन, शत्रुप्रिय, सदा पापप्रिय, विद्याशून्य, जडात्मक, कलियुग के कलह आदि के दोष से भरे हुए, वेद क्रिया से हीन, आश्रमाचार से वर्जित, अशुद्ध अन्तःकरण वाले, सर्वदा श्रद्धा से रहित, धैर्यहीन, क्रोधी, भ्रमयुक्त, असच्चरित्र, गुणरहित, परदारगामी, दिन रात बुरे विचारों में निरत, अभक्त, इधर की बात उधर एवं उधर की बात इधर करके कहने वाले और अनेक प्रकार की निन्दा से भरे हुए मनुष्य को कभी शिष्य न बनावे ॥ ७९-८३ ॥

**यदि न त्यज्यते वीर धनादिदानहेतुना ।**
**नारकी शिष्यवत् पापी तद्विशिष्टमवाप्नुयात् ॥ ८४ ॥**

---

१. यत् तच्छिष्यम्—क० ।
२. नानानिन्दाभिरावृतमङ्गं यस्य सः, तम् ।

**क्षणादसिद्धः स भवेत् शिष्यासादितपातकैः [१] ।**
**अकस्मान्नरकं प्राप्य कार्यनाशाय केवलम् ॥ ८५ ॥**

हे सदाशिव ! गुरु यदि धन दान आदि के कारण ऐसे शिष्य का त्याग नहीं करता तो वह गुरु भी शिष्य ही के समान नारकी अथवा उससे भी विशिष्ट नरक का भागी होता है । इस प्रकार के गुरु में शिष्य का पाप संक्रान्त हो जाता है जिससे उसकी सिद्धि क्षणमात्र में ही विनष्ट हो जाती है और अकस्मात् उसे नरक की प्राप्ति हो कर उसके किए गए सारे कार्य नष्ट हो जाते हैं ॥ ८४-८५ ॥

**विचार्य यत्नात् विधिवत् शिष्यसंग्रहमाचरेत् ।**
**अन्यथा शिष्यदोषेण नरकस्थो भवेद् गुरुः ॥ ८६ ॥**
**न पत्नीं दीक्षयेद् भर्ता न पिता दीक्षयेत् सुताम् ।**
**न पुत्रं च तथा भ्राता भ्रातरं नैव दीक्षयेत् ॥ ८७ ॥**

इसलिए गुरु को चाहिए कि अच्छी तरह से विचार कर शिष्य का संग्रह करे । अन्यथा शिष्य के दोष से गुरु को भी नरकगामी होना पड़ता है । पति अपनी स्त्री को दीक्षा न देवे । पिता अपनी कन्या को दीक्षित न करे और न पुत्र को ही दीक्षा दे । इसी प्रकार भाई भी भाई को दीक्षा न देवे ॥ ८६-८७ ॥

**सिद्धमन्त्रो यदि पतिस्तदा पत्नीं स दीक्षयेत् ।**
**शक्तित्त्वेन भैरवस्तु न च सा पुत्रिका भवेत् ।**
**मन्त्राणां देवता ज्ञेया देवता गुरुरूपिणी ॥ ८८ ॥**
**तेषां भेदो न कर्तव्यो यदीच्छेच्छुभमात्मनः ।**

यदि पति सिद्धमन्त्र वाला है तो वह पत्नी को दीक्षित कर सकता है । मन्त्र की शक्ति विद्यमान रहने के कारण वह भैरव है । इस कारण उस सिद्ध की पत्नी पुत्री नहीं हो सकती । मन्त्र के अक्षरों को देवता समझना चाहिए और देवता गुरु रूप हैं । इसलिए यदि अपना कल्याण चाहे तो मन्त्र, देवता और गुरु में भेद बुद्धि नहीं करनी चाहिए ॥ ८८-८९ ॥

**एकग्रामे स्थितः शिष्यस्त्रिसन्ध्यं प्रणमेद् गुरुम् ॥ ८९ ॥**
**क्रोशमात्रस्थितो भक्त्या गुरुं प्रतिदिनं नमेत् ।**

यदि एक ग्राम में शिष्य और गुरु दोनों निवास करते हों तो शिष्य को चाहिए कि वह तीनों सन्ध्या में जा कर अपने गुरु को प्रणाम करें । यदि दोनों के निवास में १ क्रोश का अन्तर हो तो शिष्य को भक्ति के साथ नित्य प्रतिदिन प्रणाम करना चाहिए ॥ ८९-९० ॥

**अर्धयोजनतः शिष्यः प्रणमेत् पञ्चपर्वसु ॥ ९० ॥**
**एकयोजनमारभ्य योजनद्वादशावधिः ।**

---

१. शिष्येण आसादितानि पातकानि तैः । शिष्यदोषादिपातकैः—क० ।

**दूरदेशस्थितः शिष्यो भक्त्या तत्सन्निधिं गतः ॥ ९१ ॥**
**तन्त्रयोजनसंख्योक्तमासेन प्रणमेद् गुरुम् ।**

यदि आधे योजन का अन्तर हो तो पाँचो पर्वों में प्रणाम करना चाहिए । यदि एक योजन से द्वादश योजन पर्यन्त दोनों के निवास में अन्तर हो तो दूर देश में रहने वाला शिष्य भक्ति से अपने गुरु के पास जा कर योजन संख्या के अनुसार उतने उतने मास में अपने गुरु को प्रणाम करे ॥ ९०-९२ ॥

**वर्षैकेण भवेद् योग्यो विप्रो हि गुरुभावतः [1] ॥ ९२ ॥**
**वर्षद्वयेन राजन्यो वैश्यस्तु वत्सरैस्त्रिभिः ।**
**चतुर्भिर्वत्सरैः शूद्रः कथिता शिष्ययोग्यता ॥ ९३ ॥**

गुरु में भावना करने वाला ब्राह्मण एक वर्ष में शिष्यता की योग्यता प्राप्त कर लेता हैं, क्षत्रिय दो वर्ष में, वैश्य तीन वर्ष में और शूद्र चार वर्ष में शिष्यत्व की योग्यता प्राप्त कर लेता है—ऐसा कहा गया है ॥ ९२-९३ ॥

**यदि भाग्यवशेनैव सिद्धमन्त्रं लभेत् प्रभो ।**
**महाविद्या त्रिशक्त्याश्च गृह्णीयात् तत्कुलाद्ध्रुवम्॥ ९४ ॥**
**गुरोर्विचारं सर्वत्र तातमातामहं विना ।**
**प्रमादाच्च तथाज्ञानान् एभ्यो मन्त्रं समाचरन् ॥ ९५ ॥**
**प्रायश्चित्तं ततः कृत्वा पुनर्दीक्षां समाचरेत् ।**

**मन्त्रदीक्षा विचार—भैरवी ने कहा**—हे प्रभो ! यदि भाग्यवश महाविद्या का अथवा त्रिशक्ति का सिद्ध मन्त्र कहीं से मिल जाय तो उस कुल से निश्चित रूप से उस मन्त्र को ग्रहण कर लेना चाहिए । पिता और मातामह को छोड़कर सर्वत्र गुरु का विचार करना चाहिए । प्रमाद से अथवा अज्ञान से बिना विचारे गुरु से मन्त्र लेने वाला प्रायश्चित्त कर पुनः दीक्षा ग्रहण करें ॥ ९४-९६ ॥

**सावित्रीमन्त्रजापञ्च लक्ष्यं जाप्यं जगत्पतेः ॥ ९६ ॥**
**विष्णोर्वा प्रणवं लक्ष्यं प्रायश्चित्तमिति स्मृतम् ।**
**अशक्तश्चेन्महादेव चायुतं प्रजपेन्मनुम् ॥ ९७ ॥**
**दशसाहस्रजाप्येन सर्वकल्मषनाशिनी ।**

सावित्री मन्त्र का एक लाख जप करे, अथवा जगत्पति विष्णु के मन्त्र का १ लाख जप करे अथवा प्रणव का १ लाख जप करे । यही उसका प्रायश्चित्त हैं । हे महादेव ! यदि इतने जप करने की सामर्थ्य न हो तो १० हजार मन्त्र गायत्री का जप कर लेवे । क्योंकि दश सहस्र मात्र जपी गई गायत्री सभी कल्मषों को नष्ट कर देने वाली है ॥ ९६-९७ ॥

**गायत्रीच्छन्दसां माता पापराशितुलानला ॥ ९८ ॥**

---

१. गुणसमन्वितः—क० ।

**मम मूर्त्तिप्रकाशा च पशुभावविवर्जिता ।**
**फलोद्भवप्रकरणे ब्रह्मणापद्यते निशि ॥ ९९ ॥**
**यदि भाग्यवशाद् देव सिद्धमन्त्रं गुरुं तथा ।**
**तदैव तान्तु दीक्षेत अष्टैश्वर्याय[1] केवलम् ॥ १०० ॥**

गायत्री सभी छन्दों की जननी हैं । यह पापराशिरूपी रुई को जलाने के लिए अग्नि हैं। किं बहुना, मेरी देदीप्यमान मूर्ति हैं, उनमें पशुभाव ( जीवभाव ) नहीं हैं । फलोद्भव प्रकरण रूप निशा में ब्रह्मदेव गायत्री का पाठ करते हैं । हे देव ! यदि भाग्यवश सिद्धमन्त्र और गुरु मिल जावें तो उसी समय अष्ट ऐश्वैर्य की प्राप्ति के लिए उनसे गायत्री की दीक्षा ले लेनी चाहिए ॥ ९७-१०० ॥

**निर्बीजञ्च पितुर्मन्त्रं शैवे शाक्ते न दुष्यति ।**
**ज्येष्ठपुत्राय दातव्यं कुलीनैः कुलपण्डितैः ॥ १०१ ॥**
**कुलयुक्ताय[2] दान्ताय महामन्त्रं कुलेश्वरम् ।**
**तदैव मुक्तिमाप्नोति सत्यं सत्यं न संशयः ॥ १०२ ॥**

ऐसे तो पिता के द्वारा प्रदत्त मन्त्र निर्बीज होता है, किन्तु शिव मन्त्र और शाक्त मन्त्र में वह दोषप्रद नहीं होता । अतः कुलीन तथा कुलपण्डितों को ज्येष्ठ पुत्र के लिए उसे देने में कोई बाधा नहीं है । कुलीन इन्द्रियों का दमन करने वाले शिष्य को कुलेश्वर महामन्त्र देने से उसी समय मुक्ति प्राप्त हो जाती है यह सत्य है यह सत्य है इसमें संशय नहीं ॥ १०१-१०२ ॥

**कनिष्ठञ्च रिपुं चापि सोदरं वैरिपक्षगम् ।**
**मातामहञ्च पितरं यतिञ्च वनवासिनम् ॥ १०३ ॥**
**अनाश्रमं[3] कुसंसर्गं स्वकुलत्यागिनं तथा ।**
**वर्जयित्वा च शिष्यांस्तान् दीक्षाविधिमुपाचरेत् ॥ १०४ ॥**

कनिष्ठ पुत्र, शत्रु-सहोदर, बैरी के पक्ष में रहने वाला, मातामह ( नाना ), पिता, यति, वनवासी, आश्रमधर्मरहित, दुष्ट का साथ करने वाले, अपने कुल ( शाक्त सम्प्रदाय ) का त्याग करने वाले इतने को छोड़कर अन्य शिष्यों को दीक्षा प्रदान करना चाहिए ॥ १०३-१०४ ॥

**अन्यथा[4] तद्विरोधेन कामनाभोगनाशनम् ।**
**सिद्धमन्त्रञ्च गृह्णीयाद् दुष्कुलादपि भैरव ॥ १०५ ॥**
**सद्गुरो[5]र्भावनेच्छन्नरूपे रूपे धरे शुभे ।**
**तत्र दीक्षां समाकुर्वन् अष्टैश्वर्यजयं लभेत्[6] ॥ १०६ ॥**

---

१. अष्टानामैश्वर्याणां समाहारः, अष्टैश्वर्यं तस्मै ।
२. गुणयुक्ताय—क० ।  ३. नानाश्रमम्—क० ।
४. अन्यथा तद्विरोधेन कार्यनाशो भवेद् ध्रुवम्—क० ।  ५. यद्भवौ—ग० ।
६. अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति लभ्धातोः परस्मैपदेऽस्य रूपस्य साधुता ।

**केवलाधो जलेशस्य मन्दिरं सुमनोहरम् ॥ १२० ॥**

दक्षिण में अग्नि का घर निर्माण करे । उसमें रस ६, वेद ४, ख शून्य तथा युग्म २ अङ्क लिखे । उसके नीचे राम चक्र निर्माण करे । जिसमें ७ एवं ६ अङ्क ( एवं शून्य ) तथा राम ३ अङ्क लिखे । उसके निर्ऋति ( दिक् ) के स्वर्ग ( गृह ) में युग २ अङ्क, ९ शून्य तथा वेद ४ अङ्क लिखे । उसके नीचे जलेश ( वरुण ) का अत्यन्त मनोहर गृह निर्माण करे ॥ ११९-१२० ॥

**रामेषु शून्यबाणाढ्यं तस्यामेवायुमन्दिरम् ।**
**भुजहस्तखरसाढ्यं चक्रेदमीश्वरात्मकम्[1] ॥ १२१ ॥**
**नवकोणं मध्यदेशे पञ्चाङ्गभागमालिखेत्[2] ।**
**तन्मध्ये रचयेद्वर्णं पञ्चकोणे[3] त्रिकोणके ॥ १२२ ॥**

उसमें राम ५, इषु ५, शून्य एवं बाण ५ लिखे । उसी में वायु का मन्दिर लिखे । जिसमें भुज २, हस्त २, शून्य तथा रस ६ अङ्क लिखे । यह ईश्वरात्मक चक्र कहा गया है । मध्य देश के पञ्चाङ्ग भाग में नवकोण का निर्माण करे । उसके मध्य में पञ्चकोण में तथा त्रिकोण में वर्णों को इस प्रकार लिखे ॥ १२१-१२२ ॥

**इन्द्राधो विलिखेद् धीरो वर्णमाद्यञ्च सप्तकम् ।**
**भागे दक्षिणकोणेषु ॠकारादङ्कं[4] लिखेत् ॥ १२३ ॥**
**ककारादिटकारान्तं तदधो विलिखेद् बुधः ।**
**तद्वामे ठादिमान्तञ्च वर्णलक्षणकारणम् ॥ १२४ ॥**

धीर साधक इन्द्र के नीचे आद्य वर्ण तथा सातवाँ वर्ण अ आ इ ई उ ऊ ॠ लिखे । उसके दक्षिण कोण में दीर्घ ॠकार से अङ्क लिखे । उसके नीचे बुद्धिमान् साधक क से ट पर्यन्त वर्ण लिखे । उसके वाम भाग में ठ से म पर्यन्त वर्ण लिखे ॥ १२३-१२४ ॥

**तदूद्र्ध्वे यादिवर्णञ्च चक्रञ्च गणयेत्ततः ।**
**पूर्वकोणपतिः शक्रो द्वितीयेशौ यमानलौ ॥ १२५ ॥**
**निर्ऋतिर्वरुणश्चैव तृतीयमन्दिरेश्वरः ।**
**चतुर्थाधिपतिर्वायुः कुबेरो नाथ इत्यपि ॥ १२६ ॥**

---

१. प्राणवायुगतं हितम् इति क० । तदूर्ध्वे प्रीतिदं नाम गुह्यकेश्वरमन्दिरम् । पञ्चपञ्चखसप्ताढ्यं देवतादर्शनप्रदम् ॥ तदूर्ध्वे शेषगेहे च महेशस्यापि मन्दिरम् । नवमाष्टमथाष्टाढ्यं चक्रगोपीश्वरात्मकम् ॥ इति क० पु० अधिकः पाठः ।

२. पञ्चाङ्कं भागतो लिखेत् क० ।    ३. पञ्चगेहेषु कोणके इति क० ।

४. ॠकारादित्रयं लिखेत् इति क० । एकगेहे स्थितं रत्नं देवतानिजवर्णयोः । तदा सिद्धिमवाप्नोति विष्णौ भक्तिः दृढा भवेत् ॥ तदा तु गणयेन्मन्त्री विष्णुचक्रमनोरमम् । प्राणोऽपानः समानश्चोदानो व्यानश्च वायवः ॥ क० अ० पाठः ।

उसके ऊपर य से लेकर सभी वर्ण लिखे । फिर चक्र की गणना करे । पूर्व कोण के पति इन्द्र हैं । इसके बाद दूसरे कोण के पति यम तथा अग्नि है । तृतीय मन्दिर के ईश्वर निर्ऋति तथा वरुण हैं । हे नाथ ! चतुर्थ गृह के अधिपति वायु तथा कुबेर हैं ॥ १२५-१२६ ॥

**पञ्चगेहस्याधिपतिरीशो विश्वविदाम्बरः[१] ।**
**पञ्चकोणे प्रतिष्ठन्ति[२] पञ्चभूताशयस्थिताः ॥ १२७ ॥**
**प्राणे सिद्धिमवाप्नोति चापाने व्याधिपीडनम् ।**
**समाने सर्वसम्पत्तिरुदाने निर्धनं भवेत् ॥ १२८ ॥**

पाँचवें गृह के अधिपति विश्व वेत्ताओं में श्रेष्ठ ईश्वर हैं । पञ्चकोणों में प्राणियों के भीतर रहने वाले पञ्च वायु का निवास है । प्राण में सिद्धि, अपान में व्याधि एवं पीड़ा, समान में सर्वसंपत्ति तथा उदान में निर्धनता होती है ॥ १२७-१२८ ॥

**व्याने च ईश्वरप्राप्तिरेतस्मिन् लक्षणं शुभम् ।**
**पूर्वगेहे महामन्त्रं मन्त्रत्यागं करोति यः ॥ १२९ ॥**
**स तावत् साधकश्रेष्ठो विष्णुमार्गेण शङ्कर ।**
**विशेषं शृणु यत्नेन सावधानावधारय ॥ १३० ॥**

व्यान में ईश्वर प्राप्ति होती है । इस प्रकार इसमें शुभ लक्षण कहा गया है । पूर्वगेह में महामन्त्र का जो त्याग कर देता है वही श्रेष्ठ साधक है । हे शङ्कर ! अब विष्णु मार्ग से होने वाले विशेष को सुनिए और सावधानी से उसे धारण करिए ॥ १२९-१३० ॥

**सप्ताक्षरं त्र्यक्षरं च दशमाक्षरमेव च ।**
**पूर्वगेहे यदि भवेदाद्याक्षरसमन्वितम् ॥ १३१ ॥**
**तदा भवति सिद्धिश्च सर्वमेवंप्रकारकम् ।**
**षष्ठाक्षरं वेदवर्णं विंशत्यर्णं महामनुम् ॥ १३२ ॥**
**आम्नायाद्यक्षरं व्याप्तं सफलं गणयेद् बुधः ।**
**तथास्मिन् मम गेहे च मन्त्रं सप्ताक्षरं शुभम् ॥ १३३ ॥**

सप्ताक्षर मन्त्र, त्र्यक्षर मन्त्र तथा दशाक्षर मन्त्र यदि आद्य अक्षर के साथ पूर्वगृह में स्थित हो तो निश्चित ही सिद्धि होती है । सर्वत्र मन्त्रों में यही विधि प्रयुक्त होती है । ६ अक्षर वाला, ४ अक्षर वाला, २० अक्षरों वाला महामन्त्र तथा आम्नाय का आद्यक्षर हो तो मन्त्र फल देने वाला होता है । इसी प्रकार बुद्धिमान् साधक गणना करे । मेरे गृह में ७ अक्षरों वाला मन्त्र शुभ है ॥ १३१-१३३ ॥

**षष्ठाक्षरञ्च गणयेत्त्रिंशदक्षरमेव च ।**
**आद्याक्षरसमायुक्तं साध्यसाधकयोरपि ॥ १३४ ॥**

---

१. विश्वविदामिति षष्ठ्यन्तम्, अथवा वेत्तीति विदः, इगुपधत्वात् कप्रत्ययः, विश्वस्य विदः, तस्य अम्बरमिवाम्बरं यस्य सः ।

२. पृषोदरादित्वात् परस्मैपदम् । अथवा आर्षत्वात् ।

**एकस्यापि च लाभे च मन्त्रसिद्धिरखण्डिता ।**
**मन्त्राक्षरादिलाभञ्च अवश्यं गणयेदिह ॥ १३५ ॥**

साध्य तथा साधक के आद्य अक्षर से युक्त षष्ठाक्षर ६ तथा ३० त्रिंशदक्षरों की गणना करें, यदि उसमें एक भी ठीक-ठीक से प्राप्त हो जाय तो मन्त्र सिद्धि निश्चित है । इसलिए मन्त्राक्षर के आदि लाभ के लिए यहाँ गणना अवश्य करे ॥ १३४-१३५ ॥

**नैर्ऋते च जलेशस्य द्वयक्षरञ्च नवाक्षरम् ।**
**शून्यदेवाक्षरं[1] नाथ गणनीयं विचक्षणैः ॥ १३६ ॥**
**तथात्र अक्षरं मन्त्रं पञ्चाक्षरमनुं तथा ।**
**पञ्चाशदक्षरं[2] मन्त्रं मन्दिरे गणयेत् शुभम् ॥ १३७ ॥**

नैर्ऋत्य में वरुण के दो अक्षर वाले, नव अक्षर वाले, शून्य युक्त वेदाक्षर ( ४० ) अक्षर वाले मन्त्रों की गणना विचक्षणों को अवश्य ही करनी चाहिए । इसी में अक्षर मन्त्र ( ॐ कार संयुक्त ) तथा ५ अक्षरों वाले मन्त्रों की भी गणना करे । इसी प्रकार १५ अक्षरों वाले मन्त्रों की भी गणना करे तो शुभ फल होता है ॥ १३६-१३७ ॥

**वायुकोणे कुबेरस्य मन्दिरे गणयेत्तथा ।**
**द्वाविंशत्यक्षरं मन्त्रं शून्यषष्ठमनुं तथा ॥ १३८ ॥**
**पञ्चाक्षरं तारिकायाः शिवे पञ्चाक्षरं तथा ।**
**सुसप्तमन्त्रग्रहणे सफलं परिकीर्तितम् ॥ १३९ ॥**

वायुकोण में तथा कुबेर के मन्दिर में २२ अक्षरों वाले शून्य युक्त षष्ठ ( ६० ) अक्षरों के मन्त्रों की गणना करे । तारा के पञ्चाक्षर तथा शिव के पञ्चाक्षर मन्त्र की गणना करे । ७ अक्षर वाले मन्त्र ग्रहण करने से उत्तम फल कहा गया है ॥ १३८-१३९ ॥

**ईशानपञ्चकोणे च सफलञ्च नवाक्षरम् ।**
**अष्टाक्षरं हि विद्याया गणयेत् सहितं सुधीः ॥ १४० ॥**
**एतदुक्तञ्च गणयेद्विरुद्धं नैव शीलयेत् ।**
**प्राणमित्रं समानञ्च समानो व्यानबान्धवः ॥ १४१ ॥**

ईशान के पञ्चकोण में नवाक्षर मन्त्र से फल कहे गये हैं । सुधी साधक महाविद्या के अष्टाक्षर मन्त्र की भी गणना करे । जैसा हमने पूर्व में कहा है, गणना उसी प्रकार करनी चाहिए । इससे विरुद्ध कभी भी गणना न करे । प्राण का मित्र समान है और समान व्यान का बन्धु है ॥ १४०-१४१ ॥

**एतत्स्थितञ्च गृह्णीयाद् दोषभाक् स[3] भवेत् क्वचित् ।**
**एकदैव[4] प्रिये प्रीतिरेकगेहे तथा प्रियम् ॥ १४२ ॥**

---

१. वेदाक्षरं इति क० । २. पञ्चाशदक्षराणि यस्मिन्निति विग्रहः ।
३. न इति क० । ४. एकदैव पतौ इति क० ।

इस प्रकार गणना से स्थित मन्त्र ग्रहण करे तो कदाचित् ही वह दोष का भागी हो सकता है । एक समय में प्रिय होने पर प्रीति तथा एक गृह में प्रिय होता है ॥ १४२ ॥

**गृहीत्वा विष्णुपदवीं प्राप्नोति मानवः क्षणात् ।**
**यदि चक्रं न विचार्य रिपुमन्त्रं सदा न्यसेत् ॥ १४३ ॥**
**निजायुषं[१] छिनत्त्येव मूको भवति निश्चितम् ।**
**विचार्य यदि यत्नेन सर्वचक्रे प्रियं हितम् ॥ १४४ ॥**
**महामन्त्रं महादेव लघु सिद्ध्यति भूतले ॥ १४५ ॥**

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सर्वचक्रानुष्ठाने सिद्धमन्त्रप्रकरणे भावनिर्णये भैरवभैरवीसंवादे तृतीयः पटलः ॥ ३ ॥**



इस प्रकार गणना कर मन्त्र ग्रहण करने से मानव क्षण मात्र में विष्णु पदवी प्राप्त कर लेता है । यदि चक्र पर मन्त्र का विचार किए बिना साधक शत्रु मन्त्र का ग्रहण करे तो वह अपनी आयु का ही विनाश करता है । बहुत क्या वह निश्चित रूप से गूँगा हो जाता है । हे महादेव ! यदि सभी चक्रों पर विचार पूर्वक यत्न से अपना प्रिय तथा हितकारी महा मन्त्र ग्रहण करें तो पृथ्वी में वह शीघ्र ही सिद्धि प्राप्त कर लेता है ॥ १४३-१४५ ॥

**॥ इस प्रकार श्रीरुद्रयामल के उत्तरतन्त्र में महातन्त्रोद्दीपन में सर्वचक्रानुष्ठान में सिद्धमन्त्र प्रकरण में भाव निर्णय में भैरव-भैरवी संवाद में तीसरे पटल की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ ३ ॥**



---

१. निजं च तदायुश्चेति निजायुषम्, समासान्तोऽच्प्रत्ययः अजिति विभक्तेन योगेन ।

# अथ चतुर्थः पटलः

श्रीभैरवी उवाच

अथ वक्ष्यामि चक्रान्यत्[1] शृणु भैरव सादरम् ।
येन हीना[2] न सिद्ध्यन्ति महाविद्या वरप्रदाः ॥ १ ॥

ब्रह्मचक्रम्

तव चक्रं[3] ब्रह्मणा व्यक्तं ब्रह्मचक्रमुदाहृतम् ।
यस्य ज्ञानात् स्वयं ब्रह्मा स्वबलेन भवं सृजेत् ॥ २ ॥
अकालमृत्युहरणं[4] परं ब्रह्मपदं व्रजे[5] ।

**श्रीभैरवी ने कहा**—हे भैरव ! अब अन्य चक्र कहती हूँ उसे आदरपूर्वक सुनिए । जिसका ज्ञान न होने से वर देनी वाली महाविद्यायें सिद्ध नहीं होती । वह चक्र आपका है, ब्रह्मा ने उसे प्रगट किया इसलिए उसे ब्रह्मचक्र कहते हैं, जिसका ज्ञान प्राप्त कर ब्रह्मा स्वयं सृष्टि करने में समर्थ हो गये । वह चक्र अकाल मृत्यु का हरण करने वाला है, इसका ज्ञान हो जाने पर साधक अन्त में ब्रह्म पद प्राप्त कर लेता है ॥ १-३ ॥

चतुष्कोणे चतुष्कोणं तन्मध्ये च चतुश्चतुः ॥ ३ ॥
मध्यगेहं वेष्टयित्वा इष्टं[6] मन्दिरमुत्तमम् ।
अष्टकोणे महादेव षोडशस्वरमालिखेत् ॥ ४ ॥

चतुष्कोण बनाकर उसके मध्य में पुनः चतुष्कोण बनावे, फिर उनमें एक एक चतुष्कोण में चार चार चतुष्कोणों की रचना करे । फिर मध्य में स्थित इष्ट ( आठ ) उत्तम मन्दिर को घेर कर, हे महादेव ! आठ कोणों पर १६ स्वर लिखे ॥ ३-४ ॥

अष्टकोणं वेष्टयित्त्वा वृत्तयुग्मं लिखेत् सुधीः ।
मध्यगेहे चतुष्कोणे कादिक्षान्तञ्च वर्णकम् ॥ ५ ॥
दक्षिणावर्त्तयोगेन विलिखेत् साधकोत्तमः ।
तदूर्ध्वे स्वगृहे चाङ्कं विलिख्य गणयेत् सुधीः ॥ ६ ॥

---

१. चक्रेन्द्रं इति क० ।　　२. विना इति क० ।
३. तच्चक्रं ब्रह्मणा प्रोक्तम् इति क० । तव चक्रं ब्रह्मणा च इति ख० ।
४. न कालोऽकालः, अकाले मृत्युरकालमृत्युस्तस्य हरणम् ।
५. ब्रह्मपदप्रदम् इति क० ।　　६. अष्ट इति क० ।

फिर आठ कोणों को घेरकर सुधी साधक दो वृत्तों की रचना करे । तदनन्तर मध्य गेह के चारों कोनों पर ककार से आरम्भ कर क्षकार पर्यन्त वर्णों को लिखे । उत्तम साधक उन वर्णों को दक्षिणावर्त से लिखे । उसके ऊपर अपने गृह में अङ्कों को लिखकर सुधी साधक गणना करे ॥ ५-६ ॥

**चतुर्गेहस्योद्ध्वदेशे युग्मगेहे क्रमाल्लिखेत् ।**
**साध्यस्य साधकस्यापि मेषादिकन्यकान्तकम् ॥ ७ ॥**
**अधो लिखेत्तुलाद्यन्तमिति राश्यादिकं शुभम् ।**
**ततो लिखेद् गेहदक्षे युग्मगेहे महेश्वर ॥ ८ ॥**
**तारकानश्विनी ताराद्यन्तान् दक्षिणतो लिखेत् ।**
**वर्णक्रमेण विलिखेद् वेदमन्दिरमण्डले ॥ ९ ॥**

चारगृह के ऊर्ध्व भाग के दो दो गृहों में क्रमपूर्वक साध्य के तथा साधक के मेष से आरम्भ कर कन्या पर्यन्त राशियों को लिखे । उसके नीचे तुला से आरम्भ कर शेष शुभ राशियों को लिखे । हे महेश्वर ! इसके बाद दाहिने गृह के दो गृहों में अश्विनी से लेकर समस्त नक्षत्र पर्यन्त राशियों को वर्णक्रम से चारों मन्दिरों में लिखे ॥ ७-९ ॥

**ऊद्ध्वाधः क्रमशो लेख्यमङ्कतारं[१] सुरेश्वर ।**
**ततो हि गणयेन्मन्त्री योजयित्वा क्रमेण तु ॥ १० ॥**
**सुखं राज्यं धनं वृद्धिं कलहं कालदर्शनम् ।**
**सिद्धिमृद्धिमष्टकोणे विदित्वा च शुभाशुभम् ॥ ११ ॥**

हे सुरेश्वर ! फिर ऊपर से आरम्भ कर नीचे से क्रमशः अङ्क के ताराओं ( ? ) को लिखे । फिर मन्त्रज्ञ साधक सबको एक में मिलाकर गणना करे । प्रथम सुख, राज्य, धन, वृद्धि, कलह, काल ( मृत्यु ), सिद्धि, ऋद्धि इस प्रकार का फल उन अष्टकोणों से जानकर अपने शुभाशुभ का विचार करे ॥ १०-११ ॥

**गणयेद्राशिनक्षत्रं मनुचाहं[२] विवर्जयेत् ।**
**सुखे सुखमवाप्नोति राज्ये राज्यमवाप्नुयात् ॥ १२ ॥**
**धने[३] धनमवाप्नोति वृद्धौ वृद्धिमवाप्नुयात् ।**
**मेषो वृषमिथुनश्च कर्कटः सिंह एव च ।**
**कन्यका देवता ज्ञेया नक्षत्राणि पुनः शृणु ॥ १३ ॥**

राशि तथा नक्षत्र की गणना करे । मृत्यु तथा कलह वाला मन्त्र वर्जित करे । सुख के गृह में सुख तथा राज्यगृह में राज्य की प्राप्ति होती है । धन में धन की प्राप्ति और वृद्धि में

---

१. अङ्कं तारयति इति अङ्कतारस्तम् । २. मृत्युगेहं इति क० ।
३. कलहे सर्वनाशः स्यात् मरणं कालदर्शनम् ।
सिद्धौ सिद्धिमवाप्नोति ऋद्धौ ऋद्धि न संशयः ॥
आद्यस्वरयुगस्यापि देवता इति राशयः । इति क० ।

वृद्धि की प्राप्ति होती है । १. मेष, २. वृष, ३. मिथुन, ४. कर्क, ५. सिंह तथा ६. कन्या क्रमशः इनके देवता है । अब नक्षत्रों को सुनिए ॥ १२-१३ ॥

**ऊद्‌र्ध्वयुग्मगृहस्यापि दक्षवामे च भागके ।**
**नक्षत्राणि सन्ति यानि तानि शृणु महाप्रभो ॥ १४ ॥**
**अश्विनी मृगशिराश्लेषा हस्तानुराधिका तथा ।**
**उत्तराषाढिकार्द्रा वा पूर्वभाद्रपदा तथा ॥ १५ ॥**
**दक्षाग्रहस्तितास्तारा:[1] स्पष्टीभूताश्च देवता: ।**
**एतासामधिपा एते राशयो ग्रहरूपिण: ॥ १६ ॥**

दोनों गृह के ऊपर दायें तथा बायें भाग में जिन नक्षत्रों का निवास है, हे महाप्रभो ! अब उन्हें सुनिए । अश्विनी, मृगशिरा, आश्लेषा, हस्त, अनुराधा, उत्तराषाढ़ा, आर्द्रा एवं पूर्वाभाद्रपदा—ये दाहिनी ओर की तारायें हैं । ये स्पष्ट रूप से देवता नक्षत्र हैं । इन ताराओं के आगे कही जाने वाली ये सभी राशियाँ अधिपति हैं और ये सभी ग्रह स्वरूप भी हैं ॥ १४-१६ ॥

**कर्कटकेशरी कन्यादेवता: परिकीर्तिता: ।**
**एतेषाञ्चापि वर्णानामधिपाश्चेति राशय: ॥ १७ ॥**
**ककारस्य(ढ?)[2] खकारस्य ञकारस्य टकारप: ।**
**दकारस्य फकारस्य यकारस्य सकारप: ॥ १८ ॥**

कर्क, सिंह और कन्या ये देवता राशि हैं जो इन नक्षत्रों के तथा वर्णों की अधिप राशियाँ है । ( १ ) ककार, खकार तथा ञकार के टकार वाले देवता हैं । ( २ ) दकार, फकार एवं यकार के सकार वाले देवता हैं ॥ १७-१८ ॥

**नकारस्यापि पतयो ज्ञेयाश्च क्रमशः प्रभो ।**
**संशृणु रोहिणीपुष्या तथा चोत्तरफाल्गुनी ॥ १९ ॥**
**विशाखा च तथा ज्ञेया पूर्वाषाढा च तारका ।**
**तथा शतभिषातारा वाममन्दिरपर्वगा: ॥ २० ॥**

हे प्रभो ! इसी प्रकार क्रम से नकार के सभी स्वामियों को समझ लेना चाहिए और अब आगे सुनिए । रोहिणी, पुष्य, उत्तरफाल्गुनी, विशाखा, पूर्वाषाढ़ा तथा शतभिषा ये तारायें बायें भाग के मन्दिर में रहने वाली हैं । ( द्र० ४.१४ ) ॥ १९-२० ॥

**एतासामधिपा एते राशयो ग्रहरूपिण: ।**
**मेषो वृषो मिथुनश्च ईश्वरा: परिकीर्तिता: ॥ २१ ॥**
**एतद्गेहस्थितं वर्णमेते रक्षन्त्यनित्यश: ।**
**ककारस्य नकारस्य ऋकारस्य उकारप: ॥ २२ ॥**

---

१. दक्षाग्रेण हस्तिता इति तत्पुरुष: । दक्षगेहस्थितास्तारा इति क० ।

२. ककारस्य डकारस्य सकारस्य डकारप: ।
अकारस्य पकारस्य मकारस्य ठकारप: ।। इति क० ।

इनके स्वामी राशियों को जो ग्रह स्वरूप हैं उन्हें इस प्रकार जानना चाहिए । मेष, वृष और मिथुन इनके स्वामी हैं । इन गृहों में रहने वाले इन-इन वर्णों की ये राशियाँ रक्षा करती हैं, किन्तु नित्य नहीं । ( ३ ) ककार, नकार तथा ऋकार के उकार वाले स्वामी हैं ॥ २१-२२ ॥

**अकारस्य पकारस्य मकारस्य वकारपः ।**
**हकारस्याधिपा एते ऋद्धिमोक्षफलप्रदाः ॥ २३ ॥**

( ४ ) अकार, षकार, नकार तथा मकार का वकार अक्षर वाली राशि स्वामी है, ये सभी हकार अक्षर के भी स्वामी हैं जो ऋद्धि एवं मोक्ष रूप फल देने वाले हैं ॥ २३ ॥

**विमर्श**—१. **टकारप**—टकारं पिबति स्वान्तः स्थापयति—इस व्युत्पत्ति से टकार को अपने नाम में समाविष्ट करने वाला 'कर्कट' ऐसा अर्थ संभव हो सकता है क्या ? ( अर्थात् टकार अक्षर वाली राशि )

२. **सकारप**—यहाँ पर भी सकारं पिबति स्वान्तः अन्तः स्थापयति—इस व्युत्पत्ति से केसरी, अर्थात् सिंह ऐसा अर्थ हो सकता है क्या ? ( अर्थात् सकार अक्षर वाली राशि )

३. **उकारप**—उकारं पिबतिः स्वान्तः स्थापयति—इस व्युत्पत्ति से मिथुन अर्थ हो सकता है क्या ? ( अर्थात् उकार अक्षर वाली राशि ) ॥ २३ ॥

**दक्षिणाधोगृहस्यापि देवता इति राशयः ।**
**तुला च वृश्चिकश्चैव धनुश्चैव ग्रहेश्वरः ॥ २४ ॥**

( ५ ) दक्षिण गृह के नीचे रहने वाले गृह की ये देवता राशियाँ हैं । हे महेश्वर ! उनके नाम तुला, वृश्चिक और धनु हैं जो ग्रहेश्वर भी कहे जाते हैं ॥ २४ ॥

**एतासां तारकाणाञ्च पतयो गदिता मया ।**
**भरण्यार्द्रमघाचित्राज्येष्ठाश्रवणवल्लभाः ॥ २५ ॥**
**तथोत्तरभाद्रपदा वल्लभाः राशयो मताः ।**
**अथ गेहस्थितं[१] वर्णं शृणु नाथ भयापह ॥ २६ ॥**

मेरे द्वारा कही गई ये राशियाँ भरणी, आर्द्रा, मघा, चित्रा, ज्येष्ठा तथा श्रवण नक्षत्रों के स्वामी हैं । इसी प्रकार उत्तराभाद्रपद के भी स्वामी हैं । अब सबके भय को दूर करने वाले, हे नाथ ! इन नक्षत्रों में रहने वाले वर्णों को सुनिए ॥ २५-२६ ॥

**यकारस्य[२] दकारस्य टकारस्य नकारपः ।**
**धकारस्य वकारस्य चकारस्य यकारपः ॥ २७ ॥**
**क्षकारपणका[३] एते राशयः परिकीर्तिताः ।**
**धनवृत्तिप्रदा नित्या नित्यस्थाननिवासिनः ॥ २८ ॥**

---

१. अधो गेहस्थितं इति क० ।

२. गकारस्य अकारस्य टकारस्य शकारपः ।
धकारस्य यकारस्य रकारस्य षकारपः ॥ इति क० ।

३. क्षकारपालका इति क० ।

यकार, दकार, टकार के नकार अक्षर वाली राशि स्वामी है । धकार, वकार तथा चकार के यकार अक्षर वाली राशि स्वामी हैं । इसी प्रकार क्षकार की भी ये राशियाँ स्वामी कही गई हैं । जो धन तथा वृत्ति प्रदान करने वाली हैं तथा अपने स्थान में नित्य निवास करने वाली हैं ॥ २७-२८ ॥

**वामाधोमन्दिरस्यापि वल्लभा इति राशयः ।**
**मकराधस्तु[१] कोष्ठेषु मीनो राशिफलस्थिताः ॥ २९ ॥**

बायीं ओर के नीचे के गृह की भी यही राशियाँ स्वामी हैं, गकार के नीचे वाले कोष्ठकों में मीन ही राशियों के फल रूप से स्थित है ॥ २९ ॥

**एतानि भानि रक्षन्ति शूलपाशासिधारकाः[२] ।**
**पुनर्वसुः कृत्तिका च तथाभंपूर्वफल्गुनी ॥ ३० ॥**
**स्वाती मूला धनिष्ठा च रेवती वामगेहगाः ।**
**एतासामधिपा एते जलस्था ग्रहदेवताः ॥ ३१ ॥**

शूल पाश तथा असि ( तलवार ) धारण किए हुये उक्त राशियाँ इन सभी नक्षत्रों की रक्षा करती हैं । पुनर्वसु, कृत्तिका, पूर्वाफाल्गुनी, स्वाती, मूल, धनिष्ठा, रेवती इतने नक्षत्र बायीं ओर वाले गृह में निवास करने वाले हैं जिनके स्वामी जलचर गृह देवता हैं ॥ ३०-३१ ॥

**एतान् वर्णान्[३] प्ररक्षन्ति गृहस्था नव राशयः ।**
**धकारस्य जकारस्य टकारस्य तकारपः ॥ ३२ ॥**
**नकारस्य भकारस्य लकारस्य तकारपः ।**
**कलहादिमहादोषकालदर्शनकारकाः[४] ॥ ३३ ॥**

इस प्रकार गृहों में रहने वाली नव राशियाँ इन वर्णों की रक्षा करती हैं । धकार, जकार तथा टकार वर्णों की तकार अक्षर वाली राशि स्वामी है । नकार भकार एवं लकार वर्णों की सकार अक्षर वाली राशि स्वामी हैं, जो सभी कलहादि महादोषों वाली तथा काल का दर्शन कराने वाली है ॥ ३२-३३ ॥

**राशयो लोकहा नाथ तन्मन्त्रं परिवर्जयेत् ।**
**यद्येकदेवतागेहं विभिन्नञ्च सुशोभनम् ॥ ३४ ॥**
**चतुः स्थानं युगस्थानं सर्वत्रापि निषेधकम् ।**
**एकगेहस्थितं मन्त्रं बहुसौख्यप्रदायकम् ॥ ३५ ॥**
**नाम्न आद्यक्षरं नीत्वा राशिनक्षत्रविस्मृतौ ।**
**सभावं[५] साधकश्रेष्ठः कलहे कलहं भवेत् ॥ ३६ ॥**

---

१. मकरः कुम्भश्चैक मीनो राशिकुलस्थिताः इति क० ।

२. शूलं च पाशश्च असिश्च, तेषां धारकाः ।

३. एतान् वर्णान् प्रक्षरन्ति गृहस्थान् राशयस्त्रयः ।। इति क० ।

४. कालदर्शनं कुर्वन्ति कारयन्ति वा इति कालदर्शनकारकाः ।

५. गणयेत् साधकश्रेष्ठः इति क० ।

**राशिफल विचार**—हे नाथ ! जो राशियाँ लोकविनाशक हैं, उन राशि वाले मन्त्रों को त्याग देना चाहिए । यदि एक देवता वाले गृह में भिन्न भिन्न राशि वाले मन्त्र पड़ें तो शुभावह हैं । चौथा तथा दूसरा स्थान सभी मन्त्रों के ग्रहण में निषिद्ध कहा गया है । एक ही गृह में स्थित होने वाले मन्त्र बहुत सौख्य प्रदान करने वाले होते हैं । यदि राशि तथा नक्षत्र ज्ञात न हों तो नाम का आदि अक्षर ले कर गणना करे । समान भाव होने पर श्रेष्ठ साधक, किन्तु कलह में गणना होने पर कलह होता है ॥ ३४-३६ ॥

**[१] रिपुश्चेन्मूलनाशः स्यात् कलहोऽपि सुरेश्वर।**
**नेत्रयुग्मं स्वरं पाति सिंहो हि कन्यकां तथा ॥ ३७ ॥**
**कर्णयुग्मं तुला पाति संयुगं वृश्चिको धनुः ।**
**चयुगं मकरः पाति कुम्भो मीनश्च पाति हि ॥ ३८ ॥**
**ओष्ठञ्च पाति च तथा अधरं मेष एव च ।**
**दन्तयुग्मं [२] वृषः पाति मिथुनः शेषगोऽक्षरः ॥ ३९ ॥**

हे सुरेश्वर ! यदि शत्रु स्थान में नाम पड़े तो मूल सहित सर्वनाश होता है । किं बहुना कलह तो होता ही है । सिंह तथा कन्या नेत्रयुग्म ( इ ई ) स्वर की रक्षा करती है । तथा तुला कर्णयुग्म ( उ ऊ ) की, वृश्चिक धन संयुगं ( ए ऐ ) की वृश्चिक और धन राशि, चयुग की मकर, कुम्भ एवं मीन ओष्ठ की, अधर की मेष, दन्त युग्म की वृष तथा मिथुन शेष अक्षरों की रक्षा करती हैं ॥ ३७-३९ ॥

**यस्य ये ये राशयः स्युस्तस्य तत्तच्छुभं स्मृतम् ।**
**एकराशिः शुभं नित्यं ददाति च मनोरथम् ॥ ४० ॥**
**अन्यत्र [३] दुखदं प्रोक्तं साधकः सिद्धिभाग् भवेत् ।**
**भिन्नराशौ वर्जनीयं कलहं कालदर्शनम् ॥ ४१ ॥**

जिसकी जो जो राशियाँ होती है, उसके लिए वे वे स्वर शुभ कहे गये हैं, मन्त्र तथा साधक की एक राशि होने पर मनोरथ की सिद्धि प्राप्त होती है । अन्यत्र गृह दुखदायी कहा गया है, अतः साधक अपने राशि के गृह में सिद्धि का भाजन बनता है । इसलिए भिन्न राशि वर्जित करनी चाहिए, वह कलह कराने वाली है तथा काल का दर्शन कराती है ॥ ४०-४१ ॥

### श्रीचक्रम्

**श्रूयतां शैलजानाथ चक्रं श्रीत्रिदशात्मकम् ।**
**पूर्वपश्चिमभेदेन षट् च रेखाः समालिखेत् ॥ ४२ ॥**

---

१. रिपुश्चेन्मृत्युलाभः स्यात् कलहेऽपि सुरेश्वर । कलहं कालगेहश्च वर्जयेत् प्रयतः सुधीः ॥ चक्रोद्धारञ्च कथितं फलं शृणु मुदा हितम् । दीक्षादिवसे नाथ चक्रराजं यजन्ति ये ॥ ऐहिके धननाथः स्यात् परे याति परं पदम् ॥ इति क० ।

२. दन्तयुग्मं वृषश्चैव मिथुनमेषगौ स्वरौ । इति क० ।

३. अस्यालं सुखदं इति सं० पाठः ।

**वामादि दक्षिणान्तञ्च रेखा दश समालिखेत् ।**
**पञ्चगेहे पूरकाङ्कं सर्वाधोहारकाङ्ककम्[१] ॥ ४३ ॥**

हे शैलजानाथ ! अब श्री देवता के चक्र को सुनिए । पूर्व से पश्चिम की ओर ६ रेखा खींचे । फिर उत्तर से दक्षिणान्त दश रेखा खींचे । पाँच गेह में पूरक अङ्क लिखे । सबके नीचे हारक अङ्क लिखे ॥ ४२-४३ ॥

**तन्मध्ये रचयेदक्षं देवताग्रहसंयुतम् ।**
**पूरकाङ्कं मध्यगेहे[२] सप्तर्षियुक्तमालिखेत् ॥ ४४ ॥**

उसके मध्य में देवताग्रह से संयुक्त अक्ष की रचना करे । मध्य गृह में सप्तर्षियुक्त पूरक अङ्क लिखे ॥ ४४ ॥

**विमर्श**—पूरकाङ्क और हारकाङ्क पूण संख्या २, ४, ६ है और

**तद्दक्षिणे द्वादशञ्च तद्दक्षेण रसं तथा ।**
**तद्दक्षे अष्टदशके तद्दक्षे षोडशस्मृतम् ॥ ४५ ॥**

उसके दक्षिण द्वादश, उसके भी दक्ष ( रस ) ६, उसके दक्ष १८, उसके भी दक्ष भाग में १६ लिखे—ऐसा कहा गया है ॥ ४५ ॥

**पूरकाङ्कं ततो लेख्यं इन्द्राद्यङ्काश्च दक्षतः ।**
**इन्द्रगेहे च शतकं विधिविद्याफलप्रदम् ॥ ४६ ॥**
**धर्मगेहे शून्यसप्त युगलं विलिखेद् बुधः ।**
**अनन्तमन्दिरे नाथ शून्याष्टवसुरेव च ॥ ४७ ॥**

उसके बाद पूरक अङ्क लिखें, फिर दक्ष भाग से इन्द्रादि अङ्क लिखे । इन्द्र के गृह में विधि विद्या का फल देने वाला शतक लिखे । विद्वान् साधक धर्मगृह में शून्य सात तथा दो लिखे । हे नाथ ! इसके बाद अनन्त मन्दिर में शून्य, आठ तथा ( वसु ) ८ संख्या लिखे ॥ ४६-४७ ॥

**कालीगृहे शून्यवेदवामाद्याङ्कं विलिखेत्ततः ।**
**धूमावतीमन्दिरे च शून्यखेषु निशापतिम् ॥ ४८ ॥**
**इन्द्राद्या दक्षतो लेख्या अङ्काश्चन्द्राधिदेवताः ।**
**शून्याष्टचन्द्रयुक्तञ्च[३] सर्वत्र देवता लिखेत् ॥ ४९ ॥**

इसके बाद **काली** गृह में शून्य, ( वेद ) ४ तथा वामादि अङ्क लिखे **धूमावती** के मन्दिर में शून्य तथा ख में ( निशापति ) १ लिखे । इन्द्रादि दक्षभाग से लिखे, अङ्क चन्द्राधि देवता, शून्य अष्टचन्द्र से युक्त कर सर्वत्र देवता लिखे ॥ ४८-४९ ॥

---

१. हारकङ्ककम् इति सं० पाठः । २. आद्यगेहे इति क० ।
३. शून्यषष्ठचन्द्रयुक्तं सर्वत्र दक्षतो लिखेत् । इति क० ।

तथाश्विनीकुमारौ[१] च शून्यानलयुगायुगौ[२] ।
तत्पश्चात् पूर्वगेहञ्च सहस्रार्कसमन्वितम् ॥ ५० ॥
तारिणीमन्दिरस्थाङ्कं शून्यवेदं तथैव[३] च ।
बगलामुखीगेहस्थं शून्याष्टचन्द्रसंयुतम् ॥ ५१ ॥
ततश्चन्द्रगृहस्याधो वायुर्गेहं मनोरमम् ।
रन्ध्रवेदात्मकं गेहं सर्वसिद्धिप्रदायकम् ॥ ५२ ॥

फिर शून्य, अनल ३, युग ४ तथा अयुग से युक्त कर दोनों अश्विनीकुमारों को लिखे । उसके बाद सहस्रार्क समन्वित पूर्वगृह लिखे । **तारा** के मन्दिर में रहने वाला अङ्क शून्य वेद ४ है । उसी प्रकार **बगलामुखी** का गेह शून्य, अष्ट तथा चन्द्र १ से संयुक्त लिखे । इसके बाद उस चन्द्र गृह के नीचे वायु का मनोरम गृह है जो रन्ध्र ०, वेद ४ संख्या से संयुक्त है तथा सभी प्रकार की सिद्धियों को देने वाला है ॥ ५०-५२ ॥

राहुगेहं महापापं शून्यशून्यमुनिप्रियम् ।
पश्चादेकत्र[४] हस्तञ्च खशून्ययुगलात्मकम् ॥ ५३ ॥
षोडशीमन्दिरे शून्यमष्टचन्द्रसमन्वितम्[५] ।
मातङ्गीमन्दिरे शून्यरुद्रचन्द्रसमन्वितम् ॥ ५४ ॥

राहु का गृह महापाप संयुक्त है वह शून्य, शून्य तथा मुनि ७ प्रिय है, उसके पश्चात् एक ही स्थान पर ख १ शून्य युगल अङ्क से युक्त हस्त लिखे । **षोडशी** मन्दिर शून्य, अष्ट तथा चन्द्र १ से समन्वित लिखे । मातङ्गी मन्दिर शून्य, रुद्र ११ तथा चन्द्र १ समन्वित लिखे ॥ ५३-५४ ॥

वायोरधोवरुणस्य गृहं सप्तशशिप्रियम् ।
तरुणी गेहमध्ये च शून्याष्टकसमन्वितम् ॥ ५५ ॥
बुधगेहस्थिताङ्कञ्च शून्यचन्द्रयुगात्मकम् ।
भुवनेशीमन्दिरस्थं शून्याष्टकशशिप्रियम् ॥ ५६ ॥

वायु के नीचे वरुण का गृह है जो सात तथा शशि १ प्रिय है तरुणीगृह को शून्य तथा अष्ट संख्या से समन्वित लिखना चाहिए । बुध गेह में रहने वाले अङ्क शून्य, चन्द्र तथा युग ४ संख्यायें हैं इसी प्रकार **भुवनेशी** मन्दिर का अङ्क शून्य, आठ तथा शशि १ संख्या वाला है ॥ ५५-५६ ॥

वरुणाधः कुबेरस्य गृहस्थं षट् च युग्मकम् ।
आनन्तभैरवी गेहे दशकं परिकीर्तितम् ॥ ५७ ॥

---

१. अश्विनीकुमारयो द्वित्वं भवति—इति कृत्वा द्विवचनान्तता नियता ।
२. शून्यानलयुगात्मकौ इति क० ।
३. शून्यवेदषडात्मकम् इति क० ।
४. पश्चादर्कगृहस्थञ्च खशून्ययुगलात्मकम् इति क० ।
५. षष्ठ इति क० ।

**धरणीगृहमध्ये च शून्ययुग्मेन्दुसंयुतम् ।**
**भैरवी गृहमध्यस्थं शून्ययुगलचन्द्रकम् ॥ ५८ ॥**

वरुण के नीचे कुबेर का गृह षट् तथा दो संख्या वाला है । आनन्दभैरवी का गृह दश संख्या वाला कहा गया है । धरणी गृह में शून्य युग्म तथा इन्दु १ संयुक्त लिखें । भैरवी का गृह शून्य युगल तथा चन्द्र संख्या वाला है ॥ ५७-५८ ॥

**राशिगृहस्थितं[1] शून्यर्षिचन्द्रमण्डलसंयुतम् ।**
**कुबेराधः [2]स्वकं चक्रस्थिताङ्कं सर्वसिद्धिदम् ॥ ५९ ॥**
**ईश्वरस्य गृहस्थञ्च सप्तशून्ययुगात्मकम् ।**
**तिरस्करिण्या गेहस्थं सहस्राङ्कसमन्वितम् ॥ ६० ॥**

शशि गृह शून्य ऋषि ७ तथा चन्द्रमण्डल १ से संयुक्त है । कुबेर के नीचे श्री चक्र में रहने वाले अङ्क सर्वसमृद्धि प्रदान करने वाले हैं । **ईश्वर सदाशिव** के गृह में रहने वाले अङ्क सप्त, शून्य तथा युगात्मक ४ हैं । तिरस्करिणी का गृह एक हजार संख्या से समन्वित है ॥ ५९-६० ॥

**किङ्किणीमन्दिरं पश्चादष्टचन्द्रसमन्वितम् ।**
**छिन्नमस्तागृहं पश्चाच्छून्याष्टचन्द्रमण्डलम् ॥ ६१ ॥**
**वागीश्वरीगृहं पश्चात् सप्तमं चन्द्रमण्डलम् ।**
**महाफलप्रदातारं[3] धर्मो[4] रक्षति तं पुनः ॥ ६२ ॥**

इसके पश्चात् **किंकिणी** का मन्दिर ८ आठ तथा चन्द्र संख्या समन्वित है, इसके पश्चात् छिन्नमस्ता का गृह शून्य, अष्ट तथा चन्द्रमण्डलात्मक १ है । इसके पश्चात् **वागीश्वरी** का गृह सप्तम तथा चन्द्रमण्डल १ युक्त है, यह गृह महाफल देने वाला है, जिसकी स्वयं धर्म रक्षा करते हैं ॥ ६१-६२ ॥

**ईश्वरस्य अधोगेहे बटुकस्य गृहं ततः ।**
**शून्याष्टमाद्यं स्वगृहं धर्मार्थकाममोक्षदम् ॥ ६३ ॥**
**तत्पश्चात् डाकिनीगेहं खशून्यमुनिसंयुतम् ।**
**हन्ति साधकसौख्यं[5] हि क्षणादेव न संशयः ॥ ६४ ॥**

इसके बाद ईश्वर सदाशिव के गृह के नीचे **बटुक** का गृह है । इनका स्वयं का गृह शून्य, आठ तथा आद्य १ अङ्क समन्वित है जो धर्म, अर्थ, काम तथा मोक्ष देने वाला है । इसके पश्चात् **डाकिनी** का गृह है जो ख शून्य तथा मुनि ७ संख्या से संयुक्त है । यह गृह साधक के समस्त सौख्य को क्षण मात्र में विनष्ट करने वाला है—इसमें संशय नहीं ॥ ६३-६४ ॥

---

१. वाणिगृहस्थितम् इति क० । २. सुखम् इति क० ।
३. महच्च तत्फलं चेति महाफलम्, तस्य प्रदातारम् ।
४. धर्मः क्षरति तस्य च इति क० । ५. मुख्यम् इति क० ।

स्वगृहे स्वीयमन्त्रस्य फलदं परिकीर्तितम् ।
भीमादेवीगृहं पश्चात् खसप्तचन्द्रमण्डलम् ॥ ६५ ॥
भयदं सर्वदेशे तु वर्जयेद् गृहान्तरम् ।
लक्षवर्णं लिखेत् शेषगृहे द्वे पण्डितोत्तमः ॥ ६६ ॥

अपने गृह में अपना-अपना मन्त्र फल देने वाला है—ऐसा कहा गया है । इसके बाद **भीमा देवी** का गृह है जो ख शून्य, सप्त तथा चन्द्रमण्डल से संयुक्त है । अन्य गृह सभी स्थानों पर भय प्रदान करते हैं । इसलिए उन्हें वर्जित कर देना चाहिए । इसके बाद उत्तम, श्रेष्ठ, विद्वान् शेष दो गृह में ल और क्ष इन दो वर्णों को लिखे ॥ ६५-६६ ॥

इन्द्रगेहावधिं धीरो वकारादिकवर्णकम्[१] ।
क्षकारान्तं लिखेत्तत्र गणयेत् साधकस्ततः ॥ ६७ ॥

धीर साधक **इन्द्रगेह** ( द्र० ४. ४६ ) से प्रारम्भ कर वकार से लेकर क वर्ग पर्यन्त वर्ण लिखे । फिर श, ष, स, ह, क्ष—इस प्रकार क्षकारान्त वर्ण लिखे । फिर साधक गणना करे ॥ ६७ ॥

पूरकाङ्कमूदर्ध्वदेशे हारकाङ्कमधो लिखेत् ।
निजनामाक्षरं यत्र तत्कोष्ठाङ्कं महेश्वर ॥ ६८ ॥
नीत्वा च पूजयेद्विद्वान् स्वस्वगेहोर्ध्वदेशगैः ।
अङ्कैस्ततो[२] हरेर्नाथ अधोऽङ्के हार्यशेषकम् ॥ ६९ ॥
विस्तारञ्चेद्देवताङ्कस्तदङ्कः शुभदः स्मृतः ।
अल्पाङ्कः शुभदः प्रोक्तः साधकस्य सुखावहः ॥ ७० ॥

ऊर्ध्वदेश में पूरक अङ्क लिखे, नीचे हारकाङ्क लिखे । इसके बाद, हे महेश्वर ! जहाँ अपने नाम का अक्षर हो विद्वान् उस कोष्ठ का अङ्क लेकर पूजा करे । फिर उसके ऊपर वाले गृह के अङ्क से भाग देवे । यदि देवता का अङ्क बडा हो तो वह अङ्क शुभ देने वाला होता है । अल्पाङ्क भी शुभ देने वाला कहा गया है जो साधक के लिए सुखावह है ॥ ६८-७० ॥

एकाक्षरे महासौख्यं तत्रापि गणयेद् वचः[३] ।
धीराङ्कः शून्यगामी च देवताङ्कस्तथा विभो ॥ ७१ ॥
तदा नैव शुभं विद्यादशुभाय प्रकल्प्यते ।
एके धनमवाप्नोति द्वितीये राजवल्लभः ॥ ७२ ॥
तृतीये जाप्यसिद्धिः स्याच्चतुर्थे मरणं ध्रुवम् ।
पञ्चमे पञ्चमानः[४] स्यात् षष्ठे दुःखोत्कटानि च ॥ ७३ ॥

---

१. ककारादि इति क० ।

२. आज्ञास्ततो हरेर्नाथ अधोर्द्धेऽङ्के द्वाष्टशोधकम् इति क० । ३. न च इति क० ।

४. पचि व्यक्तीकरणे इति धातोः कर्तरि शानच्प्रत्ययः, ततः पञ्चमान इत्यस्य साधुत्वम् ।

एकाक्षर में महान् सुख की प्राप्ति होती है । उसमें भी वर्णों की गणना करनी चाहिए । हे विभो ! यदि धीराङ्क ( अधोङ्क ) तथा देवताङ्क शून्य आवे तो शुभ नहीं होता । वह सर्वदा अशुभ देने में समर्थ होता है । एक में धन की प्राप्ति, द्वितीय में राजवल्लभ, तृतीय में जप से सिद्धि, किन्तु चतुर्थ में निश्चित रूप से मरण कहा गया है । पञ्चम में व्यक्ति की कीर्ति, छठवें में उत्कट दुःख प्राप्त होता है ॥ ७१-७३ ॥

**शैवानां [1]शाक्तवर्णानामित्यङ्कः परिगृह्यते ।**
**वैष्णवानां निषेधे [2] च पञ्चमाङ्को निषेधकः ॥ ७४ ॥**
**यासां यासां देवतानां हिंसा तिष्ठति चेतसि ।**
**तन्मन्त्रग्रहणादेवाष्टैश्वर्ययुतो [3] भवेत् ॥ ७५ ॥**
**यद्देवस्याश्रिता ये तु तद्गृहाङ्कं हरन्ति ते ।**
**ऊर्द्ध्वाङ्केन पूरयित्त्वा अधोऽङ्केन हरेत्सदा ॥ ७६ ॥**

शैवों के लिए तथा शक्ति के लिए इतने ही वर्णों के अङ्क के ग्रहण का विधान है । वैष्णवों के लिए पञ्चम अङ्क निषिद्ध है । जिन-जिन देवताओं की हिंसा चित्त में स्थित हो, उन-उन देवताओं के मन्त्र ग्रहण से साधक आठों ऐश्वर्यों से युक्त हो जाता है । जो लोग जिस देवता के अधीन होते हैं वे उन देवताओं के गृह के अङ्क को लेते हैं । इसलिए ऊपर के अङ्क से पूर्ण कर नीचे के अङ्क से उसका हरण ( भाग ) करे ॥ ७४-७६ ॥

**ऋणिधनिमहाचक्रं वक्ष्यामि शृणु तत्त्वतः ।**
**दर्शनादेव कोष्ठस्य जानाति पूर्वजन्मगम् ॥ ७७ ॥**
**देवं बहुतराङ्गेषु ज्ञात्वा सिद्धीश्वरो भवेत् ।**
**निजसेव्यां महाविद्यां गृहीत्वा मुक्तिमाप्नुयात् ॥ ७८ ॥**
**कोष्ठशुद्धञ्च मन्त्रञ्च ये गृह्णन्ति द्विजोत्तमाः ।**
**तेषां दुःखानि नश्यन्ति ममाज्ञा बलवत्तरा ॥ ७९ ॥**

**ऋणधनिचक्र**—हे सदाशिव ! अब ऋणी तथा धनी का चक्र तत्त्वतः वर्णन करती हूँ । उस कोष्ठ के दर्शन मात्र से पूर्व जन्म के ऋणी तथा धनी का ज्ञान हो जाता है । अनेक प्रकार के अङ्कों में मन्त्र देवता का ज्ञान कर साधक सिद्धियों का ईश्वर बन जाता है । अपनी सेवा के योग्य महाविद्या के मन्त्रों को ग्रहण कर साधक मुक्ति प्राप्त कर लेता है । कोष्ठ से शुद्ध मन्त्रों का जो द्विजोत्तम ग्रहण करते हैं उनके समस्त दुःख दूर हो जाते हैं, यह हमारी बलवत्तर आज्ञा है ॥ ७७-७९ ॥

**कोष्ठशुद्धं महामन्त्रं फलदं रुद्रभैरव ।**
**न हातव्यं महामन्त्रं सद्गुरुप्रियदर्शनात् ॥ ८० ॥**
**तत्र कोष्ठं न विचार्यं चेज्जानाति विचार्यकम् ।**
**महाविद्या महामन्त्रे विचार्यकोटिपुण्यभाक् ॥ ८१ ॥**

---

१. शाक्तवर्गाणाम् इति क० । २. निषेध्याङ्कः इति क० ।
३. तुच्छतो भवेत् इति ग० ।

हे रुद्र ! हे भैरव ! कोष्ठ से शुद्ध किया गया मन्त्र ही फल देने वाला है । सद्गुरु के प्रिय दर्शन से प्राप्त हुये महामन्त्र का भी त्याग नहीं करना चाहिए । उस विषय में कोष्ठ का विचार न कर अपने विचार को ही मानना चाहिए । यदि महाविद्याओं के महामन्त्र में विचार पूर्वक ( परीक्षित ) मन्त्र ग्रहण करने से करोड़ों गुना पुण्य का लाभ भी होता है तो भी सद्गुरु का मन्त्र लेना चाहिए ॥ ८०-८१ ॥

**अविचारे चोक्तफलं ददाति कामसुन्दरी ।**
**कोष्ठान्येकादशान्येव देवेन[१] पूरितानि च ॥ ८२ ॥**

( सद्गुरु से प्राप्त मन्त्र का ) यदि विचार न भी किया जाय तो कामसुन्दरी **ललिता** महाविद्या जैसा उसका फल कहा गया है । उतना फल तो वह देती ही हैं । ( इस चक्र में ) मात्र ११ कोष्ठक हैं, जिसे स्वयं महादेव ने परिपूर्ण किया है ॥ ८२ ॥

**अकारादिहकारान्तं लिखेत् कोष्ठेषु तत्त्ववित् ।**
**प्रथमं पञ्चकोष्ठेषु ह्रस्वदीर्घक्रमेण तु ॥ ८३ ॥**
**द्वयं द्वयं लिखेत्तत्र विचारे खलु साधकः ।**
**शेषेष्वेकैकशो[२] वर्णान् क्रमशस्तु लिखेत्सुधीः ॥ ८४ ॥**

तत्त्ववेत्ता उन कोष्ठों में अकार से आरम्भ कर हकार पर्यन्त वर्ण लिखे । प्रथम पाँच कोष्ठों में ह्रस्व दीर्घ क्रम से साधक विचारपूर्वक दो दो वर्णों को लिखे । फिर सुधी साधक शेष कोष्ठों में क्रमपूर्वक एक एक वर्ण लिखे ॥ ८३-८४ ॥

**अमावर्ण[३]द्वयस्यार्द्धावधिस्तु क्रमशोऽङ्ककम् ।**
**आद्यमन्दिरमध्ये तु षष्ठाङ्कं विलिखेद् बुधः ॥ ८५ ॥**
**द्वितीये षष्ठचिन्हञ्च तृतीये च गृहे तथा ।**
**चतुर्थे गगनाङ्कञ्च पञ्चमे चक्रत्रयं तथा ॥ ८६ ॥**
**षष्ठचापे[४] चतुर्थञ्च सप्तमे च चतुर्थकम् ।**
**अष्टमे गगनाङ्कञ्च नवमे दशमं तथा ॥ ८७ ॥**

अ से लेकर म पर्यन्त दो वर्णों के अवधि में क्रमशः अङ्कानुसार वर्ण लिखे । बुद्धिमान् प्रथम मन्दिर में छठवाँ वर्ण लिखे । द्वितीय में भी छठें चिन्ह को लिखे तृतीय गृह में तथा चतुर्थ गृह में गगनाङ्क ( ह ) लिखना चाहिए । पञ्चम में तीन चक्र लिखे । षष्ठ गृह में चतुर्थ वर्ण, सप्तम में भी चतुर्थ वर्ण, अष्टम में गगनाङ्क ( ह ) तथा नवम में दशम वर्ण लिखे ॥ ८५-८७ ॥

**शेषमन्दिरमध्ये तु त्रयाङ्कं विलिखेत्ततः ।**
**एते नाथ साध्यवर्णाः कथिताः क्रमशो ध्रुवम् ॥ ८८ ॥**

शेष मन्दिर में तीसरा वर्ण लिखे । हे नाथ ! ये साध्य मन्त्र के वर्ण हैं जिन्हें मैने आप से निश्चित रूप से कहा है ॥ ८८ ॥

---

१. वेदेन इति ग० । २. एकमेकमिति एकैकम्, तत एव स्वार्थे शस् ।
३. अ-आवर्णद्वयस्य इति क० । ४. षष्ठगेहे इति क० ।

कथयामि साधकार्णं सकलार्थनिरूपणम् ।
आद्यगेहे द्वितीयञ्च द्वितीये च तृतीयकम् ॥ ८९ ॥
तृतीये पञ्चमं प्रोक्तं गगनं वेदपञ्चके ।
षष्ठे युगलमेवं हि सप्तमे [1]चन्द्रमण्डलम् ॥ ९० ॥
अष्टमे गगनं प्रोक्तं नवमे च चतुर्थकम् ।
वेदञ्च दशमे प्रोक्तं चन्द्रमेकादशे तथा ॥ ९१ ॥

अब संपूर्ण प्रयोजनों के निरूपण करने वाले साधक के अक्षरों को कहती हूँ । प्रथम गृह में द्वितीय और द्वितीय में तृतीय वर्ण लिखे । तृतीय गृह में पाँचवाँ, चौथे तथा पाँचवे गृह में गगन ( ह ) लिखे । षष्ठ में युगल वर्ण, सप्तम में चन्द्रमण्डल लिखे । अष्टम गृह में गगन ( ह ) वर्ण, नवम में चतुर्थ वर्ण, दशवें गृह में चौथा वर्ण, एकादश में चन्द्र वर्ण लिखे ॥ ८९-९१ ॥

साधकार्णाः स्मृताः त्वेते वर्णमण्डलमध्यगाः ।
साध्यवर्णान् महादेव स्वरव्यञ्जनभेदकान् ॥ ९२ ॥
एवं हि सर्वमन्त्रार्णानमष्टाद्यङ्कैः [2] प्रपूरयेत् ।
एकीकृत्य हरेदष्टसंख्याभिः [3]क्षणवल्लभे ॥ ९३ ॥
यस्यापहस्थितं वर्णं तन्नेभव्यं मनौ शुभे [4] ।
साधकाभिधानवर्णान् [5] स्वरव्यञ्जनभेदकान् ॥ ९४ ॥

वर्ण मण्डल के मध्य में रहने वाले इतने ही साधक के वर्ण हैं । हे महादेव ! स्वर व्यञ्जन को अलग अलग कर साध्यवर्णों को एकत्रित करे, यह प्रक्रिया समस्त वर्णों के लिए है । फिर उन दोनों में अष्ट आदि में हैं जिसके अर्थात् ९ अङ्क जोड़ दे । इस प्रकार सबको जोड़कर आठ संख्या से भाग दे । जिस मन्त्र में साधक वर्णों से कम शेष बचे, उस शुभ मन्त्र को भी कदापि न ग्रहण करे । इसी प्रकार साधक के वर्णों के स्वरों तथा व्यञ्जनों को अलग-अलग कर लेवे ॥ ९२-९४ ॥

पृथक् पृथक् संस्थितांश्च व्यक्तं शृणु पुनः पुनः ।
द्वितीयाद्यङ्कचन्द्रान्ते संपूर्वाष्टभिराहरेत् [6] ॥ ९५ ॥
मन्त्रो यस्त्वधिकाङ्कः स्यात्तदा मन्त्रं जपेत् सुधीः ।
समेऽपि च जपेन्मन्त्रं न जपेत्तु ऋणाधिके ॥ ९६ ॥

फिर पृथक् पृथक् संस्थित उन वर्णों को द्वितीयादि अंक से भाग दे । यदि मन्त्र में साधक की अपेक्षा अधिक अङ्क आवे तो सुधी साधक उस मन्त्र का जप करे । सम होने पर

---

१. चक्रमण्डलम् इति क० । २. अष्टाद्यङ्कैः इति ख, ग, ।
३. कुलवल्लभ इति क । ४. यद्यत् गेहस्थितं वर्ण तन्त्रे तस्य मनौ शुभे इति क० ।
५. साधकस्याभिधान— इति क० ।
६. सम्पूर्वास्वभिवाहरेत् इति ख० ग०।

भी मन्त्र का जप किया जा सकता है । किन्तु ऋण की अधिकता होने पर कदापि उस मन्त्र का जप न करे ॥ ९५-९६ ॥

शून्ये मृत्युं विजानीयात्तस्माच्छून्यं विवर्जयेत् ।
द्वितीयाद्यङ्कजालञ्च वैष्णवे सुखदं स्मृतम् ॥ ९७ ॥
द्वितीयाद्यङ्कजालञ्च वैष्णवे सुखदं स्मृतम् ।
द्वितीयाद्यङ्कजालञ्च तथा वै परिकीर्तितम् ॥ ९८ ॥

यदि शेष शून्य बचे तो भी उस मन्त्र का जप कदापि न करे । क्योंकि शून्य मृत्यु का सूचक है । द्वितीयादि अङ्क समुदाय वैष्णवों के लिए सुखदायी कहे गये हैं । यतः द्वितीयादि अङ्क जाल वैष्णवों के लिए सुखदायी हैं, अतः द्वितीयादि अङ्कजाल भी उसी प्रकार का कहा गया है ॥ ९७-९८ ॥

इन्द्राद्यङ्कं तथा नाथ सौरे[1] शाक्ते शुभप्रदम् ।
तथा दिक्संख्यकाङ्कञ्च साधकस्य शुभप्रदम् ॥ ९९ ॥
तदङ्कं शृणु यत्नेन पूर्ववत् सकलं स्मृतम् ।
स्थलञ्चैव[2] विभिन्नाङ्कमूदर्ध्वाधश्च क्रमेण तु ॥ १०० ॥
साध्याङ्कान् साधकाङ्कांश्च पूरयेद् गृहसंख्यया ।
गुणिते तु हृते चापि यच्छेषं जायते स्फुटम् ॥ १०१ ॥

हे नाथ ! इन्द्रादि अङ्क सूर्य-मन्त्र तथा शक्ति-मन्त्र में शुभप्रद हैं उसी प्रकार दिक् १० संख्या वाले अङ्क साधक के लिए शुभप्रद हैं । हे सदाशिव ! और सब तो पूर्ववत् है केवल उन अङ्कों को प्रयत्नपूर्वक सुनिए । विभिन्न अङ्कों से युक्त ऊपर से नीचे तक क्रमशः साध्य के अङ्कों को तथा साधक के अङ्कों को एक में मिला देवे और उसे ९ से पूर्ण करे । फिर जितनी गृह की संख्या हो उसे ८ से गुणा करे । फिर स्पष्टरूप से जो शेष बचे उससे फल विचार करे ॥ ९९-१०१ ॥

तदङ्कं कथयाम्यत्र एकादशगृहे स्थितम् ।
इन्द्रतारास्वर्गरवितिथिषड्वेददाहनाः[3] ॥ १०२ ॥
अष्टवसु नवाङ्कस्थाः साध्यार्णगुणिता इति ।
दिग्भूगिरिश्रुतिगजवह्निपर्वतपञ्चमाः ॥ १०३ ॥
वेदषष्ठानलाङ्कञ्च गणयेत् साधकाक्षरान् ।
नामाद्यक्षरमारभ्य यावन्मन्त्राक्षरं भवेत् ॥ १०४ ॥
तत्संख्याञ्च त्रिधा कृत्वा सप्तभिः संहरेद् बुधः ।
अधिकं च ऋणं प्रोक्तं तच्छेषं धनमुच्यते ॥ १०५ ॥

एकादश गृह में रहने वाले उन अङ्कों को यहाँ कहती हूँ—ये अंक इन्द्र तारा २७,

---

१. शैवे इति कः । २. शैवे इति क० ।
३. इन्द्रश्च तारा च स्वर्गश्च रविश्च तिथिश्च षड्वेदाश्च, ते दह्यन्ते एभिस्ते ।

स्वर्ग, रवि १२, तिथि २७, षड् ६, वेद ४, दहन ३, अष्टवसु ८ तथा नवाङ्क ९ में स्थित वर्ण का गुणा साध्य वर्ण से करे ।

नाम के आदि अक्षर से लेकर जितने मन्त्र के अक्षर हों उन संख्याओं को तीन भागों में बाँट देवे । फिर सात का भाग देवे । यदि अधिक शेष हो तो ऋण, यदि कम शेष हो तो धन कहा जाता है ॥ १०२-१०५ ॥

**अथवान्यप्रकारञ्च कृत्वा मन्त्रं समाश्रयेत् ।**
**नामाद्यक्षरमारभ्य यावत् साधकवर्णकम् ॥ १०६ ॥**
**तावत्संख्यां सप्तगुणं कृत्वा वामैहरेद् बुधः ।**
**श्रीविद्येतरविद्यायां[1] गणना परिकीर्तिता ॥ १०७ ॥**

( १ ) अथवा एक दूसरा भी प्रकार है जिससे परीक्षा कर मन्त्र का आश्रय ग्रहण करे नाम के आदि अक्षर से आरम्भ कर जितना भी साधक का वर्ण हो उसकी गणना करे । फिर जितनी संख्या हो, उसमें सात का गुणा करे । फिर वाम ( उलट कर ) संख्या से भाग देवे । किन्तु यह गणना श्री विद्या से इतर महाविद्याओं वाले मन्त्र में करने का विधान है ॥ १०६-१०७ ॥

**अथवान्यप्रकारञ्च सकलान् साधकाक्षरान् ।**
**स्वरव्यञ्जनभेदेन द्विगुणीकृत्य साधकः ॥ १०८ ॥**
**साध्ययुक्तं ततः कृत्वा स्वरव्यञ्जनभेदकम् ।**
**अष्टाभिः संहरेदङ्कं शृणु संहारविग्रहम् ॥ १०९ ॥**

( २ ) अथवा परीक्षा का एक और भी प्रकार है । साधक के सभी अक्षरों के स्वर और व्यञ्जनों को अलग अलग कर उसकी गणना करे । फिर साधक स्वयं उसका दुगुना करे । इस प्रकार साध्य के स्वर एवं व्यञ्जन अक्षरों को अलग अलग जोड़कर आठ का भाग देवे, फिर उसके संहार-विग्रह ( = फल ) को सुनिए ॥ १०८-१०९ ॥

**पूर्वचारक्रमं सम्यक् सर्वत्रापि शुभाशुभम् ।**
**अस्य विचारमात्रेण सिद्धिः सर्वार्थसाधिका ॥ ११० ॥**
**पूर्वजन्माराधितायां तां प्राप्नोति हि देवताम् ।**

इसमें पूर्वाचार के क्रम से ही सम्यक् शुभाशुभ फल जानना चाहिए इसके केवल विचार मात्र से ही सर्वार्थ साधिका सिद्धि प्राप्त होती है । साधक ने पूर्व जन्म में जिस देवता की आराधना की हैं उसी देवता को वह प्राप्त करता है ॥ ११०-१११ ॥

### मन्त्रदोषादिनिर्णयः
### उल्काचक्रम्

**अथान्यत् सम्प्रवक्ष्यामि सावधानावधारय ॥ १११ ॥**
**उल्काचक्रं सर्वसारं मन्त्रदोषादिनिर्णयम् ।**
**मत्स्याकारमूर्ध्वमुखं सर्वमन्त्रादि विग्रहम् ॥ ११२ ॥**

---

१. श्रीविद्यात इतरा विद्या श्रीविद्येतरविद्या, तस्याम् ।

हे शिव ! अब मन्त्र परीक्षा का अन्य प्रकार कहती हूँ सावधान होकर सुनिए । वह प्रकार **उल्काचक्र** है, जो सबका सार है, उससे सभी दोषादि का निर्णय हो जाता है, उसका आकार मत्स्य के समान ऊर्ध्वमुख है तथा वह सभी मन्त्रों का आदि विग्रह है ॥ १११-११२ ॥

**स्कन्धदेशावधिर्नाथ पुच्छपर्यन्तमेव च ।**
**एकाक्षरादिमन्त्रादिद्वादशान्ताक्षरात्मकम् ॥ ११३ ॥**
**विलिखेत् पृष्ठदेशे तु शुभाशुभविशुद्धये ।**
**त्रयोदशाक्षरान् वाथ एकविंशाक्षरान्तकम् ॥ ११४ ॥**

हे नाथ ! मत्स्याकार उस चक्र के स्कन्ध देश से लेकर पुच्छपर्यन्त भाग में एकाक्षर मन्त्र के आदि अक्षर से लेकर द्वादश अक्षर पर्यन्त मन्त्रों को लिखे और शुभाशुभ फल की विशुद्धि के लिए उसके पृष्ठ देश पर १३ अक्षर से आरम्भ कर २१ अक्षर पर्यन्त मन्त्रों को लिखे ॥ ११३-११४ ॥

**नेतव्यं साधकैर्मन्त्रं पृष्ठस्थमुदरस्थकम् ।**
**तथा श्रीशुभदं प्रोक्तं [1]कण्ठादिपुच्छकान्तकम् ॥ ११५ ॥**
**द्वाविंशादि चतुस्त्रिंशदक्षरान्तमनुं शुभम् ।**
**पुच्छस्थं नापि गृह्णीयात् मुखस्थञ्च तथा ध्रुवम् ॥ ११६ ॥**

इस प्रकार जो मन्त्र पृष्ठ से ले कर उदर पर्यन्त भाग से पड़े, साधक उसी को ग्रहण करे । कण्ठ से ले कर पुच्छ पर्यन्त २२ अक्षर से २४ अक्षर पर्यन्त मन्त्र भी श्री तथा शुभ देने वाला कहा गया है । पुच्छ पर पड़ने वाले तथा मुख पर पड़ने वाले मन्त्र निश्चित रूप से न ग्रहण करे ॥ ११५-११६ ॥

**शीर्षस्थञ्चापि गृह्णीयात् तदक्षरं शृणु प्रभो ।**
**पञ्चत्रिंशादि [2] द्विचतुर्द्वाविंशदन्तमेव च ॥ ११७ ॥**
**मस्तकस्थं शुभं प्रोक्तं मुखवर्णान् शृणु प्रभो ।**
**त्रिचत्वारिंशदर्णादि एकपञ्चाशदन्तकम् ॥ ११८ ॥**

हे प्रभो ! शीर्ष पर पड़ने वाले जिन अक्षर वाले मन्त्रों को ग्रहण करे उसे सुनिए वे ३५ अक्षर से प्रारम्भ कर ४२ अक्षर पर्यन्त वाले मन्त्र हैं । उपर्युक्त मस्तक ( शीर्ष ) पर लिखे गये अक्षर वाले मन्त्र शुभ देने वाले हैं । हे प्रभो ! अब मुख पर रहने वाले वर्णों को सुनिए । वे ४३ अक्षर से प्रारम्भ कर ५१ अक्षर पर्यन्त वाले मन्त्र हैं ॥ ११७-११८ ॥

**मुखस्थमन्तमशुभं न गृह्णीयात् कदाचन ।**
**पृष्ठस्थं शृणु यत्नेन निरर्थकमहाश्रमम् ॥ ११९ ॥**
**श्रमगात्रस्य पीडाभिर्देवता कुप्यतेऽनिशम् ।**
**द्विपञ्चाशदक्षरादि एकषष्टितमान्तकान् ॥ १२० ॥**

---

१. कण्ठ आदिर्यस्य तत्, पुच्छोऽन्तो यस्य तत्, पुच्छ एव पुच्छकः, ततः कर्मधारयः ।
२. पञ्चत्रिशादिद्विचत्वारिंशदर्णान्तमेव च ।

वर्णान् पुच्छस्थितानेतान् नेत्रस्थान् शृणु वल्लभ ।
द्विषष्टितमवर्णादि[१] चतुःषष्ट्यक्षरान्तकान् ॥ १२१ ॥

मुख पर रहने वाले तथा अन्त ( = पुच्छ ) में रहने वाले मन्त्र अशुभ हैं । उन्हें किसी भी अवस्था में ग्रहण न करे ।

अब पीठ पर रहने वाले अक्षर मन्त्रों को सुनिए । ऐसे तो वे निरर्थक हैं । महाश्रम देने वाले हैं । श्रम के कारण गात्र की पीडा से देवता निरन्तर कुपित हो जाते हैं वे ५२ अक्षर से आरम्भ कर ६१ अक्षरों वाले मन्त्र हैं । यही वर्ण पुच्छ पर स्थित रहने वाले हैं । हे वल्लभ ! अब नेत्र पर रहने वाले वर्णों को सुनिए । वे ६२ अक्षर से आरम्भ कर ६४ अक्षरों वाले मन्त्र हैं ॥ ११९-१२१ ॥

अङ्कं लोचनसंस्थं च[२] ततोऽन्यं रसनास्थितम् ।
तत्सर्वं शुभदं प्रोक्तमेतदन्यतमं स्मृतम् ॥ १२२ ॥
वैष्णवानाञ्च शैवानां शाक्तानां मन्त्रजापने ।
ततोऽन्यदेवभक्तानां भुक्तिमुक्तिप्रदं नृणाम् ॥ १२३ ॥

ये अङ्क लोचन पर स्थित रहने वाले हैं, इसके अतिरिक्त अन्य सभी जिह्वा पर स्थित रहने वाले हैं । इन दोनों में कोई एक शुभदायक कहा गया है अथवा सभी शुभदायक हैं । वैष्णवों के लिए, शैवों के लिए, शक्तों के लिए अथवा अन्य देवताओं के भक्तों के लिए मन्त्र जप में नेत्रस्थ मन्त्र भुक्ति तथा मुक्ति देने वाले हैं ॥ १२२-१२३ ॥

### रामचक्रम्

अथ वक्ष्ये महादेव चक्रसारं सुदुर्लभम् ।
रामचक्रं महाविद्या सर्वमन्दिरमेव च ॥ १२४ ॥
सर्वसिद्धिप्रदं मन्त्रं निजनामस्थमाश्रयेत् ।
तदैव सिद्धिमाप्नोति सत्यं सत्यं महेश्वर ॥ १२५ ॥

**रामचक्र**—हे महादेव ! अब अत्यन्त दुर्लभ चक्रसार कहती हूँ वह रामचक्र है जो महाविद्या का ही नहीं अपितु सभी मन्त्रों का मन्दिर है । जिसमें अपना नाम आवे वही मन्त्र समस्त सिद्धियों को देने वाला है । उसी का आश्रय लेना चाहिए । हे महेश्वर ! उसके आश्रय मात्र से साधक सिद्धि प्राप्त कर लेता है—यह सत्य है, यह सत्य है ॥ १२४-१२५ ॥

तत्प्रकारं शृणु क्रोधभैरव प्रियवल्लभ ।
नवाङ्कान् प्रलिखेद् विद्वान् वामदक्षिणभागतः ॥ १२६ ॥
तन्मध्ये क्रमशो दद्यात् तथा सप्तदशाङ्ककान् ।
दक्षिणादिक्रमेणैवमुक्तविद्याः समालिखेत् ॥ १२७ ॥

---

१. द्विषष्टितमो वर्णा आदिर्येषाम्, चतुःषष्ट्यक्षरमन्ते येषां तान् । बहुव्रीहिद्वयगर्भः कर्मधारयः ।

२. लोचनमन्त्रञ्च—इति क० ।

हे प्रियवल्लभ ! हे क्रोधभैरव ! अब उसका प्रकार सुनिए । विद्वान् साधक बायीं ओर से दक्षिण ओर नव अङ्क ( रेखा ) खींचे । उसके मध्य में क्रमशः १७ अङ्क ( रेखा ) खींचे। फिर दक्षिणादि क्रम से इस प्रकार उक्त विद्याओं को लिखे ॥ १२६-१२७ ॥

अकारादिक्षकारान्तं सर्वस्मिन् मन्दिरे लिखेत् ।
बालादिदेवता:[१] सर्वा भ्रामर्यन्ताश्च देवता: ॥ १२८ ॥
अस्याकाशविधे[२] गेहे सान्तनित्यं फलप्रदम् ।
पुनर्विलोममार्गेण आदिक्षान्तार्णमन्दिरे ॥ १२९ ॥
रक्तदन्तादि श्रीविद्या मन्त्रान्तं विलिखेद् बुध: ।
क्षकाराद्यनुलोमेन अकारान्तं लिखेत् तत: ॥ १३० ॥

सभी गृहों में अकार से लेकर क्षकारान्त वर्ण लिखे । फिर उसमें बाला देवता से प्रारम्भ कर भ्रामरी पर्यन्त देवता मन्त्र लिखे । इसके बीच में रहने वाले आकाश गृह में सान्त ( मन्त्र ) नित्य फलप्रद है । फिर अकारादि से लेकर क्षकारान्त गृह में विलोम रीति से रक्तदन्ता से लेकर श्री विद्या पर्यन्त मन्त्रों को लिखे । फिर उसी में अनुलोम क्रम से क्षकारादि वर्णों से प्रारम्भ कर उकारान्त अक्षरों को लिखे ॥ १२८-१३० ॥

पुनस्तच्छेषविद्याश्च शेषगेहे लिखेत् सदा ।
कायशोधनमुख्यादि[३] शैलवासिनि मन्त्रकम् ॥ १३१ ॥
पञ्चविंशतिगेहस्थं गणयेत् साधकस्तत: ।
गृहस्थमङ्कं वक्ष्यामि शृणु योगीशवल्लभ ॥ १३२ ॥

इसके बाद शेष गृहों में शेष विद्यायें लिखे । फिर काय शोधन मुख्य से आरम्भ कर शैलवासिनि पर्यन्त मन्त्र को लिखे । फिर साधक २५ गृहों में रहने वाले मन्त्रों की गणना करे।

अब हे योगीशवल्लभ ! उन गृहों में रहने वाले अङ्कों को कहता हूँ उन्हें सुनिए ।

बालागृहादिशेषान्तं मुनिहस्तविधौ गृहे ।
क्रमेण शृणु तत्सर्वं सावधानावधारय ॥ १३३ ॥
दक्षिणावर्तयोगेन गणयेत् क्रमशो बुध: ।
वसुसप्तपञ्चमेषुवह्निवेदानलस्तथा ॥ १३४ ॥
मुनिषष्ठाद्यवेदाश्च[४] सप्तेषुमुनयस्तथा ।
पञ्चवेदेषुवसवो[५] वेदेषुवह्नयस्तथा ॥ १३५ ॥

---

१. वालादिदेवता:—इति श्लोक: क० पु० नास्ति ।

२. युग्माकाशविधौ गेहे सन्ति नित्यं फलप्रदा:, इति क० ।

३. कायशोधनमोक्षादि, इति क० ।

४. पञ्चर्षि: वसुवालाश्च वेदपञ्चमषष्टका: । वह्न्यग्निबन्धुवसव: सप्ताष्टनवमास्तथा ॥ पञ्चवेदानङ्काश्च वेदवेदानलस्तथा । इति क० पु० अधिक: पाठ: ।

५. पञ्च वेदा इषवो बसव: ।

वह्निवेदाश्च[1] सम्प्रोक्ता आकाशं तदनन्तरम् ।
आकाशानन्तरे गेहे अनलं परिकीर्तितम् ॥ १३६ ॥

बाला के गृह से लेकर शेष गृह पर्यन्त मुनि ७, हस्त २ अर्थात् कुल २७ गृहों में क्रमशः स्थापित किये जाने वाले अंकों को सावधान होकर सुनो—

बुद्धिमान् पुरुष इन गृहों की गणना दाहिनी ओर से करे । वसु ८, सप्त ७, पंचम ५, वह्नि ३, वेद ४, अनन्त ३, मुनि ७, षष्ठ ६, आद्य १, वेद ४, सप्त ७, इषु ५, मुनि ७, पञ्च ५, वेद ४, इषु ५, वसु ८, वेद ४, इषु ५, वह्नि ३, वह्नि ३, वेद ४—इन अंकों को स्थापित करे । इसके बाद आकाश है । आकाश के बाद अग्नि का गृह है ॥ १३३-१३६ ॥

तत्पश्चात् सर्वगेहेषु सर्वाङ्कं दक्षतः शृणु ।
वह्नि वह्निवेदवह्नि वेदवह्नय एव च ॥ १३७ ॥
श्रवणाक्षिवेदबाण[2] वेदेषु सप्तकस्तथा ।
षष्ठाष्टसप्तमाः प्रोक्ता वह्न्यग्नीषु मुनिस्तथा ॥ १३८ ॥
मुनीषु बाणवेदाश्च मुन्यग्निवह्नयस्तथा ।
वह्निवेदबाणसप्त अष्टाङ्कवेदबाणकाः ॥ १३९ ॥
पञ्चसप्तानलाग्निश्च वह्नीषुबाणबाणकाः ।
बाणवेदकान्तवेदकान्तश्रुतिचतुर्थकाः ॥ १४० ॥
रामर्षिमुनिषष्ठाश्च सप्तेषु रामवेदकाः ।
वेदसप्ताष्टवसवो नवमाष्टमसप्तमाः ॥ १४१ ॥
वह्न्यग्निवेदबाणाश्च वस्वष्टानलवेदकाः ।
सप्ताष्टमाश्च सम्प्रोक्ता गृहाङ्काः परिकीर्तिताः ॥ १४२ ॥

इसके बाद के सभी गृहों में दक्षिणावर्त क्रम से जिस प्रकार सभी अंक दिये जाने चाहिए, हे महाभैरव उन्हें सुनिए—वह्नि ३, वह्नि ३, वेद ४, वह्नि ३, वेद ४, वह्नि ३, श्रवण २, अक्षि २, वेद ४, बाण ५, वेद ४, इषु ८, सप्तक ७, षष्ठ ६, अष्ट ८, सप्तम ७, फिर वह्नि ३, अग्नी ३, इषु ५, मुनि ७, फिर मुनि ७, इषु ५, बाण ५, वेद ४, मुनि ७, अग्नि ३, वह्नि ३, वह्नि ३, वेद ४, बाण ५, सप्त ७, अष्ट ८, अंक ९, वेद ४, बाण ५, पंच ५, सप्त ७, अनल ३, अग्नि ३, वह्नि ३, इषु ५, बाण ५, बाण ५, बेदकान्त ३ या ५, वेदकान्त ३ या ५, श्रुति ४, चतुर्थक ४, राम ३, ऋषि ७ मुनि ७, षष्ठ ६, सप्त ७, इषु ५, राम ३, वेक ४, वेद ४, सप्त ७, अष्ट ८, वसु ८, नवम ९, अष्टम ८, सप्तम ७, वह्नि ३, अग्नि ३, वेद ४, बाण ५, वसु ८, अष्ट ८, अनल ३, वेदका ४, सप्त ७, अष्टम ८ ये अन्य गृहों में लिखे जाने वाले अंक मैने कह दिया है ॥ १३७-१४२ ॥

येषां मनसि या विद्या सदा तिष्ठति भावने ।

---

१. वह्निपदेन त्रयः, वेदाश्चत्वारः, मध्यमपदलोपिसमासः ।

२. श्रुत्यग्निवेदवाणाश्च इति क० ।

तामाश्रित्य जपेद्विद्वान् तदा सिध्यति निश्चितम् ॥ १४३ ॥
स्वनाम देवतानाम पूरयेत् षोडशाङ्ककैः ।
हरेन्निजगृहस्थेन चाङ्केन साधकोत्तमः ॥ १४४ ॥
कृतशेषं बहुतरं शुभं देवस्य निश्चितम् ।
अल्पाङ्कसाधकस्यापि सौख्यमेव न संशयः ॥ १४५ ॥

जिनके मन में भावना द्वारा जिस विद्या का निवास होता है, विद्वान् साधक उसी का आश्रय ले कर जप करे तो वह निश्चित रूप से सिद्ध हो जाता है । अपना नाम तथा मन्त्र देवता के नाम को १६ अङ्कों से पूर्ण करे । फिर उत्तम साधक अपने नाम वाले गृह के अङ्क से भाग देवे । यदि अधिक शेष आवे तो वे देवता शुभ करते हैं यह निश्चित है । साधक के लिए अल्पाङ्क शेष भी सुखकारी होता है इसमें संशय नहीं ॥ १४३-१४५ ॥

उक्तक्रमेण गणयेत् साधकः स्थिरमानसः ।
महाविद्यानायिकादियज्ञभूतादिसाधने[१] ॥ १४६ ॥
सम्प्रोक्तं चक्रसारञ्च सर्वतन्त्रेषु गोपितम् ।
ततश्चक्रविचारेण सिद्धिमाप्नोति साधकः ॥ १४७ ॥

साधक स्थिर बुद्धि से ऊपर कही गई विधि के अनुसार महाविद्या नायिका के साधन में, यज्ञ के साधन में तथा भूतादि साधनों में उक्त क्रम से ही गणना करे । हे सदाशिव ! सभी तन्त्रों में अत्यन्त गोपनीय चक्रसार हमने कहा, उस चक्र के विचार से साधक अवश्य ही सिद्धि प्राप्त करता है ॥ १४६-१४७ ॥

### चतुष्चक्रम्

चतुश्चक्रं प्रवक्ष्यामि शृणुष्व पार्वतीपते ।
वामदक्षिणयोगेन रेखापञ्चकमालिखेत् ॥ १४८ ॥

**चतुष्चक्र**—हे पार्वतीपते ! अब चतुष्चक्र कहती हूँ । बायीं ओर से दाहिनी ओर पाँच रेखा खींचे ॥ १४८ ॥

पूर्वपश्चिमभेदेन रेखाः पञ्च समालिखेत् ।
चतुष्कोष्ठे दक्षभागे चतुष्कोष्ठे च मन्त्रवित् ॥ १४९ ॥
तदधश्च चतुष्कोष्ठे तद्वामस्थे चतुर्गृहे ।
प्रलिखेत् क्रमशश्चाद्ये चतुर्मन्दिरमध्यके ॥ १५० ॥
शीघ्रञ्च शीतलं जप्तं सिद्धञ्चापि ततः परम् ।
अकारञ्च उकारञ्च लृसोकारं ततः परम् ॥ १५१ ॥
ऊर्द्ध्वस्थमिति वर्णं तु शीतलस्थं शृणु प्रभो ।
अकारञ्च उकारञ्च(लृ लॄ)सौकारञ्च ततः परम् ॥ १५२ ॥

---

१. महाविद्या च नायिकादयश्च यज्ञभूतादयश्च तेषां साधने ।

फिर पूर्वदिशा से पश्चिम दिशा में भी पाँच रेखा खींचे । फिर दाहिनी ओर के चार चार कोष्ठकों में तथा बायीं ओर के चार चार कोष्ठकों में साधक वर्णों को इस प्रकार लिखे—प्रथम चार मन्दिर में जिनकी १. शीघ्र, २. शीतल, ३. जप्त और ४. सिद्ध संज्ञा है । उसमें प्रथम गृह में उकार, ऊकार, लृकार तथा सौकार लिखे । ये वर्ण शीघ्र अथवा ऊर्ध्वस्थ कोष्ठ में लिखे । हे प्रभो ! शीतल गृह में रहने वाले वर्णों को सुनिए वे अकार, उकार लृ लॄ सोकार हैं ॥ १४९-१५२ ॥

**तदधो जपगेहस्थं वर्णं शृणु महाप्रभो ।**
**इकारञ्च ऋकारञ्च एकारञ्च ततः परम् ॥ १५३ ॥**

उसके नीचे जपगृह में रहने वाले वर्णों को सुनिए । हे महाप्रभो ! इकार ऋकार उसके बाद एकार वर्ण हैं ॥ १५३ ॥

**सिद्धगेहस्थितं वर्णं शृणु सर्वसुखप्रदम्[1] ।**
**तद्दक्षिणचतुर्गेहे स्थितान् वर्णान् वदामि तान् ॥ १५४ ॥**
**आह्लादञ्च प्रत्ययञ्च[2] मुखञ्च शुद्धमित्यपि ।**
**एतत्कुलस्थान् सर्वार्णान् शुभाशुभफलप्रदान् ॥ १५५ ॥**

हे शङ्कर ! अब सिद्ध गृह में रहने वाले सर्वसुखप्रद वर्णों को सुनिए प्रथम उसके दक्षिण के चार गृहों में रहने वाले वर्णों को कहती हूँ । उनके क्रमशः आह्लाद प्रत्यय, मुख तथा शुद्ध नाम है । अब उन-उन गृहों में रहने वाले शुभाशुभ फल देने वाले उन सभी वर्णों को कहती हूँ ॥ १५४-१५५ ॥

**ककारञ्च ऋकारञ्च[3] ॠकारञ्च ञकारकम् ।**
**आह्लादस्थमिति प्रोक्तं प्राप्तिमात्रेण सिद्धिदम् ॥ १५६ ॥**
**प्रत्ययस्थं गकारञ्च घकारं टठमित्यपि ।**
**मुखस्थं हि ङकारञ्च चकारं डढमित्यपि ॥ १५७ ॥**

ककार ऋकार, ॠकार, अकार ये आह्लाद में रहने वाले वर्ण हैं जो प्राप्तिमात्र से सिद्धि प्रदान करते हैं । गकार, घकार, ट और ठ ये 'प्रत्यय' संज्ञक गृह में रहने वाले वर्ण हैं । ङकार, चकार, ड और ढ—ये मुख संज्ञक गृह के वर्ण हैं ॥ १५६-१५७ ॥

**शुद्धस्थञ्च उकारञ्च जकारं णतमित्यपि ।**
**तदधःस्थं चतुर्गेहं लौकिकं सात्त्विकं तथा ॥ १५८ ॥**
**मानसिकं राजसिकं चतुर्गेहस्थितं त्विमम् ।**
**लौकिकस्थं थकारञ्च दकारञ्च मकारकम् ॥ १५९ ॥**

---

१. सर्व सुखं प्रददाति इति—सर्वसुखप्रदम् ।

२. आह्लादञ्चावि प्रत्यायं सुखञ्च शुद्धमित्यपि । इति क० ।

३. रवकारञ्च इति क० ।

सात्त्विकस्थं धकारञ्च लकारञ्च यकारकम् ।
मानसिकञ्च शृणु भो पकारञ्च फमित्यपि ॥ १६० ॥

उकार, जकार, ण और त—ये 'शुद्ध' संज्ञक गृह में रहने वाले वर्ण हैं । उसके नीचे रहने वाले ४ गृह लौकिक, सात्त्विक, मानसिक, राजसिक हैं, जिनमें लौकिक गृह में रहने वाले थकार, दकार तथा मकार वर्ण हैं । धकार, लकार और यकार—ये सात्त्विक गृह के वर्ण हैं । हे प्रभो ! पकार, फ, म ये मानसिंहक गृह के वर्ण हैं ॥ १५८-१६० ॥

शृणु राजसिकत्वञ्च भकारं वनमित्यपि ।
तन्नामस्थं चतुर्गेहं शृणु पञ्चानन प्रभो ॥ १६१ ॥
सुप्तं क्षिप्तञ्च लिप्तञ्च दुष्टमन्त्रं प्रकीर्तितम् ।
ऊद्र्ध्वगेहस्थितान् वर्णमन्त्रान् गृह्णाति यो नरः ॥ १६२ ॥
वर्जयित्वा सुप्तमन्त्रं क्षिप्तं लिप्तञ्च दुष्टकम् ।
ऐहिके सिद्धिमाप्नोति परे मुक्तिमवाप्नुयात् ॥ १६३ ॥

हे प्रभो ! अब राजसिक गृह के वर्णों को सुनिए । वे भकार, व और न हैं । हे पञ्चानन प्रभो ! अब आगे के चार गृहों के नाम सुनिए ॥ १६१ ॥

उनके नाम सुप्त, क्षिप्त, लिप्त तथा दुष्ट मन्त्र हैं । उसमें प्रथम कहे गये ऊर्ध्व गृह स्थित वर्णों को जो साधक ग्रहण करते हैं । ( द्र० १५१ ) । किन्तु सुप्त, क्षिप्त, लिप्त तथा दुष्ट अक्षर वाले मन्त्र का परित्याग कर देते हैं । उन्हें इस लोक में सिद्धि प्राप्त होती हैं तथा उस लोक में मोक्ष प्राप्त होता है ॥ १६२-१६३ ॥

यद्यभाग्यवशात्सुप्तादिषु गेहेषु लभ्यते ।
तदा मन्त्रं शोधयेद् वै सुप्तस्तम्भितकीलितैः ॥ १६४ ॥
वर्द्धितैर्दोषजालस्थैरशुभं भूतशुद्धये ।
भूतलिप्या पुटीकृत्या जप्त्वा सिद्धिं ततो लभेत्[1] ॥ १६५ ॥

यदि अभाग्य वश मन्त्र वर्ण सुप्तादि गृहों में प्राप्त होते हों तो उस मन्त्र को सुप्त स्तम्भित और कील से तथा बढे हुये दोष जालों से उत्पन्न उनके अशुभ की भूतशुद्धि के लिए साधक को भूतलिपि ( द्र० ७. १-४ ) से संपुटित कर जप करना चाहिए । तब सिद्धि प्राप्त होती है ॥ १६४-१६५ ॥

न तु वा वर्जयेद् गेहं चतुष्कं वर्णवेष्टितम् ।
सुप्तगेहस्थितं वर्णं शृणु पञ्चानन प्रभो ॥ १६६ ॥
वकारञ्च हकारञ्च ततोऽन्यद्गृहसंस्थितम् ।
शकारञ्च लकारञ्च क्षिप्तगेहस्थितद्वयम् ॥ १६७ ॥
धकारञ्च क्षकारञ्च लिप्तगेहस्थितं द्वयम् ।
दुष्टगेहस्थितं नाथ शकारगगनं तथा ॥ १६८ ॥

---

१. पूर्ववत् परस्मैपदम् ।

**निजं सौभाग्ययुक्तं यत्तन्मन्त्रं तदुपाश्रयेत् ।**

मन्त्र वर्ण से वेष्टित चौथा ( सिद्ध ) गृह कदापि वर्जित न करे ।

हे पञ्चानन प्रभो ! अब सुप्त गेह में स्थित वर्णों को सुनिए । नकार और हकार सुप्त गेह स्थित वर्ण हैं । उससे अन्य क्षिप्त गृह में रहने वाले शकार तथा लकार ये दो वर्ण है । धकार तथा क्षकार ये दो वर्ण लिप्त गृह में रहने वाले हैं । इसी प्रकार, हे नाथ ! शकार तथा गगन ( ह ) ये दुष्टगृह में रहने वाले वर्ण हैं । इस प्रकार जो मन्त्र अपने सौभाग्य से युक्त हो उसी का आश्रय ग्रहण करना चाहिए ॥ १६६-१६८ ॥

### सूक्ष्मचक्रम्

**सूक्ष्मचक्रं प्रवक्ष्यामि हिताहितफलप्रदम् ॥ १६९ ॥**
**एतदुक्ताक्षरं शम्भो गृहीत्वा जपमाचरेत् ।**
**वामदक्षिणमारभ्य सप्तरेखाः समालिखेत् ॥ १७० ॥**

**सूक्ष्मचक्र**—अब शुभाशुभ फल देने वाले **सूक्ष्म चक्र** को कहती हूँ । हे शम्भो ! इसमें आये हुये अक्षरों वाले मन्त्र को ग्रहण कर जप करना चाहिए । बायी ओर से दाहिनी ओर सात रेखा खींचे ॥ १६९-१७० ॥

**भित्वा तदङ्कान् मन्त्री च रेखाचतुष्टयं लिखेत् ।**
**दक्षिणादिक्रमेणैव बद्धमन्दिरमध्यके ॥ १७१ ॥**
**मन्त्राक्षराणि विलिखेदङ्काचारेण साधकः ।**
**तदङ्कं शृणु यत्नेन नराणां भुक्तिमुक्तिदम् ॥ १७२ ॥**

फिर मन्त्रज्ञ साधक उन रेखाओं को काटते हुये चार रेखा खीचें । इस प्रकार बने हुये उन उन गृहों में दाहिनी ओर से अङ्कों के अनुसार मन्त्रों के अक्षरों को साधक लिखे । हे शिव ! उन उन अङ्कों को प्रयत्नपूर्वक सुनिए । जो मनुष्य को भोग तथा मोक्ष देने वाले हैं ॥ १७१-१७२ ॥

**प्रथमे मन्दिरे नाथ भुजाङ्कं विलिखेत्ततः ।**
**विष्णुमन्त्रादिगेहे च वेदाङ्कं विलिखेद् बुधः ॥ १७३ ॥**
**तत्पश्चादष्टमाङ्कं च भुजाधः षष्ठमेव च ।**
**तद्गेहं शङ्करस्यापि तत्पश्चाद्दशमं गृहे ॥ १७४ ॥**

हे नाथ ! प्रथम गृह में मन्त्र का दूसरा अक्षर लिखे । इसके बाद विष्णु मन्त्रादि गृह में चौथा अक्षर लिखे । इसके बाद **आठवाँ** अक्षर लिखे । फिर दूसरे के नीचे छठाँ अक्षर लिखे वह गृह शङ्कर का भी है, इसके पीछे वाले गृह में दशवाँ अक्षर लिखे ॥ १७३-१७४ ॥

**तत्पश्चाद्द्वादशाङ्कञ्च नायिकास्थानमेव च ।**
**षष्ठाधोयुगलाङ्कञ्च तत्पश्चादष्टमं तथा ॥ १७५ ॥**
**तद्गृहं शम्भुना व्यस्तं तत्पश्चादष्टमं तथा ।**
**युगलाधोगृहे चापि चतुर्दशाक्षरं तथा ॥ १७६ ॥**

तद्दक्षिणे सूर्यगेहं चतुर्दशाक्षरान्वितम् ।
तत्पश्चात् षोडशाङ्कञ्च पुनरङ्कं लिखेत्ततः ॥१७७॥
तद्दक्षिणे वेदवर्णं तत्पश्चादष्टमाक्षरम् ।
ब्रह्ममन्दिरमेवं तत् षोडशाधः पुनः शृणु ॥१७८॥

इसके बाद बारहवाँ अक्षर लिखे जो नायिका का स्थान कहा जाता है, छठे अक्षर के नीचे दूसरा अक्षर लिखे । इसके पश्चात् **आठवाँ** अक्षर लिखे । वह गृह भी शंभु से व्यस्त है । इसके पश्चात् आठवाँ अक्षर लिखे इसके बाद दो के नीचे वाले गृह में १४ वाँ अक्षर लिखे । उसके दक्षिण सूर्य में चौदहवें अक्षर को लिखे । इसके बाद १६ वाँ अक्षर लिखे । फिर अङ्कों को लिखे । और उसके दक्षिण चौथा वर्ण और उसके बाद अष्टमाक्षर लिखे । इसी प्रकार ब्रह्म मन्दिर भी है अब १६ के नीचे फिर सुनिए ॥ १७५-१७८ ॥

अष्टमाङ्कं ततो युग्ममष्टादशाक्षरं ततः ।
प्रथमस्थं द्वितीयस्थं गृह्णीयाद् शुभदं स्मृतम् ॥१७९॥
तृतीयस्थं महापापं सर्वमन्त्रेषु कीर्तितम् ।
द्वितीयं प्रथमं दुःखं तृतीयं सर्वभाग्यदम् ॥१८०॥

अष्टम अङ्क का अक्षर लिखे, इसके बाद दूसरा, फिर १८ वाँ अक्षर लिखे ।

**सूक्ष्मचक्र का फलविचार**—प्रथम में रहने वाला तथा द्वितीय में रहने वाला मन्त्राक्षर ग्रहण करे क्योंकि वह कल्याणकारी कहा गया है । तृतीय में रहने वाला मन्त्र वर्ण महापाप कारक है । ऐसा सभी मन्त्रों में कहा गया है । द्वितीय तथा प्रथम दुःखकारक है । किन्तु तृतीय सर्व सौभाग्य प्रदान करने वाला है ॥ १७९-१८० ॥

तृतीयञ्च तथा नाथ गृह्णीयान्निजसिद्धये ।
तृतीये प्रथमं भद्रं द्वितीयं दुःखदायकम् ॥१८१॥
तृतीयञ्च तथा प्रोक्तमष्टाक्षरगृहं भयम् ।
चतुर्दशाक्षरं भद्रं सूर्यमन्त्रं द्वितीयकम् ॥१८२॥

इसलिए, हे नाथ ! अपनी सिद्धि के लिए तृतीय अवश्य ग्रहण करे । तृतीय में प्रथम तृतीय कल्याणकारी है और द्वितीय तृतीय दुःखदायी है । तृतीय तथा अष्टाक्षर वाला गृह भयदायक है । द्वितीय में रहने वाला १४ वाँ अक्षर वाला सूर्य मन्त्र कल्याण देने वाला है ॥ १८१-१८२ ॥

तृतीयस्थं षोडशाङ्के महाकल्याणदायकम् ।
अष्टमूर्तिः[1] षोडशाङ्के चतुर्थे शत्रुमारणम् ॥१८३॥
तृतीयगृहमध्यस्थं ब्रह्मकल्याणदायकम् ।
वस्वक्षरं[2] सर्वशेषगृहमध्यस्थमेव च ॥१८४॥

---

१. अधोमुक्तिम् इति क० ।

२. वसूनि = अष्टौ अक्षराणि यस्मिन् ।

**अष्टमञ्च महाभद्रं[1] क्षमं चित्तभयप्रदम् ।**
**अष्टादशाङ्कं शुभदं शेषगेहत्रये तथा ॥ १८५ ॥**

तृतीय में रहने वाला १६ वाँ अक्षर वाला मन्त्र महाकल्याणदायक है । चतुर्थ में १६ वाँ अक्षर वाला अष्टमूर्ति मन्त्र शत्रुओं का मारक है । यदि वही तृतीय गृह मध्यस्थ हो, तो महाकल्याण कारक है । सर्वशेष गृह के मध्य में रहने वाला आठ अक्षर वाला मन्त्र का अष्टम अक्षर महाभद्र है । क्ष तथा म वर्ण चित्त को भय देने वाले हैं तथा शेष तीन गृहों में अठारहवाँ अक्षर शुभकारी हैं ॥ १८३-१८५॥

**येषां यदक्षराणाञ्च मन्त्रं चेतसि वर्तते ।**
**एतत् शुभाशुभं ज्ञात्वा मन्त्रवर्णं[2] तदाभ्यसेत् ॥ १८६ ॥**
**विष्णुमन्त्रस्थितं[3] मन्त्रं नायिकास्थं शिवस्थकम् ।**
**सूर्यस्थं ब्रह्मसंस्थञ्च गृह्णीयात् शाक्त एव च ॥ १८७ ॥**

जिन साधकों के चित्त में जिन-जिन अक्षरों वाले मन्त्र की कामना हो, उनके शुभाशुभ फल को जान कर ही मन्त्र वर्णों का अभ्यास करना चाहिए । विष्णु-मन्त्र में स्थित मन्त्र, नायिका ( महाविद्या मन्त्र ) में स्थित महामन्त्र, शिवमन्त्र में स्थित मन्त्र, इसी प्रकार सूर्य में रहने वाले तथा ब्रह्म में रहने वाले मन्त्रों को केवल शाक्त साधक ही ग्रहण करने का अधिकारी है ॥ १८६-१८७ ॥

**वैष्णवो विष्णुमन्त्रार्थं शैवः शिवमुपाश्रयेत् ।**
**नायिकामन्त्रजापी[4] च नायिकार्णं सदाभ्यसेत् ॥ १८८ ॥**
**सूर्यमन्त्रविचारार्थी सूर्यमन्त्रं समाश्रयेत् ।**

सामान्यतया वैष्णव विष्णु मन्त्र का तथा शैव केवल शैव मन्त्रों के ग्रहण का अधिकारी है । इसी प्रकार महाविद्याओं के मन्त्र का जप करने वाला नायिका मन्त्रों का अभ्यास करे । सूर्य मन्त्र का भक्त सूर्य मन्त्र का अभ्यास करे ॥ १८८-१८९ ॥

**एकस्थं युगलस्थानं तृतीयस्थानमेव च ॥ १८९ ॥**
**ज्ञात्वा[5] मन्त्रं प्रगृह्णीयात् अन्यथा चाशुभं भवेत् ।**
**एतदन्यतमं मन्त्रं दिव्यवीरेषु गीयते ॥ १९० ॥**

एक स्थान में, दो स्थान में तथा तृतीय स्थान में स्थित मन्त्रों का ज्ञान कर ही मन्त्र ग्रहण करे । अन्यथा अनिष्ट की आशङ्का बनी रहती है । दिव्य तथा वीर पथ का

---

१. युग्मम् इति क० ।
२. मन्त्रमार्ग इति क० ।
३. विष्णुशब्दस्थितं इति क० ।
४. नायिकामन्त्रं जपति तच्छीलः, नायिकामन्त्रजापी, णिनिप्रत्ययस्ताच्छील्यद्योतकः ।
५. कृत्वा इति क० ।

उपासक इस (सूक्ष्मचक्र) में परीक्षित किसी भी मन्त्र को ग्रहण करे—ऐसा उनके संप्रदाय का कथन है ॥ १८९-१९० ॥

ततश्चक्रं पशोरुक्तं सर्वसिद्धिप्रदं ध्रुवम् ।
एतच्चक्रप्रभावेण पशुर्वीरोपमः स्मृतः ॥ १९१ ॥
सर्वसिद्धियुतो भूत्वा वत्सरात्तां प्रपश्यति ॥ १९२ ॥

॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महामन्त्रोद्दीपने सर्वचक्रानुष्ठाने सिद्धमन्त्रप्रकरणे भावनिर्णये भैरवीभैरवसंवादे चतुर्थः पटलः ॥ ४ ॥



इसके बाद पाशुपतों का चक्र है जो निश्चय ही सर्वसिद्धिप्रद है । इस पाशुपत चक्र के प्रभाव से पाशुपत वीर मार्ग के उपासक के समान हो जाता है । ऐसा करने से भी साधक सर्वसिद्धियाँ प्राप्त कर संवत्सर के अन्त में शक्ति का दर्शन प्राप्त कर लेता है ॥ १९१-१९२ ॥

**॥ श्रीरुद्रयामल के उत्तरतन्त्र में महातन्त्रोद्दीपन में सर्वचक्रानुष्ठान में सिद्धमन्त्र प्रकरण में भावनिर्णय में भैरवी भैरव संवाद में चतुर्थपटल की डा० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ ४ ॥**



# अथ पञ्चमः पटलः

महाकथहचक्रार्थं सर्वचक्रोत्तमोत्तमम् ।
यस्य विचारमात्रेण कामरूपी भवेन्नरः ॥ १ ॥

महा अकथह नामक यह चक्र सभी उत्तम चक्रों की अपेक्षा श्रेष्ठ है, जिसका विचार करने मात्र से मनुष्य इच्छानुसार रूप धारण कर सकता है ॥ १ ॥

मन्त्रसंस्कारार्थे महा-अकथहचक्रम्

ततः प्रकारं वीराणां नाथः त्वं क्रमशः शृणु ।
चतुरस्त्रे लिखेत् वर्णांश्चतुःकोष्ठसमन्विते ॥ २ ॥
चतुःकोष्ठे चतुःकोष्ठे चतुश्चतुर्गृहान्वितम् ।
मन्दिरं षोडशं प्रोक्तं सर्वकामार्थसिद्धिदम् ॥ ३ ॥

आप वीरों के नाथ हैं । उस **अकथह चक्र के रचना की विधि** सुनिए—पहले चतुष्कोष्ठ, फिर उसमें भी चतुः कोष्ठ, फिर उसमें पुनः चतुः कोष्ठ, फिर उसमें भी चार गृह बनावे । इस प्रकार कुल १६ गृह का निर्माण काम और अर्थ की सिद्धि देने वाला कहा गया है ॥ २-३ ॥

चतुरस्त्रं[१] लिखेत्कोष्ठं चतुःकोष्ठसमन्वितम् ।
पुनश्चतुष्कं तत्रापि लिखेद्धीमान् क्रमेण तु ॥ ४ ॥
सर्वेषु गृहमध्येषु प्रादक्षिण्यक्रमेण तु ।
अकारादिक्षकारान्तं लिखित्वा गणयेत्ततः ॥ ५ ॥

चार कोष्ठक से युक्त प्रथम चतुर्भुज, फिर द्वितीय चतुःकोष्ठ समन्वित चतुर्भुज में धीमान् पुरुष क्रम से प्रदक्षिण क्रमपूर्वक सभी घरों में अकारादि क्षकारान्त वर्णों को लिखकर तदनन्तर गणना करे ॥ ४-५ ॥

चन्द्रमग्निं रुद्रवर्णं नवमं युगलं तथा ।
वेदमर्कं दशरसं वसुं षोडशमेव च ॥ ६ ॥
चतुर्दशं भौतिकञ्च सप्तपञ्चदशेति च ।
वह्नीन्दुकोष्ठगं वर्णं सङ्केताङ्कैः मयोदितम् ॥ ७ ॥

---

१. चतुष्कोणमित्यर्थः ।

**एतदङ्कस्थितं वर्णं गणयेत्तदनन्तरम् ।**
**नामाद्यक्षरमारभ्य यावन्मन्त्रादिमाक्षरम् ॥ ८ ॥**

१, ३, ११, ९, २, ४, १२, १०, ६, ८, १६, १४, ५, ७, १५ तथा १३ वें अङ्क वाले कोष्ठकों में क्रमशः अकारादि वर्णों को लिखे । यहाँ कोष्ठकों का सङ्केत अङ्कों से किया गया है । क्रमशः इन अङ्कों में वर्णों को लिख कर तदनन्तर नामाक्षर के आदि अक्षर से आरम्भ कर मन्त्र के आदि अक्षर तक गणना करे ॥ ६-८ ॥

**चतुर्भिः कोष्ठैरेकैकमिति कोष्ठचतुष्टयम् ।**
**पुनः कोष्ठगकोष्ठेषु [1] सत्यतो नाम्न आदितः ॥ ९ ॥**
**सिद्धः साध्यः सुसिद्धोऽरिः क्रमशो गणयेत्सुधीः ।**
**सिद्धः सिद्ध्यति कालेन साध्यस्तु जपहोमतः ॥ १० ॥**

चार कोष्ठों द्वारा एक-एक नाम, इस प्रकार चार कोष्ठक में आदि से लेकर पुनः एक-एक कोष्ठ से दूसरे कोष्ठ में नाम की गणना करे । प्रथम कोष्ठ सिद्ध, दूसरा साध्य, तीसरा सुसिद्ध और चौथा अरि इस क्रम से विद्वान् साधक गणना करे । सिद्ध मन्त्र समय से सिद्ध हो जाता है और साध्य मन्त्र जप होम से सिद्ध हो जाता है ॥ ९-१० ॥

**सुसिद्धोऽग्रहणाज्ज्ञानी शत्रुर्हन्ति स्वमायुषम् ।**
**सिद्धार्णो बान्धवः प्रोक्तः साध्यः सेवक उच्यते ॥ ११ ॥**
**सिद्धकोष्ठस्थिता वर्णा बान्धवाः सर्वकामदाः ।**
**जपेन बहुसिद्धिः स्यात् सेवकोऽधिकसेवया ॥ १२ ॥**

सुसिद्ध मन्त्र दीक्षा ग्रहण मात्र से ज्ञान करा देता है । किन्तु शत्रु मन्त्र साधक का आयुष्य समाप्त कर देता है । सिद्ध मन्त्र बान्धव कहा गया है और साध्य मन्त्र सेवक कहा जाता है । सिद्ध कोष्ठक में रहने वाले सभी वर्ण बान्धव कहे जाते हैं; जो सारी कामनाओं की पूर्ति करते हैं । उसके जप मात्र से सिद्धि लाभ हो जाता है । किन्तु सेवक वर्ण बहुत सेवा से सिद्धि प्रदान करते हैं ॥ ११-१२ ॥

**पुष्णाति पोषकोऽभीष्टो घातको नाशयेद् ध्रुवम् ।**
**सिद्धः सिद्धो यथोक्तेन द्विगुणः सिद्धसाधकः ॥ १३ ॥**
**सिद्धः सुसिद्धोद्र्ध्वजपात् सिद्धारिर्हन्ति बान्धवान् ।**
**साध्यः सिद्धो द्विगुणकः साध्ये साध्यो निरर्थकः ॥ १४ ॥**

सुसिद्ध वर्ण पोषक हैं, अभीष्ट हैं और साधक का पोषण करते हैं । अरि वर्ण घातक हैं निश्चय ही वे साधक का वध कर देते हैं ।

अब पुनः **उसके चार भेद** कहते हैं—१. सिद्धासिद्ध वर्ण तो उक्त प्रकार से सिद्ध हो जाते हैं, २. सिद्ध-साध्य द्विगुणित जप से सिद्ध होता है । ३. सिद्ध-सुसिद्ध जप के अनन्तर

---

१. कोष्ठं गच्छन्ति—कोष्ठगानि, गमेर्डः । कोष्ठगानि च कोष्ठानि चेति कर्मधारयः ।

सिद्ध होता है, किन्तु ४. सिद्धारि समस्त बान्धवों का विनाश कर देता है । इस प्रकार साध्य सिद्ध तो दूने जप से सिद्ध होता है, किन्तु साध्य-साध्य निरर्थक है ॥ १३-१४ ॥

**तत्सुसिद्धो द्विगुणजपात् साध्यारिर्हन्ति गोत्रजान् ।**
**सुसिद्धसिद्धोद्र्ध्वजपात्तत्साध्यो द्विगुणाधिकात् ॥ १५ ॥**

निष्कर्षतः साध्य सुसिद्ध दूने जप से सिद्ध होता है किन्तु साध्य अरि बान्धवों का विनाश करता है । सुसिद्ध सिद्ध जप से, सुसिद्ध-साध्य दुगुने से भी अधिक जप से सिद्ध होता है ॥ १५ ॥

**तत्सुसिद्धो ग्रहादेव सुसिद्धारिः स्वगोत्रहा ।**
**अरिः सिद्धः सुतान् हन्यादरिसाध्यस्तु कन्यकाः ॥ १६ ॥**
**तत्सुसिद्धिस्तु पत्नीघ्नस्तदरिर्हन्ति गोत्रजान्[१] ।**

सुसिद्ध-सिद्ध ग्रहण मात्र से सिद्ध हो जाता है, किन्तु सुसिद्धारि साधक के गोत्र का वध कर देता है, अरि-सिद्ध साधक के पुत्रों का तथा अरि-साध्य मन्त्र तो साधक के कन्या का विनाश करता है । अरि-सुसिद्ध पत्नीहन्ता होता है । अरि-अरि वर्ण बान्धवों ( गोत्रजों ) का विनाश करता है ॥ १६-१७ ॥

**विमर्श**—मन्त्रमहोदधि २४. १-२० में इसका विस्तृत विवेचन है ।

**यदि वैरिमनोर्हस्तस्थितः स्यात् साधको भुवि ॥ १७ ॥**
**तदन्ते रक्षणार्थं हि कुर्यादिवं क्रियादिकम् ।**

**अरिमन्त्र से रक्षा के उपाय**—यदि कदाचित् साधक को शत्रु मन्त्र दीक्षा द्वारा प्राप्त हो गया हो तो उससे अपनी रक्षा के लिए इस प्रकार की क्रिया करनी चाहिए ॥ १७-१८ ॥

**तत्प्रकारं महावीर शृणुष्व गिरिजापते ॥ १८ ॥**
**वटपत्रे लिखित्वारिमन्त्रं[२] स्रोतसि निक्षिपेत् ।**
**एवं मन्त्रविमुक्तः स्यान्ममाज्ञावशहेतुना ॥ १९ ॥**

हे गिरिजापते ! हे महावीर ! अब अरिमन्त्र से छुटकारा पाने के विधान सुनिए । ( १ ) अरिमन्त्र को वटपत्र पर लिख कर नदी के प्रवाह में छोड़ देना चाहिए । इस प्रकार से साधक को शत्रु मन्त्र से छुटकारा मिल जाता है । उसमें मेरी आज्ञा ही हेतु है ॥ १८-१९ ॥

**पुनः प्रकारं विप्रस्तु गवां क्षीरे मुदान्वितः ।**
**द्रोणमिते जपेन्मन्त्रमष्टोत्तरसमन्वितम् ॥ २० ॥**
**पीत्वा क्षीरं मनोमध्ये ध्यात्वा मन्त्रं समुच्चरन् ।**
**सन्त्यजन्नीरमध्ये तु वैरिमन्त्रप्रमुक्तये ॥ २१ ॥**

( २ ) अब इसके अतिरिक्त उस मन्त्र से छुटकारा पाने का दूसरा उपाय यह है कि द्रोण परिमाण वाले गौ के दूध में १०८ बार मन्त्र का जाप कर उस दूध को पीते हुये मध्य में

---

१. साधकम् इति क० । २. अरिः शत्रुः तन्मारकं मन्त्रम्, मध्यमपदलोपिसमासः ।

मन्त्र का ध्यान कर फिर उस का उच्चारण करते हुये वैरि मन्त्र से विमुक्ति के लिए पानी में कुल्ला करते हुये छोड़ देवे ॥ २०-२१ ॥

पुनः प्रकारं वक्ष्यामि त्रिरात्रमेकवासरम् ।
उपोष्य विधिनानेन पूजां कृत्वा शनौ कुजे ॥ २२ ॥
सहस्रं वा शतं वापि अष्टोत्तरसमन्वितम् ।
जपित्वा सन्त्यजेन्मन्त्रं क्षीरसागरमण्डले ॥ २३ ॥
अथवा तद्गुरोः स्थाने चान्यस्थाने च वा पुनः ।
विचार्य मन्त्रवर्णञ्च गृहीत्वा मोक्षमाप्नुयात् ॥ २४ ॥

( ३ ) इसके अतिरिक्त अब तीसरा एक प्रकार और कहता हूँ । तीन रात अथवा एक रात उपवास करे । फिर शनिवार अथवा मङ्गल के दिन पूजा कर १००८ अथवा १०८ की संख्या में अरिमन्त्र का जप कर उस मन्त्र को क्षीर सागर के मण्डल में छोड़ देवे । अथवा उस मन्त्र के देने वाले गुरु के घर अथवा किसी अन्य स्थान पर उस मन्त्र को छोड़ देवे । फिर चक्र पर विचारे हुये मन्त्र को ग्रहण करने से साधक दोष विमुक्त हो जाता है ॥ २२-२४ ॥

स्वप्ने यदि महामन्त्रं प्राप्नोति साधकोत्तमः ।
तदा सिद्धिमवाप्नोति सत्यं सत्यं कुलेश्वर ॥ २५ ॥
तन्मन्त्रं कौलिके नाथ गुरोर्यत्नेन सङ्ग्रही ।
यदा भवति सिद्धिः स्यात्तत्क्षणान्नात्र संशयः ॥ २६ ॥

यदि किसी उत्तम साधक को स्वप्न में किसी महामन्त्र की प्राप्ति हो जावें तो उस मन्त्र से उसको अवश्य सिद्धि लाभ हो जाता है । हे कुलेश्वर ! यह सत्य है, यह सत्य है । इसमें संशय नहीं । हे नाथ ! हे गुरो ! किसी कुलिक ( शाक्त ) से यदि यत्नपूर्वक मन्त्र लिया जाय तो जब लिया जाता है उसी समय सिद्धि हो जाती है, इसमें संशय नहीं ॥ २५-२६ ॥

अरिं वा देवदेवेश यदि विग्राहयेन्मनुम् ।
अन्यमन्त्रं विचार्यैव विष्णोश्चैव शिवस्य च ॥ २७ ॥
शक्तिमन्त्रं यदि रिपुं तदा एवं प्रकारकम् ।
आदावन्ते च मध्ये च ॐ वौषट् स्वाहयान्वितम् ॥ २८ ॥

हे देवदेवेश ! शत्रु मन्त्र, विग्रह कराने वाला मन्त्र, विष्णु का मन्त्र, शिव का मन्त्र अथवा अन्य मन्त्र विचार कर ग्रहण करना चाहिए । शाक्त मन्त्र यदि चक्र पर परीक्षा करने से शत्रु का फल देने वाला हो तो उसका विचार इस प्रकार करना चाहिए । उस शाक्त मन्त्र के आदि में ॐ मध्य में 'वौषट्' तथा अन्त में 'स्वाहा' से युक्त करे ॥ २७-२८ ॥

कृत्वा जप्त्वा[1] महासिद्धिं कामरूपस्थितामिव ।
प्राप्नोति नात्र सन्देहो ममाज्ञा वरवर्णिनी ॥ २९ ॥

---

१. जपधातुः सेट्कोऽपि पृषोदरादित्वादिटं न लेभे ।

शिव जी कहते हैं, तदनन्तर हे वरवर्णिनि! ऐसा कर जप करने से साधक इच्छानुसार रूप धारण करते हुये महासिद्धि को प्राप्त कर लेता है, इसमें संदेह नहीं ऐसी मेरी आज्ञा है ॥ २९ ॥

चक्रफलकथनम्

**शृणु चक्रफलं नाथ विचाराचारमङ्गलम् ।**
**प्रासादञ्च महामन्त्रं सद्गुरोर्मुखपङ्कजात् ॥ ३० ॥**
**लभ्यते यदि भाग्येन सिद्धिरेव न संशयः ।**
**तदभावे सिद्धिमन्त्रं दृष्टादृष्टफलोन्मुखम् ॥ ३१ ॥**

**चक्रों के फल**—हे नाथ ! अब विचार और आचार से मङ्गल रूप वाले चक्र फलों को सुनिए । सद्गुरु के मुखपङ्कज से निकला हुआ प्रसाद रूप महामन्त्र यदि भाग्यवश मिल जावे तो सिद्धि अवश्य होती है इसमें संशय नहीं । उसके अभाव में सिद्धि का मन्त्र दृष्ट फल और अदृष्ट फल प्रदान करने के लिए उन्मुख करता है ॥ ३०-३१ ॥

**महाचमत्कारकरं हृदयोल्लासवर्द्धनम् ।**
**स्वप्ने वा सद्गुरोः स्थाने प्राप्तिमात्रेण मुक्तिदम् ॥ ३२ ॥**

यदि महागुरु के स्थान पर स्वप्न में कोई मन्त्र प्राप्त हो जावे तो वह महान् चमत्कारी होता है हृदय में प्रसन्नता को बढ़ाता है । किं बहुना, प्राप्त होने मात्र से वह साधक को मुक्ति प्रदान करता है ॥ ३२ ॥

**तन्मन्त्रं वर्जयित्वा च घोरान्धकाररौरवे ।**
**वसन्ति सर्वकालं च ममाज्ञावशभागिनी ॥ ३३ ॥**

स्वप्न लब्ध मन्त्र का जो परित्याग करता है, वह मेरी आज्ञा का वशवर्ती न हो कर घोरान्धकार युक्त रौरव नरक में निवास करता है ॥ ३३ ॥

**तत्रैव चक्रसारादि विचारं व्यर्थभाषणम् ।**
**अरिमन्त्रं महापुण्यं सर्वमन्त्रोत्तमोत्तमम् ॥ ३४ ॥**

उस मन्त्र के विषय में चक्र सारादि का विचार व्यर्थ भाषण के सदृश है । स्वप्नलब्ध चाहे अरि मन्त्र ही क्यों न हो महा पुण्यदायक होता है और वह सभी उत्तमोत्तम मन्त्रों से भी श्रेष्ठ है ॥ ३४ ॥

**कोटिजन्मार्जितैः पुण्यैर्महाविद्याश्रयी भवेत् ।**
**स्वप्ने कोटिकुलोत्पन्नैः पुण्यकोटिफलैरपि ॥ ३५ ॥**
**प्राप्नोति साधको मन्त्रं भुक्तये मुक्तये ध्रुवम् ।**
**ततश्चक्रं न विचार्यं विचार्य मरणं भवेत् ॥ ३६ ॥**

करोड़ों जन्मों में किए गये पुण्य के प्रभाव से मनुष्य को महाविद्या का आश्रय प्राप्त होता है और करोड़ों कुलों में उत्पन्न होकर करोड़ों पुण्यों के फल से साधक को स्वप्न में मन्त्र की प्राप्ति होती है, जो निश्चय ही भुक्ति और मुक्ति के लिए होती है । इसलिए

स्वप्नलब्ध मन्त्र का चक्र पर विचार नहीं करना चाहिए । यदि चक्र पर विचार करे तो निश्चय ही मरण होता है ॥ ३५-३६ ॥

**किन्तु चक्रविचारञ्च यदि स्वप्ने चमत्कृतम् ।**
**एतेषां चक्रवर्णानां विचारादष्टसिद्धिदम् ॥ ३७ ॥**

यदि स्वप्न में कोई चमत्कार युक्त मन्त्र का दर्शन हो तो ऊपर कहे गये चक्रों द्वारा विचार किया जा सकता है । क्योंकि इस ( अकथह ) चक्र में विचारे गये वर्ण आठों प्रकार की सिद्धियाँ प्रदान करते हैं ॥ ३७ ॥

**वायुं मुक्तिं धनं योगसिद्धिमृद्धिं धनं शुभम् ।**
**धर्मदेहपवित्रञ्च अकाले मृत्युनाशनम् ॥ ३८ ॥**
**वाञ्छाफलप्रदं गौरीचरणाम्भोजदर्शनम् ।**
**भुक्तिं मुक्तिं हरस्थानं प्राप्नोति नात्र संशयः ॥ ३९ ॥**

वायु, मुक्ति धन, योगसिद्धि ऋद्धि, धन, शुभ, धर्म और देह की पवित्रता, अकाल में होने वाली मृत्यु से मुक्ति और अभीष्ट सिद्धि, गौरीचरणाम्भोज के दर्शन, भुक्ति, मुक्ति और शिव सायुज्य इतने फल चक्र से विचार किए गए वर्ण से प्राप्त होते हैं, इसमें संशय नहीं ॥ ३८-३९ ॥

**एषां चक्रादिकालञ्च क्रमशो गणितं फलम् ।**
**यदि सर्वविचारञ्च करोति साधकोत्तमः ॥ ४० ॥**
**तदा सर्वफलं नित्यं प्राप्नोति नात्र संशयः ।**

यदि साधकोत्तम दीक्षा के समय सभी प्रकार का विचार करे तो इन चक्रादिकाल का गणना से फल होता है । गणना करने से अच्छे बुरे सभी प्रकार के फल की प्राप्ति होती है, इसमें संशय नहीं ॥ ४०-४१ ॥

**महाव्रतं[१] विवेकञ्च विचाराल्लभते ध्रुवम् ॥ ४१ ॥**
**अकस्मात् सिद्धिमाप्नोति चक्रराजं विचारतः ।**
**सर्वे देवाः प्रशंसन्ति चक्रमन्त्राश्रितं[२] जलम् ॥ ४२ ॥**
**वाक्यसिद्धिर्भवेत् क्षिप्रं प्राणायामादिसिद्धिभाक्[३] ।**
**सर्वेषां प्रणमेद् भूमौ विचरेत् साधको बली ॥ ४३ ॥**

निश्चय ही चक्रराज के विचार से अकस्मात् सिद्धि महान् व्रत और विवेक की प्राप्ति होती है । सभी देवता गण चक्रमन्त्र से अभिमन्त्रित जल की प्रशंसा करते हैं । साधक को वाक्य की सिद्धि होती है । वह प्राणायामादि के द्वारा समस्त सिद्धियाँ प्राप्त

---

१. महाप्रभावमेकञ्च इति ग० ।

२. चक्रमन्त्रमाश्रितम्, गम्यादीनामुपसंख्यानमिति द्वितीयान्तस्य समासः ।

३. प्राणायामादिसिद्धि भजते इति भजो णिप्रत्ययः ।

कर लेता है । सब लोग उसे प्रणाम करते हैं और वह सभी से बलवान् होकर पृथ्वी पर विचरण करता है ॥ ४१-४३ ॥

इति ते कथितं नाथ चक्रं षोडशमङ्गलम् ।
चक्राणां लोकनादेव सायुज्यपदमाप्नुयात् ॥ ४४ ॥
अतो विचारं सर्वत्र सर्वचक्रादिमङ्गलम् ॥ ४५ ॥

॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सर्वचक्रानुष्ठाने सिद्धितन्त्रप्रकरणे पञ्चम पटलः ॥ ५ ॥



हे नाथ ! इस प्रकार मङ्गल देने वाले षोडश चक्रों का वर्णन हमने किया । इन चक्रों के विषय में बहुत क्या कहें इनके दर्शन मात्र से सायुज्य पदवीं प्राप्त होती हैं । इसलिए सभी मन्त्र ग्रहण काल में सर्व चक्रादि से मङ्गलकारी मन्त्र का विचार करना चाहिए ॥ ४४-४५ ॥

**॥ श्रीरुद्रयामल के उत्तरतन्त्र में महातन्त्रोद्दीपन में सर्वचक्रानुष्ठान में सिद्धमन्त्रप्रकरण में पाँचवें पटल की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ ५ ॥**



# अथ षष्ठः पटलः

भैरव उवाच

अथ भावं वद श्रीदे दिव्यवीरपशुक्रमात् ।
पशूनां परमाश्चर्यभावं श्रोतुं समुत्सुकः ॥ १ ॥
इच्छाम्याह्लादजलधौ स्थितोऽहं जगदीश्वरि ।
यदि भाग्यवशादाज्ञासारं चिन्तय सिद्धये ॥ २ ॥

**भैरव ने कहा**—हे श्री देने वाली महाभैरवि ! अब दिव्य, वीर और पशु के क्रम से भावों का वर्णन कीजिए । विशेष कर मैं आश्चर्य सम्पन्न पशुभाव के विषय में सुनने के लिए उत्सुक हूँ । हे जगदीश्वरि ! यदि भाग्यवश सिद्धि में मेरी आज्ञा का ध्यान करिए तो आह्लाद समुद्र में स्थित हुआ मैं इन भावों को जानना चाहता हूँ ॥ १-२ ॥

पशुभावः

महाभैरव्युवाच

पशुनाथ वीरनाथ दिव्यनाथ कृपानिधे ।
प्रकाशह्रदयोल्लास चन्द्रशेखर तच्छृणु ॥ ३ ॥
काली कलालताकारं तपस्याद्वयसङ्गतिम् ।
पशुभावस्थितां नाथ देवतां शृणु विस्तरात् ॥ ४ ॥

**महाभैरवी ने कहा**—हे पशुनाथ ! हे वीर नाथ ! हे दिव्यनाथ ! हे कृपानिधे ! हे प्रकाशरूप ज्ञान से ह्रदय को उल्लसित करने वाले ! हे चन्द्रशेखर ! अब भावों के विषय में श्रवण कीजिए । हे नाथ ! कलाओं की लता के समान आकार वाली, तपस्या से अद्वयावस्था में प्राप्त होने वाली काली ही पशुभाव में स्थित देवता हैं, अब उस पशुभाव के विषय में विस्तार पूर्वक सुनिए ॥ ४ ॥

दुर्गापूजां शिवपूजां यः करोति पशूत्तमः[१] ।
अवश्यं हि यः करोति पशुरुत्तमः स्मृतः ॥ ५ ॥
केवलं शिवपूजाञ्च करोति यदि साधकः ।
पशूनां मध्यमः श्रीमान् शिवया सह चोत्तमः ॥ ६ ॥

**पशुभावविवेचन**—जो उत्तम पशु, दुर्गा पूजा और शिवपूजा अवश्यकरणीय है—

---

१. 'पशुषु उत्तमः' सप्तमी—इति योगविभागस्य भाष्येऽदर्शनात् सुप्सुपेति समासः ।

ऐसा समझ कर उनकी पूजा करता है, वह 'उत्तम पशु' कहा जाता है । यदि साधक केवल शिव की पूजा करता है वह 'मध्यम पशु' है । यदि शिवा के साथ शिव की पूजा करता है तो वह उत्तम है ही उसे हम पूर्व में ( द्र० . ६ . ५ ) कह आयें है ॥ ५-६ ॥

**केवलं वैष्णवोऽधीशः पशूनां मध्यमः स्मृतः ।**
**भूतानां देवतानाञ्च सेवां कुर्वन्ति ये सदा ॥ ७ ॥**
**पशूनां मध्यमाः प्रोक्तं नरकस्था न संशयः ।**
**त्वत्सेवां मम सेवाञ्च विष्णुब्रह्मादिसेवनम् ॥ ८ ॥**
**कृत्वान्यसर्वभूतानां नायिकानां महाप्रभो ।**
**यक्षिणीनां भूतिनीनां ततः सेवा शुभप्रदा ॥ ९ ॥**

जो केवल विष्णु भक्त हैं और उन्हीं को अपना अधीश्वर समझता है तो वह मध्यम प्रकार का पशु हैं जो भूतों और देवताओं की सदा पूजा करते हैं ।वे भी मध्यम पशु हैं किन्तु नरक गामी होते हैं इसमें संशय नहीं । हे महाप्रभो ! अपकी सेवा, हमारी सेवा, विष्णु एवं ब्रह्मा आदि की सेवा, अन्य सर्वभूतों की नायिकाओं जैसे यक्षिणीयों या भूतिनियों की भी सेवा शुभप्रद होती है ॥ ७-९ ॥

**यः पशुर्ब्रह्मकृष्णादि सेवां कुर्वन्ति ये सदा ।**
**तथा श्रीतारकब्रह्म सेवाद्वये नरोत्तमाः ॥ १० ॥**
**तेषामसाध्या भूतादिदेवताः सर्वकामदाः ।**
**वर्जयेत् पशुमार्गेण विष्णुसेवापरो जनः ॥ ११ ॥**

जो पशु ब्रह्म कृष्णादि की सेवा करते है, अथवा जो श्री, तारक और ब्रह्म की सेवा करते हैं, ऐसे दोनों प्रकार के सेवक नरो में उत्तम हैं । ऐसे लोगों को असाध्य भूतादि देवता सभी कामनायें प्रदान करते हैं । किन्तु विष्णु सेवा परायण जन पशुमार्ग से वर्जित रहें ॥ १०-११ ॥

**प्रवक्तव्यञ्च पटले तेषां तेषां ततस्ततः ।**
**विधिना विधिना नाथ क्रमशः शृणु वल्लभ ॥ १२ ॥**

सुषुम्नासाधनम्

**अतः प्रातः समुत्थाय पशुरुत्तमपण्डितः ।**
**गुरूणां चरणाम्भोजमङ्गलं [1]शीर्षपङ्कजे ॥ १३ ॥**
**विभाव्य पुनरेकं हि श्रीपादं भावयेद् यदि ।**
**पूजयित्वा च वीरं वै उपहारैर्न मे स्तवैः ॥ १४ ॥**

ऐसे लोगों के विषय में पटल में आगे उन उन स्थानों पर हम विधि पूर्वक कहेगें । अब, हे नाथ ! हे बल्लभ ! विधिपूर्वक पशुभाव को सुनिए । उत्तम पण्डित जो पशुभाव में

---

१. शिरः पर्यायभूतः शीर्षशब्दो यद्यपि छान्दसः, तथापि पृषोदरादित्वाल्लोकेऽपि क्वचित्साधुः ।

स्थित है, वह प्रातः काल में उठकर मङ्गलकारी गुरु के चरण पङ्कज का अपने शीर्ष पङ्कज में ध्यान कर, तदनन्तर एक मात्र महालक्ष्मी के वीर स्वरूप श्री पाद का उपहार द्वारा पूजन कर स्तुतिपूर्वक उनको प्रणाम करे ॥ १२-१४ ॥

**त्रैलोक्यं तेजसा व्याप्तं मण्डलस्थां महोत्सवाम् ।**
**तडित्कोटिप्रभादीप्तिं चन्द्रकोटिसुशीतलाम् ॥ १५ ॥**
**सार्द्धत्रिवलयाकारां[1] स्वयम्भूलिङ्गवेष्टिताम् ।**
**उत्थापयेन्महादेवीं महारक्तां मनोन्मयीम् ॥ १६ ॥**

**देवी की ध्यान**—जिन महाश्री के तेज से सारा त्रैलोक्य व्याप्त है, जो मण्डल में रहने वाली तथा महोत्सव स्वरूपा हैं, करोड़ों बिजली की जगमगाहट के समान जिनके शरीर की कान्ति है जो करोड़ों चन्द्रमा के समान सुशीतल हैं । जो स्वयंभू लिङ्ग को साढे तीन बार गोलाकार रूप में परिवेष्टित कर अवस्थित है, महारक्त वर्ण वाली, मनोन्मयी उन महादेवी को प्रातःकाल में प्रबुद्ध करना चाहिए ॥ १५-१६ ॥

**श्वासोच्छ्वासद्वयावृत्तिं द्वादशाङ्गुलरूपिणीम् ।**
**योगिनीं खेचरीं वायुरूपां मूलाम्बुजस्थिताम् ॥ १७ ॥**
**चतुर्वर्णस्वरूपान्तां वकारादिषसान्तकाम् ।**
**कोटिकोटिसहस्त्रार्ककिरणां[2] कुलमोहिनीम्[3] ॥ १८ ॥**
**महासूक्ष्मपथप्रान्तवान्तरान्तरगामिनीम् ।**
**त्रैलोक्यरक्षितां[4] वाक्यदेवतां शम्भुरूपिणीम् ॥ १९ ॥**
**महाबुद्धिप्रदां देवीं सहस्त्रदलगामिनीम् ।**
**महासूक्ष्मपथे तेजोमयीं मृत्युस्वरूपिणीम् ॥ २० ॥**
**कालरूपां सर्वरूपां सर्वत्र सर्वचिन्मयीम् ।**
**ध्यात्वा पुनः पुनः शीर्षे सुधाब्धौ विनिवेष्टिताम् ॥ २१ ॥**

द्वादश अंगुल स्वरूप वाली, श्वास तथा उच्छ्वास इन दो प्रकार की वृत्ति वाली, योगिनी, खेचरी, वायुस्वरूपा, मूलाधार रूप कमल में निवास करने वाली देवी व, श, ष, स, इन चार वर्ण स्वरूपों वाली, करोड़ों सहस्त्र संख्या वाले सूर्य के समान प्रकाश वाली, कुलमोहिनी, महासूक्ष्मपथ के प्रान्त में भीतर ही भीतर चलने वाली, त्रैलोक्य की रक्षा करने वाली, वाक्य देवता, शम्भु स्वरूपा, महान् बुद्धि देने वाली, सहस्त्रदल कमल के ऊपर

---

१. महावज्र सर्पराज सदृशीं ध्यानयोगिनीम् ।
सदावायुसाम्बश्रीं कारणोल्लासवर्धिनीम् ॥
सुप्तां योगिभिराभास्यां शोणवेदिकोपरि ।
योगिध्येयां सूक्ष्मविद्यां भाविनीमुन्मनोमयीम् ॥ इति क० पुस्तके अधिकः पाठः ।

२. किरणोज्ज्वलमोहिनीम्, इति क० पुस्तके पाठः ।

३. कुलं मोहयति तच्छीला, णिनिप्रत्यये सति साधुता ।

४. बाह्यदेवतां शब्दरूपिणीम्, इति क० पा० ।

निवास करने वाली, महासूक्ष्म पथ में तेजः स्वरूपा तथा मृत्यु स्वरूपा, कालस्वरूपा, सर्वरूपा, सब जगह रहने वाली सर्व चेतना स्वरूपा देवी का पुनः पुनः ध्यान कर उन्हें अपने शीर्षस्थान के अमृत समुद्र में ऊपर ले जाकर सन्निविष्ट करे ॥ १७-२१ ॥

**सुधापानं कारयित्वा पुनः स्थाने समानयेत् ।**
**समानयनकाले तु सुषुम्नामध्यमध्यके ॥ २२ ॥**
**अमृताभिप्लुतां कृत्वा पुनः स्थानेषु पूजयेत् ।**
**ऊर्द्ध्वोद्गमनकाले तु महातेजोमयीं स्मरेत् ॥ २३ ॥**

तदनन्तर वहाँ से उन्हें अमृतपान कराकर अपने स्थान मूलाधार में लाकर प्रतिष्ठित करे। मूलाधार में ले आने के समय मध्य में रहने वाली सुषुम्ना के मध्य से अमृत में स्नान करा कर अपने स्थान में उनकी पूजा करे । उन्हें ऊपर की ओर ले जाते समय साधक उनके तेजःस्वरूप का ध्यान करे ॥ २२-२३ ॥

**प्रतिप्रयाणकाले तु सुधाधाराभिराप्लुताम् ।**
**महाकुलकुण्डलिनीममृतानन्दविग्रहाम् ॥ २४ ॥**
**ध्यात्वा ध्यात्वा पुनर्ध्यात्वा सर्वसिद्धिश्वरो भवेत् ।**
**तस्मिन्स्थाने महादेवीं विभाव्य किरणोज्ज्वलाम् ॥ २५ ॥**
**अमृतानन्दमुक्तिं तां पूजयित्वा शुभां मुदा ।**
**मानसोच्चारबीजेन मायां वा कामबीजकम् ॥ २६ ॥**
**पञ्चाशद्वर्णमालाभिर्ज्जप्त्वा[१]नुलोमसत्पथा ।**
**विलोमेन पुनर्जप्त्वा सर्वत्र जयदं स्तवम् ॥ २७ ॥**
**पठित्वा सिद्धिमाप्नोति तत्स्तोत्रं शृणु भैरव ॥ २८ ॥**

जब उन्हें नीचे की ओर मूलाधार में लाना हो तब सुधाधारा में डूबी हुई आनन्द विग्रह वाली महाकुण्डलिनी के स्वरूप में बारम्बार ध्यान करे । ऐसा करने से साधक सभी सिद्धियों का ईश्वर बन जाता है । फिर मूलाधार में किरण पुञ्जों से प्रकाशित अमृतानन्द देने के कारण मुक्तिस्वरूपा समस्त कल्याणकारिणी उन देवी का निम्न मन्त्र से पूजन करे—

मानसोच्चार बीज ( ॐ ), माया ( ह्रीं ) अथवा कामबीज ( क्लीं ), तदनन्तर ५० वर्णों ( अकार से लेकर क्षकार तक ) की माला अनुलोम क्रम से जप कर, पुनः प्रतिलोम क्रम से जप कर, तदनन्तर 'जयद' नामक स्तोत्र को पढ़े । ऐसा करने से साधक को सिद्धि प्राप्त होती है अब हे भैरव ! उस स्तोत्र को सुनिए ॥ २४-२८ ॥

### कुण्डलिनीस्तवः

**जन्मोद्धारनिरक्षिणीहतरुणी [२] वेदादिबीजादिमा**
**नित्यं चेतसि भाव्यते भुवि कदा सद्वाक्यसञ्चारिणी ।**

---

१. पृषोदरादित्वात् शिष्टप्रयुक्तत्वादिडभावः ।

२. जन्मोद्धारशिवक्षनीहतरुणी वेदादिबीजादिमा इति. क. पा. ।

मां[1] पातु प्रियदा स विपदं संहारयित्रि धरे
धात्रि त्वं स्वयमादिदेववनितादीनातिदीनं पशुम् ॥ २९ ॥

**जयदस्तोत्र**—जन्म ( एवं मरण ) से उद्धार करने वाली युवती, वेदादि की बीज एवं मा स्वरूपा, सद् वाक्य का संचालन करने वाली भगवती का मैं कब अपने चित्त में ध्यान करूँगा? प्रिय करने वाली भगवती मेरी रक्षा करें, विपत्तियों का संहार करने वाली, सबको धारण करने वाली, स्वयं सबका पालन करने वाली, आदिदेव की वनिता हे देवि ! मुझ दीनातिदीन पशु की रक्षा कीजिए ॥ २९ ॥

रक्ताभामृतचन्द्रिकालिपिमयी सर्पाकृतिर्निद्रिता
जाग्रत्कूर्मसमाश्रिता भगवती त्वं मां समालोकय ।
मांसोद्गन्धकुगन्धदोषजडितं वेदादिकार्यान्वितं
स्वल्पान्यामलचन्द्रकोटिकिरणैर्नित्यं शरीरं कुरु ॥ ३० ॥

जिनके शरीर की कान्ति लाल वर्ण की है, जो अमृत की चन्द्रिका से लिपि हुई सी हैं । सर्पाकार आकृति वाली, निद्रित हुई, जाग्रत् अवस्था में कूर्म रूप धारण करने वाली, हे भगवती ! आप मेरी ओर अपनी कृपा दृष्टि से देखिए । मांस की उत्कृष्ट गन्ध तथा अन्य कुत्सित गन्धों से जड़ीभूत मेरे शरीर को, थोड़े अथवा अधिक अपने निर्मल करोड़ों चन्द्र किरणों से तथा वेदादि कार्य से नित्य शरीर को युक्त कीजिए ॥ ३० ॥

सिद्धार्थी निजदोषवित् स्थलगतिर्व्याजीयते विद्यया
कुण्डल्याकुलमार्गमुक्तनगरीमायाकुमार्गः श्रिया ।
यद्येवं भजति प्रभातसमये मध्याह्नकालेऽथवा
नित्यं यः [2]कुलकुण्डलीजपपदाम्भोजं स सिद्धो भवेत् ॥ ३१ ॥

मैं सिद्धि चाहता हूँ, अपने दोषों का मुझे ज्ञान है, मात्र स्थल ( लौकिकता ) में मेरी गति है, कुण्डली के मार्ग का मुझे ज्ञान नहीं है, माया वश कुमार्ग में निरत हूँ, श्री विद्या मुझे जीवित कर रही हैं जो प्रभात समय में अथवा मध्याह्न के समय इस प्रकार नित्य कुल कुण्डलिनी का जप तथा उनके चरणाम्भोज का भजन करता है वह सिद्ध हो जाता है ॥ ३१ ॥

वाय्वाकाशचतुर्दलेऽतिविमले वाञ्छाफलान्यालके[3]
नित्यं सम्प्रति नित्यदेहघटिता शाङ्केतिताभाविता ।
विद्याकुण्डलमानिनी स्वजननी [4]मायाक्रिया भाव्यते
यैस्तैः सिद्धकुलोद्भवैः प्रणतिभिः [5]सत्स्तोत्रकैः शंभुभिः ॥ ३२ ॥

वाञ्छा फल प्रदान करने वाले, वायु एवं आकाश रूप से अत्यन्त निर्मल, चतुर्दल में

---

१. मांसात्तु प्रियदासावपदसंधातया श्रीधरे । २. निजपदाम् क० ।
३. वाञ्छाफलोन्मूलके—क० । ४. मार क० ।
५. संयोगिनिः क० ।

निवास करने वाली, नित्य, सर्वदा सबके देह में चेष्टारूप से निवास करने वाली, साङ्केतित भावित ( श्री ) विद्या, कुण्डल मानिनी स्वजननी जो माया क्रिया को सिद्धकुलों में उत्पन्न होने वाली, जिन देवी का ध्यान वे योगी गण उन उन कल्याणकारी स्तोत्रों से प्रणति पूर्वक करते है वे मेरे शरीर को नित्य करें ॥ ३२ ॥

**धाताशङ्कर[१] मोहिनीत्रिभुवनच्छायापटोद्गामिनी**
**संसारादिमहासुखप्रहरणी तत्रस्थिता योगिनी ।**
**सर्वग्रन्थिविभेदिनी स्वभुजगा सूक्ष्मातिसूक्ष्मापरा**
**ब्रह्मज्ञानविनोदिनी कुलकुटी व्याघातिनी भाव्यते ॥ ३३ ॥**

विधाता एवं शङ्कर को भी मोह में डालने वाली, त्रिभुवन रूपीच्छाया पट पर उत्पन्न होने वाली, संसारादि के महासुख का विनाश करने वाली, कुण्डलिनी स्थान में महायोगिनी रूप से स्थित रहने वाली, सारे ग्रन्थियों का भेदन करने वाली, सर्पिणी स्वरूपा, सूक्ष्म से भी सूक्ष्म, पराब्रह्मज्ञान में विनोद करने वाली कुकुटी और व्याधात उत्पन्न करने वाली भगवती का मैं ध्यान करता हूँ ॥ ३३ ॥

**वन्दे श्रीकुलकुण्डलीत्रिवलिभिः साङ्गैः स्वयम्भूं प्रियं**
**प्रावेष्ट्याम्बरमारचित्तचपला बालाबलानिष्कला ।**
**या देवी परिभाति वेदवदना संभाविनी तापिनी**
**इष्टानां शिरसि स्वयम्भुवनितां[२] संभावयामि क्रियाम् ॥ ३४ ॥**

जो अपने प्रियतम स्वयंभू लिङ्ग को तीन बार गोले आकार में कसकर घेरी हुई हैं, और काम के वशीभूत होकर चपल हो रही हैं, जो बाला, अबला और निष्कला हैं, जो देवी वेद वदना, संभावनी और तापिनी है, अपने भक्तों के शिर पर निवास करने वाली हैं, स्वयंभू की बनिता एवं क्रिया स्वरूपा उन भगवती का मैं अपने चित्त में ध्यान करता हूँ ॥ ३४ ॥

**वाणीकोटिमृदङ्गनादमदनानिश्रेणिकोटिध्वनिः**
**प्राणेशीरसराशमूलकमलोल्लासैकपूर्णानना ।**
**आषाढोद्भवमेघवाजनियुतध्वान्ताननास्थायिनी**
**माता सा परिपातु सूक्ष्मपथगे मां योगिनां शङ्करः[३] ॥ ३५ ॥**

हे सूक्ष्मपथ में गमन करने वाली ! करोड़ों नगाड़ों के समान ध्वनि युक्त आपकी वाणी करोड़ों मृदङ्गनाद के समान मद ( हर्ष ) उत्पन्न करने वाली है, जो सब की प्राणेश्वरी हैं रस, राश एवं मूल वाले कमल के समान प्रफुल्लित जिनका मुख है, आषाढ़ में उत्पन्न हुये नियुत मेघ समूह के समान काले मुख वाली, सर्वकाल में स्थित रहने वाली हैं, वह सूक्ष्म पथ वाली माता तथा योगियों में शङ्कर हमारी रक्षा करें ॥ ३५ ॥

---

१. वाताशङ्करविमोहिनीतिवलच्छायापटोद्गामिनी ग० ।
२. स्वयम्भुवो वनिता, पृषोदरादित्वात् ऊकारस्य ह्रस्वः । अथवा भूधातुर्डुप्रत्ययान्तः ।
३. योगिनं शं कुरु क० ।

**त्वामाश्रित्य नरा व्रजन्ति सहसा वैकुण्ठकैलासयो:**
**आनन्दैकविलासिनीं शशिशतानन्दाननां कारणाम् ।**
**मात: श्रीकुलकुण्डली प्रियकरे काली कुलोद्दीपने**
**तत्स्थानं प्रणमामि भद्रवनिते मामुद्धर त्वं पशुम् ॥ ३६ ॥**

हे माता ! हे श्री कुलकुण्डली प्रियकरे ! हे काली ! हे कुलोद्दीपने ! हे भद्रवनिते ! एक मात्र आनन्द में विलासशीला, सैकड़ों चन्द्रमा के समान आनन्दपूर्ण मुख वाली, जगत की कारणभूता, आपका आश्रय ले कर भजन करने वाले मनुष्य बैकुण्ठ और कैलास को जाते है, मैं आपके स्थान को प्रणाम करता हूँ । मुझ पशु का उद्धार कीजिए ॥ ३६ ॥

**कुण्डलीशक्तिमार्गस्थं स्तोत्राष्टकमहाफलम् ।**
**यत: पठेत् प्रातरुत्थाय स योगी भवति ध्रुवम् ॥ ३७ ॥**
**क्षणादेव हि पाठेन कविनाथो भवेदिह ।**
**पठेत्[1] श्रीकुण्डलो योगो ब्रह्मलीनो भवेत् महान् ॥ ३८ ॥**

**फलश्रुति**—कुण्डली शक्ति के मार्ग में होने वाले महाफल युक्त इस स्तोत्राष्टक का जो प्रातः काल में उठकर पाठ करता है वह निश्चित रूप से योगी होता है । इसके एक क्षण के पाठ से मनुष्य निश्चय ही कवि शिरोमणि हो जाता है और जो श्री कुण्डल युक्त महान् योगी इसका पाठ करता है वह निशचित रूप से ब्रह्मलीन हो जाता है ॥ ३७-३८ ॥

**इति ते कथितं नाथ कुण्डलीकोमलं स्तवम् ।**
**एतत्स्तोत्रप्रसादेन देवेषु गुरुगीष्पति: ॥ ३९ ॥**
**सर्वे देवा: सिद्धियुता: अस्या: स्तोत्रप्रसादत: ।**
**द्विपरार्द्धं चिरंजीवी ब्रह्मा सर्वसुरेश्वर: ॥ ४० ॥**

हे नाथ ! इस प्रकार कुण्डली को प्रिय लगने वाले स्तोत्र को मैंने आपसे कहा, इस स्तोत्र के पाठ के प्रभाव से बृहस्पति देवगुरु बन गये । इस स्तोत्र के प्रसाद से सभी देवता सिद्धि से युक्त हो गये । किं बहुना इसके प्रभाव से ही ब्रह्मदेव दो परार्द्ध तक जीने वाले तथा सम्पूर्ण देवताओं के ईश्वर बन गये ॥ ३९-४० ॥

**त्वष्टापि मम निकटे स्थितो भगवतीपति: ।**
**मां विद्धि परमां शक्तिं स्थूलसूक्ष्मस्वरूपिणीम् ॥ ४१ ॥**

इस स्तोत्र के प्रभाव से भगवती पति सदाशिव तथा त्वष्टा भी हमारे सन्निधान में निवास करते हैं । स्थूल और सूक्ष्म स्वरूप से निवास करने वाली मुझे आप परमा शक्ति समझिए ॥ ४१ ॥

**सर्वप्रकाशकरणीं विन्ध्यपर्वतवासिनीम् ।**
**हिमालयसुतां सिद्धां सिद्धमन्त्रस्वरूपिणीम् ॥ ४२ ॥**

---

१. पावित्रीकुण्डली योगी ब्राह्मणी नो भवेत् महान् ग० ।

वेदान्तशक्तितन्त्रस्थां कुलतन्त्रार्थगामिनीम् ।
रुद्रयामलमध्यस्थां स्थितिस्थापकभाविनीम् ॥ ४३ ॥
पञ्चमुद्रास्वरूपाञ्च शक्तियामलमालिनीम् ।
रत्नमालावलाकोट्यां चन्द्रसूर्यप्रकाशिनीम् ॥ ४४ ॥
सर्वभूतमहाबुद्धिदायिनीं[१] दानवापहाम्[२] ।
स्थित्युत्पत्तिलयकारीं करुणासागरस्थिताम् ॥ ४५ ॥
महामोहनिवासाढ्यां दामोदरशरीरगाम् ।
छत्रचामररत्नाढ्य महाशूलकरां पराम् ॥ ४६ ॥
ज्ञानदां वृद्धिदां ज्ञानरत्नमालाकलापदाम् ।
सर्वतेजःस्वरूपाभामनन्तकोटिविग्रहाम्[३] ॥ ४७ ॥
दरिद्रधनदां लक्ष्मीं नारायणमनोरमाम् ।
सदा भावय शम्भो त्वं योगनायकपण्डित ॥ ४८ ॥

मुझे सब में प्रकाश ( ज्ञान ) करने वाली, विन्ध्य पर्वत पर निवास करने वाली, हिमालय पुत्री, सिद्ध एवं सिद्धमन्त्र स्वरूपा, वेदान्तशक्ति, तन्त्रनिवासिनी, कुलतन्त्रार्थगामिनी, **रुद्रयामल**-मध्यस्था, स्थिति तथा स्थापक रूप से रहने वाली, पञ्चमुद्रा स्वरूपा, **शक्तियामल** की माला धारण करने वाली, रत्नमाला धारण करने वाली, अबला स्वरूपा, चन्द्रमा और सूर्य को भी प्रकाशित करने वाली, सम्पूर्ण प्राणियों में महाबुद्धि प्रदान करने वाली, दानव हन्त्री, स्थिति-उत्पत्ति एवे प्रलय करने वाली, करुणा के सागर में अवस्थित, महाविष्णु के शरीर में रहकर महामोह स्वरूप से निवास करने वाली, छत्र चामर एवं रत्न से विभूषित, त्रिशूलधारिणी, परस्वरूपा, ज्ञानदात्री, वृद्धिदात्री, ज्ञानरत्न, की माला, कला युक्त पद प्रदान करने वाली, सम्पूर्ण तेजः स्वरूप की आभा से युक्त, अनन्त कोटि विग्रह वाली दरिद्रो को धन देने वाली, नारायण की मनोरमा महालक्ष्मी के रूप में, हे योगनायक पण्डित ! हे शम्भो ! आप सदा भावना करें ॥ ४२-४८ ॥

## पशुभावप्रशंसा

पुनर्भावं पशोरेव शृणु सादरपूर्वकम् ।
अकस्मात् सिद्धिमाप्नोति पशुर्नारायणोपमः ॥ ४९ ॥
वैकुण्ठनगरे याति चतुर्भुजकलेवरः ।
शङ्खचक्रगदापद्महस्तो गरुडवाहनः ॥ ५० ॥

अब हे शंभो ! पुनः आदर पूर्वक पशुभाव का स्मरण कीजिए । पशुभाव में रहने वाला नारायण के सदृश हो जाता है । अकस्मात् सिद्धि प्राप्त कर लेता है । अन्ततः वह हाथ

---

१. दानवादपहारिणीम् ग० ।

२. दानवान् अपहन्ति इति विग्रहे हन्धातोरौणादिको डाप्रत्ययः, टिलोपः । अथवा दानवानपजहाति इति विग्रहे 'ओहाक् त्यागे' धातोः कर्तरि कप्रत्ययः, टाप् च ।

३. अनन्तकोटिविग्रहा यस्याः सा ताम् ।

में शंख चक्र गदा पद्म धारण कर गरुड़ पर सवार हो कर चतुर्भुज का स्वरूप प्राप्त कर वैकुण्ठ धाम में चला जाता है ॥ ४९-५० ॥

**महाधर्मस्वरूपोऽसौ महाविद्याप्रसादतः ।**
**पशुभावं महाभावं भावानां सिद्धिदं पुनः[1] ॥ ५१ ॥**
**आदौ भावं पशोः कृत्वा पश्चात् कुर्यादवश्यकम् ।**
**वीरभावं महाभावं सर्वभावोत्तमोत्तमम् ॥ ५२ ॥**

महाविद्या की कृपा से वह साधक महाधर्मस्वरूप हो जाता है । वस्तुतः यह पशुभाव ही महाभाव है जो बाद में अन्य भावों को सिद्धि प्रदान करता है । अतः सर्वप्रथम पशुभाव को करे, इसके पश्चात् सभी भावों में उत्तमोत्तम महाभाव स्वरूप वीरभाव का आश्रय ग्रहण करे ॥ ५१-५२ ॥

**तत्पश्चादतिसौन्दर्यं दिव्यभावं महाफलम् ।**
**फलाकाङ्क्षी मोक्षगश्च सर्वभूतहिते रतः ॥ ५३ ॥**
**विद्याकाङ्क्षी धनाकाङ्क्षी रत्नाकाङ्क्षी च यो नरः ।**
**कुर्याद् भावत्रयं दिव्यं भावसाधनमुत्तमम् ॥ ५४ ॥**

इसके बाद फल की आकांक्षा करने वाला, मोक्ष चाहने वाला, समस्त प्राणियों का हित करने वाला पुरुष महान् फल देने वाला अत्यन्त सुन्दरता पूर्ण दिव्यभाव का आश्रय लेवे । विद्या की आकांक्षा करने वाला, धन की आकांक्षा करने वाला तथा रत्न की आकांक्षा करने वाला साधक तीनों भाव करे । दिव्य भाव का साधन उत्तम से उत्तम है ॥ ५३-५४ ॥

**भावेन लभते वाद्यं धनं रत्नं महाफलम् ।**
**कोटिगोदानजैः[2] पुण्यैः कोटिशालग्रामदानजैः ॥ ५५ ॥**
**वाराणस्यां कोटिलिङ्गपूजनेन च यत्फलम् ।**
**तत्फलं लभते मर्त्यः क्षणादेव न संशयः ॥ ५६ ॥**

भाव से ही वाद्य, धन, रत्न तथा अन्य महाफलों की प्राप्ति होती है । करोड़ों गोदान से, करोड़ों शालग्राम-शिला के दान से तथा वाराणसी में करोड़ लिङ्गों के पूजन से जो फल होता है, वह फल मनुष्य क्षणमात्र में भाव के आश्रय से प्राप्त कर लेता है—इसमें संशय नहीं ॥ ५५-५६ ॥

**आदौ दशमदण्डे तु पशुभावमथापि वा ।**
**मध्याह्ने दशदण्डे तु वीरभावमुदाहृतम्[3] ॥ ५७ ॥**
**सायाह्नदशदण्डे तु दिव्यभावं शुभप्रदम् ।**
**अथवा पशुभावस्थो यजेदिष्टादिदेवताम् ॥ ५८ ॥**

---

१. परः क० । २. कोटि ब्राह्मणभोज्येन कोटिगोभोजनेन क० ।
३. उदाहृतं वीरभावं जानीयादिति कर्मणि अमिविभक्तौ वीरभावमिति पदम् ।

दिन के प्रारम्भ के दश दण्ड पशुभाव के लिए उपयुक्त हैं । इसके बाद मध्याह्न के दश दण्ड वीरभाव के लिए कहे गये है । इसके बाद सांयाह्न का दश दण्ड दिव्यभाव के लिए उपयुक्त है जो सब प्रकार का कल्याण देने वाला है, अथवा पशुभाव काल में ही इष्टादि देवों का पूजन करे ॥ ५७-५८ ॥

जन्मावधि यजेन्मन्त्री महासिद्धिमवाप्नुयात् ।
सर्वेषां गुरुरूपः स्यादैश्वर्यञ्च दिने दिने ॥ ५९ ॥
यदि गुरुस्वभावः स्यात्तदा मधुमतीं लभेत् ।
यदि विवेकी निर्याति महावननिवासवान् ॥ ६० ॥

यदि मन्त्रज्ञ जन्मपर्यन्त पशुभाव काल में इष्ट देवता का पूजन करे तो उसे महासिद्धि प्राप्त हो जाती है । वह सब का गुरु बन जाता है तथा प्रतिदिन उसके ऐश्वर्य की वृद्धि होती रहती है । यदि साधक गुरु स्वभाव वाला हो जाय तो उसे मधुमती विद्या भी प्राप्त हो जाती है ॥ ५९-६० ॥

ब्रह्मचर्यव्रतस्थो वा अथवा स्वपुरे[१] वसन् ।
पीठब्राह्मणमात्रेण महाषोढाश्रमेण च ॥ ६१ ॥
पशुभावस्थितो मन्त्री सिद्धविद्यामवाप्नुयात् ।
यदि पूर्वापरस्थाञ्च महाकौलिकदेवताम् ॥ ६२ ॥
कुलमार्गस्थितो मन्त्री सिद्धिमाप्नोति निश्चितम् ।
यदि विद्याः प्रसीदन्ति वीरभावं तदा लभेत् ॥ ६३ ॥

यदि विवेक सम्पन्न व्यक्ति महावन में निवास करे अथवा अपने घर रह कर ब्रह्मचर्य व्रत का पालन करे, अथवा किसी सिद्ध पीठ में ब्राह्मण कुल में जन्म ले, अथवा महाषोढ़ाश्रम में पशुभाव में स्थित रहे तो उसे सिद्ध विद्या प्राप्त हो जाती है । अथवा यदि कुल भाग में स्थित मन्त्रज्ञ साधक पूर्वापर में रहने वाले महा कौलिक देवता ( कुण्डलिनी शक्ति ) का आश्रय ले तो भी निशचित रूप से उसे सिद्धि का लाभ हो जाता है । अतः यदि महाविद्या की प्रसन्नता रहे तभी साधक को वीरभाव प्राप्त होता है ॥ ६०-६३ ॥

वीरभावप्रसादेन दिव्यभावमवाप्नुयात् ।
दिव्यभावं वीरभावं ये गृह्णन्ति नरोत्तमाः ॥ ६४ ॥
वाञ्छाकल्पद्रुमलतापतयस्ते न संशयः ।
आश्रमी ध्याननिष्ठश्च मन्त्रतन्त्रविशारदः ॥ ६५ ॥
भूत्वा वसेन्महापीठं सदा ज्ञानी भवेद् यतिः ।
किमन्येन फलेनापि यदि भावादिकं लभेत् ॥ ६६ ॥
भावग्रहणमात्रेण मम ज्ञानी भवेन्नरः[२] ।
वाक्यसिद्धिर्भवेत् क्षिप्रं वाणी हृदयगामिनी ॥ ६७ ॥

---

१. अथवा गुरुस्वभाववान् क० । २. महाज्ञानी क० ।

वीरभाव जब परिपूर्ण हो जाता है तब साधक वीरभाव युक्त हो जाता है । जो उत्तम पुरुष, वीरभाव और दिव्यभाव प्राप्त कर लेते है । वे वाञ्छा कल्पलता के पति हो जाते हैं, इसमें संशय नहीं । इन भावों को प्राप्त करने वाला, आश्रमी, ध्याननिष्ठ और मन्त्र-तन्त्र विशारद बन कर किसी महापीठ में निवास करता है । अन्ततः वह सदाज्ञानी और यति बन जाता है । इन भावों का अन्य फल हम क्या कहें ? यदि उक्त भाव की प्राप्ति हो जावे तो वह मनुष्य मुझे भी जान लेता है, उसे वाक्सिद्धि प्राप्त हो जाती है उसकी वाणी दूसरों के हृदय तक पहुँचने में समर्थ हो जाती है ॥ ६४-६७ ॥

**नारायणं परिहाय लक्ष्मीस्तिष्ठति मन्दिरे ।**
**मम पूर्णं तु मादृष्टी[१] तस्य देहे न संशयः ॥ ६८ ॥**
**अवश्यं सिद्धिमाप्नोति सत्यं सत्यं न संशयः[२] ।**

**महाभैरव उवाच**

**सूचितं तु महादेवि कथयस्वानुकम्पया ॥ ६९ ॥**

लक्ष्मी अपने पति नारायण को छोड़कर उसके घर में निवास करती हैं । उसके शरीर में ममता से पूर्ण मेरी दृष्टि रहती हैं, इसमें संशय नहीं है । वह अवश्य ही सिद्धि प्राप्त कर लेता है—यह सत्य है, यह सत्य है और यह ध्रुव सत्य है ।

**महाभैरव ने कहा**—हे महादेवि ! आपने यहाँ तक ( पशु एवं वीरभाव को ) सूचित किया अब अनुग्रह पूर्वक आगे मुझे बताइए ॥ ६८-६९ ॥

**सर्वतन्त्रेषु विद्यासु भावसङ्केतमेव हि ।**
**तथापि शक्तितन्त्रेषु विशेषात् सर्वसिद्धिदम् ॥ ७० ॥**
**भावविद्याविधिं विद्ये विस्तार्य भावसाधनम् ।**

**भावविद्याविधिः**

**आनन्दभैरव उवाच**

**भावस्तु त्रिविधो देव दिव्यवीरपशुक्रमात् ॥ ७१ ॥**
**गुरुरस्य त्रिधा चात्र तथैव मन्त्रदेवताः ।**
**दिव्यभावो महादेव श्रेयसां सर्वसिद्धिदम् ॥ ७२ ॥**

ऐसे तो सभी तन्त्रों में एवं विद्याओं में ( पशु आदि ) भाव के सङ्केत प्राप्त होते हैं आगे फिर भी तन्त्रों में विशेष रूप से भाव को सिद्धिप्रद कहा गया है ।

अब हे विद्ये ! **भावविद्या की विधि** और **भाव साधन** को विस्तारपूर्वक कहिए—

**आनन्दभैरवी ने कहा**—हे देव ! दिव्य, वीर और पशु के क्रम से ३ प्रकार के भाव कहे गये हैं । इनके गुरु तथा इनके मन्त्र एवं देवता भी उसी प्रकार तीन-तीन हैं । किन्तु हे महादेव ! दिव्यभाव सभी प्रकार के श्रेय की सिद्धि करता है ॥ ६९-७२ ॥

---

१. चिन्तनीयोऽस्यार्थः ।        २. सदाशिव क० ।

द्वितीयो मध्यमः प्रोक्तस्तृतीयः सर्वनिन्दितः ।
बहुजपात्तथाहोमात् कायक्लेशादिविस्तरैः ॥ ७३ ॥

दूसरा वीरभाव मध्यम कहा गया है, किन्तु प्रथम पशुभाव सर्वथा निन्दित है । क्योंकि यह बहुत जप से, बहुत होम से तथा कायक्लेश से सिद्ध होता है ॥ ७३ ॥

न भावेन बिना देवि तन्त्रमन्त्राः फलप्रदाः ।
किं वीरसाधनेनैव मोक्षविद्याकुलेन किम् ॥ ७४ ॥
किं पीठपूजनेनैव किं कन्याभोजनादिभिः ।
स्वयोषित्प्रीतिदानेन किं परेषां तथैव च ॥ ७५ ॥
किं जितेन्द्रियभावेन किं कुलाचारकर्मणा ।
यदि भावो विशुद्धार्थो न स्यात् कुलपरायणः ॥ ७६ ॥

हे देवि ! भाव के बिना तन्त्र-मन्त्र फल प्रदान नहीं करते । अतः भाव के बिना वीर साधना से क्या ? भाव के बिना मोक्ष विद्या ( वेदान्तादि ) के समूह से भी कोई लाभ नहीं ? भाव के बिना पीठ पूजन से क्या ? कन्या भोजनादि से भी क्या ? अपनी योषित तथा अन्य की योषित में प्रीतिपूर्वक दान देने से भी क्या ? इन्द्रियों को जीतने से क्या ? कुलाचार पालन रूप कर्म से क्या ? यदि कुलपरायण भाव विशुद्ध नहीं है तो उक्त सभी कार्य व्यर्थ ही हैं ॥ ७४-७६ ॥

भावेन[१] लभते मुक्तिं भावेन कुलवर्द्धनम् ।
भावेन गोत्रवृद्धिः स्याद् भावेन कुलशोधनम् ॥ ७७ ॥
किं तथा पूजनेनैव यदि भावो न जायते ।
केन वा पूज्यते विद्या केन वा पूज्यते मनुः ॥ ७८ ॥

भाव से मनुष्य मुक्ति प्राप्त करता है और भाव से कुल की वृद्धि होती है । भाव से गोत्र की वृद्धि होती है तथा भाव से कुल शुद्ध रहता है । यदि भाव नहीं है तो पूजा पाठ से क्या लाभ ? भाव के बिना कौन विद्या की पूजा करे । भाव के बिना कौन मन्त्र का जप करें ? ॥ ७७-७८ ॥

फलाभावश्च देवेश भावाभावात् प्रजायते ।
एतन्मन्त्रस्य कथने शङ्कते मम मानसः ॥ ७९ ॥
त्रिलोकं सञ्जयेत् प्रायः सर्वरत्नसमागमः ।
नावीक्ष्य निर्जनं कुर्यात् कथं तत् कथयामि ते ॥ ८० ॥

हे देवेश ! भाव के अभाव के कारण किए गये कार्य का फल नहीं होता । इस मन्त्र ( शास्त्र ) के कहने में मेरा मन सशंकित हो रहा है । यह आगमशास्त्र सभी रत्नों के समान

---

१. 'भावे हि विद्यते देवः, भावो हि भवनाशनः' इत्यादिनापि भावस्य महती प्रशंसा कृताऽस्ति ।

है । यह त्रिलोकी को भी जीत सकता है अतः बिना निर्जन देखे इसका उपदेश न करे अतः इस विषय में आपसे क्या कहूँ ॥ ७९-८० ॥

श्रीआनन्दभैरव उवाच

त्वत्प्रसादान्महादेवि ! विद्यास्वप्नप्रबोधिनि ।
सर्वपञ्चप्रपञ्चानां[1] दीक्षा देया महेश्वरि ॥ ८१ ॥
यद्यतो देव सर्वेषां भूतानां स्वापकारणम् ।
करोमि कथय त्वं मां भावमार्गोत्तमोत्तमम् ॥ ८२ ॥

**श्रीआनन्दभैरव ने कहा**—हे महादेवि ! हे महाविद्या और स्वप्न में ज्ञान से प्रबुद्ध करने वाली ! हे महेश्वरि ! सभी पञ्चतत्त्व के प्रपञ्चों की दीक्षा देनी चाहिए । हे देवि ! मैं वह देव हूँ जो सभी भूतों को शयन कराने का कारण हूँ । अतः मैं उन्हें शयन करा देता हूँ । निर्जन हो जाने के कारण अब आप मुझसे सभी भावों में उत्तमोत्तम ( दिव्य ) भाव को कहिए ॥ ८२ ॥

कुमारीलक्षणम्

श्रीमहाभैरव्युवाच

प्रथमं दिव्यभावस्तु कौलिके शृणु यत्नतः ।
सर्वदेवार्चितां विद्यां तेजःपुञ्जप्रपूरिताम् ॥ ८३ ॥
तेजोमयीं जगत्सर्वां विभाव्य मूर्तिकल्पनाम् ।
तत्तन्मूर्तिमयैः रूपैः स्नेहशून्ये[2] न वा पुनः ॥ ८४ ॥
आत्मानं तन्मयं कृत्वा सर्वभावं तथैव च ।
तत्सर्वां योषितं ध्यात्वा पूजयेद्यतमानसः ॥ ८५ ॥

**दिव्यभाव विवेचन—आनन्दभैरवी ने कहा**—हे शिव ! यत्नपूर्वक आप श्रवण कीजिए, कौलिक ( शाक्त परम्परा ) में दिव्यभाव सर्वश्रेष्ठ है । सभी देवताओं के द्वारा अर्चित, तेजःपुञ्ज से प्रपूरित, तेजोमयी, महाविद्या की सारे जगत् में मूर्ति की कल्पना कर उनका ध्यान करे और सारे जगत् उन उन रूपों से अपने को तन्मय बना कर अथवा अपने को सर्वमय बनाकर स्नेह शून्य मन से सारे पदार्थों को पोषित के रूप में समझ कर उनका ध्यान करे और एकाग्रमन से उनकी पूजा भी करे ॥ ८३-८५ ॥

अशेषकुलसम्पन्नां नानाजातिसमुद्भवाम् ।
नानादेशोद्भवां वापि सद्गुणालस्य संयुताम् ॥ ८६ ॥
द्वितीयवत्सरादूर्ध्वं यावत् स्यादष्टमाब्दकम् ।
तावज्जप्त्वा पूजयित्वा कन्यां सुन्दरमोहिनीम् ॥ ८७ ॥

सभी कुलों से सम्पन्न, अनेक प्रकार की जातियों में उत्पन्न, अनेक देश में उत्पन्न,

---

१. माया क० । २. स्नेहस्तेनैव यद्गतः क० ।

सद्‌गुण और लास्य से युक्त स्त्री जाति को महाविद्या का स्वरूप समझे । दो वर्ष से लेकर ८ वर्ष पर्यन्त सुन्दर तथा मोह उत्पन्न करने वाली कन्या के मन्त्र का जप कर उनका पूजन करे ॥ ८६-८७ ॥

**दिव्यभावः स्थितः साक्षात्तन्त्रमन्त्रफलं लभेत् ।**
**कुमारीपूजनादेव कुमारीभोजनादिभिः ॥ ८८ ॥**
**एकद्वित्र्यादिबीजानां फलदा नात्र संशयः ।**
**ताभ्यः पुष्पफलं दत्त्वा अनुलेपादिकं तथा ॥ ८९ ॥**
**बलिप्रियञ्च नैवेद्यं दत्त्वा तद्भावभावितः ।**
**मुदा तदङ्गमाल्यानां बालभावविचेष्टितः ॥ ९० ॥**

ऐसा करने से साधक दिव्यभाव में स्थित हो जाता है । उसे तत्क्षण मन्त्र का फल प्राप्त होता है । कुमारियों के पूजन से कुमारियों के भोजनादि से एक, दो तीन आदि बीज मन्त्रों द्वारा कन्यायें फल देतीं हैं । इसमें संदेह नहीं करना चाहिए । उन्हें पुष्प एवं फल देवे । इत्रादि सुगन्धित द्रव्यों का अनुलेपन करे । उनको प्रिय लगने वाला नैवेद्य प्रदान करें । उनकी भावना से भावित रहे । प्रसन्नता पूर्वक उनके अङ्ग में माला प्रदान करे । उनके बाल भावों की चेष्टा करे ॥ ८८-९० ॥

**जातिप्रिय कथालापक्रीडाकौतूहलान्वितः[१] ।**
**यथार्थं तत् प्रियं तत्र कृत्वा सिद्धीश्वरो भवेत् ॥ ९१ ॥**

उनकी जाति, प्रिय, कथालाप, क्रीडा तथा कौतुक से युक्त रहे किं बहुना यथार्थ रूप से उनका प्रिय करे तो साधक सिद्धीश्वर हो जाता है ॥ ९१ ॥

**कन्या सर्वसमृद्धिः स्यात् कन्या सर्वपरन्तपः ।**
**होमं मन्त्रार्चनं नित्यक्रियां कौलिकसत्क्रियाम् ॥ ९२ ॥**
**नानाफलं महाधर्मं कुमारीपूजनं बिना ।**
**तत्तदर्द्धफलं नाथ प्राप्नोति साधकोत्तमः ॥ ९३ ॥**

कन्या सबकी समृद्धि करने वाली है । कन्या सभी शत्रुओं का उन्मूलन करने वाली हैं । होम, मन्त्रार्चन, नित्यक्रिया, कौलिकसत्क्रिया, अनेक प्रकार के फल देने वाले महाधर्म, कुमारी पूजन के बिना साधक को आधे फल देते हैं ॥ ९२-९३ ॥

**फलं कोटिगुणं वीरः कुमारीपूजया लभेत् ।**
**कुसुमाञ्जलि[२]पूर्णञ्च कन्यायां कुलपण्डितः ॥ ९४ ॥**
**ददाति यदि तत्पुष्पं कोटिमेरुप्रदो भवेत् ।**
**तज्ज्ञानजं महापुण्यं क्षणादेव समालभेत् ॥ ९५ ॥**

---

१. जातिप्रियश्चासौ कथालापक्रीडाकौतूहलान्वितश्चेति कर्मधारयः । कथालापक्रीडा-कौतूहलेनान्वितः । २. कुसुमाञ्जलिना पूर्णम् ।

वीरभाव की साधना करने वाला साधक कुमारी पूजन से करोड़ों गुना फल प्राप्त करता है। यदि कौल मार्ग का विद्वान् कन्या की अञ्जलि पुष्पों से परिपूर्ण कर देवे तो उसे करोड़ों मेरु के दान का फल प्राप्त होता है और उसे ज्ञान से होने वाला समस्त पुण्य क्षण मात्र में प्राप्त हो जाता है ॥ ९४-९५ ॥

**कुमारी भोजिता येन त्रैलोक्यं तेन भोजितम् ।**
**एकवर्षा भवेत् सन्ध्या द्विवर्षा च सरस्वती ॥ ९६ ॥**
**त्रिवर्षा च त्रिधामूर्तिश्चतुर्वर्षा च कालिका ।**
**सूर्यगा[1] पञ्चवर्षा च षड्वर्षा चैव रोहिणी ॥ ९७ ॥**
**सप्तभिर्मालिनी साक्षादष्टवर्षा च कुब्जिका ।**
**नवभिः कालसन्दात्री दशभिश्चापराजिता ॥ ९८ ॥**
**एकादशे च रुद्राणी द्वादशेऽब्दे तु भैरवी ।**
**त्रयोदशे महालक्ष्मीर्द्विसप्तपीठनायिका ॥ ९९ ॥**
**क्षेत्रज्ञा पञ्चदशभिः षोडशे चाम्बिका मता ।**
**एवं क्रमेण सम्पूज्य यावत् पुष्पं न विद्यते ॥ १०० ॥**

जिसने कुमारियों को भोजन कराया मानो उसने समस्त त्रिलोकी को भोजन करा लिया। एक वर्ष की कन्या सन्ध्या, दो वर्ष की कन्या सरस्वती स्वरूपा होती है। त्रिवर्षा त्रिमूर्ति चतुर्वर्षा कालिका, पञ्चवर्षा सूर्यगा ( सावित्री ), षष्ठ वर्षा रोहिणी, सात वर्ष वाली कन्या मालिनी, अष्टवर्षा कुब्जिका, नव वर्ष वाली कालसंदात्री, दशवर्ष वाली अपराजिता एकादश वर्ष वाली रुद्राणी, १२ वर्ष वाली भैरवी, त्रयोदश वर्ष वाली महालक्ष्मी, दो सात अर्थात् १४ वर्ष वाली पीठनायिका, पन्द्रह वर्ष की अवस्था वाली क्षेत्रज्ञा तथा षोडश वर्ष वाली कन्या अम्बिका स्वरूपा मानी गई है। इस प्रकार जब तक पुष्प न आवे तब तक क्रमशः उनकी पूजा करनी चाहिए ॥ ९६-१०० ॥

**प्रतिपदादिपूर्णान्तं वृद्धिभेदेन पूजयेत् ।**
**महापर्वसु सर्वेषु विशेषाञ्च पवित्रके ॥ १०१ ॥**
**महानवम्यां देवेश कुमारीश्च[2] प्रपूजयेत् ।**
**तस्मात् षोडशपर्यन्तं युवतीति प्रचक्षते ॥ १०२ ॥**

इस प्रकार प्रतिपदा से लेकर पूर्णिमा पर्यन्त वृद्धि क्रम के अनुसार उनकी पूजा करे। सभी महापर्व काल में, विशेष कर पवित्रारोपण काल में, श्रावण मास के श्रवण नक्षत्र में ( द्र० मन्त्रमहोदधि ) महा नवमी ( अश्विन शुक्ल नवमी ) को हे देवेश ! कुमारियों का पूजन करना चाहिए। उक्त अवस्था के बाद १६ वर्ष समाप्त हो जाने पर फिर उनकी युवती संज्ञा हो जाती है ॥ १०१-१०२ ॥

---

१. सुभग क० ।

२. कुमारीपुजाया महती प्रशंसा कृता ।

**तत्र भावप्रकाशः स्यात्स भावः परमो मतः ।**
**रक्षितव्यं प्रयत्नेन रक्षितास्ताः प्रकाशयेत् ॥ १०३ ॥**

क्योंकि उस अवस्था में उनमें ( युवती ) भाव प्रकाशित होने लगता है । वह ( युवती ) भाव सबसे प्रबल होता है । अतः प्रयत्नपूर्वक उसकी रक्षा करनी चाहिए । क्योंकि रक्षित होने पर वे भाव प्रकाशित करने लगती है ॥ १०३ ॥

**महापूजादिकं कृत्वा वस्त्रालङ्कारभोजनैः[१] ।**
**पूजयेन्मन्दभाग्योऽपि लभते जयमङ्गलम् ॥ १०४ ॥**

वस्त्र, अलङ्कार तथा भोजनादि द्वारा उनकी महा पूजा करे । स्वल्प भाग्य वाला भी यदि कुमारी पूजन करे तो वह जयमङ्गल प्राप्त करता है ॥ १०४ ॥

**अन्येषां कथनेनाथ प्रयोजनमहाफलम् ।**
**विधिना पूजयेद् यस्तु दिव्यवीरपशुस्थितः ॥ १०५ ॥**
**भावत्रये महासौख्यं दिव्ये सत्कर्म सत्फलम् ॥ १०६ ॥**

**॥ इति श्री रुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने कुमार्युपचर्याविलासे सिद्धमन्त्रप्रकरणे भावनिर्णये षष्ठः पटलः ॥ ६ ॥**



अन्य लोगों के कथनानुसार भी कन्यापूजन का प्रयोजन महाफलदायक कहा गया है । दिव्य, वीर और पशुभाव में स्थित होकर विधिपूर्वक कन्या पूजन करना चाहिए । कन्या पूजन तीनों भावों में महासौख्य कारक होता है । दिव्यभाव में कन्या पूजन सत्कर्म और उसका परिणाम उत्तम कहा गया है ॥ १०५-१०६ ॥

**॥ श्रीरुद्रयामल के उत्तरतन्त्र में महातन्त्रोद्दीपन में कुमार्युपचर्याविलास में सिद्धमन्त्र प्रकरण में डॉ० सुधाकर मालवीय कृत छठवें पटल की हिन्दी व्याख्या पूर्ण हुई ॥ ६ ॥**



---

१. वस्त्रं च अलङ्कारश्च भोजनं चेति द्वन्द्वः ।

# अथ सप्तमः पटलः

आनन्दभैरवी उवाच

अथ पूजां प्रवक्ष्यामि कुमार्याश्चातिदुर्लभाम् ।
व्याधिवर्गविहीनानां शीघ्रं सिद्ध्यति भूतले ॥ १ ॥

**आनन्दभैरवी ने कहा**—हे महाभैरव ! अब कुमारी की अत्यन्त दुर्लभ पूजा कहती हूँ । व्याधि वर्ग विहीन कन्या पूजन से साधक को भूमण्डल में शीघ्र ही सिद्धि प्राप्त होती है ॥ १ ॥

तत्प्रकारं महादेव वीराणामधिपाधिप ।
पूजास्थानं महापीठं देवालयमथापि वा ॥ २ ॥

हे वीरों के अधिपाधिप ! हे महादेव ! अब उसका प्रकार सुनिए, कन्यापूजन के लिए ( शाक्त ) महापीठ अथवा देवालय समुचित स्थान माना गया है ॥ २ ॥

सुन्दरीं परमानन्दवर्द्धनीं जयदायिनीम् ।
कालरात्रिस्वरूपां श्रीं गौरीं रक्ताङ्गरागिणीम् ॥ ३ ॥

सुन्दरी, परमानन्दवर्द्धिनी, जयदायिनी, कालरात्रिस्वरूपा एवं रक्ताङ्ग रञ्जिता कन्या श्री गौरी का स्वरूप हैं ॥ ३ ॥

कन्यां देवकुलोद्भूतां राक्षसीं वा नरोत्तमाम् ।
नटीकन्यां हीनकन्यां तथा कापालिकन्यकाम् ॥ ४ ॥
रजकस्यापि कन्यां ते तथा नापितकन्यकाम् ।
गोपालकन्यकाञ्चैव तथा ब्राह्मणकन्यकाम् ॥ ५ ॥
शूद्रकन्यां वैश्यकन्यां तथा वैद्यकन्यकाम्[1] ।
चण्डालकन्यकां वापि यत्र कुत्राश्रमे स्थिताम् ॥ ६ ॥
सुहृद्वर्गस्य कन्यां च समानीय प्रयत्नतः ।
पूजयेत् परमानन्दैरात्मध्यानपरायणः ॥ ७ ॥

चाहे वह कन्या देवकुल में उत्पन्न हो, अथवा राक्षस कुल में, चाहे नरों के उत्तम कुल में, चाहे नटी कन्या, चाहे हीन जाति की कन्या, चाहे कापालिक की कन्या ही क्यों न हों । चाहे धोबी की कन्या, चाहे नापित की कन्या, गोपाल की कन्या, ब्राह्मण की कन्या, शूद्र की

---

१. वणिक्कन्यकाम् इति सं० मुद्रित पाठः ।

**केशाग्रं कमलादेवी नासाग्रं विन्ध्यवासिनी ।**
**चिबुकं चण्डिका देवी कुमारी पातु मे सदा ॥ १६ ॥**

कुल्लुका से युक्त योगिनी 'जयन्ती' देवी मेरे दोनों जांघों की रक्षा करें । मन्त्रार्थ में गमन करने वाली 'अम्बिका' देवी मेरे सर्वांग की रक्षा करें । कमला देवी केशों के अग्रभाग की, विन्ध्यवासिनी ( दुर्गा ) देवी नासा के अग्रभाग की,चण्डिका देवी चिबुक की तथा कुमारी सर्वदा मेरी रक्षा करें ॥ १५-१६ ॥

**हृदयं ललिता देवी पृष्ठं पर्वतवासिनी ।**
**त्रिशक्तिः षोडशी देवी लिङ्गं गुह्यं सदावतु ॥ १७ ॥**
**श्मशाने चाम्बिका देवी गङ्गागर्भे च वैष्णवी ।**
**शून्यागारे पञ्चमुद्रा मन्त्रयन्त्रप्रकाशिनी ॥ १८ ॥**

ललिता देवी हृदय की और पर्वतवासिनी देवी पृष्ठभाग की रक्षा करें । ज्ञान, इच्छा एवं कर्मरूप तीन शक्तियों से युक्त 'षोडशी' देवी मेरे लिङ्ग तथा गुह्य स्थान की सर्वदा रक्षा करें । अम्बिका देवी श्मशान में, गङ्गा गर्भ में, मन्त्र यन्त्र का प्रकाश करने वाली पञ्चमुद्रा रूपा वैष्णवी देवी शून्यागार में मेरी रक्षा करें ॥ १७-१८ ॥

**चतुष्पथे तथा पातु मामेव वज्रधारिणी ।**
**शवासनगता चण्डा मुण्डमालाविभूषिता[१] ॥ १९ ॥**
**पातु माने कलिङ्गे च वैखरी शक्तिरूपिणी ।**
**वने पातु महाबाला महारण्ये रणप्रिया ॥ २० ॥**

वज्रधारण करने वाली चौराहे पर मात्र मेरी रक्षा करें । शव के आसन पर विराजमान मुण्डमाला से विभूषित शक्ति स्वरूपिणी वैखरी शब्द रूपा चण्डिका मेरे मान को तथा कलिङ्ग की रक्षा करें । वन में महाबाला मेरी रक्षा करें । घोर अरण्य में रणप्रिया हमारी रक्षा करें ॥ १९-२० ॥

**महाजले तडागे च शत्रुमध्ये सरस्वती ।**
**महाकाशपथे पृथ्वी पातु मां शीतला सदा ॥ २१ ॥**
**रणमध्ये राजलक्ष्मीः कुमारी कुलकामिनी ।**
**अर्द्धनारीश्वरा पातु मम पादतलं मही ॥ २२ ॥**

महाजल के तडाग में तथा शत्रुओं के मध्य में सरस्वती मेरी रक्षा करें । महाकाश के पथ में पृथ्वी मेरी रक्षा करे तथा शीतल देवी सर्वदा मेरी रक्षा करें । कुमारी कुलकामिनी तथा राजलक्ष्मी रण के मध्य में मेरी रक्षा करें । अर्द्धनारीश्वरी तथा मही मेरे पादतल की रक्षा करें ॥ २१-२२ ॥

**नवलक्षमहाविद्या कुमारी रूपधारिणी ।**
**कोटिसूर्यप्रतीकाशा चन्द्रकोटिसुशीतला ॥ २३ ॥**
**पातु मां वरदा वाणी वटुकेश्वरकामिनी ।**
**इति ते कथितं नाथ कवचं परमाद्भुतम् ॥ २४ ॥**

---

१. मुण्डमालाभिर्विभूषिता ।

करोड़ो सूर्य के समान प्रकाश करने वाली, करोड़ों चन्द्रमा के समान शीतलता प्रदान करने वाली, कुमारी रूप धारण करने वाली, नव लक्ष्महाविद्यायें, वरदा वाणी तथा बटुकेश्वर कामिनी मेरी रक्षा करें । हे नाथ ! यह महान् अद्‌भुत कवच मैने आपसे कहा ॥ २३-२४ ॥

**कुमार्याः कुलदायिन्याः पञ्चतत्त्वार्थपारग ।**
**यो जपेत् पञ्चतत्त्वेन स्तोत्रेण कवचेन च ॥ २५ ॥**
**आकाशगामिनी सिद्धिर्भवेत्तस्य न संशयः ॥ २६ ॥**

**फलश्रुति**—हे पञ्चतत्त्वार्थ पारग ! जो पञ्चतत्त्व नामक स्तोत्र एवं कवच के साथ कुलदायिनी कुमारी के सहस्रनाम का पाठ करता है, उसे आकाशगामिनी सिद्धि प्राप्त हो जाती है इसमें संशय नहीं ॥ २५-२६ ॥

**वज्रदेही भवेत् क्षिप्रं कवचस्य प्रपाठतः ।**
**सर्वसिद्धीश्वरो योगी ज्ञानी भवति यः पठेत् ॥ २७ ॥**
**विवादे व्यवहारे च सङ्ग्रामे कुलमण्डले ।**
**महापथे श्मशाने च योगसिद्धो भवेत् स च ॥ २८ ॥**

केवल कवच के पाठ से ही साधक का शरीर शीघ्रता से वज्र के समान हो जाता है। इस प्रकार जो पाठ करता है वह सर्व सिद्धीश्वर योगी तथा ज्ञानी बन जाता है । शत्रु के साथ विवाद में, मुकदमे में, संग्राम में, समाज मे, महापथ में तथा श्मशान में इसका पाठ करने वाला योगसिद्ध हो जाता है ॥ २७-२८ ॥

**पठित्वा जयमाप्नोति सत्यं सत्यं कुलेश्वर ।**
**वशीकरणकवचं सर्वत्र जयदं शुभम् ॥ २९ ॥**
**पुण्यव्रती पठेन्नित्यं यतिश्रीमान्भवेद् ध्रुवम् ।**
**सिद्धविद्या कुमारी च ददाति सिद्धिमुत्तमाम् ॥ ३० ॥**

हे कुलेश्वर ! इस कवच के पाठ से साधक विजय प्राप्त कर लेता है । यह सत्य है, यह सत्य है । यही वशीकरण कवच सभी स्थान में विजय देता है और कल्याणकारी है। पुण्यव्रती नित्य इसका पाठ करे तो वह निश्चय ही यति ( संयमी ) श्रीमान् ( श्रीसम्पन्न ) हो जाता है । यह कुमारी सिद्ध विद्या कही जाती है । अतः वह अपने उपासक को उत्तम सिद्धि प्रदान करती है ॥ २९-३० ॥

**पठेद्यः शृणुयाद्वापि स भवेत्कल्पपादपः ।**
**भक्तिं मुक्तिं तुष्टिं पुष्टिं राजलक्ष्मीं सुसम्पदाम् ॥ ३१ ॥**
**प्राप्नोति साधकश्रेष्ठो धारयित्वा जपेद्यदि ।**
**असाध्यं साधयेद्विद्वान् पठित्वा कवचं शुभम् ॥ ३२ ॥**

जो इसका पाठ करता है अथवा श्रवण करता है वह कल्पवृक्ष के समान हो जाता है। वह भुक्ति, मुक्ति, तुष्टि पुष्टि, राजलक्ष्मी तथा सुसम्पदा प्राप्त करता है । यदि साधक श्रेष्ठ इसे धारण कर कुमारी मन्त्र का जप करे, पुनः कवच का पाठ करे तो वह विद्वान् असाध्य को भी साध्य बना देता है ॥ ३१-३२ ॥

धनिनाञ्च[1] [2]महासौख्यधर्म्मार्थकाममोक्षदम् ।
यो वशी दिवसे नित्यं कुमारीं पूजयेन्निशि ॥ ३३ ॥
उपचारविशेषेण त्रैलोक्यं वशमानयेत् ।
पललेनासवेनापि मत्स्येन मुद्रया सह ॥ ३४ ॥
नानाभक्ष्येण[3] भोज्येन गन्धद्रव्येण साधकः ।
माल्येन स्वर्णरजतालङ्कारेण सुचैलकैः ॥ ३५ ॥

यह धनियों को महासौख्य, धर्म, अर्थ, काम तथा मोक्ष प्रदान करने वाला है । जो संयमशील पुरुष अपने इन्द्रियों को वश में रखकर दिन रात उपचार विशेष से कुमारी का पूजन करते हैं । वह त्रैलोक्य को अपने वश में कर सकते हैं । पलल ( मांस ) आसव, मत्स्य, मुद्रा के सहित अनेक प्रकार के भक्ष्य, भोज्य, सुगन्धित इत्रादि द्रव्य, माला, सुवर्ण तथा रजत निर्मित अलङ्कार तथा उत्तम प्रकार के वस्त्र से साधक कुमारी का पूजन कर जप करे ॥ ३३-३५ ॥

पूजयित्वा जपित्वा च तर्पयित्वा वराननाम् ।
यज्ञदानतपस्याभिः प्रयोगेण महेश्वर ॥ ३६ ॥
स्तुत्वा कुमारीकवचं यः पठेदेकभावतः ।
तस्य सिद्धिर्भवेत् क्षिप्रं राजराजेश्वरो भवेत् ॥ ३७ ॥

फिर उस सुन्दरी का तर्पण करे । तन्निमित्तक यज्ञ, दान, तपस्या और अनुष्ठान करे । फिर, हे महेश्वर ! कुमारी की स्तुति पढ़कर अनन्यमन से कवच का पाठ करे तो उसे अवश्य सिद्धि मिल जाती है, और वह राजराजेश्वर बन जाता है ॥ ३६-३७ ॥

वाञ्छार्थफलमाप्नोति यद्यन्मनसि वर्तते ।
भूर्जपत्रे लिखित्वा स कवचं धारयेद् हृदि ॥ ३८ ॥
शनिमङ्गलवारे च नवम्यामष्टमीदिने ।
चतुर्दश्यां पौर्णमास्यां कृष्णपक्षे विशेषतः ॥ ३९ ॥
लिखित्वा धारयेद् विद्वान् उत्तराभिमुखो भवन् ।
महापातकयुक्तो हि मुक्तः स्यात् सर्वपातकैः ॥ ४० ॥

उसे अपने मन में जितनी भी अभिलाषायें हैं, सभी अभिलाषाओं का फल प्राप्त हो जाता है । यदि इस कवच को भोजपत्र पर लिखकर शनिवार, मङ्गलवार को विशेषतः कृष्णपक्ष की नवमी, अष्टमी, चतुर्दशी और पूर्णमासी तिथि आने पर विद्वान् साधक उत्तराभिमुख हो हृदय पर धारण करे तो वह ब्रह्महत्यादि महापातकों से युक्त होने पर भी सभी प्रकार के पापों से मुक्त हो जाता है ॥ ३८-४० ॥

योषिद्वामभुजे धृत्वा सर्वकल्याणमालभेत् ।

---

१. कुलीनानाम्—क० ।

२. महासौख्यं धर्ममर्थं कामं मोक्षं च ददाति इति ।

३. नाना क्षेत्रभवान्येव गन्धद्रव्याणि साधकः—ग० ।

बहुपुत्रान्विता[१] कान्ता सर्वसम्पत्तिसंयुता ॥ ४१ ॥
तथाश्रीपुरुषश्रेष्ठो दक्षिणे धारयेद् भुजे ।
ऐहिके दिव्यदेहः स्यात् पञ्चाननसमप्रभः ॥ ४२ ॥

स्त्री यदि भोजपत्र पर लिखित इस कवच को अपनी बाईं भुजा में धारण करे तो वह समस्त कल्याण प्राप्त करती हैं, ऐसी स्त्री अनेक संतानो से युक्त हो जाती है और सब प्रकार की सम्पत्ति भी प्राप्त कर लेती है । इसी प्रकार यदि श्रेष्ठ पुरुष भोजपत्र पर लिखे हुये कवच को अपनी दाहिनी भुजा में धारण करे तो वह इस जन्म में ही दिव्य देह संयुक्त हो जाता है तथा पञ्चानन सदाशिव के समान तेजस्वी बन जाता है ॥ ४१-४२ ॥

**विमर्श**—बहुभिः पुत्रैरन्विता युक्ता । यद्यपि 'बहुप्रजा निर्ऋतिमाविवेश' इति मन्त्रे सन्ततीनामाधिक्यं निन्दितमस्ति, तथापि दुष्टसन्ततीनां कृते एषा स्थितिः। वीरसन्ततयः सद्गुण-सम्पन्नाः सन्ततयस्तु श्लाघ्या एव । अत एव गोत्रं नो वर्धतामित्यपि प्रार्थनामन्त्रः श्राद्धकर्मणि ।

शिवलोके परे याति वायुवेगी निरामयः ।
सूर्यमण्डलमाभेद्य परं लोकमवाप्नुयात् ॥ ४३ ॥

वह इस लोक में निरामय ( नीरोग ) रहता है । फिर वायु के समान वगवान् हो कर परब्रह्म सदाशिव के लोक में जाता है, अथवा सूर्य मण्डल का भेदन कर परब्रह्म के लोक में चला जाता है ॥ ४३ ॥

लोकानामतिसौख्यदं भयहरं श्रीपादभक्तिप्रदं
मोक्षार्थं कवचं शुभं प्रपठतामानन्दसिन्धूद्भवम् ।
पार्थानां कलिकालघोरकलुषध्वंसैकहेतुं जयं
ये नाम प्रपठन्ति धर्ममतुलं मोक्षं व्रजन्ति क्षणात् ॥ ४४ ॥

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने कुमार्युपचर्याविन्यासे कुमारी-कवचोल्लासे सिद्धमन्त्रप्रकरणे दिव्यभावनिर्णये नवमः पटलः ॥ ९ ॥**



यह कवच समस्त साधकों को अत्यन्त सौख्य प्रदान करता है भयहरण करता है । श्री के चरणों में भक्ति प्रदान करता है । मोक्ष के लिए पाठ करने वाले मनुष्यों को आनन्द सिन्धु में उत्पन्न समस्त कल्याण प्रदान करता है । यह कलिकाल के घोर कालुष्य ( पाप ) को नष्ट करने का एक मात्र हेतु है । तथा जय प्रदान करता है । इसलिए जो इसका पाठ करते हैं वे अतुलनीय धर्म प्राप्त करते हैं और क्षण भर में मोक्ष प्राप्त कर लेते हैं ॥ ४४ ॥

**॥ इस प्रकार श्रीरुद्रयामल के उत्तरतन्त्र के महातन्त्रोद्दीपन में कुमार्युपचर्याविन्यास में कुमारीकवच में सिद्धमन्त्रप्रकरण के दिव्यभाव-निर्णय में नवम पटल की डा० सुधाकर मालवीय कृत हिन्दी पूर्ण हुई ॥ ९ ॥**



# अथ दशमः पटलः

आनन्दभैरव उवाच

वद कान्ते सदानन्दस्वरूपानन्दवल्लभे ।
कुमार्या देवतामुख्याः परमानन्दवर्धनम् ॥ १ ॥
अष्टोत्तरसहस्राख्यं नाम मङ्गलमद्भुतम् ।
यदि मे वर्तते विद्ये यदि स्नेहकलामला ॥ २ ॥
तदा वदस्व कौमारीकृतकर्मफलप्रदम् ।
महास्तोत्रं कोटिकोटि कन्यादानफलं भवेत् ॥ ३ ॥

**श्रीआनन्दभैरव ने कहा**—हे सदानन्द स्वरूपानन्द वल्लभे ! हे कान्ते! आप देवताओं में सर्वश्रेष्ठ कुमारी के, परमानन्द को बढ़ाने वाले, मङ्गल प्रदान करने वाले तथा अत्यन्त अद्भुत एक हजार आठ नामों को कहिए । हे विद्ये ! यदि आपकी मुझ में स्वच्छ स्नेह की कला है तो कुमारी के लिए किए जाने वाले कर्म के फल को देने वाले उस महास्तोत्र को कहिए जिसके पाठ से करोड़ो-करोड़ कन्यादान का फल प्राप्त होता है ॥ १-३ ॥

आनन्दभैरवी उवाच

महापुण्यप्रदं नाथ शृणु सर्वेश्वरप्रिय ।
अष्टोत्तरसहस्राख्यं कुमार्याः परमाद्भुतम् ॥ ४ ॥
पठित्वा धारयित्वा वा नरो मुच्येत सङ्कटात् ।
सर्वत्र दुर्लभं धन्यं धन्यलोकनिषेवितम् ॥ ५ ॥

**आनन्दभैरवी ने कहा**—हे सर्वेश्वर ! हे प्रिय ! कुमारी के अत्यन्त अद्भुत, महान् पुण्य देने वाले एक हजार आठ नामों का पाठ कर और उसको हृदय में धारण कर मनुष्य समस्त सङ्कटों से छुटकारा पा जाता है । यह सहस्रनाम सर्वत्र दुर्लभ है, धन्य है तथा धन्य लोगों से निषेवित है ॥ ४-५ ॥

अणिमाद्यष्टसिद्ध्यङ्गं[1] सर्वानन्दकरं परम् ।
मायामन्त्रनिरस्ताङ्गं मन्त्रसिद्धिप्रदे नृणाम् ॥ ६ ॥

यह अणिमादि अष्टसिद्धियों को देने वाला, सभी प्रकार के आनन्द को करने वाला तथा सर्वश्रेष्ठ है । माया निर्मित मन्त्रों को निरस्त करने वाला तथा मनुष्यों को मन्त्र की सिद्धि देने वाला है ॥ ६ ॥

---

१. सर्वाङ्गम्—क० ।

न पूजा न जपं स्नानं पुरश्चर्याविधिश्च न ।
अकस्मात् सिद्धिमवाप्नोति सहस्रनामपाठतः[१] ॥ ७ ॥
सर्वयज्ञफलं नाथ प्राप्नोति साधकः क्षणात् ।
मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रास्वरूपकम् ॥ ८ ॥

कुमारी सहस्र नाम के पाठ मात्र से साधक को अनायास सिद्धि प्राप्त होती है । इसमें पूजा, जप, स्नान तथा पुरश्चरण के विधि की आवश्यकता नहीं पड़ती । हे नाथ ! इसके पाठ से साधक क्षणमात्र में समस्त यज्ञों का फल प्राप्त कर लेता है । यह सभी मन्त्रों का अर्थ है । सभी मन्त्रों को चेतना प्रदान करता है तथा समस्त योनिमुद्रा का स्वरूप है ॥ ७-८ ॥

कोटिवर्षशतेनापि फलं वक्तुं न शक्यते ।
तथापि वक्तुमिच्छामि हिताय जगतां प्रभो ॥ ९ ॥

अस्याः श्रीकुमार्याः सहस्रनामकवचस्य वटुकभैरवऋषिरनुष्टुप्छन्दः,
कुमारीदेवता, सर्वमन्त्रसिद्धिसमृद्धये विनियोगः ॥ १० ॥

इसका फल सैकड़ों करोड़ वर्षों तक कहना संभव नहीं है । फिर भी, हे प्रभो ! मैं समस्त संसार के हित के लिए इस कुमारी सहस्रनाम को कहता हूँ ॥ ९ ॥

**विनियोग**—इस कुमारी सहस्रनाम कवच के बटुक भैरव ऋषि हैं, अनुष्टुप् छन्द है, कुमारी देवता हैं, सम्पूर्ण मन्त्रों की सिद्धि समृद्धि के लिए इसका विनियोग है ॥ १० ॥

ॐ कुमारी कौशिकी काली कुरुकुल्ला कुलेश्वरी ।
कनकाभा काञ्चनाभा कमला कालकामिनी ॥ ११ ॥
कपालिनी कालरूपा कौमारी कुलपालिका ।
कान्ता कुमारकान्ता च कारणा करिगामिनी ॥ १२ ॥
कन्धकान्ता कौलकान्ता कृतकर्मफलप्रदा ।
कार्याकार्यप्रिया कक्षा कंसहन्त्री कुरुक्षया ॥ १३ ॥
कृष्णकान्ता कालरात्रिः कर्णेषुधारिणीकरा ।
कामहा कपिला काला कालिका कुरुकामिनी ॥ १४ ॥
कुरुक्षेत्रप्रिया कौला कुन्ती कामातुरा कचा ।
कलञ्जभक्षा कैकेयी काकपुच्छध्वजा कला ॥ १५ ॥

ॐ कुमारी, कौशिकी, काली, कुरुकुल्ला, कुलेश्वरी, कनकाभा, काञ्चनाभा, कमला, कालकामिनी, कपालिनी, कालरूपा, कौमारी, कुलपालिका, कान्ता, कुमारकान्ता, कारणा, करिगामिनी, कन्धकान्ता, कौलकान्ता, कृतकर्मफलप्रदा, कार्याकार्यप्रिया, कक्षा, कंसहन्त्री, कुरुक्षया, कृष्णकान्ता, कालरात्रि, कर्णेषुधारिणी, करा, कामहा, कपिला, काला, कालिका, कुरुकामिनी, कुरुक्षेत्रप्रिया, कौला, कुन्ती, कामातुरा, कचा, कलञ्जभक्षा, कैकेयी, काकपुच्छध्वजा, कला ( ४१ ) ॥ ११-१५ ॥

---

१. मन्त्रस्यातिशयबलवत्त्वमनेन व्यज्यते ।

कमला कामलक्ष्मी[1] च कमलाननकामिनी ।
कामधेनुस्वरूपा च कामहा काममर्दिनी ॥ १६ ॥
कामंदा कामपूज्या च कामातीता कलावती ।
भैरवी कारणाढ्या च कैशोरी कुशलाङ्गला ॥ १७ ॥
कम्बुग्रीवा[2] कृष्णनिभा कामराजप्रियाकृतिः ।
कङ्कणालङ्कृता कङ्का केवला काकिनी किरा ॥ १८ ॥
किरातिनी काकभक्षा करालवदना कृशा[3] ।
केशिनी केशिहा केशा कासाम्बष्ठा करिप्रिया ॥ १९ ॥
कविनाथस्वरूपा च कटुवाणी कटुस्थिता ।
कोटरा कोटराक्षी च करनाटकवासिनी[4] ॥ २० ॥

कमला, कामलक्ष्मी, कमलानन, कामिनी, कामधेनुस्वरूपा, कामहा, काममर्दिनी, कामदा, कामपूज्या, कामातीता, कलावती, भैरवी, कारणाढ्या, कैशोरी, कुशलाङ्गला, कम्बुग्रीवा, कृष्णनिभा, कामराजप्रियाकृति, कङ्कणालङ्कृता, कङ्का, केवला, काकिनी, किरा, किरातिनी, काकभक्षा, करालवदना, कृशा, केशिनी, केशिहा, केशा, कासाम्बष्ठा, करिप्रिया, कविनाथ-स्वरूपा, कटुवाणी, कटुस्थिता, कोटरा, कोटराक्षी, करनाटकवासिनी ( ३७ ) ॥ १६-२० ॥

कटकस्था काष्ठसंस्था कन्दर्पा केतकी प्रिया ।
केलिप्रिया कम्बलस्था कालदैत्यविनाशिनी ॥ २१ ॥
केतकीपुष्पशोभाढ्या कर्पूरपूर्णजिह्विका ।
कर्पूराकरकाकोला कैलासगिरिवासिनी ॥ २२ ॥
कुशासनस्था कादम्बा कुञ्जरेशी कुलानना ।

कटकस्था, काष्ठसंस्था, कन्दर्पा, केतकी, प्रिया, केलिप्रिया, कम्बलस्था, कालदैत्य-विनाशिनी, केतकीपुष्पशोभाढ्या, कर्पूरपूर्णजिह्विका, कर्पूराकर, काकोला, कैलासगिरिवासिनी, कुशासनस्था, कादम्बा, कुञ्जरेशी, कुलानना ( १६ ) ॥ २१-२३ ॥

खर्वा खड्गधरा खड्गा खलहा खलबुद्धिदा ॥ २३ ॥
खञ्जना खररूपा च क्षाराम्लतिक्तमध्यगा ।
खेलना खेटककरा खरवाक्या खरोत्कटा ॥ २४ ॥
खद्योतचञ्चला खेला[5] खद्योता खगवाहिनी ।
खेटकस्था खलाखस्था खेचरी खेचरप्रिया ॥ २५ ॥
खचरा खरप्रेमा खलाढ्या खचरानना ।
खेचरेशी खरोग्रा च खेचरप्रियभाषिणी ॥ २६ ॥

---

१. कमलाक्षी च—क० । २. कम्बुः शंखः, स इव ग्रीवा यस्याः सा।
३. कुशा—ख० । ४. कूर्दनो कटवासिनी क० ।
५. एला—केला—खेला विलासे इति कण्ड्वादिगणे पाठे खेला इति प्रातिपदिकमपि विलासेऽर्थे साधुतामनुभवति ।

खर्जूरासवसंमत्ता खर्जूरफलभोगिनी ।
खातमध्यस्थिता खाता खाताम्बुपरिपूरिणी ॥ २७ ॥
ख्याति: ख्यातजलानन्दा खुलना खञ्जनागति: ।
खल्वा खलतरा खारी खरोद्वेगनिकृन्तनी ॥ २८ ॥

खर्बा, खड्गधरा, खड्गा, खलहा, खलबुद्धिदा, खञ्जना, खररूपा, क्षाराम्लतिक्तमध्यगा, खेलना, खेटककरा, खरवाक्या, खरोत्कटा, खद्योतचञ्चला, खेला, खद्योता, खगवाहिनी, खेटकस्था, खलाखस्था, खेचरी, खेचरप्रिया, खचरा, खरप्रेमा, खलाढ्या, खचरानना, खेचरेशी, खरोग्रा, खेचरप्रियभाषिणी, खर्जूरासवसंमत्ता, खर्जूरफलभोगिनी, खातमध्यस्थिता, खाता, खाताम्बुपरिपूरिणी, ख्याति, ख्यातजलानन्दा, खुलना, खञ्जनागति, खल्वा, खलतरा, खारी, खरोद्वेगनिकृन्तनी ( ४० ) ॥ २३-२८ ॥

गगनस्था च भीता[1] च गभीरनादिनी गया ।
गङ्गा गभीरा गौरी च गणनाथ प्रिया गति: ॥ २९ ॥
गुरुभक्ता ग्वालिहीना गेहिनी गोपिनी गिरा ।
गोगणस्था गाणपत्या गिरिजा गिरिपूजिता ॥ ३० ॥

गगनस्था, भीता, गभीरनादिनी, गया, गङ्गा, गभीरा, गौरी, गणनाथ, प्रिया, गति, गुरुभक्ता, ग्वालिहीना, गेहिनी, गोपिनी, गिरा, गोगणस्था, गाणपत्या, गिरिजा, गिरिपूजिता ( १९ ) ॥ २९-३० ॥

गिरिकान्ता गणस्था च गिरिकन्या गणेश्वरी ।
गाधिराजसुता ग्रीवा गुर्वी गुर्व्यम्बशाङ्करी ॥ ३१ ॥
गन्धर्व्वकामिनी गीता गायत्री गुणदा गुणा ।
गुग्गुलुस्था गुरो: पूज्या गीतानन्दप्रकाशिनी ॥ ३२ ॥
गयासुरप्रियागेहा गवाक्षजालमध्यगा ।
गुरुकन्या गुरो: पत्नी गहना गुरुनागिनी ॥ ३३ ॥
गुल्फवायुस्थिता गुल्फा गर्द्दभा गर्द्दभप्रिया ।
गुह्या गुह्यगणस्था च गरिमा गौरिका गुदा ॥ ३४ ॥
गुदोर्ध्वस्था च गलिता गणिका गोलका गला ।
गान्धर्वी गाननगरी गन्धर्वगणपूजिता ॥ ३५ ॥

गिरिकान्ता, गणस्था, गिरिकन्या, गणेश्वरी, गाधिराजसुता, ग्रीवा, गुर्वी, गुर्व्यम्बशाङ्करी, गन्धर्व्वकामिनी, गीता, गायत्री, गुणदा, गुणा, गुग्गुलुस्था, गुरो पूज्या, गीतानन्दप्रकाशिनी, गयासुरप्रियागेहा, गवाक्षजालमध्यगा, गुरुकन्या, गुरो पत्नी, गहना, गुरुनागिनी, गुल्फवायुस्थिता, गुल्फा, गर्द्दभा, गर्द्दभप्रिया, गुह्या, गुह्यगणस्था, गरिमा, गौरिका, गुदा, गुदोर्ध्वस्था, गलिता, गणिका, गोलका, गला, गान्धर्वी, गाननगरी, गन्धर्वगणपूजिता ( ४१ ) ॥ ३१-३५ ॥

---

१. गणातीता—क० ।

घोरनादा घोरमुखी घोरा घर्मनिवारिणी ।
घनदा घनवर्णा च घनवाहनवाहना ॥ ३६ ॥
घर्घरध्वनिचपला घटाघटपटाघटा [१] ।
घटिता घटना घोना घनरुप घनेश्वरी ॥ ३७ ॥
घुण्यातीता घर्घरा च घोराननविमोहिनी ।
घोरनेत्रा घनरुचा घोरभैरव कन्यका ॥ ३८ ॥
घाताघातकहा घात्या घ्राणाघ्राणेशवायवी ।
घोरान्धकारसंस्था [२] च घसना घस्वरा घरा ॥ ३९ ॥
घोटकेस्था घोटका च घोटकेश्वरवाहना ।
घननीलमणिश्यामा घर्घरेश्वरकामिनी ॥ ४० ॥

घोरनादा, घोरमुखी, घोरा, घर्मनिवारिणी, घनदा, घनवर्णा, घनवाहनवाहना, घर्घरध्वनिचपला, घटाघटपटाघटा, घटिता, घटना, घोना, घनरुप, घनेश्वरी, घुण्यातीता, घर्घरा, घोराननविमोहिनी, घोरनेत्रा, घनरुचा, घोरभैरवकन्यका, घाताघातकहा, घात्या, घ्राणाघ्राणेशवायवी, घोरान्धकारसंस्था, घसना, घस्वरा, घरा, घोटकेस्था, घोटका, घोटकेश्वरवाहना, घननीलमणिश्यामा, घर्घरेश्वरकामिनी ( ३३ ) ॥ ३६-४० ॥

ङकारकूटसम्पन्ना ङकारचक्रगामिनी ।
ङकारी ङसंशा चैव [३] ङीपनीता ङकारिणी ॥ ४१ ॥

ङकारकूटसम्पन्ना, ङकारचक्रगामिनी, ङकारी, ङसंशा, ङीपनीता, ङकारिणी ( ६ ) ।

चन्द्रमण्डलमध्यस्था चतुरा चारुहासिनी ।
चारुचन्द्रमुखी [४] चैव चलङ्गमगतिप्रिया ॥ ४२ ॥
चञ्चला चपला चण्डी [५] चेकिताना चरुस्थिता ।
चलिता चानना चार्व्वो चारुभ्रमरनादिनी ॥ ४३ ॥
चौरहा चन्द्रनिलया चैन्द्री चन्द्रपुरस्थिता ।
चक्रकौला चक्ररूपा चक्रस्था चक्रसिद्धिदा ॥ ४४ ॥
चक्रिणी चक्रहस्ता च चक्रनाथकुलप्रिया ।
चक्रभेद्या चक्रकुला चक्रमण्डलशोभिता ॥ ४५ ॥
चक्रेश्वरप्रिया चेला चेलाजिनकुशोत्तरा ।
चतुर्वेदस्थिता चण्डा चन्द्रकोटिसुशीतला ॥ ४६ ॥
चतुर्गुणा चन्द्रवर्णा चातुरी चतुरप्रिया ।

---

१. घोटा घटपटी घटी—ग० ।
२. घोरान्धकारे संस्थानं यस्याः सा, संस्थाशब्दः संस्थानार्थकः सम्पदादित्वाद् भावक्विबन्तः
३. ङशशङापनिता ङकारिणी—क० ।
४. चारुचन्द्रा चन्द्रमुखी—क० ।
५. चान्द्री—क० ।

चक्षुःस्था चक्षुवसतिश्चणका चणकप्रिया ॥ ४७ ॥
चार्व्वङ्गी चन्द्रनिलया[१] चलदम्बुजलोचना ।
चर्व्वरीशा चारुमुखी चारुदन्ता चरस्थिता ॥ ४८ ॥
चसकस्थासवा चेता चेतःस्था चैत्रपूजिता ।
चाक्षुषी चन्द्रमलिनी चन्द्रहासमणिप्रभा ॥ ४९ ॥

चन्द्रमण्डलमध्यस्था, चतुरा, चारुहासिनी, चारुचन्द्रमुखी, चैव, चलङ्गमगतिप्रिया, चञ्चला, चपला, चण्डी, चेकिताना, चरुस्थिता, चलिता, चानना, चार्व्वी, चारुभ्रमरनादिनी, चौरहा, चन्द्रनिलया, चैन्द्री, चन्द्रपुरस्थिता, चक्रकौला, चक्ररूपा, चक्रस्था, चक्रसिद्धिदा, चक्रिणी, चक्र- हस्ता, चक्रनाथकुलप्रिया, चक्राभेद्या, चक्रकुला, चक्रमण्डलशोभिता, चक्रेश्वरप्रिया, चेला, चेलाजिनकुशोत्तरा, चतुर्वेदस्थिता, चण्डा, चन्द्रकोटिसुशीतला, चतुर्गुणा, चन्द्रवर्णा, चातुरी, चतुरप्रिया, चक्षुस्था, चक्षुवसति, चणका, चणकप्रिया, चार्व्वङ्गी, चन्द्रनिलया, चलदम्बुजलोचना, चर्व्वरीशा, चारुमुखी, चारुदन्ता, चरस्थिता, चसकस्थासवा, चेता, चेतस्था, चैत्रपूजिता, चाक्षुषी, चन्द्रमलिनी, चन्द्रहासमणिप्रभा ( ५६ ) ॥ ४२-४९ ॥

छलस्था छुद्ररूपा च छत्रच्छायाछलस्थिता ।
छलज्ञा छेश्वराछाया छाया छिन्नशिवा छला ॥ ५० ॥
छत्राचामरशोभाढ्या[२] छत्रिणां छत्रधारिणी ।
छिन्नातीता छिन्नमस्ता छिन्नकेशा छलोद्भवा ॥ ५१ ॥
छलहा छलदा छाया छन्ना छन्नजनप्रिया ।
छलछिन्ना[३] छद्मवती छद्मसद्मनिवासिनी ॥ ५२ ॥
छद्मगन्धा छदाछन्ना छद्मवेशी छकारिका ।
छगला रक्तभक्षा च छगलामोदरक्तपा ॥ ५३ ॥
छगलण्डेशकन्या च छगलण्डकुमारिका ।
छुरिका छुरिककरा छुरिकारिनिवाशिनी ॥ ५४ ॥
छिन्ननाशा छिन्नहस्ता छोणलोला छलोदरी ।
छलोद्वेगा छाङ्गबीजमाला छाङ्गवरप्रदा ॥ ५५ ॥

छलस्था, छुद्ररूपा, छत्रच्छाया, छलस्थिता, छलज्ञा, छेश्वराछाया, छाया, छिन्नशिवा, छला, छत्राचामरशोभाढ्या, छत्रिणां, छत्रधारिणी, छिन्नातीता, छिन्नमस्ता, छिन्नकेशा, छलोद्भवा, छलहा, छलदा, छाया, छन्ना, छन्नजनप्रिया, छल, छिन्ना, छद्मवती, छद्म-सद्मनिवासिनी, छद्मगन्धा, छदा, छन्ना, छद्मवेशी, छकारिका, छगला, रक्तभक्षा, छगलामोदरक्तपा, छगलण्डेशकन्या, छगलण्डकुमारिका, छुरिका, छुरिककरा, छुरिकारि-निवाशिनी, छिन्ननाशा, छिन्नहस्ता, छोणलोला, छलोदरी, छलोद्वेगा, छाङ्गबीजमाला, छाङ्गवरप्रदा ( ४२ ) ॥ ५०-५५ ॥

---

१. चारुनिलया । २. छत्रस्य आचामरस्य या शोभा तया आढ्या ।
३. छलाद्यक्ता छम्भवती छम्भसम्भनिवासिनी ख० ।

जटिला जठरश्रीदा जरा जज्ञप्रिया जया ।
जन्त्रस्था[1] जीवहा जीवा जयदा जीवयोगदा ॥ ५६ ॥
जयिनी जामलस्था च जामलोद्भवनायिका ।
जामलप्रियकन्या च जामलेशी जवाप्रिया ॥ ५७ ॥
जवाकोटिसमप्रख्या जवापुष्पप्रिया[2] जना ।
जलस्था जगविषया जरातीता जलस्थिता ॥ ५८ ॥
जीवहा जीवकन्या च जनार्द्दनकुमारिका ।
जतुका जलपूज्या च जगन्नाथादिकामिनी ॥ ५९ ॥
जीर्णाङ्गी जीर्णहीना च जीमूतात्त्यन्तशोभिता ।
जामदा[3] जमदा जृम्भा जृम्भणास्त्रादिधारिणी ॥ ६० ॥
जघन्या जारजा प्रीता जगदानन्दवर्द्धिनी ।
जमलार्जुनदर्पघ्नी जमलार्जुनभञ्जिनी ॥ ६१ ॥
जयित्रीजगदानन्दा जामलोल्लाससिद्धिदा ।
जपमाला जाप्यसिद्धिर्जपयज्ञप्रकाशिनी ॥ ६२ ॥
जाम्बुवती जाम्बवतः कन्यकाजनवाजपा ।
जवाहन्त्री जगद्बुद्धिर्ज्जगत्कर्तृ जगद्गतिः ॥ ६३ ॥
जननी जीवनी जाया जगन्माता जनेश्वरी ।

जटिला, जठरश्रीदा, जरा, जज्ञप्रिया, जया, जन्त्रस्था, जीवहा, जीवा, जयदा, जीवयोगदा, जयिनी, जामलस्था, जामलोद्भवनायिका, जामलप्रियकन्या, जामलेशी, जवाप्रिया, जवाकोटिसमप्रख्या, जवापुष्पप्रिया, जना, जलस्था, जगविषया, जरातीता, जलस्थिता, जीवहा, जीवकन्या, जनार्द्दनकुमारिका, जतुका, जलपूज्या, जगन्नाथादिकामिनी, जीर्णाङ्गी, जीर्णहीना, जीमूतात्त्यन्तशोभिता, जामदा, जमदा, जृम्भा, जृम्भणास्त्रादिधारिणी, जघन्या, जारजा, प्रीता, जगदानन्दवर्द्धिनी, जमलार्जुनदर्पघ्नी, जमलार्जुनभञ्जिनी, जयित्री, जगदानन्दा, जामलोल्लाससिद्धिदा, जपमाला, जाप्यसिद्धि, जपयज्ञप्रकाशिनी, जाम्बुवती, जाम्बवतकन्यका, जनवा, जपा, जवाहन्त्री, जगद्बुद्धि, जगत्कर्तृ, जगद्गति, जननी, जीवनी, जाया, जगन्माता, जनेश्वरी (५७) ॥ ५६-६४ ॥

झङ्कला झङ्कमध्यस्था झणत्कारस्वरूपिणी ॥ ६४ ॥
झणत्झणद्वह्निरूपा झननाझन्दरीश्वरी ।
झटिताक्षा झरा झञ्झा झर्झरा झरकन्यका ॥ ६५ ॥
झणत्कारी झना झन्ना झकारमालयावृता ।
झङ्करी झर्झरी झल्ली [4]झल्वेश्वरनिवासिनी ॥ ६६ ॥

---

१. जन्तुस्था जावजा जीवा क० । २. जवापुष्पं प्रियं यस्याः सा ।
३. जामातृ जयदा ज्येष्ठा जृम्भणास्त्रादिधारिणी—क० ।
४. झल्लरेश्वरममालिनी—क० ।

झङ्कला, झङ्कमध्यस्था, झणत्कारस्वरूपिणी, झणत्झणद्वह्निरूपा, झनना, झन्दरीश्वरी, झटिताक्षा, झरा, झञ्झा, झर्झरा, झरकन्यका, झणत्कारी, झना, झन्ना, झकारमालयावृता, झङ्करी, झर्झरी, झल्ली, झल्वेश्वरनिवासिनी ( १८ ) ॥ ६४-६६ ॥

**ञकारी ञकिराती च ञकारबीजमालिनी ।**
**ञनयोऽन्ता[1] ञकारान्ता ञकारपरमेश्वरी ॥ ६७ ॥**
**ञान्तबीजपुटाकारा ञेकले ञैकगामिनी ।**
**ञैकनेला ञस्वरूपा ञहारा ञहरीतकी ॥ ६८ ॥**

ञकारी, ञकिराती, ञकारबीजमालिनी, ञनयोऽन्ता, ञकारान्ता, ञकारपरमेश्वरी, ञान्तबीजपुटाकारा, ञेकले, ञैकगामिनी, ञैकनेला, ञस्वरूपा, ञहारा, ञहरीतकी ( १३ ) ।

**टुन्टुनी[2] टङ्कहस्ता च टान्तवर्गा टलावती ।**
**टपला टापबालाख्या टङ्कारध्वनिरूपिणी[3] ॥ ६९ ॥**
**टलाती[4] टाक्षरातीता टित्कारादिकुमारिका ।**
**टङ्कास्त्रधारिणी[5] टाना टमोटार्णलभाषिणी ॥ ७० ॥**
**टङ्कारी[6] विधना टाका टकाटकविमोहिनी ।**
**टङ्कारधरनामाहा टिवीखेचरनादिनी ॥ ७१ ॥**

टुन्टुनी, टङ्कहस्ता, टान्तवर्गा, टलावती, टपला, टापबालाख्या, टङ्कारध्वनिरूपिणी, टलाती, टाक्षरातीता, टित्कारादिकुमारिका, टङ्कास्त्रधारिणी, टाना, टमोटार्णलभाषिणी, टङ्कारी, विधना, टाका, टकाटकविमोहिनी, टङ्कारधरनामाहा, टिवीखेचरनादिनी ( १९ ) ॥ ६९-७१ ॥

**ठठङ्कारी[7] ठाठरूपा ठकारबीजकारणा ।**

ठठङ्कारी, ठाठरूपा, ठकारबीजकारणा ( ३ ) ॥ ७२ ॥

**डमरूप्रियवाद्या च डामरस्था डबीजिका ॥ ७२ ॥**
**डान्तवर्गा डमरुका डरस्था डोरडामरा ।**
**डगरार्द्धा[8] डलातीता डदारुकेश्वरी डुता ॥ ७३ ॥**

डमरूप्रियवाद्या, डामरस्था, डबीजिका, डान्तवर्गा, डमरुका, डरस्था, डोरडामरा,

---

१. ञनमोऽन्ता ञान्तकान्ता ञपरेश्वरी—क० ।
२. टन्टुनी टङ्कहस्ता च टाङ्कवर्गा टनावती—क० ।
३. टङ्कारश्चासौ ध्वनिश्चेति टङ्कारध्वनिस्तस्य रूपभस्ति यस्यामिति मत्वर्थीय—इनिप्रत्ययः ।
४. टनती—क० ।
५. टङ्कास्त्रधारिणी टाभा टाभनवासिनी—क० ।
६. टङ्कारनिधना टाका टङ्कारणविमोहिनी ।
टङ्कारध्वनिमोहा च टिटि—खेचरनादिनी ॥ क० ।
७. ठङ्कारी ठातुरूपा च ठकारबीजकारणा—क० ।
८. डवर्गता डलातीता डकारकेश्वरी डुता—क० ।

डगरार्द्धा, डलातीता, डदारुकेश्वरी, डुता ( ११ ) ॥ ७२-७३ ॥

**ढार्द्धनारीश्वरा ढामा ढक्कारी ढलना ढला ।**
**ढकेस्था[1] ढेश्वरसुता ढेमनाभावढोनना ॥ ७४ ॥**

ढार्द्धनारीश्वरा, ढामा, ढक्कारी, ढलना, ढला, ढकेस्था, ढेश्वरसुता, ढेमनाभाव, ढोनना ( ९ ) ॥ ७४ ॥

**णोमाकान्तेश्वरी णान्तवर्गस्था णतुनावती ।**
**णनो माणाङ्ककल्याणी णाक्षवीणाक्षबीजिका ॥ ७५ ॥**

णोमाकान्तेश्वरी, णान्तवर्गस्था, णतुनावती, णनोमा, णाङ्ककल्याणी, णाक्षवीणाक्षबीजिका ( ६ ) ॥ ७५ ॥

**तुलसीतन्तुसूक्ष्माख्या तारल्या तैलगन्धिका ।**
**तपस्या तापससुता[2] तारिणी तरुणी तला ॥ ७६ ॥**
**तन्त्रस्था तारकब्रह्मस्वरूपा तन्तुमध्यगा ।**
**तालभक्षत्रिधामूर्त्तिस्तारका तैलभक्षिका ॥ ७७ ॥**
**तारोग्रा तालमाला च तकरा तिन्तिडीप्रिया ।**
**तपसः तालसन्दर्भा तर्जयन्ती कुमारिका ॥ ७८ ॥**
**तोकाचारा[3] तलोद्वेगा तक्षका तक्षकप्रिया ।**
**तक्षकालङ्कृता तोषा तावद्रूपा तलप्रिया ॥ ७९ ॥**
**तलास्त्रधारिणी तापा तपसां फलदायिनी ।**
**तल्वल्वप्रहरालीता[4] तलारिगणनाशिनी ॥ ८० ॥**
**तूला तौली तोलका च तलस्था[5] तलपालिका ।**
**तरुणा[6] तप्तबुद्धिस्थास्तप्ता प्रधारिणी तपा ॥ ८१ ॥**
**तन्त्रप्रकाशकरणी तन्त्रार्थदायिनी तथा[7] ।**
**तुषारकिरणाङ्गी च चतुर्धा[8] वा समप्रभा ॥ ८२ ॥**
**तैलमार्गाभिसूता[9] च तन्त्रसिद्धिफलप्रदा ।**
**ताम्रपर्णा ताम्रकेशा[10] ताम्रपात्रप्रियातमा ॥ ८३ ॥**
**तमोगुणप्रिया तोला तक्षकारिनिवारिणी[11] ।**

---

१. ढाकस्था ढेश्वरयुता ढेमला भाढ़ढोलना—क० । २. तापसंस्थाता—क० ।
३. तोकमपत्यं बालकः, तस्य आचार इवाचारो यस्याः सा।
४. तलप्रहारनिरता—क० । ५. तलस्थजलपालिका—क० ।
६. तरुणास्त्री तप्तबुद्धिस्तप्तोग्रधारिणी तथा—क० । ७. तुषा—क० ।
८. तुषारांशु समप्रभा—क० । ९. तालामार्गाभिभूता च—क० ।
१०. ताम्रवर्णप्रिया मता—क० । ११. तक्षवारिनिवारिणी—क० ।

तोषयुक्ता तमायाची[1] तमषोढेश्वरप्रिया ॥ ८४ ॥
तुलना तुल्यरुचिरा[2] तुल्यबुद्धिस्त्रिधा मतिः ।
तक्रभक्षा तालसिद्धिः तत्रस्थास्तत्र गामिनी ॥ ८५ ॥
तलया तैलभा[3] ताली तन्त्रगोपनतत्परा ।
तन्त्रमन्त्रप्रकाशा च त्रिशरेणुस्वरूपिणी ॥ ८६ ॥
त्रिंशदर्थप्रिया तुष्टा तुष्टिस्तुष्टजनप्रिया ।

तुलसी, तन्तुसूक्ष्माख्या, तारल्या, तैलगन्धिका, तपस्या, तापससुता, तारिणी, तरुणी, तला, तन्त्रस्था, तारकब्रह्मस्वरूपा, तन्तुमध्यगा, तालभक्ष, त्रिधामूर्त्ति, तारका, तैलभक्षिका, तारोग्रा, तालमाला, तकरा, तिन्तिडीप्रिया, तपस, तालसन्दर्भा, तर्जयन्ती, कुमारिका, तोकाचारा, तलोद्वेगा, तक्षका, तक्षकप्रिया, तक्षकालङ्कृता, तोषा, तावद्रूपा, तलप्रिया, तलास्त्रधारिणी, तापा, तपसां, फलदायिनी, तल्वल्वप्रहरालीता, तलारिगणनाशिनी, तूला, तौली, तोलका, तलस्था, तलपालिका, तरुणा, तप्तबुद्धिस्था, तप्ता, प्रधारिणी, तपा, तन्त्रप्रकाशकरणी, तन्त्रार्थदायिनी, तुषारकिरणाङ्गी, चतुर्धा, समप्रभा, तैलमार्गाभिसूता, तन्त्रसिद्धिफलप्रदा, ताम्रपर्णा, ताम्रकेशा, ताम्रपात्रप्रियातमा, तमोगुणप्रिया, तोला, तक्षकारिनिवारिणी, तोषयुक्ता, तमायाची, तमषोढेश्वरप्रिया, तुलना, तुल्यरुचिरा, तुल्यबुद्धिस्त्रिधा, मति, तक्रभक्षा, तालसिद्धि, तत्रस्था, तत्रगामिनी, तलया, तैलभा, ताली, तन्त्रगोपनतत्परा, तन्त्रमन्त्रप्रकाशा, त्रिशरेणुस्वरूपिणी, त्रिंशदर्थप्रिया, तुष्टा, तुष्टि, तुष्टजनप्रिया ( ८२ ) ॥ ७६-८७ ॥

थकारकूटदण्डीशा[4] थदण्डीशप्रियाऽथवा ॥ ८७ ॥
थकाराक्षररूढाङ्गी थान्तवर्गाथ कारिका ।
थान्ता थमीश्वरी थाका थकारबीजमालिनी ॥ ८८ ॥

थकारकूटदण्डीशा, थदण्डीशप्रियाऽथवा, थकाराक्षररूढाङ्गी, थान्तवर्गा, थकारिका, थान्ता, थमीश्वरी, थाका, थकारबीजमालिनी ( ९ ) ॥ ८७-८८ ॥

दक्षदामप्रिया[5] दोषा दोषजालवनाश्रिता ।
दशा दशनघोरा च देवीदासप्रिया दया ॥ ८९ ॥
दैत्यहन्त्रीपरा दैत्या दैत्यानां मर्द्दिनी दिशा ।
दान्ता दान्तप्रिया दासा दामना दीर्घकेशिका ॥ ९० ॥
दशना रक्तवर्णा च दरीग्रहनिवासिनी ।
देवमाता च दुर्लभा च दीर्घाङ्गा दासकन्यका ॥ ९१ ॥
दशनश्री दीर्घनेत्रा दीर्घनासा च दोषहा ।
दमयन्ती दलस्था च द्वेष्यहन्त्री दशस्थिता ॥ ९२ ॥

---

१. तमाषढ़ी तमोषाढेश्वरप्रिया—क० । २. तुलना तुल्यरूपा च—क० ।
३. तुलया तैलता तारी तन्त्रगोपालतत्परा—क० ।
४. थकारकूटदन्तीशथदन्तीशप्रियाऽथवा—क० ।
५. दयादामप्रिया दोषा दोषजालर्वनावृता—क० ।

**दैशेषिका दिशिगता दशनास्त्रविनाशिनी ।**
**दारिद्र्यहा दरिद्रस्था दरिद्रधनदायिनी ॥ ९३ ॥**
**दन्तुरा देशभाषा च देशस्था देशनायिका ।**
**द्वेषरूपा द्वेषहन्त्री द्वेषारिगणमोहिनी ॥ ९४ ॥**
**दामोदरस्थाननादा[1] दलानां बलदायिनी ।**
**दिग्दर्शना[2] दर्शनस्था दर्शनप्रियवादिनी ॥ ९५ ॥**
**दामोदरप्रिया दान्ता दामोदरकलेवरा ।**
**द्राविणी द्रविणी[3] दक्षा दक्षकन्या दलदृढा ॥ ९६ ॥**
**दृढासनादासशक्तिर्द्वन्द्वयुद्धप्रकाशिनी[4] ।**
**दधिप्रिया दधिस्था च दधिमङ्गलकारिणी ॥ ९७ ॥**
**दर्पहा दर्पदा दृप्ता दर्भपुण्यप्रिया दधिः ।**
**दर्भस्था द्रुपदसुता द्रौपदी द्रुपदप्रिया ॥ ९८ ॥**

दक्षदामप्रिया, दोषा, दोषजालवनाश्रिता, दशा, दशनघोरा, देवीदासप्रिया, दया, दैत्यहन्त्रीपरा, दैत्या, दैत्यानां मर्द्दिनी, दिशा, दान्ता, दान्तप्रिया, दासा, दामना, दीर्घकेशिका, दशना, रक्तवर्णा, दरीग्रहनिवासिनी, देवमाता, दुर्लभा, दीर्घाङ्गा, दासकन्यका, दशनश्री, दीर्घनेत्रा, दीर्घनासा, दोषहा, दमयन्ती, दलस्था, द्वेष्यहन्त्री, दशस्थिता, दैशेषिका, दिशिगता, दशनास्त्रविनाशिनी, दारिद्र्याहा, दरिद्रस्था, दरिद्रधनदायिनी, दन्तुरा, देशभाषा, देशस्था, देशनायिका, द्वेषरूपा, द्वेषहन्त्री, द्वेषारिगणमोहिनी, दामोदरस्थाननादा, दलानां बलदायिनी, दिग्दर्शना, दर्शनस्था, दर्शनप्रियवादिनी, दामोदरप्रिया, दान्ता, दामोदरकलेवरा, द्राविणी, द्रविणी, दक्षा, दक्षकन्या, दलदृढा, दृढासना, दासशक्ति, द्वन्द्वयुद्धप्रकाशिनी, दधिप्रिया, दधिस्था, दधिमङ्गलकारिणी, दर्पहा, दर्पदा, दृप्ता, दर्भपुण्यप्रिया, दधि, दर्भस्था, द्रुपदसुता, द्रौपदी, द्रुपदप्रिया ( ७२ ) ॥ ८९-९८ ॥

**धर्मचिन्ता धनाध्यक्षा धश्वेश्वरवरप्रदा ।**
**धनहा धनदा धन्वी धनुर्हस्ता धनुःप्रिया ॥ ९९ ॥**
**धरणी धैर्यरूपा च धनस्था धनमोहिनी ।**
**धोरा धीरप्रियाधारा[5] धराधारणतत्परा ॥ १०० ॥**
**धान्यदा धान्यबीजा च धर्माधर्मस्वरूपिणी ।**
**धाराधरस्था धन्या च धर्मपुञ्जनिवासिनी ॥ १०१ ॥**
**धनाढ्यप्रियकन्या च धन्यलोकैश्च[6] सेविता ।**

---

१. दामोदरस्था दलना दलानां बलदायिनी—क० ।
२. दिग्दर्शनस्थानदर्शदर्शनप्रियवादिनी—ग० ।
३. द्राविणीति दक्षा दक्षकन्या दलादृढ़ा—ख० ग० । ४. दुग्धवृद्धिप्रकाशिनी—क० ।
५. धीराः प्रिया येषामथवा धीराणां प्रियाः, ते आधारो यस्याः सा ।
६. धन्यलोकनिशेविता—क० ।

धर्मार्थकाममोक्षाङ्गी धर्मार्थकाममोक्षदा ॥ १०२ ॥
धराधरा धुरोणा च धवला धवलामुखी ।
धरा च धामरूपा च ध्रुवा ध्रौव्या ध्रुवप्रिया ॥ १०३ ॥
धनेशी धारणाख्या च धर्मनिन्दाविनाशिनी ।
धर्मतेजोमयी धर्म्म्या धैर्याग्रभर्गमोहिनी ॥ १०४ ॥
धारणा धौतवसना धत्तूरफलभोगिनी ।

धर्मचिन्ता, धनाध्यक्षा, धश्वेश्वरवरप्रदा, धनहा, धनदा, धन्वी, धनुर्हस्ता, धनुप्रिया, धरणी, धैर्यरूपा, धनस्था, धनमोहिनी, धोरा, धीरप्रियाधारा, धराधारणतत्परा, धान्यदा, धान्यबीजा, धर्माधर्मस्वरूपिणी, धारा, धरस्था, धन्या, धर्मपुञ्जनिवासिनी, धनाढ्याप्रियकन्या, धन्यलोकैश्चसेविता, धर्मार्थकाममोक्षाङ्गी, धर्मार्थकाममोक्षदा, धराधरा, धुरोणा, धवला, धवलामुखी, धरा, धामरूपा, ध्रुवा, ध्रौव्या, ध्रुवप्रिया, धनेशी, धारणाख्या, धर्मनिन्दाविनाशिनी, धर्मतेजोमयी, धर्म्म्या, धैर्याग्रभर्गमोहिनी, धारणा, धौतवसना, धत्तूरफलभोगिनी ( ४४ ) ॥ ९९-१०५ ॥

नारायणी नरेन्द्रस्था नारायणकलेवरा ॥ १०५ ॥
नरनारायणप्रीता धर्मनिन्दा[१] नमोहिता ।
नित्या नापितकन्या च नयनस्था नरप्रिया ॥ १०६ ॥
नाम्नी नामप्रिया नारा नारायणसुता नरा ।
नवीननायकप्रीता नव्या नवफलप्रिया ॥ १०७ ॥
नवीनकुसुमप्रीता नवीनानां ध्वजानुता[२] ।
नारी निम्बस्थितानन्दानन्दिनी नन्दकारिका[३] ॥ १०८ ॥
नवपुष्पमहाप्रीता नवपुष्पसुगन्धिका ।
नन्दनस्था नन्दकन्या नन्दमोक्षप्रदायिनी ॥ १०९ ॥
नमिता नामभेदा च नाम्नार्त्तवनमोहिनी[४] ।
नवबुद्धिप्रियानेका[५] नाकस्था नामकन्यका ॥ ११० ॥
निन्दाहीना नवोल्लासा नाकस्थानप्रदायिनी ।
निम्बवृक्षस्थिता[६] निम्बा नानावृक्षनिवासिनी ॥ १११ ॥
नाश्यातीता नीलवर्णा [७]नीलवर्णा सरस्वती ।
नभःस्था नायकप्रीता नायकप्रियकामिनी ॥ ११२ ॥
नैववर्णा निराहारा [८]निवीहाणां रजःप्रिया ।
निम्ननाभिप्रियाकारा[९] नरेन्द्रहस्तपूजिता ॥ ११३ ॥

---

१. नीता नयनमोहिता—क० । २. नवीना नीरजानुजा—क० ।
३. नन्दकन्यका—क० । ४. नाम्नातुरमोहिनी—क० ।
५. नवबुद्धिप्रिया नैकान्तकस्थानाककन्यका—क० ।
६. निम्बचक्षुःस्थिता निम्बा नानचेक्षनिवासिनी—ख ।
७. नीलानीलसरस्वती—क० । ८. निरोहा निरजप्रिया—क० ।
९. प्रभाकारा—ख० ।

**नलस्थिता नलप्रीता नलराजकुमारिका ।**

नारायणी, नरेन्द्रस्था, नारायणकलेवरा, नरनारायणप्रीता, धर्मनिन्दा, नमोहिता, नित्या, नापितकन्या, नयनस्था, नरप्रिया, नाम्नी, नामप्रिया, नारा, नारायणसुता, नरा, नवीननायकप्रीता, नव्या, नवफलप्रिया, नवीनकुसुमप्रीता, नवीनानां ध्वजानुता, नारी, निम्बस्थितानन्दानन्दिनी, नन्दकारिका, नवपुष्पमहाप्रीता, नवपुष्पसुगन्धिका, नन्दनस्था, नन्दकन्या, नन्दमोक्षप्रदायिनी, नमिता, नामभेदा, नाम्नार्त्तवनमोहिनी, नवबुद्धिप्रियानेका, नाकस्था, नामकन्यका, निन्दाहीना, नवोल्लासा, नाकस्थानप्रदायिनी, निम्बवृक्षस्थिता, निम्बा, नानावृक्षनिवासिनी, नाश्यातीता, नीलवर्णा, नीलवर्णा सरस्वती, नभस्था, नायकप्रीता, नायकप्रियकामिनी, नैववर्णा, निराहारा, निवीहाणां, रजप्रिया, निम्ननाभिप्रियाकारा, नरेन्द्रहस्तपूजिता, नलस्थिता, नलप्रीता, नलराजकुमारिका ( ५६ ) ॥ १०५-११४ ॥

**परेश्वरी परानन्दा परापरविभेदिका ॥ ११४ ॥**
**परमा परचक्रस्था पार्वती पर्वतप्रिया [1] ।**
**पारमेशी [2] पर्वनाना पुष्पमाल्यप्रिया परा ॥ ११५ ॥**
**परा प्रिया प्रीतिदात्री प्रीति: प्रथमकामिनी [3] ।**
**प्रथमा प्रथमा प्रीता पुष्पगन्धप्रिया परा ॥ ११६ ॥**
**पौष्पी पानरता पीना पीनस्तनसुशोभना ।**
**परमानरता [4] पुंसां पाशहस्ता पशुप्रिया ॥ ११७ ॥**
**पललानन्दरसिका पलालधूमरूपिणी ।**
**पलाशपुष्पसङ्काशा पलाशपुष्पमालिनी ॥ ११८ ॥**
**प्रेमभूता पद्ममुखी पद्मरागसुमालिनी ।**
**पद्ममाला पापहरा पतिप्रेमविलासिनी ॥ ११९ ॥**
**पञ्चाननमनोहारी [5] पञ्चवक्त्रप्रकाशिनी ।**

परेश्वरी, परानन्दा, परापरविभेदिका, परमा, परचक्रस्था, पार्वती, पर्वतप्रिया, पारमेशी, पर्वनाना, पुष्पमाल्यप्रिया, परापरा, प्रिया, प्रीतिदात्री, प्रीति, प्रथमकामिनी, प्रथमा, प्रथमा, प्रीता, पुष्पगन्धप्रिया, परा, पौष्पी, पानरता, पीना, पीनस्तनसुशोभना, परमानरता, पुंसां पाशहस्ता, पशुप्रिया, पललानन्दरसिका, पलालधूमरूपिणी, पलाशपुष्पसङ्काशा, पलाशपुष्पमालिनी, प्रेमभुता, पद्ममुखी, पद्मरागसुमालिनी, पद्ममाला, पापहरा, पतिप्रेमविलासिनी, पञ्चाननमनोहारी, पञ्चवक्त्रप्रकाशिनी ( ३९ ) ॥ ११४-१२० ॥

**फलमूलाशना फाली फलदा फाल्गुनप्रिया ॥ १२० ॥**
**फलनाथप्रिया फल्ली फल्गुकन्या फलोन्मुखी ।**
**फेत्कारीतन्त्रमुख्या च फेत्कारगणपूजिता ॥ १२१ ॥**

---

१. पर्वत: कैलासपर्वत: प्रियो यस्या: सा । २. परमेशी पर्वमाला—क० ।
३. प्रथमकारिणी—क० ।
४. पय: पानरता पुष्टा पाशवस्था पशुप्रिया—क० । ५. पञ्चानपराभारि—क० ।

फेरवी फेरवसुता फलभोगोद्भवा फला ।
फलप्रिया फलाशक्ता फाल्गुनानन्ददायिनी ॥ १२२ ॥
फालभोगोत्तरा[१] फेला फुलाम्भोजनिवासिनी ।

फलमूलाशना, फाली, फलदा, फाल्गुनप्रिया, फलनाथप्रिया, फल्ली, फल्गुकन्या, फलोन्मुखी, फेत्कारीतन्त्रमुख्या, फेत्कारगणपूजिता, फेरवी, फेरवसुता, फलभोगोद्भवा, फला, फलप्रिया, फलाशक्ता, फाल्गुनानन्ददायिनी, फालभोगोत्तरा, फेला, फुलाम्भोजनिवासिनी ( २० ) ॥ १२०-१२३ ॥

वसुदेवगृहस्था च वासवी वीरपूजिता ॥ १२३ ॥
विषभक्षा बुधसुता ब्लुङ्कारी ब्लूवरप्रदा ।
ब्राह्मी[२] बृहस्पतिसुता वाचस्पतिवरप्रदा ॥ १२४ ॥
वेदाचारा[३] वेद्यपरा व्यासवक्त्रस्थिता विभा ।
बोधज्ञा वौषडाख्या च वंशीवंदनपूजिता ॥ १२५ ॥
वज्रकान्ता[४] वज्रगतिर्बदरीवंशविवर्द्धिनी ।

वसुदेवगृहस्था, वासवी, वीरपूजिता, विषभक्षा, बुधसुता, ब्लुङ्कारी, ब्लूवरप्रदा, ब्राह्मी, बृहस्पतिसुता, वाचस्पतिवरप्रदा, वेदाचारा, वेद्यपरा, व्यासवक्त्रस्थिता, विभा, बोधज्ञा, वौषडाख्या, वंशीवंदनपूजिता, वज्रकान्ता, वज्रगति, बदरी, वंशविवर्द्धिनी ( २१ ) ॥ १२३-१२६ ॥

भारती[५] भवरश्रीदा भवपत्नी भवात्मजा ॥ १२६ ॥
भवानी भाविनी भीमा भिषग्भार्या तुरिस्थिता[६] ।
भूर्भुवःस्वःस्वरूपा च भृशार्त्ता[७] भेकनादिनी ॥ १२७ ॥
भौती भङ्गप्रिया[८] भङ्गभङ्गहा भङ्गहारिणी ।
भर्ता भगवती भाग्या भगीरथनमस्कृता ॥ १२८ ॥
भगमाला भूतनाथेश्वरी भार्गवपूजिता ।
भृगुवंशा भीतिहरा भूमिर्भुजगहारिणी ॥ १२९ ॥
भालचन्द्राभभल्वबाला भवभूतिर्विभूतिदा ।

भारती, भवरश्रीदा, भवपत्नी, भवात्मजा, भवानी, भाविनी, भीमा, भिषग्भार्या, तुरिस्थिता, भूर्भुवस्वस्वरूपा, भृशार्त्ता, भेकनादिनी, भौती, भङ्गप्रिया, भङ्गभङ्गहा, भङ्गहारिणी, भर्ता, भगवती, भाग्या, भगीरथनमस्कृता, भगमाला, भूतनाथेश्वरी, भार्गवपूजिता, भृगुवंशा, भीतिहरा, भूमिर्भुजगहारिणी, भालचन्द्राभ, भल्वबाला, भवभूति, विभूतिदा ( ३० ) ॥ १२६-१३० ॥

---

१. फलि भोगातुर फेला फुल्लाम्भोजविलासिनी—क० ।
२. वृही वृहस्पतिवाचा—ख० । ३. वेदाचारी वेषपरा वासवक्त्रस्थिता विना—ख० ।
४. वज्रकान्ता वक्रगति—ख० । ५. भारती भारतश्रीदा भवपत्नी भवाम्बुजा—क० ।
६. भुवि स्थिता—क० । ७. भूशार्ता—ग० ।
८. भैमी भोगवती भौती भङ्गदा भङ्गहारिण—क० ।

मकरस्था मत्तगतिर्मदमत्ता मदप्रिया ॥ १३० ॥
मदिराष्टादशभुजा मदिरा मत्तगामिनी ।
मदिरासिद्धिदा मध्या मदान्तर्गतिसिद्धिदा ॥ १३१ ॥
मीनभक्षा मीनरूपा मुद्रामुद्गप्रिया गतिः ।
मुषला मुक्तिदा मूर्त्ता मूकीकरणतत्परा ॥ १३२ ॥
मृषार्त्ता मृगतृष्णा[1] च मेषभक्षणतत्परा ।
मैथुनानन्दसिद्धिश्च [2] मैथुनानलसिद्धिदा ॥ १३३ ॥
महालक्ष्मीर्भैरवी च महेन्द्रपीठनायिका[3] ।
मनःस्था[4] माधवीमुख्या महादेवमनोरमा ॥ १३४ ॥

मकरस्था, मत्तगति, मदमत्ता, मदप्रिया, मदिराष्टादशभुजा, मदिरा, मत्तगामिनी, मदिरासिद्धिदा, मध्या, मदान्तर्गतिसिद्धिदा, मीनभक्षा, मीनरूपा, मुद्रा, मुद्गप्रियागति, मुषला, मुक्तिदा, मूर्त्ता, मूकीकरणतत्परा, मृषार्त्ता, मृगतृष्णा, मेषभक्षणतत्परा, मैथुनानन्दसिद्धि, मैथुनानलसिद्धिदा, महालक्ष्मीभैरवी, महेन्द्रपीठनायिका, मनस्था, माधवीमुख्या, महादेवमनोरमा ( २८ ) ॥ १३०-१३४ ॥

यशोदा[5] याचना यास्या यमराजप्रिया यमा ।
यशोराशिविभूषाङ्गी[6] यतिप्रेमकलावती ॥ १३५ ॥

यशोदा, याचना, यास्या, यमराजप्रिया, यमा, यशोराशिविभूषाङ्गी, यतिप्रेमकलावती ( ७ ) ।

रमणी रामपत्नी च रिपुहा रीतिमध्यगा ।
रुद्राणी रूपदा रूपा रूपसुन्दरधारिणी ॥ १३६ ॥
रेतःस्था रेतसः प्रीता रेतःस्थाननिवासिनी ।
रेन्द्रादेवसुतारेदा[7] रिपुवर्गान्तकप्रिया ॥ १३७ ॥
रोमावलीन्द्रजननी रोमकूपजगत्पतिः[8] ।
रौप्यवर्णा रौद्रवर्णा रौप्यालङ्कारभूषणा ॥ १३८ ॥
रङ्गिणा रङ्गरागस्था[9] रणवह्निकुलेश्वरी ।

रमणी, रामपत्नी, रिपुहा, रीतिमध्यगा, रुद्राणी, रूपदा, रूपा, रूपसुन्दरधारिणी, रेतस्था, रेतसप्रीता, रेतस्थाननिवासिनी, रेन्द्रादेवसुतारेदा, रिपुवर्गान्तकप्रिया, रोमावलीन्द्रजननी, रोमकूपजगत्पति, रौप्यवर्णा, रौद्रवर्णा, रौप्यालङ्कारभूषणा, रङ्गिणा, रङ्गरागस्था, रणवह्निकुलेश्वरी ( २१ ) ॥ १३६-१३९ ॥

---

१. मृगदृष्टा च—क० ।
२. मैथुनाह्लादिसिद्धिदा—क० ।
३. पीठपूजिका—क० ।
४. भल्लस्था—क० ।
५. यशोदा याचनी याभ्या—क० ।
६. यशोरशिरेव विशिष्टा भूषा विशिष्टा अलङ्काराः, ते अङ्केषु यस्याः सा ।
७. रैन्द्रदेवसुतारैन्द्र्या—क० ।
८. रोमकूपजर्नाहती—क० ।
९. रङ्गिणी रङ्गरागस्था राजराज्ञि कुलेश्वरी—क० ।

**लक्ष्मीः लाङ्गलहस्ता च लाङ्गली कुलकामिनी ॥ १३९ ॥**
**लिपिरूपा लीढपादा लतातन्तुस्वरूपिणी ।**
**लिम्पती[1] लेलिहा लोला लोमशप्रियसिद्धिदा ॥ १४० ॥**
**लौकिकी लौकिकीसिद्धिर्लङ्कानाथकुमारिका ।**
**लक्ष्मणा लक्ष्मीहीना[2] च लप्रिया लार्णमध्यगा ॥ १४१ ॥**

लक्ष्मी, लाङ्गलहस्ता, लाङ्गली कुलकामिनी, लिपिरूपा, लीढपादा, लतातन्तुस्वरूपिणी, लिम्पती, लेलिहा, लोला, लोमशप्रियसिद्धिदा, लौकिकी, लौकिकीसिद्धि, लङ्कानाथकुमारिका, लक्ष्मणा, लक्ष्मीहीना, लप्रिया, लार्णमध्यगा ( १७ ) ॥ १३९-१४१ ॥

**विवसा वसनावेशा विवस्यकुलकन्यका ।**
**वातस्था वातरूपा च वेलमध्यनिवासिनी ॥ १४२ ॥**

विवसा, वसनावेशा, विवस्यकुलकन्यका, वातस्था, वातरूपा, वेलमध्यनिवासिनी ( ६ )।

**श्मशानभूमिमध्यस्था[3] श्मशानसाधनप्रिया ।**
**शवस्था परसिद्ध्यर्थी शववक्षसि शोभिता ॥ १४३ ॥**
**शरणागतपाल्या च शिवकन्या शिवप्रिया ।**
**षट्चक्रभेदिनी षोढा न्यासजालदृढानना ॥ १४४ ॥**
**सन्ध्यासरस्वती सुन्द्या[4] सूर्यगा शारदा सती ।**
**हरिप्रिया हरहालालावण्यस्था क्षमा क्षुधा ॥ १४५ ॥**
**क्षेत्रज्ञा सिद्धिदात्री च अम्बिका चापराजिता ।**

श्मशानभूमिमध्यस्था, श्मशानसाधनप्रिया, शवस्था परसिद्ध्यार्थी, शववक्षसि, शोभिता, शरणागतपाल्या, शिवकन्या, शिवप्रिया, षट्चक्रभेदिनी, षोढान्यासजालदृढानना, सन्ध्या-सरस्वती, सुन्द्या, सूर्यगा, शारदा, सती, हरिप्रिया, हरहालालावण्यस्था, क्षमा, क्षुधा, क्षेत्रज्ञा, सिद्धिदात्री, अम्बिका, अपराजिता ( २३ ) ॥ १४३-१४६ ॥

**आद्या इन्द्रप्रिया ईशा उमा ऊढा ऋतुप्रिया ॥ १४६ ॥**
**सुतुण्डा स्वरबीजान्ता हरिवेशादिसिद्धिदा ।**
**एकादशीव्रतस्था च ऐन्द्री ओषधिसिद्धिदा ॥ १४७ ॥**
**औपकारी अंशरूपा अस्त्रबीजप्रकाशिनी ।**

आद्या, इन्द्रप्रिया, ईशा, उमा, ऊढा, ऋतुप्रिया, सुतुण्डा, स्वरबीजान्ता, हरिवेशादि-सिद्धिदा, एकादशीव्रतस्था, ऐन्द्री, ओषधिसिद्धिदा, औपकारी, अंशरूपा, अस्त्रबीजप्रकाशिनी ( १५ ) ॥ १४६-१४८ ॥

---

१. लयन्ति—क० । २. लक्ष्महीना वा—क० ।
३. श्मशानभूमिमध्ये तिष्ठतीति, श्मशानभूमिमध्यस्था । शवानां शयनं यत्र तत् श्मशानम् । शवशब्दस्य श्मादेशः, शयनशब्दस्य शानादेशः, पृषोदरादिः ।
४. सूक्ष्मा—क० ।

इत्येतत् कामुकीनाथ[1] कुमारीणां सुमङ्गलम् ॥ १४८ ॥

हे कामुकीनाथ ! इस प्रकार कुमारी के कल्याण करने वाले, अष्टोत्तर सहस्रनाम का आख्यान मैंने किया ॥ १४८ ॥

त्रैलोक्यफलदं नित्यमष्टोत्तरसहस्रकम् ।
महास्तोत्रं धर्मसारं धनधान्यसुतप्रदम् ॥ १४९ ॥
सर्वविद्याफलोल्लासं भक्तिमान् यः पठेत् सुधीः ।
स सर्वदा दिवारात्रौ स भवेन्मुक्तिमार्गगः ॥ १५० ॥

**कुमारीसहस्रनाम की फलश्रुति**—यह महास्तोत्र, समस्त धर्मों का सार है । यह त्रिलोकी की प्राप्ति का फल प्रदान करने वाला तथा धन धान्य एवं पुत्र देने वाला है । जो विद्वान् भक्त भक्तिपूर्वक इसका पाठ करता है, उसे समस्त विद्या का फल उल्लसित होता है वह सर्वदा एवं दिन और रात मुक्ति मार्ग का गामी बना रहता है ॥ १४९-१५० ॥

सर्वत्र जयमाप्नोति वीराणां वल्लभो लभेत् ।
सर्वे देवा वशं यान्ति वशीभूताश्च मानवाः ॥ १५१ ॥
ब्रह्माण्डे ये च शंसन्ति ते तुष्टा नात्र संशयः ।
ये वशन्ति च भूर्लोके देवतुल्यपराक्रमाः ॥ १५२ ॥
ते सर्वे भृत्यतुल्याश्च सत्यं सत्यं कुलेश्वर ।
अकस्मात् सिद्धिमाप्नोति होमेन यजनेन च ॥ १५३ ॥

वह सर्वत्र विजय प्राप्त करता है, वीर मार्गगामियों का प्रिय पात्र होता है । किं बहुना, सभी देवता उसके वश में हो जाते हैं और समस्त मानव तो उसके वश में रहते ही हैं । ब्रह्माण्ड में रहने वाले सभी उससे संतुष्ट रहते हैं, इसमें संशय नहीं । किं बहुना, इस भूलोक में जो देवता के तुल्य पराक्रम वाले हैं, वे सभी उसके भृत्य के समान हो जाते हैं । हे कुलेश्वर ! यह सत्य है यह सत्य है । कुमारी के होम से यज्ञ करने से साधक को अनायास सिद्धि प्राप्त हो जाती है ॥ १५१-१५३ ॥

जाप्येन कवचाद्येन महास्तोत्रार्थपाठतः ।
विना यज्ञैर्विना दानैर्विना जाप्यैर्लभेत् फलम् ॥ १५४ ॥
यः पठेत् स्तोत्रकं नाम[2] चाष्टोत्तरसहस्रकम् ।
तस्य शान्तिर्भवेत् क्षिप्रं कन्यास्तोत्रं पठेत्ततः ॥ १५५ ॥

कुमारी मन्त्र के जप से और कुमारी कवचादि तथा कुमारी स्तोत्रादि के पाठ मात्र से बिना यज्ञ के, बिना दान के तथा बिना जप के साधक को समस्त फल प्राप्त हो जाते हैं । जो कोई कुमारी के अष्टोत्तर सहस्र संख्यक नाम स्तोत्र का पाठ करता है, उसे बड़ी शीघ्रता से शान्ति प्राप्त हो जाती है । इसलिए इस कन्या ( के सहस्रनाम ) स्तोत्र का अवश्य पाठ करना चाहिए ॥ १५४-१५५ ॥

---

१. कथितं नाथ—क० । २. स्त्रोत्रकमलम् अष्टोत्तर—क० ।

वारत्रयं प्रपाठेन राजानं वशमानयेत् ।
वारैकपठितो मन्त्री धर्मार्थकाममोक्षभाक् ॥ १५६ ॥
त्रिदिनं प्रपठेद्विद्वान् यदि पुत्रं समिच्छति ।
वारत्रयक्रमेणैव वारैकक्रमतोऽपि वा ॥ १५७ ॥

इस स्तोत्र के तीन बार पाठ करने से राजा भी वश में हो जाते हैं । मन्त्रवेत्ता साधक इसके एक बार भी पाठ करने से धर्म, अर्थ, काम और मोक्ष का अधिकारी हो जाता है । विद्वान् पुरुष को यदि पुत्र की इच्छा हो तो प्रतिदिन तीन बार के क्रम से अथवा प्रतिदिन एक बार के क्रम से इसका पाठ करना चाहिए ॥ १५६-१५७ ॥

पठित्त्वा धनरत्नानामधिप: सर्ववित्तग: ।
त्रिजगन्मोहयेन्मन्त्री वत्सरार्द्धं प्रपाठत: ॥ १५८ ॥
वत्सरं वाप्य[1] यदि वा भक्तिभावेन य: पठेत् ।
चिरजीवी खेचरत्त्वं प्राप्य योगी भवेन्नर: ॥ १५९ ॥

मन्त्रवेत्ता साधक आधे वर्ष पर्यन्त पाठ करने से धन रत्नों का अधिपत्य तथा समस्त प्रकार के वित्तों का स्वामित्व प्राप्त कर लेता है । किं बहुना, वह सारे त्रिलोकी को भी मोहित कर लेता है । जो साधक भक्तिभावपूर्वक एक संवत्सर पर्यन्त कुमारी सहस्रनाम का पाठ करता है, वह चिरञ्जीवि तथा आकाशगामी बन कर योगी बन जाता है ॥ १५८-१५९ ॥

महादूरस्थितं वर्णं[2] पश्यति स्थिरमानस: ।
महिलामण्डले स्थित्त्वा शक्तियुक्त: पठेत् सुधी: ॥ १६० ॥
स भवेत्साधकश्रेष्ठ: क्षीरी कल्पद्रुमो भवेत् ।
सर्वदा य: पठेन्नाथ भावोद्गतकलेवर: ॥ १६१ ॥
दर्शनात् स्तम्भनं कर्त्तुं क्षमो भवति साधक: ।
जलादिस्तम्भने[3] शक्तो वह्निस्तम्भादिसिद्धिभाक् ॥ १६२ ॥

उसका मन स्थिर हो जाता है और उसे दूर स्थित वस्तु का मानस साक्षात्कार होने लगता है । जो बुद्धिमान् साधक स्त्री मण्डल के मध्य में स्थित हो कर शक्ति से युक्त हो इसका पाठ करता है, वह श्रेष्ठ साधक बन जाता है । वह दुग्ध से सम्पन्न तथा कल्पवृक्ष के समान हो जाता है । हे नाथ ! जो कुमारी भाव से संयुक्त शरीर होकर सदैव इसका पाठ करता है, वह साधक अपने दर्शन मात्र से सबको स्तम्भित कर सकता है । वह जलादि का भी स्तम्भन करने में समर्थ हो जाता है । किं बहुना, अग्नि आदि को भी स्तम्भित करने की शक्ति उसमें आ जाती है ॥ १६०-१६२ ॥

---

१. आ समन्तात् आप्त्वा, आप्य, प्राप्येत्यर्थ: । आप्लृ व्याप्तौ धातो: क्त्वाप्रत्यय:, आडा सहसमासे ल्यबादेशे साधुता ।

२. महाहवस्थिवर्ण—ग० ।

३. जलस्तम्भानिलस्तम्भवह्निस्तम्भादिसिद्धिभाक्—क० ।

वायुवेगी महावाग्मी वेदज्ञो भवति ध्रुवम् ।
कविनाथो महाविद्यो वन्धकः पण्डितो भवेत् ॥ १६३ ॥
सर्वदेशाधिपो भूत्वा देवीपुत्रः स्वयं भवेत् ।
कान्तिं श्रियं यशो वृद्धिं प्राप्नोति बलवान् यतिः ॥ १६४ ॥

कुमारी सहस्रनामस्तोत्र का पाठ करने वाला वायु के समान वेगवान् हो जाता है । वह निश्चय ही महावाग्मी तथा वेदज्ञ हो जाता है, कविकुलशिरोमणि, महाविद्वान् तथा दूसरे के वेग को रोकने वाला और पण्डित हो जाता है । वह सारे देशों का अधिपत्य प्राप्त कर स्वयं देवीपुत्र ( महाभैरव के समान ) बन जाता है तथा कान्ति, यश, श्री सहित वृद्धि प्राप्त करता है । वह बलसम्पन्न तथा सबको नियन्त्रित करने वाला हो जाता है ॥ १६३-१६४ ॥

अष्टसिद्धियुतो नाथ यः पठेदर्थसिद्धये[1] ।
उज्जटेऽरण्यमध्ये च पर्वते घोरकानने ॥ १६५ ॥
वने वा प्रेतभूमौ च शवोपरि महारणे[2] ।
ग्रामे भग्नगृहे वापि शून्यागारे नदीतटे ॥ १६६ ॥
गङ्गागर्भे महापीठे योनिपीठे गुरोर्गृहे ।
धान्यक्षेत्रे[3] देवगृहे कन्यागारे कुलालये ॥ १६७ ॥
प्रान्तरे गोष्ठमध्ये वा राजादिभयहीनके ।
निर्भयादिस्वदेशेषु शिलिङ्गालयेऽथवा ॥ १६८ ॥
भूतगर्त्ते चैकलिङ्गे वा शून्यदेशे[4] निराकुले ।
अश्वत्थमूले बिल्वे वा कुलवृक्षसमीपगे ॥ १६९ ॥
अन्येषु सिद्धदेशेषु कुलरूपाश्च साधकः ।
दिव्ये वा वीरभावस्थो यष्ट्वा कन्यां कुलाकुले ॥ १७० ॥
कुलद्रव्यैश्च विविधैः सिद्धिद्रव्यैश्च साधकः ।
मांसासवेन जुहुयान्मुक्तेन[5] रसेन च ॥ १७१ ॥
हुतशेषं कुलद्रव्यं ताभ्यो दद्यात् सुसिद्धये ।
तासामुच्छिष्टमानीय जुहुयाद् रक्तपङ्कजे ॥ १७२ ॥
घृणालज्जाविनिर्मुक्तः साधकः स्थिरमानसः ।
पिबेन्मांसरसं[6] मन्त्री सदानन्दो महाबली ॥ १७३ ॥

हे नाथ ! जो अपने प्रयोजन की सिद्धि के लिए इसका पाठ करता है वह अष्टसिद्धियों से युक्त हो जाता है । उज्जट ( कुटीर ) ! अरण्य के मध्य में, पर्वत में, घोर वन में, साधारण वन में, प्रेतभूमि ( श्मशान ) में, शव के ऊपर बैठकर, महारण्य में, ग्राम

१. आत्मसिद्धये—क० ।
२. शवोपरि महारणे, इति सप्तम्यन्तः पाठो युक्ततरः प्रतीयते ।
३. धामक्षेत्रे—ग० ।
४. ग्राम्यदेवो—ग० ।
५. मदात्तकरसेन—ख० ।
६. मांसासवं मन्त्री—क० ।

में, उजाड़ घर में, शून्य घर में, नदी तट पर, गङ्गा के बीच, किसी सिद्ध शाक्तपीठ में, योनि पीठ पर, गुरु-गृह में, धान्य से परिपूर्ण क्षेत्र में, देवालय में, कन्यागार में, कुलालय ( शाक्त स्थान ) में, प्रान्तर ( एकान्त ) में, गोशाला में, राजादि के भय से मुक्त स्थान में, निर्भय स्थान में, स्वदेश में, शिवलिङ्गालय में, भूतगर्त्त ( गुफा ) में, एकलिङ्ग में, शून्य स्थान में, बाधारहित कुल में, अश्वत्थमूल, बिल्ववृक्ष के नीचे, कुल ( शाक्त ) वृक्ष में, तथा अन्य सिद्धप्रदेश में, साधक अथवा शाक्तजन दिव्य अथवा वीरभाव में रह कर कुमारी मन्त्र से कुलाकुल परम्परानुसार अनेक प्रकार के कुलद्रव्यों तथा सिद्धद्रव्यों से, मांस से, आसव से अथवा मुक्तक के रस से हवन करें। फिर हुतशेष, कुलद्रव्यों को कुमारियों को नैवेद्य रूप में प्रदान करें। तदनन्तर उनके नैवेद्योच्छिष्ट द्रव्य को लाकर लालवर्ण के कमल में हवन कर दें। फिर स्थिर चित्त हो घृणा और लज्जा का परित्याग कर उस मांस रस को स्वयं पी जाएं। ऐसा करने से मन्त्रज्ञ साधक सदैव आनन्दित रहता है और महा बलवान् हो जाता है ॥ १६५-१७३ ॥

**महामांसाष्टकं ताभ्यो मदिराकुम्भपूरितम् ।**
**तारो माया रमावह्निजायामन्त्रं पठेत् सुधीः ॥ १७४ ॥**
**निवेद्य[1] विधिनानेन पठित्वा स्तोत्रमङ्गलम् ।**
**स्वयं प्रसादं भुक्त्वा हि सर्वविद्याधिपो भवेत् ॥ १७५ ॥**

उन्हें महामांसाष्टक तथा मदिरा से परिपूर्ण घट तार ( ॐ ) माया ( ह्रीं ) रमा ( श्रीं ) वह्निजाया ( स्वाहा ) मन्त्र पढ़कर निवेदित करे ॥ १७४ ॥

**फलश्रुति**—इस प्रकार की विधि से नैवेद्य समर्पण कर कुमारी के स्तोत्र मङ्गल का पाठ कर स्वयं प्रसाद का भक्षण करें। ऐसा करने से साधक सभी महाविद्याओं का स्वामी बन जाता है ॥ १७५ ॥

**शूकरस्योष्ट्रमांसेन पीनमीनेन मुद्रया ।**
**महासवघटेनापि दत्त्वा पठति यो नरः ॥ १७६ ॥**
**ध्रुवं स सर्वगामी स्याद् विना होमेन पूजया ।**
**रुद्ररूपो भवेन्नित्यं महाकालात्मको भवेत् ॥ १७७ ॥**

जो लोग शूकर के एवं उष्ट्र के मांस तथा मोटी-मोटी मछली, मुद्रा और महासव से परिपूर्ण घट निवेदन कर इस स्तोत्र का पाठ करते हैं, उन्हें निश्चय ही बिना होम जाप किए ही सर्वत्र अव्याहत गति प्राप्त हो जाती है तथा वे महाकालात्मक रुद्र का स्वरूप बन जाते हैं ॥ १७६-१७७ ॥

**सर्वपुण्यफलं नाथ क्षणात्[2] प्राप्नोति साधकः ।**
**क्षीराब्धिरत्नकोषेशो वियद्व्यापी[3] च योगिराट् ॥ १७८ ॥**

---

१. नैवेद्यविधिदानेन—ख० । २. कुलात्—ख० ।
३. वियद्गामी—ग० ।

हे नाथ ! ऐसा साधक क्षण मात्र में सभी पुण्यों का फल प्राप्त कर लेता है । वह क्षीर समुद्र में रहने वाले समस्त रत्नकोशों का स्वामी बन जाता है । इतना ही नहीं सारे आकाश मण्डल में व्याप्त होकर वह योगिराट् हो जाता है ॥ १७८ ॥

भक्त्याह्लादं दयासिन्धुं निष्कामत्त्वं लभेद् ध्रुवम् ।
महाशत्रुपातने च महाशत्रुभयार्द्दिते ॥ १७९ ॥
वारैकपाठमात्रेण शत्रूणां वधमानयेत् ।
समर्दयेत् शत्रून्[१] क्षिप्रमन्धकारं यथा रविः ॥ १८० ॥

वह भक्ति का आह्लाद, दया का समुद्र तथा निष्कामता को निश्चित रूप से प्राप्त करता है । महाशत्रु के द्वारा उत्पन्न विपत्ति में तथा महाशत्रु द्वारा भय से परिपीड़ित होने पर साधक एक बार के पाठ मात्र से अपने शत्रुओं का वध कर देता है । वह अपने समस्त शत्रुवर्गों का इस प्रकार विनाश कर देता है जिस प्रकार सूर्य अन्धकार समूहों को विनष्ट कर देते हैं ।

उच्चाटने मारणे च भये घोरतरे रिपौ ।
पठनाद्धारणान्मर्त्यो देवा वा राक्षसादयः ॥ १८१ ॥
प्राप्नुवन्ति झटित् शान्तिं कुमारीनामपाठतः ।
पुरुषो दक्षिणे बाहौ नारी वामकरे तथा ॥ १८२ ॥
धृत्वा पुत्रादिसम्पत्तिं लभते नात्र संशयः ॥ १८३ ॥

उच्चाटन में, मारण में, भय उपस्थित होने पर अथवा महाभयङ्कर शत्रु के द्वारा सताये जाने पर इसके पाठ से अथवा इसके धारण से मनुष्य विपत्ति से छूट जाता है । किं बहुना, देवता अथवा राक्षसादिक कुमारी सहस्रनाम के पाठ मात्र से बहुत शीघ्र शान्त हो जाते हैं । पुरुष अपने दाहिने हाथ में, स्त्री अपने बायें हाथ में, इस सहस्रनाम को धारण करने से पुत्रादि सम्पत्ति प्राप्त कर लेते हैं इसमें कोई संशय नहीं है ॥ १७९-१८३ ॥

ममाज्ञया मोक्षमुपैति साधको
गजान्तकं नाथ सहस्रनाम च ।
पठेन्मनुष्यो यदि भक्तिभावत-
स्तदा हि सर्वत्र फलोदयं लभेत् च ॥ १८४ ॥

हे नाथ ! मेरी आज्ञा से इसका पाठ करने वाला साधक मोक्ष प्राप्त कर लेता है । यह सहस्रनाम गजान्तक है । यदि मनुष्य भक्ति भाव में तत्पर हो कर इसका पाठ करे तो उसका सर्वत्र फलोदय हो जाता है ॥ १८४ ॥

मोक्षं सत्फलभोगिनां स्तववरं सारं परानन्ददं
ये नित्यं हि मुदा पठन्ति विफलं सार्थञ्च चिन्ताकुलाः ।

---

१. भक्त्यानादम्—ग० ।

२. कन्दर्पाः कामदेवाः, तेषामयुतं दशसहस्त्रम्, तेन तुल्या रूपगुणाः, ते सन्ति येषु ते ।

ते नित्याः प्रभवन्ति कीर्तिकमले श्रीरामतुल्यो जये
कन्दर्पायुततुल्यरूपगुणिनः [2] क्रोधे च रुद्रोपमाः ॥ १८५ ॥

॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने कुमार्युपचर्याविन्यासे सिद्धमन्त्र-
प्रकरणे दिव्यभावनिर्णये अष्टोत्तरसहस्रनाममङ्गलोल्लासे
दशमः पटलः ॥ १० ॥



यह सहस्रनाम सभी स्तवों में श्रेष्ठ है, सभी का स्थिर तत्त्व है, परानन्द देने वाला है, उत्तम फल का योग करने वालों को यह मोक्ष प्रदान करता है, जो चिन्तायुक्त एवं व्याकुलचित्त वाले जन इसके विशिष्ट फलयुक्त अर्थ का अनुसन्धान करते हुए आनन्दपूर्वक नित्य इसका पाठ करते हैं, वे सर्वदा कीर्तिकमल को प्राप्त करने में समर्थ हो जाते हैं। वे विजय में श्रीराम के सदृश हो जाते हैं। किं बहुना, रूप एवं गुण में कामदेव के समान रूपवान् तथा गुणवान् बन जाते हैं और क्रोध में रुद्र के समान भयङ्कर हो जाते हैं ॥ १८५ ॥

**॥ श्रीरुद्रयामल के उत्तरतन्त्र में महातन्त्रोद्दीपन प्रकरण में कुमार्युपचर्याविन्यास में सिद्धमन्त्रप्रकरण के दिव्यभाव निर्णय में अष्टोत्तर सहस्रनाम मङ्गलोल्लास नामक दशम पटल की डा० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ १० ॥**



# अथैकादशः पटलः

आनन्दभैरवी उवाच

अथातः सम्प्रवक्ष्यामि दिव्यभावादिनिर्णयम् ।
यमाश्रित्य महारुद्रो भुवनेश्वरनामधृक् ॥ १ ॥

आनन्दभैरवी ने कहा—अब मैं दिव्यभावादि का निर्णयात्मक विषय कहती हूँ जिनके आश्रय से महारुद्र 'भुवनेश्वर' नाम वाले बन गये ॥ १ ॥

यं ज्ञात्वा कमलानाथो देवतानामधीश्वरः ।
चतुर्वेदाधिपो ब्रह्मा साक्षाद्ब्रह्म सनातनः ॥ २ ॥
बटुको मम पुत्रश्च शक्रः स्वर्गाधिदेवता ।
अष्टसिद्धियुताः सर्वे दिक्पालाः खेचरादयः ॥ ३ ॥

इतना ही नहीं जिसके ज्ञान से महाविष्णु देवताओं के तथा ब्रह्मदेव चारो वेदों के अधीश्वर हो गये । सनातन साक्षाद् ब्रह्म के ज्ञाता, मेरे पुत्र बटुक गणेश, इन्द्र, किं बहुना स्वर्ग के समस्त देवगण, दिक्पाल एवं खेचरादि आठो सिद्धियों से युक्त हो गये ॥ २-३ ॥

तत्प्रकारं महादेव आनन्दनाथभैरव ।
सुरानन्द हृदयानन्द ज्ञानानन्द दयामय ॥ ४ ॥
शृणुस्वैकमना नाथ यदि त्वं सिद्धिमिच्छसि ।
मम प्रियानन्दरूप यतो मे त्वं तनुस्थितः ॥ ५ ॥

हे महादेव ! हे आनन्दनाथ भैरव ! हे सुरानन्द ! हे हृदयानन्द ! हे ज्ञानानन्द ! हे दयामय ! यदि आप सिद्धि चाहते हैं, तो उनके प्रकारों को चित्त स्थिर कर सुनिए । क्योंकि आप मेरे शरीर में स्थित रहने वाले हैं, मुझे आनन्द देने वाले तथा मेरे प्रिय हैं ॥ ४-५ ॥

त्रिविधं दिव्यभावञ्च वेदागमविवेकजम् ।
वेदार्थमधमं सम्प्रोक्तं मध्यमं चागमोद्भवम् ॥ ६ ॥
उत्तमं सकलं प्रोक्तं विवेकोल्लाससम्भवम्[१] ।
तथैव त्रिविधं भावं दिव्यवीरपशुक्रमम् ॥ ७ ॥

वेद आगम एवं विवेक से उत्पन्न होने वाला दिव्यभाव तीन प्रकार का कहा गया है १. उनमें वेदार्थ वाला दिव्यभाव अधम २. आगम से उत्पन्न मध्यम तथा ३. विवेकोल्लास

---

१. विवेकोल्लोसेन सम्भवों यस्येति बहुव्रीहिः ।

से उत्पन्न सकल ( कलायुक्त ) दिव्यभाव, उत्तम कहा गया है । इसी प्रकार दिव्य, वीर और पशुभेद से सभी भावों के तीन प्रकार कहे गये हैं ॥ ६-७ ॥

### दिव्य-वीर-पशुभावानां स्वरूपकीर्तनम्

**दिव्यं विवेकजं प्रोक्तं सर्वसिद्धिप्रदायकम् ।**
**उत्तमं तद्विजानीयादानन्दरससागरम् ॥ ८ ॥**

विवेक से उत्पन्न दिव्यभाव सभी सिद्धियों का प्रदाता कहा गया है, आनन्द रस का सागर होने से उसको 'सर्वोत्तम' समझना चाहिए ॥ ८ ॥

**मध्यमं चागमोल्लासं वीरभावं क्रियान्वितम् ।**
**वेदोद्भवं फलार्थञ्च पशुभावं हि चाधमम् ॥ ९ ॥**

आगमशास्त्र से उत्पन्न क्रिया युक्त वीरभाव 'मध्यम' तथा ३ फलस्तुति से युक्त वेद से उत्पन्न पशुभाव 'अधम' समझना चाहिए ॥ ९ ॥

**सर्वनिन्दा समाव्याप्तं भावानामधमं पशोः ।**
**उत्तमे उत्तमं ज्ञानं भावसिद्धिप्रदं नृणाम् ॥ १० ॥**

यतः सभी भावों में पशु भाव सभी प्रकार के निन्दा से व्याप्त रहता है इसलिए वह अधम है । मनुष्यों को सिद्धि प्रदान करने के कारण उत्तम ज्ञान उत्तम ( दिव्य भाव ) में ही है ॥ १० ॥

**मध्यमे मधुमत्याश्च मत्कुलागमसम्भवम् ।**
**अकालमृत्युहरणं[१] भावानामतिदुर्लभम् ॥ ११ ॥**
**वीरभावं विना नाथ न सिद्ध्यति कदाचन ।**
**अधमे अधमा व्याख्या निन्दार्थवाचकं सदा ॥ १२ ॥**

मध्यम ( दिव्य भाव ) में मधुमती विद्या है जो मेरे कुलागमशास्त्र से उद्भूत है और अकाल मृत्यु को हरण करने वाला सभी भावों में अत्यन्त दुर्लभ 'वीरभाव' है ॥ ११ ॥

हे नाथ ! इस 'वीरभाव' के बिना किसी को कोई सिद्धि मिलने वाली नहीं है । अधम ( पशु भाव ) में अधम व्याख्या है और वह सर्वदा निन्दार्थ का प्रतिपादक है ॥ १२ ॥

**यदि निन्दा न करोति तदा तत्फलमाप्नुयात् ।**
**पशुभावेऽपि सिद्धिः स्यात् यदि वेदं सदाभ्यसेत् ॥ १३ ॥**

पशुभाव में सिद्धि तभी होती है जब साधक सर्वदा वेद का अभ्यास करता रहे । किन्तु उसकी फलावाप्ति तब होती है जब वेदों की निन्दा न करें ॥ १३ ॥

**वेदार्थचिन्तनं नित्यं वेदपाठध्वनिप्रियम् ।**
**सर्वनिन्दाविरहितं हिंसालस्यविवर्जितम् ॥ १४ ॥**

---

१. अकाले यो मृत्युस्तस्य हरणम् ।

**लोभ-मोह-काम-क्रोध-मद-मात्सर्यवर्जितम् ।**
**यदि भावस्थितो मन्त्री पशुभावेऽपि सिद्धिभाक् ॥ १५ ॥**

पशुभाव में स्थित साधक हिंसा एवं आलस्य का त्याग कर सब प्रकार की निन्दा से विरहित रहकर वेदार्थ का चिन्तन करें, वेदपाठ करे और वेदपाठ के उच्चारण में ध्वनि का ध्यान रखे । लोभ, मोह, काम, क्रोध, मद और मात्सर्य दोषों से सर्वदा दूर रहे और साधक पशुभाव में स्थित रहे तो उसे पशुभाव में भी सिद्धि प्राप्त हो जाती है ॥ १४-१५ ॥

**पशुभावं महाभावं ये जानन्ति महीतले ।**
**किमसाध्यं महादेव श्रमाभ्यासेन यान्ति तत् ॥ १६ ॥**
**श्रमाधीनं जगत् सर्वं श्रमाधीनाश्च देवताः ।**
**श्रमाधीनं महामन्त्रं श्रमाधीनं परन्तपः ॥ १७ ॥**

हे महादेव ! इस पृथ्वीतल में पशुभाव ही महाभाव है—ऐसा जो समझते हैं, उन्हें श्रम और अभ्यास के कारण कोई भी वस्तु असाध्य नहीं रहती । क्योंकि जगत् की सारी वस्तुयें श्रमाधीन हैं । किं बहुना, सारे देवता श्रम से वशीभूत हो जाते हैं । महामन्त्र भी श्रम से सिद्धि देते हैं और तपस्या भी ॥ १६-१७ ॥

**श्रमाधीनं कुलाचारं पशुभावोपलक्षणम् ।**
**वेदार्थज्ञानमात्रेण पशुभावं कुलप्रियम् ॥ १८ ॥**
**स्मृत्यागमपुराणानि वेदार्थविविधानि च ।**
**अभ्यस्य सर्वशास्त्राणि तत्त्वज्ञानात्तु बुद्धिमान् ॥ १९ ॥**
**पललमिव धान्यार्थी सर्वशास्त्राणि सन्त्यजेत् ।**
**ज्ञानी भूत्वा भावसारमाश्रयेत् साधकोत्तमः ॥ २० ॥**

समस्त कुलाचार श्रमाधीन है । अतः पशुभाव का दूसरा नाम 'श्रम' है । वेदार्थ के ज्ञान मात्र से पशुभाव कुल ( कुण्डलिनी में लीन होने वाले ) के लिए प्रिय है । स्मृति, आगम, पुराण या विविध प्रकार के वेदार्थों से युक्त, किं बहुना सभी शास्त्रों का अभ्यास करने से तत्त्वज्ञान हो जाने पर साधक बुद्धिमान् हो जाता है । इसलिए जिस प्रकार चावल चाहने वाला व्यक्ति धान्य की भूसी को त्याग देता है उसी प्रकार साधकोत्तम साधक भी ज्ञान हो जाने पर समस्त शास्त्रों का त्याग कर देवे और ज्ञान प्राप्त कर भावों के सार मात्र का आश्रय ग्रहण करे ॥ १८-२० ॥

**वेदे वेदक्रिया कार्या मदुक्तवचनादृतः[१] ।**
**पशूनां श्रमदाहानामिति लक्षणमीरितम् ॥ २१ ॥**

**तीनों भावों के लक्षण**—वेद में ज्ञानी साधक वेद प्रतिपादित क्रिया करे । मेरे वचनों में आदर भाव रखे । इस प्रकार श्रम से दग्ध होने वाले, पशुओं का यहाँ तक लक्षण कहा गया है ॥ २१ ॥

---

१. वचनान्वितः—ग० ।

आगमार्थं क्रिया कार्या मत्कुलागमचेष्टया ।
वीराणामुद्धतानाञ्च मत् शरीरानुगामिनाम् ॥ २२ ॥
मच्चेच्छाकुल[१] तत्त्वानामिति लक्षणमीरितम् ।

मेरे कुलागम में कही गई विधि के अनुसार ( वीर भाव का साधक ) आगमार्थ क्रिया करे । इस प्रकार मेरे शरीर का अनुगमन करने वाले निर्भय वीरों को मेरी इच्छा के अनुकूल सर्वदा व्यवहार करना चाहिए । यहाँ तक वीरभाव का लक्षण कहा गया ॥ २२-२३ ॥

विवेकसूत्रसंज्ञाज्ञा कार्या सुदृढ़चेतसाम् ॥ २३ ॥
सर्वत्र समभावानां भावमात्रं हि साधनम् ।
सर्वत्र मत्पदाम्भोजसम्भवं सचराचरम् ॥ २४ ॥
पृष्ट्वा[२] यत्कुरुते कर्म चाखण्डफलसिद्धिदम् ।
अखण्डज्ञानचित्तानामिति भावं विवेकिनाम् ॥ २५ ॥
निर्मलानन्ददिव्यानामिति लक्षणमीरितम् ।

स्थिर चित्त वालों को अपनी विवेक सूत्र संज्ञा रूप प्रज्ञा के अनुसार मेरी आज्ञा का पालन करना चाहिए । यतः सभी जगत को समभाव से देखने वालों के लिए भावमात्र ही साधन है । समस्त चराचरात्मक जगत् मेरे चरण कमलों से उत्पन्न हुआ है ऐसी सम बुद्धि रखनी चाहिए । मेरी आज्ञा लेकर साधक, जो भी कर्म करता है वह अखण्ड फल देने वाला होता है । यहाँ तक अखण्ड ज्ञान से युक्त चित्त वाले विवेकी तथा निर्मलानन्द से परिपूर्ण दिव्य ज्ञान वालों के लक्षण कहे गये ॥ २३-२६ ॥

दिव्ये तु त्रिविधं भावं यो जानाति महीतले ॥ २६ ॥
न नश्यति महावीरः कदाचित् साधकोत्तमः ।
दिव्यभावं[३] विना नाथ मत्पदाम्भोजदर्शनम् ॥ २७ ॥
य इच्छति महादेव स मूढः साधकः कथम् ।
पशुभावं प्रथमके द्वितीये वीरभावकम् ॥ २८ ॥
तृतीये दिव्यभावञ्च दिव्यभावत्रयं क्रमात् ।
तत्प्रकारं शृणु शिव त्रैलोक्यपरिपावन ॥ २९ ॥

इस पृथ्वीतल में दिव्यभाव में इन तीन लक्षणों को जो जानता है ऐसा महावीर साधक श्रेष्ठ कभी भी विनष्ट नहीं होता । हे नाथ ! दिव्यभाव के बिना जो साधक मेरे चरण कमलों का दर्शन चाहता है वह तो महामूर्ख है । फिर वह साधक कैसे हो सकता

---

१. मम चेष्टा, मच्चेष्टा, तया आकुलानि तत्त्वानि, तेषाम्, अथवा मत् इति पञ्चम्यन्तम् । मत्तः प्रवृत्ता इच्छा, तया आकुलतत्त्वानामिति ।
२. दृष्ट्वा—ख० ।
३. क्रमेण दिव्यभावादिमाश्रित्य साधयेद् यदि ।
दिव्यभावे महासिद्धिं प्राप्नोति साधकोत्तमः ।। —क० ।

है ? प्रथम पशुभाव, द्वितीय वीरभाव, और तृतीय दिव्य भाव है, इस प्रकार क्रम से दिव्यभाव के तीन भेद होते हैं । हे त्रैलोक्य को पवित्र करने वाले सदाशिव ! अब उन भावों के प्रकारों को सुनिए ॥ २६-२९ ॥

**भावत्रयविशेषज्ञः षडाधारस्य भेदनः ।**
**पञ्चतत्त्वार्थभावज्ञो[१] दिव्याचाररतः तदा ॥ ३० ॥**
**स एव भवति श्रीमान् सिद्धनामादिपारगः ।**
**शिववद् विहरेत् सोऽपि अष्टैश्वर्यसमन्वितः ॥ ३१ ॥**

तीन भावों को विशेष रूप से जानने वाला, षट्चक्रों का भेदन करने वाला, पञ्चतत्त्वार्थ के भावों का ज्ञानी तथा दिव्याचार में जो निरत है ऐसा ही साधक श्रीमान् एवं सिद्धों में श्रेष्ठ होता है । वह अष्ट ऐश्वर्य से समन्वित हो कर शिव के समान ब्रह्माण्ड में विहार करता है ॥ ३०-३१ ॥

**सर्वत्र शुचिभावेन आनन्दघनसाधनम् ।**
**प्रातःकालादिमध्याह्नकालपर्यन्तधारणम् ॥ ३२ ॥**
**भोजनञ्चोक्तद्रव्येण संयमादिक्रमेण वा ।**
**यः साधयति स सिद्धो दिव्यभावे पशुक्रमात् ॥ ३३ ॥**

सभी स्थानों पर पवित्र भाव से प्रातःकाल से मध्याह्न काल पर्यन्त आनन्दघन सच्चिदानन्द का साधन करने वाला और उनकी धारणा करने वाला, शास्त्र प्रतिपादित पदार्थों का भोजन करने वाला और क्रमशः संयम पथ पर अग्रसर रहने वाला तथा दिव्यभाव में पशुभाव के क्रम से साधन करने वाला साधक सिद्ध होता है ॥ ३२-३३ ॥

**दिव्यभावे वीरभावः**

**दिव्यभावे वीरभावं वदामि तत्पुनः शृणु ।**
**मध्याह्नादिकसन्ध्यान्तं शुचिभावेन साधनम् ॥ ३४ ॥**
**जपनं धारणं वापि चित्तमादाय यत्नतः ।**
**एकान्तनिर्जने देशे सिद्धो भवति निश्चितम् ॥ ३५ ॥**

हे शङ्कर ! अब जिस प्रकार दिव्यभाव में वीरभाव होता है उसे श्रवण कीजिए । जो पवित्रता पूर्वक मध्याह्न से लेकर सन्ध्यापर्यन्त चित्त स्थिर रख कर किसी एकान्त निर्जन प्रदेश में जप तथा ( ध्यान एवं ) धारणा करता है, वह निश्चित रूप से सिद्ध हो जाता है ॥ ३४-३५ ॥

**तत्कालं वीरभावार्थं भावमात्रं हि साधनम् ।**
**भावेन लभते सिद्धिं [२]वीरादन्यन्न कुत्रचित् ॥ ३६ ॥**

---

१. पञ्चतत्त्वानामर्थं भावं च जानाति, इति पञ्चतत्त्वार्थभावज्ञः ।

२. भावादन्यद्—ख० ।

वीरभाव की प्राप्ति के लिए ऊपर कहे गये काल में भावमात्र ही साधन है । क्योंकि भाव से सिद्धि प्राप्त होती है । वीरभाव भाव ( त्रय ) से अलग पदार्थ नहीं है वही भाव है ॥ ३६ ॥

रात्रौ गन्धादिसम्पूर्णस्ताम्बूलपूरिताननः ।
विजयानन्दसम्पन्नो[१] जीवात्मपरमात्मनोः ॥ ३७ ॥
ऐक्यं चित्ते समाधाय आनन्दोद्रेकसंभ्रमः ।
यो जपेत् सकलां रात्रिं गतभीर्निर्जने गृहे ॥ ३८ ॥
स भवेत् कालिकादासो दिव्यानामुत्तमोत्तमः ।

**उत्तम साधक का लक्षण**—रात्रि में गन्धादि से परिपूर्ण हो कर मुख में ताम्बूल का बीड़ा चबाते हुये विजय और आनन्द से संपन्न जो साधक निर्भय हो कर किसी निर्जन स्थान अथवा घर में जीवात्मा और परमात्मा में ऐक्य की भावना करते हुये सारी रात जप करता है वही महाकाली का दास दिव्यों में उत्तमोत्तम साधक कहा गया है ॥ ३७-३९ ॥

एवं भावत्रयं ज्ञात्वा यः कर्म साधयेत्ततः ॥ ३९ ॥
अष्टैश्वर्ययुतो भूत्वा सर्वज्ञो भवति ध्रुवम् ।
भावत्रयाणां मध्ये तु[२] भावपुण्यार्थनिर्णयम् ॥ ४० ॥
शृणु नाथ प्रवक्ष्यामि सावधानाऽवधारय ।
अकस्मात् सिद्धिमाप्नोति ज्ञात्वा सङ्केतलाञ्छितम् ॥ ४१ ॥
यो जानाति महादेव तस्य सिद्धिर्न संशयः ।
द्वादशे पटले सूक्ष्मसङ्केतार्थं वदामि तत् ॥ ४२ ॥

इस प्रकार तीनों भावों का लक्षण जान कर जो कर्म करता है वह अष्ट ऐश्वर्यों से युक्त हो कर निश्चित रूप से सर्वज्ञ हो जाता है । हे नाथ ! तीनों भावों में रहने वाले भावमात्र के पुण्यों को मैं कहता हूँ, सावधान हो कर सुनिए ।

साधक जिसके संकेत मात्र के ज्ञान से अकस्मात् सिद्धि प्राप्त कर लेता है, हे महादेव ! उसे निःसंदेह सिद्धि प्राप्त होती है । उस सूक्ष्मभाव का संकेतार्थ मैं द्वादश पटल में कहूँगी ॥ ३९-४२ ॥

आनन्दभैरवी उवाच

एकादशे च पटले शुद्धभावार्थनिर्णयम् ।
भावेन लभ्यते सर्वं भावाधीनं जगत्त्रयम्[३] ॥ ४३ ॥
भावं विना महादेव न सिद्धिर्जायते क्वचित् ।
पशुभावाश्रयाणाञ्च अरुणोदयकालतः ॥ ४४ ॥

---

१. विजयेनानन्दो विजयानन्दः, सुप्सुपेति समासः, तेन सम्पन्नः ।
२. भावपुष्टार्थ—ख० । ३. भावाधीनमिदं जगत्—ख० ।

**दशदण्डाश्रितं कालं प्रश्नार्थं केवलं प्रभो ।**
**चक्रं द्वादशराशेश्च मासद्वादशकस्य च ॥ ४५ ॥**
**दशदण्डे विजानीयाद् भावाभावं विचक्षणः ।**

**आनन्दभैरवी ने पुनः कहा**—इस एकादश पटल में शुद्ध भावार्थ का निरूपण किया गया है । भाव से सब कुछ प्राप्त किया जा सकता है । यह तीनों जगत् भावाधीन ही है । हे महादेव ! भाव के बिना कभी किसी को सिद्धि नहीं प्राप्त होती ।

**भाव प्रश्न के लिए काल**—पशुभाव का आश्रय लेने वाले साधकों को अरुणोदय काल से दश दण्ड ( ४ घण्टे ) पर्यन्त काल का आश्रय लेना चाहिए । हे विभो ! केवल भाव प्रश्नार्थबोधक प्रश्न के लिए भी यही काल उचित है । इसी प्रकार विचक्षण पुरुषों को द्वादश राशि एवं द्वादश मासात्मक चक्र के द्वारा भावाभाव जानने के लिए दश दण्डात्मक--काल जानना चाहिए ॥ ४३-४६ ॥

**अनुलोमविलोमेन पञ्चस्वरविभेदतः ॥ ४६ ॥**
**बाल्य[१]कैशोरसौन्दर्यं यौवनं वृद्धसञ्ज्ञकम् ।**
**अस्त(अष्ट)मितं क्रमाज्ज्ञेयो विधिः पञ्चस्वरः स्वयम् ॥ ४७ ॥**
**स्वकीयं नासिकाग्रस्थं पञ्चमं परिकीर्तितम् ।**

**नासापुट के पञ्चस्वर का महत्त्व और उनकी संज्ञा**—इसमें अनुलोम एवं विलोम क्रम से तथा पञ्च स्वरों के भेद से बाल्यावस्था, किशोरावस्था तथा सौन्दर्ययुक्त यौवन और वृद्धावस्था एवं अस्तमित(मृत) संज्ञा वाला काल क्रमशः जानना चाहिए । पञ्चस्वरों में इसी का विधान है । हे भैरव ! उक्त चार स्वरों ( द्र० ११. ४७ ) के अतिरिक्त नासिका के अग्रभाग में स्थित रहने वाला पाँचवाँ स्वर भी कहा गया है ॥ ४६-४८ ॥

**यन्नासापुटमध्ये तु वायुर्भवति भैरव ॥ ४८ ॥**
**तन्नासापुटमध्ये तु भावाभावं विचिन्तयेत् ।**
**आकाशं वायुरूपं हि तैजसं वारुणं प्रभो ॥ ४९ ॥**
**पार्थिवं क्रमशो ज्ञेयं बाल्यास्तादिक्रमेण तु ।**

हे भैरव ! जिस नासिका के छिद्र के मध्य से वायु बहती हो, साधक उसी नासापुट के द्वारा बहते हुये वायु से कार्य के भावाभाव की परीक्षा करे । हे प्रभो ! बाल्य, कैशोर, युवा, वृद्ध और अस्तादि भेद के क्रम से प्रथम बाल्य की **आकाश** संज्ञा, द्वितीय कैशोर की **वायु** संज्ञा, तृतीय यौवन की **तैजस** संज्ञा, चतुर्थ वृद्धावस्था की **वरुण** संज्ञा तथा पञ्चम अस्तमित की '**पार्थिव**' संज्ञा समझनी चाहिए ॥ ४८-५० ॥

**वामोदये शुभा वामा दक्षिणे पुरुषः शुभः ॥ ५० ॥**

**स्वर का फल विचार**—( प्रस्थान काल में ) बायें स्वर के चलते यदि स्त्री दिखाई पड़ जाय तो वह शुभ है तथा दाहिना स्वर चलते समय यदि पुरुष दिखाई पड़े तो शुभ है ॥ ५० ॥

---

१. बाल्यं च कैशोरं च तयोः सौन्दर्य यस्मिन् ।

वायूनां गमनं ज्ञेयं गगनावधिरेव च ।
केवलं मध्यदेशे तु गमनं पवनस्य च ॥ ५१ ॥
तदाकाशं विजानीयाद् बाल्यभावं प्रकीर्तितम् ।
तिर्यग्गतिस्तु नासाग्रे वायोरुदयमेव च ॥ ५२ ॥

**बाल्य भाव**—नासिकास्थ वायु का गमन **गगन** पर्यन्त कहा गया है, यदि नासिकास्थ वायु **मध्यदेश** में चले तो पवन का गमन समझना चाहिए । इसे आकाशतत्त्व का तथा बाल्यभाव का उदय कहना चाहिए । जब नासिका के अग्रभाग से वायु तिरछी चले तो वायुतत्त्व का उदय समझना चाहिए ॥ ५१-५२ ॥

केवलं भ्रमणं ज्ञेयं सर्वमङ्गलमेव च ।
किशोरं तद्विजानीयाद् वायौ तिर्यग्गतौ विभो ॥ ५३ ॥
केवलोर्द्ध्वनासिकाग्रे वायुर्गच्छति दण्डवत् ।
तत्तैजसं विजानीयाद्[1] गमनं बलवद् भवेत् ॥ ५४ ॥

हे विभो ! वायु के तिरछे चलने पर **किशोरावस्था** जाननी चाहिए । उसमें प्रश्नकर्ता को केवल भ्रमण करना पड़ता है किन्तु सभी प्रकार का मङ्गल भी होता है ॥ ५३ ॥

जब नासिका के ऊर्ध्वभाग से दण्डे के समान केवल सीधा वायु चले तो **तैजस तत्त्व** का उदय समझना चाहिए । उसमें यात्रा बलवती होती है ॥ ५४ ॥

तद्वृद्धगतभावञ्च विलम्बोऽधिकचेष्टया ।
प्राप्नोति परमां प्रीतिं वरुणाम्भोदये रुजाम्[2] ॥ ५५ ॥
यदाधो गच्छति क्षिप्रं किञ्चिद् ऊर्ध्वमगोचरम् ।
यदा करोति प्रश्वासं तदा रोगोल्बणोदयः ॥ ५६ ॥

जब अधिक चेष्टा करने पर भी विलम्ब से वायु बहे तो वृद्धावस्था समझनी चाहिए । इस **वरुण रूप** अम्भस का उदय होने से रोगों की उत्पत्ति जाननी चाहिए ॥ ५५ ॥

इसी प्रकार जब नासिकास्थ वायु नीचे चले और ऊपर की ओर न दिखाई पड़े तो वह श्वास रोग देकर शरीर को उपद्रवग्रस्त कर देता है ॥ ५६ ॥

पृथिव्या उन्नतं भाग्यं[3] योगातपप्रपीडितम् ।
अस्तमितं महादेव अनुलोमविलोमतः ॥ ५७ ॥
पवनो गच्छति क्षिप्रं वामदक्षिणभेदतः ।
वामनासापुटे याति पृथिवी जलमेव च ॥ ५८ ॥
सदा फलाफलं दत्ते मुदिता कुण्डमण्डले ।

---

१. तदा व्यामोहमेव च—ख० ।
२. वारुणोदयनीरुजम्—ख० ।
३. योगेनातपः योगातपः, तेन प्रपीडितम् । रोगातप—ख० ।

हे महादेव ! यह **पृथ्वी तत्त्व** का वायु है जो रोग आतप से प्रपीडित करता है । अनुलोम से विलोम की ओर चलने वाले वायु की 'अस्तमित' संज्ञा है ।

कभी बायें से दक्षिण और कभी दक्षिण से बायें वायु बहुत शीघ्रता से चलता है । जब वायु दक्षिण से बायें नासिकापुट मे प्रवेश करे तो पृथ्वी और जल तत्त्व का उदय समझना चाहिए । वह नासा रूपी मुदित कुण्डमण्डल में फलाफल दोनों ही प्रदान करता है ॥ ५७-५९ ॥

**तयोर्वै वायवी शक्तिः फलभागं तदा लभेत् ॥ ५९ ॥**
**यद्येवं वामभागे तु वामायाः प्रश्नकर्मणि ।**
**यदि तत्र पुमान् प्रश्नं करोति [1] वामगामिने ॥ ६० ॥**
**तदा रोगमवाप्नोति कर्महीनो भवेद् ध्रुवम् ।**
**यदि वायूदयो वामे दक्षिणे पुरुषः स्थितः ॥ ६१ ॥**
**तदा फलमवाप्नोति द्रव्यागमनदुर्लभम् ।**
**अकस्माद्द्रव्यहानिः स्यान्मनोगतफलापहम् [2] ॥ ६२ ॥**

यदि स्त्री प्रश्न करने वाली हो और वामभाग से वायवी शक्ति प्रवाहित हो तो उसे शुभ फल मिलता है । यदि वाम नासा चलते समय पुरुष प्रश्न करे तो उसे रोग की प्राप्ति होती है । वह निश्चय ही कर्महीन रहता है । यदि बायें से वायु का उदय हो और प्रश्नकर्ता पुरुष दाहिनी ओर स्थित हो तो उसे सुफल प्राप्त नहीं होता है । द्रव्य ( धन ) का आगमन दुर्लभ होता है । अकस्मात् उसके द्रव्य की हानि होती है और उसके समस्त मनोगत फल नष्ट हो जाते हैं ॥ ५९-६२ ॥

**सुहृद् [3] भङ्गविवादञ्च भिन्नभिन्नोदये शुभम् ।**
**केवलं वरुणस्यैव पुरुषो दक्षिणे शुभम् ॥ ६३ ॥**

उसके मित्र नष्ट हो जाते हैं और उसे विवाद का सामना करना पड़ता है ।

**आकाशादि तत्त्वों का शुभाशुभ फल विचार**—( उस बॉई नासिका से वायु के उदय की अपेक्षा ) भिन्न भिन्न तत्त्वों के उदय में वह शुभकारी है । पुरुष के दक्षिण नासा से चलने वाला जल तत्त्व शुभकारी है ॥ ६३ ॥

**अशुभं पृथिवीदक्षे भेदोऽयं वरदुर्लभः ।**
**सदोदयं दक्षिणे च वायोस्तैजस एव च ॥ ६४ ॥**

यदि दाहिने भाग से पृथ्वी तत्त्व चलता हो तो वह अशुभ है । दक्षिण नासिका से यदि वायु और तैजस तत्त्व प्रवहमान हो तो वह सर्वदा अभ्युदयकारक है, किन्तु इस स्वर भेद का ज्ञान होना बहुत दुर्लभ है ॥ ६४ ॥

**आकाशस्य विजानीयात् शुभाशुभफलं प्रभो ।**

---

१. 'वामदक्षिणे' इति क० ।
२. मनोगतं फलमपजहाति इति विग्रहे 'आतश्चोपसर्गे' इति कप्रत्यये सति आलोपे च सति साधुता ।
३. 'सुखभङ्ग' इति क० ।

**यदि भाग्यवशादेव वायोर्मन्दा गतिर्भवेत् ॥ ६५ ॥**
**दक्षनाशामध्यदेशे तदा वामोदयं शुभम् ।**
**तदा वामे विचारञ्च वायुतेजोद्वयस्य च ॥ ६६ ॥**
**ज्ञात्वोदयं विजानीयाद् मित्रे हानिः सुरे भयम् ।**
**एवं[१] सुभवनागारे यदि गच्छति वायवी ॥ ६७ ॥**
**तस्मिन् काले पुमान् दक्षो दक्षभागस्थसम्मुखः ।**
**तदा कन्यादानफलं यथा प्राप्नोति मानवः ॥ ६८ ॥**

हे प्रभो ! **आकाश तत्त्व** के भी शुभाशुभ फल का विचार करना चाहिए । यदि भाग्यवश दक्षिण नासा के मध्य में वायु की गति धीमी हो और उसकी अपेक्षा वामोदय हो तो शुभ है । उस समय बायें नासिका से वायु का विचार करना चाहिए । यदि वायु और तैजस दोनों तत्त्व का उदय हो तो मित्र की हानि तथा देवताओं का भय समझना चाहिए । इसी प्रकार यदि किसी सुन्दर मकान में वायवी तत्त्व प्रवहमान हो तो उस समय पुरुष दाहिने अथवा दक्षिण भाग में अथवा सम्मुख स्थित हो तो वह पुरुष कन्या दान ( विवाह ) का फल प्राप्त करता है ॥ ६५-६८ ॥

**तदा वायुप्रसादेन प्राप्नोति धनमुत्तमम् ।**
**देशान्तरस्थभावार्त्ता[२] आयान्ति पुत्रसम्पदः ॥ ६९ ॥**

उस समय वह वायवी तत्त्व की कृपा से उत्तम धन प्राप्त करता है तथा देशान्तर में रहने वाले सम्बन्धी का समाचार मिलता है और उसे पुत्र एवं संपत्ति वहाँ से प्राप्त होती है ॥ ६९ ॥

**बाल्यादिकं भावत्रयं राशिभेदे शुभं दिशेत् ।**
**एतच्चक्रे फलं तस्य राशिद्वादशचक्रके ॥ ७० ॥**

राशिभेद होने पर बाल्यादिक तीनों भावों का शुभ फल कहना चाहिए । द्वादशराशि चक्र से उसका सूक्ष्म फल समझना चाहिए ॥ ७० ॥

**सूक्ष्मं फलं विजानीयात् चक्रं नाम शृणु प्रभो ।**
**आज्ञाचक्रं कामचक्रं फलचक्रञ्च सारदम् ॥ ७१ ॥**
**प्रश्नचक्रं[३] भूमिचक्रं स्वर्गचक्रं[४] ततः परम् ।**
**तुलाचक्रं[५] वारिचक्रं षट्चक्रं त्रिगुणात्मकम् ॥ ७२ ॥**
**सारचक्रमुल्काचक्रं मृत्युचक्रं क्रमात्प्रभो ।**

---

१. स्वनामावामे तु—ख० ।
२. देशान्तरस्थेन भावेन ऋता, देशान्तरस्थभावार्ता । 'ऋते च तृतीयासमासे' इति वृद्धिः । देशान्तरक्षमारार्ता—ख० ।
३. पुष्पचक्रम्—क० ।
४. खड्गक्रम्—क० ।
५. राशिचक्रम्—क० ।

षट्कोणं[1] चात्र जानीयादनुलोमविलोमतः ॥ ७३ ॥

हे प्रभो ! अब आप उन चक्रों के नामों को सुनिए----

१. आज्ञाचक्र, २. कामचक्र, ३. सारद फलचक्र, ४. प्रश्नचक्र, ५. भूमिचक्र उसके बाद ६. स्वर्गचक्र, ७. तुलाचक्र, ८. वारिचक्र, ९. त्रिगुणात्मक षट्चक्र, १०. सारचक्र, ११. उल्काचक्र, तथा १२. मृत्युचक्र । हे प्रभो ! क्रमशः इन चक्रों में अनुलोम तथा विलोम के अनुसार षट्कोण समझना चाहिए ॥ ७१-७३ ॥

सर्वचक्रे स्वरज्ञानं सर्वत्र वायुसङ्गतिम् ।
सर्वप्रश्नादिसञ्चारं भावेन[2] जायते यदि ॥ ७४ ॥
तदा तद्दण्डमानञ्च ज्ञात्वा राश्युदयं बुधः ।
कुर्यात् प्रश्नविचारञ्च यदि कीर्तिमिहेच्छति ॥ ७५ ॥

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावबोधनिर्णये पशुभावविचारे सारसङ्केते सिद्धमन्त्रप्रकरणे भैरवीभैरवसंवादे एकादशः पटलः ॥ ११ ॥**



यदि सभी चक्रों में स्वरज्ञान, वायु की संगति पूर्वक सभी प्रकार के प्रश्नों का सञ्चार भाव से उत्पन्न हो तो उस समय बुद्धिमान् को यदि कीर्ति की अभिलाष हो तो उस उस दण्ड के मान् से राशि का उदय समझकर प्रश्न पर विचार करना चाहिए ॥ ७४-७५ ॥

**॥ श्री रुद्रयामल के उत्तरतन्त्र में महातन्त्रोद्दीपन के भावबोधनिर्णय में पशुभाव विचार के सारसंकेत में सिद्धमन्त्र प्रकरण में भैरवीभैरव संवाद में एकादश पटल की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ ११ ॥**



---

१. षट्कालम्—क० ।  २. भगवन् ज्ञायते यदि—क० ।

# अथ द्वादशः पटलः

आनन्दभैरवी उवाच

तद्वामसन्धिदेशस्थमष्टमाङ्कमथो लिखेत् ।
तदधः सन्धिदेशस्थं सप्ताङ्कं विलिखेद्[1] बुधः ॥ १ ॥
तदूर्ध्वं[2] वामकोणे च तृतीयाङ्कं लिखेत्ततः ।
तदूर्ध्वं कोणगेहे च युग्माङ्कं विलिखेत्तथा ॥ २ ॥
तद्दक्षिणे गृहे चैकमङ्कवर्णं शृणु प्रभो ।

**श्री आनन्दभैरवी ने कहा**—उस चक्र के बायीं ओर स्थित सन्धि देश में ८ का अङ्क लिखे । उसके नीचे की ओर स्थित सन्धि देश में बुद्धिमान् साधक ७ अङ्क लिखे । उसके ऊपर बायीं ओर के कोण में ३ का अङ्क लिखे । उसके ऊपर के कोणगृह में २ का अङ्क लिखे । उसके दाहिनी ओर के गृह में १ का अङ्क लिखे । हे प्रभो ! अब उनमें लिखे जाने वाले वर्णों को भी सुनिए ॥ १-३ ॥

भावप्रश्नार्थबोधकथनम्

वसुभावं[3] शून्यभावं षष्ठभावञ्च शून्यकम् ॥ ३ ॥
एतन्मध्ये नास्ति वर्णं कोणाङ्कञ्च सवर्णकम् ।
टतवर्गौ[4] श श लिखेत् शरे शून्याध एव च ॥ ४ ॥

वसु अर्थात् आठवाँ भाव शून्य तथा छठा भाव शून्य रखे । इनके मध्य में कोई वर्ण नहीं लिखना चाहिए । शेष कोणों में वर्ण के साथ अङ्कों को भी लिखे । ५ वें कोण में ट वर्ग तथा त वर्ग एवं श ष लिखे । नीचें का कोण शून्य रखे ॥ ३-४ ॥

वेदाङ्कस्थौ कचवर्गौ एऐकारसमन्वितौ ।
तृतीयाङ्कस्थितं वर्णं आदिक्षान्तं टवर्गमोम् ॥ ५ ॥

---

१. महेश्वर—क० ।

२. तद्दक्षिणे सन्धिभागे षडङ्कं कामचक्रके ।
तद्दक्षिणे सन्धौ च आकाशं सर्वपुण्यदम् ॥
शून्याधः कोणगेहे च स्वरञ्चापि विलोमतः ।
तद्वामकोणगेहे च वेदाङ्कं विलिखेद् बुधः ॥

३. वायुभावमन्यभावं षष्ठभावञ्च गुण्यकम्—ग० ।

४. टतवर्गौमूर्द्धनि लिखेत् शरं शून्याध एव च—ख० ग० ।

चौथे अङ्क में एकार ऐकार से युक्त क वर्ग तथा च वर्ग लिखे तीसरे गृह में अकार से लेकर क्षान्त वर्ण तथा ट वर्ग एवं 'ओम्' लिखे ॥ ५ ॥

**तपवर्गौ[1] युगान्तस्थौ मकारं सावधानतः ।**
**विलिखेद् दक्षिणे तस्य गेहे चैकाङ्कमध्यके ॥ ६ ॥**
**उयुगं पतवर्गौ च अकारं युग्मशीर्षके ।**
**एतत्[2] चक्रं कामचक्रं प्रश्नकाले फलप्रदम् ॥ ७ ॥**

दूसरे में त वर्ग, प वर्ग तथा मकार सावधानी से लिखें उसके दक्षिण वाले गृह में जिसमें एक अङ्क हो उसमें दोनों ह्रस्व दीर्घ उकार ( उ ऊ ) एवं प वर्ग और त वर्ग लिखे । चक्र के दोनों शिरों पर अकार लिखे । यही **कामचक्र** है जो प्रश्न काल में फल देने वाला है ॥ ६-७ ॥

### महासूक्ष्मफल-ज्ञापकचक्र

**वामावर्त्तेन गणयेत् दशकोणस्थवर्णकान् ।**
**अनुलोम विलोमेन पञ्चस्वरादिनामतः ॥ ८ ॥**
**यस्मिन्गृहे स्वीयनाम प्राप्नोति वेदपारगः ।**
**तद्गृहावधि प्रश्नार्थं गणयेद्[3] ग्रहसिद्धये ॥ ९ ॥**

दशकोण में रहने वाले वर्णों को वामावर्त ( उल्टी ओर ) से गणना करे । किन्तु पञ्च स्वरों वाले नाम पर्यन्त वर्णों को अनुलोम ( सीधे सीधे ) और विलोम ( उल्टी ओर ) क्रम से ( ५ + ५ = १० ) गणना करे । वेद पारग विद्वान् जिस घर में गणना से अपना नाम प्राप्त करे उसी गृह की अवधि तक ग्रहों की सिद्धि के लिए प्रश्न की गणना करे ॥ ८-९ ॥

**नवग्रहनवस्थानं वर्णं ज्ञात्वा सुबुद्धिमान् ।**
**बाल्यभावादिकं ज्ञात्वा यत्र ग्रहस्थितिर्भवेत् ॥ १० ॥**
**तन्नक्षत्रं समानीय द्वाराधिकारमानयेत् ।**
**विना त्रिकोणयोगेन [4]षट्कोणं लिखेद् बुधः ॥ ११ ॥**

सुबुद्धिमान् नवों ग्रहों के नवो स्थानों तथा वर्णों को जान कर फिर जहाँ ग्रहस्थिति हो उनके बाल्यादिभावों की भी जानकारी करे । उससे नक्षत्र बनाकर फलज्ञान करे । बुद्धिमान् साधक बिना त्रिकोण बनाये षट्कोण की रचना करे ॥ १०-११ ॥

**तन्मध्ये अष्टकोणञ्च भित्वा देवगृहान्तरम् ।**
**तन्मध्ये चापि षट्कोणं तन्मध्ये च त्रिकोणकम् ॥ १२ ॥**
**क्रमेण विलिखेद् वर्णं दक्षिणावर्त्तयोगतः ।**
**ऊर्द्ध्ववामदेशभागे अ आ इ च कवर्गकम् ॥ १३ ॥**

---

१. उपवर्गौ ...... अकारम्—ग० ख० ।
२. प्रोक्तम्—ख० ग०, प्रश्नकार—ख० ग० ।
३. भाव—ख० ।    ४. न—ख० ।

उसके मध्य में अष्टकोण बना कर उसमें भेद पूर्वक ( बाँटकर ) देवताओं का घर ( स्थान ) भी निर्माण करे । पुनः उसके मध्य में षट्कोण तथा उसके भी मध्य में त्रिकोण की रचना करे । फिर दाहिनी ओर के क्रम से वर्णों को इस प्रकार लिखे—ऊपर की ओर वाम देश भाग में अ आ इ तथा क वर्ग और च वर्ग वर्ण लिखे ॥ १२-१३ ॥

**तद्दक्षिणे ई इ युगं टवर्गञ्च लिखेद् बुधः ।**
**दक्षपार्श्वे अधोभागे ऋयुगं तु तवर्गकम् ॥ १४ ॥**
**तदधो लृ लॄ ए ऐ रूपञ्च पवर्गञ्च लिखेद् बुधः ।**
**तद्वामपार्श्वभागे च ओ औ यरलवान् लिखेत् ॥ १५ ॥**
**शेषगेहे लिखेदं अः शादिक्षान्तं हि षड्गृहे ।**
**मध्यस्तमादिकोणे[1] च एकाङ्कं शार्वकं तनुम् ॥ १६ ॥**

बुद्धिमान् साधक उसके दक्षिण ओर इ ई तथा ट वर्ग वर्ण लिखे । तदनन्तर दाहिनी ओर पार्श्व भाग के अधोभाग में दोनों ह्रस्व दीर्घ ऋकार ( ऋ ॠ ) तथा त वर्ग लिखे । उसके नीचे लृ लॄ ए ऐ, का रूप तथा प वर्ग वर्ण लिखे । फिर उसके बाँई ओर 'ओ औ य र ल' तथा 'व' लिखे । शेष गृहों के मध्य तथा आदि कोण में अं अः तथा शेष श ष स ह क्ष आदि ६ वर्णों को लिखे ॥ १४-१६ ॥

**रुद्राग्निमूर्तिमनिलं अग्निकोणे लिखेद् बुधः ।**
**यजमानः पशुपतिमूर्तिषष्ठञ्च दक्षिणे ॥ १७ ॥**

फिर एक एक अङ्क के क्रम से सदाशिव के ८ मूर्तियों को इस प्रकार लिखे ।

नैर्ऋत्य कोण में नाम सहित बुद्धिमान् साधक रुद्र की एक एक मूर्ति का उल्लेख इस प्रकार करे—अग्नि कोण में रुद्ररूपायाग्निमूर्तये नमः रुद्र की तीसरी मूर्ति लिखे । दक्षिण में पशुपतये यजमान मूर्तये नमः' यह षष्ठ मूर्ति लिखे ॥ १६-१७ ॥

**महादेवं सोममूर्तिं सप्तमं नैर्ऋते लिखेत् ।**
**जलमूर्त्तिभवं[2] युग्मं पश्चिमे विलिखेद् बुधः ॥ १८ ॥**
**उग्रवीरं वायुमूर्त्तिं वायुकोणे चतुर्थकम् ।**
**भीमरूपाकाशमूर्त्तिं पञ्चमं चोत्तरे लिखेत् ॥ १९ ॥**

इसके बाद नैर्ऋत्य कोण में महादेवाय सोममूर्त्तये नमः, सप्तम मूर्ति लिखे । पश्चिम में भवाय जलमूर्तये नमः' रुद्र की दूसरी मूर्ति लिखे । वायुकोण में उग्रवीराय वायुमूर्त्तये नमः' यह चतुर्थ मूर्ति लिखे । तदनन्तर उत्तर दिशा में भीमरूपायाकाशमूर्त्तये नमः' रुद्र की पञ्चम मूर्ति लिखे ॥ १८-१९ ॥

**ईशानं सूर्यमूर्तिञ्च ईशाने[3] षड्दलं लिखेत् ।**
**अधः षट्कोणमध्ये च [4]षट्कोणं विलिखेत्ततः ॥ २० ॥**

---

१. भूमादि—क० । २. जलमूर्तौ भवम्, जलमूर्तिभवम् ।
३. अष्टमं लिखेत्—ख० । ४. चाष्टकोणम्—ख० ।

ऊद्ध्र्वकोणे ग्रीष्मकालं शिशिरञ्चापि दक्षिणे ।
वर्षाकालमधस्तस्य सर्वाधश्च वसन्तकम् ॥ २१ ॥
शरत्कालं पञ्चकोशे शीतकालञ्च षष्ठके ।
त्रिकोणे चापि तन्मध्ये वह्निरूपं वकारकम् ॥ २२ ॥

इसके बाद 'ईशानाय सूर्यमूर्तये नमः' यह अष्टम मूर्ति ईशान कोण में लिखे । इसके बाद फिर षड्दल के मध्य भाग में पुनः षटकोण का निर्माण करे । उसके ऊर्ध्वकोण में ग्रीष्म काल लिखे दक्षिण में शिशिर लिखे । नीचे वर्षा काल और फिर सबसे नीचे बसन्त लिखे । इसके बाद साधक पाँचवें खाने में शरत्काल एवं षष्ठ कोष्ठ में शीतकाल लिखे । पुनः उसके मध्य में त्रिकोण का निर्माण कर तीन बार 'व' ( व व व ) वर्ण को लिखे ॥ २०-२२ ॥

लिखित्वा गणयेन्मन्त्री वर्णदेवाङ्कवह्निभिः ।
एतच्चक्रं महासूक्ष्मं[१] फलचक्रं विशारदम् ॥ २३ ॥

मन्त्रज्ञ साधक इस प्रकार लिखकर 'वर्ण' 'देवता' तथा 'अङ्क' से प्रारम्भ कर तीन तीन बार गणना करे। यह चक्र महासूक्ष्म तथा बहुत बड़ा चक्र **फलचक्र** के नाम से प्रसिद्ध है ॥ २३ ॥

### प्रश्नफलबोधक चक्र

अधुना कुलनाथेश [२]पृष्ठचक्रं पुनः शृणु ।
विना ज्ञानेन यस्यैवं पृष्ठभावो[३] न जायते ॥ २४ ॥
यदि[४] पृष्ठचक्रभावं जानाति साधकोत्तमः ।
तदा निजफलं ज्ञात्वा सिद्धिमाप्नोति निश्चितम् ॥ २५ ॥

हे नाथ ! अब पृष्ठचक्र को पुनः सुनिए । जिसके बिना जाने पृष्ठ ( प्रश्न ) का ज्ञान नहीं होता । यदि उत्तम साधक पृष्ट ( प्रश्न ) चक्र का भाव ( फल ) जान ले । तब वह अपना फल भी ज्ञात कर निश्चित रूप से सिद्धि प्राप्त कर लेता है ॥ २४-२५ ॥

आनन्दभैरव उवाच[५]

षट्कोणं कारयेन्मन्त्री विना त्रिकोणसाधनैः ।
तन्मध्ये च चतुष्कोणं तन्मध्ये शादिवर्णकान् ॥ २६ ॥
लिखित्वा विलिखेत्तत्र षडङ्कमध्यदेशतः ।
षडङ्कं दापयेन्मन्त्री दीर्घदीर्घक्रमेण तु ॥ २७ ॥

**आनन्दभैरव ने कहा**—मन्त्रज्ञ साधक बिना त्रिकोण बनाये ही षट्कोण का निर्माण करे, उसके मध्य में चतुष्कोण फिर उस चतुष्कोण में 'श ष स ह' इन वर्णों को लिखे । ऐसा लिखने के बाद ६ अङ्क के मध्य देश से आरम्भ करके दीर्घ क्रम से ६ अङ्क भी स्थापित करे ॥ २६-२७ ॥

---

१. सिद्ध्या—ख० । २. राशिचक्रम्—ख० ।
३. प्रश्नभारो—ख० । ४. प्रश्नचक्र—ख० ।
५. आनन्दभैरव उवाच—क० पुस्तके नास्ति ।

तदग्रे षड्गृहं कुर्यात्तत्राङ्कार्णान् लिखेत्सुधीः ।
ऊर्द्ध्वप्रथमगेहे च कवर्गं विलिखेद् बुधः ॥ २८ ॥
तद्दक्षिणे मन्दिरे च चवर्गं विलिखेद् बुधः ।
टवर्गं दक्षिणे चाधः सर्वाधस्तु तवर्गकम् ॥ २९ ॥

उसके आगे ६ गृह बनावें । उसमें अङ्कों को तथा अक्षरों को इस प्रकार क्रम से लिखे । ऊपर वाले प्रथम गृह में बुद्धिमान् मन्त्रवेत्ता, क वर्ग लिखे । उसके दक्षिण भाग में स्थित द्वितीय गृह में च वर्ग लिखे और दक्षिण गृह के नीचे ट वर्ग तथा सबसे नीचे त वर्ग लिखे ॥ २८-२९ ॥

तद्वामे मन्दिरे नाथ पवर्गं वर्णमङ्गलम् ।
तदूर्ध्वे यादिवान्तं च दक्षिणावर्त्तयोगतः ॥ ३० ॥
अकारादिस्वरान् तत्र मन्दिरे विलिखेद् बुधः ।
यावत् स्वरस्थितिर्याति तावत्कालं विचारयेत् ॥ ३१ ॥
मेषादिराशिसद्भावं वर्गलेखनमानतः ।
अनुलोमविलोमेन विलिखेत् षष्ठमन्दिरे ॥ ३२ ॥

हे नाथ ! फिर उसके बायीं ओर वाले गेह में सभी वर्णों में मङ्गल देने वाला प वर्ग लिखे और उसके ऊपर 'य र ल व' दक्षिणावर्त योग से लिखे । बुद्धिमान् मन्त्रज्ञ उसी मन्दिर में अकारादि स्वरों को लिखे और जब स्वर लिख ले तब विचार प्रारम्भ करे । जहाँ क वर्गादि वर्ग का नाम लिखा है वहीं उन छः गृहों में मेषादि राशियों को भी अनुलोम विलोम क्रम से लिखे ॥ ३०-३२ ॥

यद्यद्गृहे साध्यनाम चास्ति नाथ स्वरादिकम् ।
एकत्रीकृत्य[१] हरणात् यदङ्कं[२] प्राप्यते वरम् ॥ ३३ ॥
षडङ्केन ततो नाथ हरेदनलसंख्यया ।
यदङ्कं प्राप्यते तत्र स राशिस्तत् क्षणस्य च ॥ ३४ ॥

जिस जिस गृह में साध्य का नामाक्षर तथा उसमें होने वाले स्वरादि आवें, उन सबको एक स्थान पर रख कर जोड़ने से जो ( योगफल ) अङ्क प्राप्त हो, हे नाथ ! उसमें ६ का भाग देवे । फिर उसमें अनल संख्या ३ जोड़ दें । ऐसा करने से जो अङ्क प्राप्त हो वही उस क्षण की राशि जाननी चाहिए ॥ ३३-३४ ॥

## आज्ञाचक्रकथनम्

आज्ञाचक्रं फलं सिद्धं विद्यानाथ वदामि तत् ।
येन विज्ञातमात्रेण सर्वज्ञो भवति ध्रुवम् ॥ ३५ ॥

---

१. एकस्थीकृत्य, इति पाठ उचितः ।
अथवा—एवकं त्रायते इति एकत्रम् । अनेकत्रमेकत्रं कृत्वा इति एकत्रीकृत्य ।
२. हरेदङ्कं वाञ्छितम्—ख० ।

अकस्मात् शक्तिमाप्नोति विद्यारत्नं ददामि तत् ।
रव्यादिसप्तवारञ्च कृते भद्रविवर्धनम् ॥ ३६ ॥

हे नाथ ! अब आज्ञाचक्र पर सिद्ध किए गये फलों को आप से कहती हूँ, जिसके जान लेने मात्र से साधक निश्चित रूप से सर्वज्ञ हो जाता है । जिससे अकस्मात् सिद्धि प्राप्त होती है, अब उस विद्या रत्न को मैं कहती हूँ । रवि आदि से प्रारम्भ सात वार सत्ययुग में मनुष्यों के कल्याणों को विवर्द्धन करने वाले थे ॥ ३५-३६ ॥

शन्यादिसप्तवारं च त्रेतायां सौख्यवर्द्धनम् ।
गुर्वादिसप्तवारञ्च द्वापरे धर्मसाधनम् ॥ ३७ ॥
शुक्रादिवारसप्तञ्च कलौ युगफलप्रदम् ।
अतः शुक्रादिपर्यन्तं गणनीयं विचक्षणैः ॥ ३८ ॥

इसके बाद त्रेता युग में शनि से आरब्ध सात बार मनुष्यों का सौख्य संपादन करते थे । इसके बाद गुरु से प्रारम्भ कर सात बार द्वापर में धर्म साधन के हेतु हुये । किन्तु कलियुग में शुक्र से प्रारम्भ कर सात बार फल देने वाले हुये अतः कलयुग होने के कारण विचक्षण पुरुष को शुक्रवार से ही गणना प्रारम्भ करनी चाहिए ॥ ३७-३८ ॥

गणयेत् सप्तवारञ्च मध्ये चतुर्दले सुधीः ।
पूर्वादिक्रमतो वारान् गणयेद् तन्त्रवित्तमः ॥ ३९ ॥
निजवारो यत्र पत्रे समाप्तिस्तूद्भवञ्च तत् ।
तद्भराशिं समानीय वर्णभेदं समानयेत् ॥ ४० ॥

सुधी साधक चतुर्दल के मध्य में पूर्वादि दिशा के क्रम से शुक्रवार से प्रारम्भ कर सातों वारों की गणना करे । अपना वार जिस पत्र पर समाप्त हो वही वार उद्भव (पैदा होने वाला) समझना चाहिए । उसी से नक्षत्र तथा राशि बनाकर उसके वर्णभेद (बाँटना) को समझना चाहिए ॥ ३९-४० ॥

सामान्यफलमूलञ्च वदार्णादिपत्रभेदतः ।
आज्ञाचक्रं शुभं मन्त्री आज्ञाचक्रं विचारयेत् ॥ ४१ ॥
तत्फलाफलमाहात्म्यं शृणु सङ्केतपण्डित ॥ ४२ ॥

वर्णों के आदि से तथा पत्रों के भेद से सामान्य फल का मूल समझना चाहिए । आज्ञाचक्र अत्यन्त शुभकारी है । अतः मन्त्रसाधक को आज्ञाचक्र का विचार अच्छी तरह जानना चाहिए। अब हे सङ्केत के पण्डित ! उसके फलाफल के माहात्म्य को सुनिए ॥ ४१-४२ ॥

आनन्दभैरव[1] उवाच

दले पूर्वभागे आकारार्ध इन्दु-
स्फुटे राज्यलाभं हकारान्तशब्दम् ।

---

१. आनन्दभैरवी उवाच—क० ।

सामानार्थभावं विशिष्टार्थयोगं
क्रतुक्षेमयुक्तं तथा पुत्रलाभम् ॥ ४३ ॥

**आनन्दभैरव ने कहा**—पूर्व दिशा में रहने वाले आकार का अर्ध ( अर्थात् अ ) जिस पर चन्द्र बिन्दु हो ( अर्थात् अं ) तथा हकारान्त शब्द ( अः ) हो तो राज्य का लाभ होता है । १. समान रूप से अर्थ की प्राप्ति तथा २. विशिष्ट अर्थ का योग ३. क्रतु ( पुण्यकार्य ) क्षेम से युक्त एवं पुत्र रत्न की प्राप्ति होती है ॥ ४३ ॥

दयायुक्तभूषाश्रयत्वं जयत्वं
समाप्नोति मर्त्यो विवाहं सुवाहम् ।
सुखं नाथ लोकानुरागं सुभोगं
विभाधावकानां समाप्ते क्षणादिम् ॥ ४४ ॥

ऐसा मनुष्य दया से युक्त भूषण का आश्रय वाला, विजयी तथा उत्तम विवाह ( पत्नी पुत्र का भोग ) प्राप्त करता है । हे नाथ ! उसे सुख एवं लोगों का अनुराग तथा भृत्यों से युक्त सुन्दरभोग प्राप्त होता है ॥ ४४ ॥

पद्मे दक्षिणपत्रके प्रियपदा मोददहं[1] भास्वरं
नानालक्षणदुःखदं शुचिपदा आन्दोलितस्तैरहम् ।
माहेन्द्रामृत[2]योगरागहननं साक्षाद्यमारोपणं
चित्तानां परिचञ्चलं खलगुणाह्लादेन सामोदितम् ॥ ४५ ॥

कमल के दक्षिण दिशा के पत्र में रहने वाली प्रियपदा मोद ( प्रसन्नता ) को जलाने वाली, तथा भास्वर वर्ण की है वह अपने अनेक लक्षणों द्वारा दुःख देने वाली शुचिपदा है, उससे मैं भी कम्पित होती हूँ, वह महेन्द्र के भी अमृतयोग के राग का हनन करने वाली है, साक्षात् यम को आरोपित करती है । वह सबके चित्त को चञ्चल करने वाली तथा दुष्ट गुणों के आह्लाद सामोद् ( प्रसन्नता पूर्वक ) रहने वाली है ॥ ४५ ॥

पात्रार्थलाभं यदि वाध एव प्रगच्छति क्रूरखलप्रतापः ।
तथापि हन्तुं न च वर्णमध्ये क्षमः स्वसिद्धं भजते क्षमादि ॥ ४६ ॥

सुपात्र का लाभ करने वाली हैं तथा समस्त बाधाओं का तथा दुष्टों की दुष्टता एवं प्रताप को नष्ट करने वाली हैं । वे वर्णमध्य में क्षमा रूप से प्रतिष्ठित हैं जिन स्वयंसिद्धा की साक्षात् क्षमा आदि भी भजन करते हैं ॥ ४६ ॥

रसार्थप्रश्नं कुरुते यदि स्याद् वारो हि चारो गृहमध्यभागे ।
स्वकीय इन्दुप्रियवद् भवेद् ध्रुवम् मनोगतं सौख्यविवर्धनञ्च ॥ ४७ ॥

यदि रसार्थ प्रश्न गृहमध्य में किया जाय तो युग के आरम्भ के अनुसार सातों वरों के चार अर्थात् संचार के अनुसार वह निश्चित ही स्वकीय इन्दु का प्रिय अर्थात् अपने प्रिय का प्रेमी हो जाता है तथा मनोभिलषित वस्तु प्राप्त होकर सौख्याभिवर्धन होता है ॥ ४७ ॥

---

१. मोदप्रदम्, इति पाठ उचितः । २. माहेन्द्रामृतयोगे यो रागः, तस्य हननं यस्मिन् ।

वाग्देवताध्यानम्

शत्रूणां हननं तदा कुलगतं सञ्चारवातं मुदा
रोगाणां परिमर्दनं प्रभुपदे भक्त्यर्थिनां ज्ञापनम् ।
आह्लादं हृदयाम्बुजेऽमृतधनं तीर्थागमं शोकहं
सूक्ष्मार्थं गणयेत्ततः प्रचपला वाग्देवतादर्शनम् ॥ ४८ ॥

वे शत्रुओं का हनन करने वाली हैं तथा कुलगत संस्कारों का सञ्चार करने वाली हैं। वे रोग का नाश करने वाली एवं प्रभु की भक्ति का बोध कराने वाली हैं । जिनका हृदयरूपी कमल का अमृतरूपी धन आह्लाद देने वाला है तथा जो तीर्थ एवं आगम से शोक का नाश करने वाली हैं उन सुक्ष्मार्थ गणों में श्रेष्ठ प्रचलपा वाग्देवता का मैं ध्यान करता हूँ ॥ ४८ ॥

आथर्वे पत्रमध्ये निवसति कमला कोमला वाद्यदात्री
आगन्तव्यादिवार्ता कथयति सहसा सर्वदा मङ्गलानि ।
नित्यावश्यं प्रतापं प्रियगणहितां प्रेमभावाश्रयत्त्वं
नित्यं कान्तामुखाम्भोरुहविमलमधुप्रेमपानाभिलाषम्[1] ॥ ४९ ॥

आथर्व पत्र ( चौथे ) पत्र में कोमल स्वभाव वाली वाद्यों को देने वाली तथा कमला का निवास है । वह किसी आने वाले का सन्देश सहसा कहती है, सर्वदा मङ्गल करती है, नित्य आवश्यक प्रताप उत्पन्न करती है, प्रियगणों की हितकारिणी है, प्रेमभाव का आश्रय करती है, वह कान्ता के विमल कमल मुख के मधु प्रेम का अभिलाष उत्पन्न करती है ॥ ४९ ॥

मेषे तृप्तिमुपैति सिंह इषुभिः कुम्भेन तेषां फलं
लाभं कुञ्जरघातकेषु रजतं चौर्येण यद्यद्गतम् ।
एवं कास्यविहारणं शतपले सूर्योदयात्तिष्ठति
प्रातः कालफलाफलं कथयति श्रीकेशरीमध्यगः ॥ ५० ॥

मेष में प्रश्नकर्ता सदैव तृप्ति करता है, सिंह का धनु तथा कुम्भ राशि के साथ फल इस प्रकार है—सिंह राशि वाले को रजत की प्राप्ति तथा चोरी से प्राप्त माल का लाभ होता है । सूर्योदय से १०० पल तक कास्य विहारण स्थित है । इस प्रकार सिंह राशि वाला पुरुष प्रातः काल अपने फलाफल को प्रगट करता है ॥ ५० ॥

पश्यादेकशतं पलेन्दुधनुषा व्याप्तं यदा भूतले
वित्तानां हरणं तदा जलगते मित्रस्य राज्यादिकम् ।
दूरस्थादिकथागतादिसमयं शत्रोर्महापीडनं
वाञ्छावर्गकुलोदयं समुदयात् सूर्यस्य चागण्यते ॥ ५१ ॥

धनु राशि वाला भूतल में अपने इन्द्र धनुष से एक सौ धनुष् पर्यन्त देखता है ॥ ५१ ॥

---

१. कान्तामुखमम्भोरुहं कमलमिव शोभनगन्धाधायकं तस्य यद् विमलं मधु, तत्र यत्प्रेम, तस्य पाने अभिलाषो यस्य ।

शेषे चैकशते फले समुदिते कुम्भो महादुर्बली
दारिद्र्यस्य कथा कदा सुविषयं विद्यार्थभूषञ्च यम् ।
लाभं देशविदेशकार्यगमनं शीघ्रं धनाद्यागमं
देवानां खलु दर्शनार्थकथनं व्यामोहसन्नाशनम् ॥ ५२ ॥
वारे शुक्रे शनिगतदिन लवटाहौ च सूर्ये
नित्यं ज्ञानोदयनिजपथ आयुषां निर्णयं तत् ।
अष्टौ वर्गानुदयति मुदा प्राप्य वीरो महत्त्वं
लोको दोषं प्रथमखचरे चायुषां पृष्टमात्रम् ॥ ५३ ॥

॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावप्रश्नार्थबोधनिर्णये पाशवकल्पे आज्ञाचक्रसारसङ्केते सिद्धमन्त्रप्रकरणे भैरवीभैरवसंवादे द्वादशः पटलः ॥ १२ ॥



अर्थ अस्पष्ट है ॥ ५२-५३ ॥

**॥ श्री रुद्रयामल के उत्तरतन्त्र में महातन्त्रोद्दीपन के भावप्रश्नार्थबोधनिर्णय में पाशव कल्प के आज्ञाचक्र सारसंकेत में सिद्धमन्त्र प्रकरण में भैरवीभैरव संवाद में द्वादश पटल की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ १२ ॥**



# अथ त्रयोदशः पटलः

आनन्दभैरवी[1] उवाच

**आज्ञाप्रश्नार्थभावञ्च वर्णविन्यासनिर्णयम् ।**
**अधुना शृणु सर्वज्ञ भावज्ञानपरायण ॥ १ ॥**

**आनन्दभैरवी ने कहा**—हे सर्वज्ञ ! हे भावज्ञान परायण ! अब आज्ञाचक्र पर किए गये प्रश्नों के फल एवं भावों को तथा उसमें स्थित वर्ण विन्यास के निर्णय को सुनिए ॥ १ ॥

**यदि मेषे स्वनक्षत्रं स्ववारसंयुतं शुभम् ।**
**ज्ञात्वा शुभादिपत्रञ्च पलमानेन साधकः ॥ २ ॥**
**गणयेद् वर्णसारञ्च येन तत्प्रश्ननिर्णयः ।**
**पूर्वे दले ककारस्य वर्णभेदं शृणु प्रभो ॥ ३ ॥**

यदि मेष राशि पर अपने जन्म वार से संयुक्त स्व नक्षत्र हो तो शुभकारक है । इसी प्रकार साधक पलादि मान से शुभादि पत्रों का ज्ञान कर वर्णों की गणना करें, जिससे प्रश्नों के फल का निर्णय किया जा सके । हे प्रभो ! अब पूर्व दिशा के पत्र पर स्थित, ककार के वर्ण भेदों को सुनिए ॥ २-३ ॥

**मनसि सुखसमूहं प्राणसौख्यार्थचिन्ता**
**वसनगमनलाभं प्रीतिपुत्रार्थयोग्यम् ।**
**स्थिरपदमपि देशे दर्शनं प्राणबन्धोः**
**सकलकलुषहानिश्चादिपत्रे ककारे ॥ ४ ॥**

**प्रथम दल का फलादेश**—पूर्व दल पर स्थित प्रश्नकर्ता के प्रश्न का आद्य अक्षर ककार हो तो प्रश्नकर्ता के मन में सुख समूह तथा प्राण सौख्य के लिए चिन्ता है—ऐसा कहना चाहिए । उसे वस्त्रादि की प्राप्ति तथा यात्रा से लाभ होगा । प्रीति, पुत्र तथा अर्थ का भी लाभ होगा, देश में स्थिरपद की प्राप्ति तथा प्राणप्रिय बन्धु का दर्शन होगा । किं बहुना, उसके समस्त कलुष का नाश होगा—ऐसा कहना चाहिए ॥ ४ ॥

**सदा नृनासिके सुखं सुखोल्बणस्य सेवनं**
**सदाशिवे च भक्तिदं स्वकीयगेहसत्फलम् ।**
**कलाधरस्य दृष्टिभिः प्रधानलोकपूजनं**
**हिताहितं न बाधते विवाहकेलिना सुखम् ॥ ५ ॥**

---

१. आनन्दभैरव उवाच—ख० ।

पूर्वदल स्थित प्रश्नकर्ता के प्रश्न का आद्य अक्षर नृनासिक ( **इकार** ? ) हो तो प्रश्नकर्ता सुखी रहता है, उसे उत्तमोत्तम सुख प्राप्त होता है । इस प्रकार वह इकार सदाशिव में भक्ति प्रदान करता है और उसे अपने घर पर ही समस्त सुन्दर फल प्राप्त होते हैं । यदि उस पर चन्द्रमा की दृष्टि हो तो वह प्रधान होता है और लोगों से पूजित होता है । उसके हित में किसी का अहित बाधा नहीं करता तथा विवाह केलि से उसे सुख की प्राप्ति होती है ॥ ५ ॥

**ऋकारं विपदां ध्वंसं धैर्ये विद्याविबोधनम् ।**
**व्याधिपीडादुर्जनानां पीडाप्रश्नं वदेत्तदा ॥ ६ ॥**
**उकारे वायुभावस्य वृथागमनमेव च ।**
**दारिद्र्यहानयोर्यान्ति[1] दूरागमनदुर्लभम् ॥ ७ ॥**

यदि प्रश्नकर्ता के प्रश्न का आद्य अक्षर **ऋकार** हो तो वह प्रश्नकर्ता के व्याधि तथा दुर्जनों द्वारा दी गई पीड़ा को सूचित करता है । उसका फल विपत्तियों का नाश, धैर्य प्राप्ति तथा विद्या से ज्ञान प्राप्ति होगी—ऐसा कहना चाहिए । पूर्वदल स्थित **उकार** प्रश्न का आद्य अक्षर हो तो वायु का विकार बतलाना चाहिए । उसके यात्रा में आने का फल व्यर्थ है । उसे दरिद्रता तथा हानि की प्राप्ति होती है। उसका यात्रा में दूर जाना भी दुःखकारक है ॥ ६-७ ॥

**खकारे द्रव्यप्रश्नञ्च शुभकार्ये गते भयम् ।**
**आशु भयं समाप्नोति प्राप्य[2] निर्धनतां व्रजेत् ॥ ८ ॥**
**पञ्चत्वजिज्ञासनमेव सत्यं नित्यं सुखानामुदयाय चेष्टा ।**
**शत्रोर्विनाशाय हिताय बन्धोः पकारकूटे परचौरचेष्टा ॥ ९ ॥**

प्रश्न में आद्य अक्षर **खकार** होने से द्रव्य विषयक प्रश्न कहना चाहिए । उसे शुभ कार्य करने में भय है । अतः शीघ्र ही ऐसे भय की प्राप्ति उसे होने वाली है, जिससे वह निर्धन हो सकता है । प्रश्न का आद्य अक्षर **पकार** हो तो दूसरे की चोरी की चेष्टा विषयक प्रश्न का फल कहना चाहिए । वह किसी के मृत्यु की जिज्ञासा से आया है । यह बात सत्य है कि उसकी नित्य की चेष्टा अपने सुखों की प्राप्ति, शत्रु का विनाश तथा बन्धु गणों का हित करना ही रहता है ॥ ८-९ ॥

**कैवल्यादिसमापनं निजमनो दुष्टव्यापहं कामिनां**
**नानाभोगविनाशनं कनकरौप्यराजप्रदं स्वके ।**
**मारीभीतिविरोधनं धनपतेरानन्दपुञ्जोदयं**
**गोविद्याश्रियमाशु लाभविविधं धर्मार्थचिन्ताकुलम्[3] ॥ १० ॥**
**हरिपूजा हरिध्यानं हरिपादाम्बुजे रतिः ।**
**चौर्याहरणद्रव्यस्य न हानिर्जन्महार्दके ॥ ११ ॥**

---

१. दारिद्र्यं च हानं च तयोः ।
२. प्र + आप्त्वा इत्यत्र नित्यसमासे ल्यपि सति साधुता ।
३. इदं छन्दस्त्रुटितं प्रतिभाति । बहुशः प्रयत्ने कृतेऽपि पूरकमुपकरणं नावाप्तम् । असंगतोऽयं टिप्पणं संस्कृतविश्वविद्यालयस्य मुद्रितसंस्करणे ।

जन्म नक्षत्र के **हार्दक** ( अ अक्षर ? ) होने से ( धर्म अर्थ काम ) मोक्ष आदि पुरुषार्थों की समाप्ति, अपने मन का दुष्टों से व्यापृत होना, कामियों के नाना प्रकार के भोगों का विनाश एवं चाँदी, सोना एवं राज पद प्राप्ति का योग होता है ( स्वके ? ) । किन्तु यदि वह स्वगृही हो तो प्रश्नकर्ता को मारी का भय जाता रहता है । किसी धनपति से आनन्द पुञ्ज की प्राप्ति होती है । गाय, विद्या तथा श्री की संप्राप्ति तथा अनेक प्रकार का लाभ होता है । ऐसा व्यक्ति धर्म अर्थ की प्राप्ति के लिए चिन्ताकुल रहता है । उसका मन हरिपूजा, हरिध्यान, तथा हरि के चरण कमलों में आसक्त रहता है । चोरी से आहृत किए गये द्रव्यों से उसकी हानि नहीं होती ॥ १०-११ ॥

**आकारे तेजसो हानिर्महाशब्दे विनाशनम् ।**
**आगतानाञ्च हानिः स्यात् पक्षपातं गतौ जयम् ॥ १२ ॥**
**उशतो निजगेहस्था उल्बणव्याधिपीडनम् ।**
**उत्साहध्वंसशून्यञ्च पाठे पाण्डित्यमुल्बणम् ॥ १३ ॥**

**आकार** प्रश्न का आद्य अक्षर होने पर प्रश्नकर्ता के तेज की हानि होती है । किसी महाशब्द से विनाश तथा आई हुई संपत्ति से हानि उठानी पड़ती है । उसे विजय की प्राप्ति तभी होती है जब पक्षपात किया जाय । अपने गेह में कटु अक्षर के होने पर बहुत बड़ी व्याधि से पीड़ा की संभावना, उत्साह का ध्वंस, शून्यता तथा पाठ करने में उत्कट पाण्डित्य प्राप्त होता है ॥ १२-१३ ॥

**दीर्घलृकारवर्णे च लावण्यलोचनो नृपः ।**
**लज्जानष्टक्षेमबुद्धिर्मित्रतुल्यप्रियो भवेत् ॥ १४ ॥**
**दीर्घप्रणवमोङ्कारे निराश्रयो न जीवति ।**
**महदाश्रयमात्रेण सर्वं चूर्णं करोति हि ॥ १५ ॥**

दीर्घ **लृकार** वर्ण में प्रश्न करने पर प्रश्नकर्ता उत्तम नेत्रों वाला राजा के समान होता है, उसमें लज्जा रहती है । उसका क्षेम कभी नष्ट नहीं होता । वह बुद्धिमान् होता है तथा मित्र के समान सबका प्रिय होता है । दीर्घ प्रणव युक्त ॐकार में प्रश्न होने पर वह प्रश्नकर्ता निराश्रय होता है । उसका जीवन नष्ट हो जाता है । महत्त्व के आश्रय मात्र से वह अपना सब कुछ नष्ट कर देता है ॥ १४-१५ ॥

**सिंहे कार्मुकमेषलग्नसमये नित्याशिषं प्राप्नुयात्**
**किञ्चिद्भाति पराक्रमी गतिमतां श्रेष्ठो भवेत् कर्मणि ।**
**किञ्चिद्दोषकुलापहं नरपतेरुत्साहसंवर्धनं**
**क्रोधी नित्यपराक्रमी भवति सः शीघ्राभिलाषान्वितः ॥ १६ ॥**

सिंह, धनुष तथा मेष लग्न में प्रश्न करने पर प्रश्न कर्ता को नित्य मङ्गल की प्राप्ति होती है । वह पराक्रम से कुछ ही आगे बढ़ता है । किन्तु कर्म में वह सभी गतिमानों से श्रेष्ठ रहता है । वह ऐसे दोषों से ग्रस्त रहता है जो उसके कुल को हानि पहुचाते हैं । किन्तु राजा के उत्साह को बढ़ाने वाले होते हैं । वह क्रोधी तो होता हैं पर नित्य पराक्रमशील भी होता है । किं बहुना वह शीघ्र ही अपनी अभिलाषा पूर्ण करने में समर्थ होता है ॥ १६ ॥

**अथ वक्ष्ये महादेव वीराणामुत्तमोत्तम ।**
**सर्वशास्त्रार्थतत्त्वज्ञ तत्त्वज्ञानपरायण ॥ १७ ॥**
**दक्षिणस्थदलस्यापि वर्णभेदार्थनिर्गमम् ।**
**फलमत्यन्तनिष्कर्षं वाञ्छावाक्यफलप्रदम् ॥ १८ ॥**

**पूर्वदिशा के पत्र के वर्ण तथा उनके फल ( द्र०. १३. ३-१६ )**—हे वीरों में उत्तमोत्तम ! हे महादेव ! हे सर्वशास्त्रार्थ तत्त्वज्ञ ! हे तत्त्वज्ञान परायण ! अब दक्षिण दिशा में रहने वाले पत्र के वर्ण भेदों के अनुसार अर्थ का निर्गम तथा निष्कर्ष युक्त उनके फल को कहती हूँ जो प्रश्नकर्ता के द्वारा किए गये अभिलषित वाक्यों के अनुसार फल प्रदान करते हैं ॥ १७-१८ ॥

**कान्ते बीजे [1]कमलनिलया गेहभागस्थिरा या**
**नानादेशभ्रमणभयदा नैव कुत्रापि सुस्था ।**
**चण्डोद्वेगापहसति खलानाञ्च हानिः प्रबुद्धो**
**वाणी वश्या वसति वदने चक्रिणां हानयः स्युः ॥ १९ ॥**

**कूटफलविचार**—कान्त बीज ( खकार ) में प्रश्नकर्ता के हाथ रखने से ऐसी लक्ष्मी उसके गेह भाग में स्थिर रहती हैं जो अनेक देशों में भ्रमण करने वालों को भय प्रदान करती हैं । किं बहुना वह कहीं भी ठीक प्रकार से स्थिर नहीं रहने वाली हैं जो प्रचण्ड उद्वेग करने वाली है और मनुष्यों का उपहास करती है । ऐसा प्रश्नकर्ता प्रबुद्ध रूप से खलों की हानि करता है । उसके मुख कमल में वाणी वशीभूत हो कर निवास करती है तथा उसके शत्रुओं को नाना प्रकार की हानि उठानी पड़ती है ॥ १९ ॥

**चारुप्रतापं चरणे गुरूणां भक्तिर्दृढा स्याद् गमनेषु चारु ।**
**तदागतानां नृपतिप्रियाणां सम्प्रेरणं चारुफलञ्च कूटे ॥ २० ॥**

'च' कूट में हाथ रखने वाला प्रश्नकर्ता उत्तम प्रताप ( तेज ) से युक्त रहता है । गुरु चरणों में उसकी भक्ति दृढ़ होती है । उसकी यात्रा फलदायक होती है उसके यहाँ आये हुये राजा के प्रिय उसे उत्तम प्रेरणा प्रदान करते है । इस प्रकार चकार कूट के प्रश्न का सुन्दर फल है ॥ २० ॥

**कान्तेषु कान्तावदनारविन्दे सुषट्पदत्वं रमणीविलासम् ।**
**आयुः क्षयोद्वेगविनाशकरणं चाकर्षणं देशसुखं धनानाम् ॥ २१ ॥**
**टकारे धारणं देशे सुखं शेषे निशामुखम् ।**
**विदेशस्थधनादीनां स्यादागमनमुत्तमम् ॥ २२ ॥**

**कान्त** वर्ण ( ख ) पर हाथ रखने वाला प्रश्नकर्ता स्त्री के मुख कमल का भ्रमर होता है । सुन्दर रमणी का विलास प्राप्त करता है । आयु के क्षय का उद्वेग उसके विनाश में कारण होता है । धन के प्रति उसका अधिक आकर्षण होता है । फिर भी अपने देश के

---

१. कमलस्य निलयः, अथवा कमलं निलयः यस्याः सा कमलनिलया ।

सुख उसे प्राप्त होते हैं । **टकार** में हाथ रखने वाला प्रश्नकर्ता देश में निशामुख के शेष हो जाने पर, सुख प्राप्त करता है । उसे विदेश में रहने वाले उत्तम धन का आगमन होता रहता है ॥ २१-२२ ॥

**दकूटमधनं विना भवति विघ्नहानिः सदा**
**जयं स्वगृहकामिनो कमलनेत्रकान्ता यथा ।**
**सुसिद्धकरमेव हि प्रबलभावनातो भवेत्**
**भवे जयति मानुषस्तु पृष्टस्य जिज्ञासने ॥ २३ ॥**

**दकूट** में निर्धनता को छोड़कर सदैव विघ्नों का विनाश होता रहता है, अर्थात् ऐसा प्रश्नकर्ता निर्धन रहता है । किन्तु उसकी अपनी स्त्री कमलों के समान नेत्र वाली तथा सुन्दरी होती है । उसके सारे कार्य सुसिद्ध रहते हैं । वह अपनी प्रबल भावना से संसार में विजय लाभ करता है । पूछी हुई जिज्ञासा में वह एक सामान्य मनुष्य के समान जाना जाता है ॥ २३ ॥

**व्याख्यातं मुनिभिः फलं फलमयं कालं[१] रिपूणां सदा**
**लोकानां वशकारणं कुलवरो वेदागमे पारगः ।**
**प्राप्नोति प्रियपुत्रकं नरपतेरुत्साहसं कारणं**
**कार्ये दुर्जनपीडनं भयसमूहानां विनाशङ्कके[२] ॥ २४ ॥**

मुनियों ने सदैव ही इस **फलमय** फल को शत्रुओं के कालरूप में व्याख्यान किया है । उक्त प्रश्नकर्ता समस्त लोक को अपने वश में रखने के कारण कुल में श्रेष्ठ होता है । वह वेद का पारगामी विद्वान् होता है और प्रिय पुत्र को प्राप्त करता है । नरपति के उत्कट साहस का कारण बनता है । भय समूहों के कार्य में वह बिना शंका ( हिचक ) के दुर्जनों को पीड़ा पहुँचाता रहता है ॥ २४ ॥

**यशसि वयसि तेजो बुद्धिरेव यकूटे**
**समयफलभूपोल्लासवृद्धिः समृद्धया ।**
**यजनमपि सुराणां चौर्यमात्रं न भूया—**
**दतिशयधनवृद्धिः क्रेयविक्रेयकाले ॥ २५ ॥**

यकूट में प्रश्न करने वाला यश में तथा वय में तेजस्वी एवं बुद्धिमान् होता है, वह अपनी समृद्धि से एवं समय फल से राजा के उल्लास को बढ़ाने वाला होता है । देवताओं का पूजन करता है । चोरी नहीं करता । किन्तु वस्तुओं के खरीदने एवं बेचने के समय उसके धन की समृद्धि अपने आप होती रहती है ॥ २५ ॥

**शीतकाले धनप्राप्तिः स्वर्णरौप्यादिलाभकम् ।**
**पुत्रप्राप्तिः सुखप्राप्तिः सङ्कटे वदति ध्रुवम् ॥ २६ ॥**
**लक्ष्मीः प्रियं धनं दातुं मुदिता भूमिमण्डले ।**
**जलेन जायते हानिर्लयं देवे न कूटके ॥ २७ ॥**

---

१. कालम्—ख० । २. विनाशङ्कं स्वके—ख० ।

**प्रश्नाद्यक्षरमित्यादिस्वरमूलं हि यो नरः ।**
**जिज्ञासनं यदा कुर्यात् तदा स्यादुत्कटं फलम् ॥ २८ ॥**

उसे शीतकाल में सोना चाँदी का लाभ तथा धन की प्राप्ति होती है । उसे पुत्र एवं सुख प्राप्त होता है, सङ्कट काल में वह निश्चय ही सत्य बोलता है । इस भूमि मण्डल में प्रिय धन देने के लिए लक्ष्मी न कूट के प्रश्नकर्ता पर प्रसन्न रहती है । उसे जल से हानि की संभावना रहती है । वह देव में लय प्राप्त करता है । **स्वरों के फल** जो मनुष्य प्रश्न के आदि में मूल स्वर का उच्चारण करता है, तथा ऐसे प्रश्न से जिज्ञासा ( निर्णय ) शान्ति चाहता है, तब उसका उत्कट फल होता है ॥ २६-२८ ॥

**शृणु तत्तत् स्वरं नाथ एतत्पत्रस्थमाक्षयम् ॥ २९ ॥**
**इकारकूलमङ्गले धनादितृष्णयान्वितोः ।**
**विशेषधर्मलक्षणं धनञ्च पैतृकं लभेत् ॥ ३० ॥**

हे नाथ ! अब उस पत्र पर रहने वाले स्वरों के उन उन फलों का श्रवण कीजिए । इकार में प्रश्नकर्ता अपने कुल में मङ्गल प्राप्त करता है और धनादि की तृष्णा से युक्त रहता है । उसमें कुछ विशेष विशेष धर्म के लक्षण घटित होते हैं । किं बहुना, पैतृक धन भी उसे प्राप्त होता है ॥ २९-३० ॥

**गतिप्रियं सुदेवता सुसम्पदं सदासुखम् ।**
**तथा हि सूक्ष्मबुद्धिभिः परास्तमाकरोदरिम् ॥ ३१ ॥**
**ईकारमपरप्रियं परमतध्वंससंवर्द्धनम् ।**
**विदेशगमनं नहि प्रभवतीह बाह्यं दया ॥ ३२ ॥**

उसे गति ( ज्ञान ) प्रिय होता है । सुदेवता द्वारा सुसम्पत्ति प्राप्त होती है । वह सदासुखी रहता है, तथा अपनी सूक्ष्म बुद्धि से शत्रु का पराभव करता है । ईकार अक्षर में प्रश्न करने वाला अपर जनों का प्रिय होता है । पर मत के विध्वंस का वर्द्धन करने वाला तथा विदेश जाने वाला होता है । उसे निश्चित रूप से बाहरी जनों पर दया नहीं आती ॥ ३१-३२ ॥

**जगज्जनमभिप्रियं तरुणदोषसम्माननम् ।**
**विकाररहितं सुखं भवति पृष्ट आवेदके ॥ ३३ ॥**
**ए बीजे बद्धसन्तोषं कामनाफलसिद्धिदम् ।**
**वायुना हरणं चैव प्राप्नोति नृपमाननम् ॥ ३४ ॥**
**अमीत्येकाक्षरे बीजे बीजभूते जगत्पतेः ।**
**प्राप्नोति कन्यादानादिफलं वस्त्रञ्च तैजसम् ॥ ३५ ॥**

वह संसार में मनुष्यों का सब प्रकार से प्रिय होता है । तरुणों के दोषों का सम्मान करता है सब प्रकार के विकारों से रहित सुख प्राप्त करता है, पूछने पर आवेदन करने वाले से - - - । प्रश्नकर्ता द्वारा प्रश्न का आद्यअक्षर 'ए बीज' होने पर उसे वद्ध सन्तोषी समझना चाहिए । यह अक्षर कामनाफल की सिद्धि देने वाला है । यह वायु के विकार से ग्रस्त करता

है किन्तु राजा से सम्मान भी प्राप्त कराता है । जगत्पति भगवान् के बीजभूत 'अम्' इस एकाक्षर के प्रश्नाद्यक्षर होने पर प्रश्नकर्ता कन्यादानादि का फल, वस्त्र प्राप्ति तथा सुवर्णादि तैजस पदार्थ प्राप्त करता है ॥ ३३-३५ ॥

**गोकन्यामकरे खगे खगचरता सौन्दर्यलक्ष्मीर्भवेत्**
**शेषे [१]काञ्चनपुञ्जलाभमतुलं सन्तोषसारं गतौ ।**
**संसारे निजदायिका स्वजनता रत्नादिकं सञ्चयं**
**सर्वं सञ्चयति प्रभो हितकरं प्रश्नार्थमाद्याक्षरे ॥ ३६ ॥**

वृष, कन्या तथा मकर लग्न में प्रश्नकर्ता द्वारा, प्रश्न किए जाने पर वह आकाशमार्ग से चलने वाला होता है, तथा उसे सौन्दर्य लक्ष्मी स्वयं प्राप्त होती है । शेष लग्न में प्रश्न किए जाने पर अतुल सुवर्णराशि, ज्ञान में महान् सन्तोष, संसार में अपना उत्तरदायित्व तथा रत्नादि का सञ्चय करने वाला होता है । इस प्रकार प्रश्नकर्ता अपने प्रश्न में आद्यअक्षर ( अकार ) के उच्चारण से, हे प्रभो ! अपनी समस्त हितकारी वस्तुयें सञ्चित कर लेता है ॥ ३६ ॥

**तृतीयदलमाहात्म्यं [२] यद् यद् वर्णे विचारयेत् ।**
**प्रश्नाद्यक्षरवर्णेषु नीत्वा च गगनं चरेत् ॥ ३७ ॥**

इस प्रकार द्वितीय दक्षिण दल का फल कथन हुआ । ( द्र० १३. १८-३६ ) । **हे प्रभो ! अब तृतीय दल का माहात्म्य कहती हूँ**—प्रश्नकर्ता के प्रश्न के आद्यअक्षरों में जिन जिन वर्णों पर विचार करना चाहिए उसे आप सुनिए ॥ ३७ ॥

**तत्प्रकारं शृणु प्राणवल्लभ प्रेमपारग ।**
**यज्ज्ञानात् प्रश्नसिद्धिः स्यादकालफलदं नृपम् ॥ ३८ ॥**
**दृष्ट्वा ज्ञात्वा भावराशिमुत्तमाधममध्यमम् ।**
**लोकभावविधानज्ञो[३] निजविद्यादिकं[४] तथा ॥ ३९ ॥**
**सर्वं विषयरूपेण भावसारं विचारयेत् ।**
**गबीजं मङ्गलं ज्ञेयं फलमत्यन्तभाग्यदम् ॥ ४० ॥**

हे प्राणवल्लभ ! हे प्रेमपारग ! अब उसका प्रकार सुनिए जिसे जान कर अकाल फल देने वाले राजा को प्रश्न सिद्धि हो जाती है । सर्वप्रथम विचारकर्ता लोकभाव के विधान को जानने वाला उत्तम, अधम तथा मध्यम भावराशि तथा अपनी विद्या देखकर, समझ कर, सबको अपना विषय बनाकर, तब '**भावसार**' का विचार करे । 'ग' बीज प्रश्न के आद्यअक्षर में उच्चारण होने पर अत्यन्त मङ्गलकारी समझना चाहिए । उसका फल अत्यन्त भाग्य देने वाला होता है ॥ ३८-४० ॥

**गतद्रव्यादिलाभञ्च तथा लोकवशं फलम् ॥ ४१ ॥**

---

१. काञ्चनस्य सुवर्णस्य पुञ्जः समूहः, तस्य लाभस्तम् । २. राहित्यं यद्वा—ख० ।
३. लोकभावयोर्विधानं जानाति इति । ४. विद्यादिकम्—ख० ।

**दकारकूटे कठिनं रिपूणां विद्रावणं धर्मविनाशकस्य ।**
**भूमिपतेर्वा मरणं विनाशनं दिव्याङ्गनाया वररत्नलाभम् ॥ ४२ ॥**

नष्ट हुये द्रव्य का लाभ तथा लोक वशीकरण उसका फल है । दकार कूट प्रश्न का आद्य अक्षर होने पर कठिन से कठिन शत्रु भाग जाता है । धर्म विनाशक राजा का मरण अथवा विनाश हो जाता है और उसे दिव्याङ्गना स्वरूप श्रेष्ठ रत्न का लाभ होता है ॥ ४१-४२ ॥

**टकारे दूरगानाञ्च दर्शनं भवति ध्रुवम् ।**
**उद्वाहः पुत्रसम्पत्तिः षष्ठमासेन लभ्यते ॥ ४३ ॥**
**टान्ते चौरभयं नास्ति तद्द्रव्यागमनं भवेत् ।**
**विधिविद्याप्रकाशेन[1] शिवे विष्णौ च भक्तिमान् ॥ ४४ ॥**

प्रश्न का आद्यअक्षर 'टकार' होने पर दूर रहने वाले सम्बन्धी जनों का दर्शन होता है यह निश्चित है । ६ मास के भीतर उसका उद्वाह हो जाता है, अथवा पुत्र सम्पत्ति की प्राप्ति होती है । 'ट के अन्त का अक्षर अर्थात् 'ठकार' प्रश्न के आद्यअक्षर होने पर चोरों से भय नहीं होता । उसे द्रव्य का लाभ होता है, विधान पूर्वक विद्या के प्रकाश से प्रश्नकर्ता शिव और विष्णु की भक्ति करने वाला होता है ॥ ४३-४४ ॥

**धकारकूटे धरणीपतित्त्वं व्याधेर्भयं नास्ति तथा पशोश्च ।**
**प्रवेशमात्रेण गतौ कलापि जीवादिसम्पत्तिमुपैति लक्ष्मीम् ॥ ४५ ॥**

प्रश्न का आद्यअक्षर धकार होने पर प्रश्नकर्ता पृथ्वी का स्वामी बनता है, उसको तथा उसके पशुओं को व्याधि का भय नहीं रहता । गति में प्रवेश मात्र से वह कलाविद् हो जाता है । किं बहुना उसे जीवन रूप संपत्ति तथा लक्ष्मी की प्राप्ति भी होती है ॥ ४५ ॥

**रबीजे सिद्धः सम्यक् खगकुलवरो धीरगमनम्**
**वाञ्छातुल्यं विभवमतुलं राजराज्यप्रियं स्यात् ।**
**प्रतापं साम्राज्यं सकलहितगोलोकरसता**
**रसं सर्वं लोकं प्रियमतिसुखं लाभविविधम् ॥ ४६ ॥**

प्रश्न का आद्यअक्षर 'र' बीज होने पर उसके सारे कार्य भली प्रकार सिद्ध हो जाते हैं वह खगकुलों में सर्वश्रेष्ठ होता है । उसकी गति धीरतापूर्वक होती है, उसे अपनी अभिलाषा के अनुरूप अतुल वैभव प्राप्त होता है । वह राजा के राज्य का प्रिय हो जाता है । उसका प्रताप बढ़ता है । साम्राज्य की प्राप्ति होती है । सबका हित करता है । उसे गौओं से दूध, घी, दही आदि प्रचुर रसों की प्राप्ति, सर्वप्रियता अत्यन्त सुख तथा विविध लाभ होते है ॥ ४६ ॥

**चकारे[2] वह्निबीजे च जितं सर्वं चराचरम् ।**
**यथा [3]क्रमेण सर्वत्र गमने भाग्यदं फलम् ॥ ४७ ॥**

---

१. विधीनां विद्याः, तासां प्रकाशेन । २. वाकरे—ख० ।
३. जयेन—ख० ।

षकारमध्यमे देशे वार्त्तादिशादुपैति हि।
पत्रिकागमनं [1]कार्यं यः करोति धनं लभेत् ॥ ४८ ॥

पकार और वह्नि बीज ( रेफ ) अर्थात् प्र प्रश्न का आद्यअक्षर होने पर प्रश्नकर्ता ने सारे चराचर जगत् को जीत लिया । यथा क्रमेण सर्वत्र गमन—यही उसके भाग्य द्वारा दिया जाने वाला फल है । प्रश्न का आद्यअक्षर मध्य षकार होने पर परदेश से किसी के समाचार आने की संभावना रहती है, अथवा पत्र के आगमन की संभावना रहती है जो कार्य वह प्रारम्भ करता है उसे धन की संप्राप्ति होती है ॥ ४७-४८ ॥

क्षकारे सख्यभावञ्च मित्रभावं यदा लभेत् ।
सुप्रीतिश्च[2] भवेत्तस्मात् तदा प्रश्नभयं न च ॥ ४९ ॥
स्वराज्ये च भवेत् सौख्यं पुष्पजिज्ञासकर्मणि ।
हसनान्ते तथा वर्णे पाचकं देहि चादिदम् ॥ ५० ॥
यदि स्यादुच्यते नाथ विपरीतफलं न च ॥ ५१ ॥

'क्षकार' आद्य अक्षर होने पर सख्यभाव अथवा मित्र भाव प्राप्त होता है । ऐसा करने से प्रीति बढ़ती है । इसलिए क्षकार के प्रश्न के विषय में भय नहीं होना चाहिए । 'ह' 'स' वर्ण तथा अन्त का 'ज्ञ' वर्ण प्रश्न का आद्य अक्षर होने पर स्वराज्य में सुख प्राप्त होता है हे नाथ ! यदि कहा जाय तो भी विपरीत फल नहीं होता ॥ ४९-५१ ॥

दीर्घाकारे विषयघटना नाथ पादेः मतिः स्याद्
यद्यारम्भो भवति कुलनं दीर्घजीवी नरेन्द्रः ।
बालापत्यं गमयति मुदा कालदेशाधिकारी
लोकारण्ये सकलकलुषध्वंसहेतोर्मृगेन्द्रः ॥ ५२ ॥

प्रश्न का आद्य अक्षर दीर्घ आकार होने पर कामक्रोधादि विषय की चर्चा रहती है किन्तु हे नाथ ! उस प्रश्नकर्ता की आप के चरण कमलों में मति होती है, यदि कार्य का आरम्भ हो तो वह कुलनं एक होता है, राजा दीर्घ जीवी होता है, बाला स्त्री अपत्य प्राप्त करती हैं । काल के अनुसार वह देश पर अधिकार करने वाला एवं प्रसन्नता से जीवन निर्वाह करता है ! वह इस संसार रूपी अरण्य में संपूर्ण कलुष रूपी मृगों के ध्वंस के लिए मृगेन्द्र के समान होकर काल व्यतीत करता है ॥ ५२ ॥

सुखञ्चचार चाष्टमे महाधनेशसन्निधौ
प्रबुद्धवान् भवेन्नरः समाहितो भवेद् ध्रुवम् ।
विचित्रचातुरी यदा महाकुचोरगा प्रभो
प्रहस्यते क्षणादपि प्रभातसूर्यदर्शनात्[3] ॥ ५३ ॥

---

१. क्रेयम्—ख० ।
२. अप्रीतिश्च भवेत् तस्य तदा प्रश्नभयं न च—ख० ।
३. प्रभाते प्रातःकाले यः सूर्यः, तस्य दर्शनात् ।

अष्टम ( **हकार?** ) प्रश्नाद्यक्षर होने पर प्रश्नकर्ता महाधनपतियों के सन्निधान में सुखपूर्वक विचरण करता है । ऐसा नर सर्वदा प्रबुद्ध तथा निश्चित रूप से समाहित रहता है । उसके हृदय में सदैव विचित्र चातुरी भरी रहती है । हे प्रभो ! वह क्षणमात्र भी प्रभातसूर्य के दर्शन से हँसता रहता है ॥ ५३ ॥

**अतीव धैर्यतां लभेत् विचित्रवाग्भवेज्जयम् ।**
**जयेन सेवितं पुरा पुराण वाक्यलाभकं ।**
**जगज्जनादिसेवनं लभेत् (वा यदि स्वयं?) ॥ ५४ ॥**

वह अत्यन्त धीरज प्राप्त करता है । विचित्र वाणी का वक्ता होता है । उसकी विजय होती है । वह जय से युक्त तो रहता ही है, पूर्व के पुराण वाक्य ( पुरातन कामनाएँ ) भी उसे लब्ध होते हैं । किं बहुना, सारे संसार के लोगों से उसे सेवा प्राप्त होती है ॥ ५४ ॥

**न चाकुलागमं गयागभीरतुल्यसत्फलम् ।**
**सदा हि पुण्यसागरे गुरोः पदाम्बुजं लभेत् ॥ ५५ ॥**

उसे अकुलागम ( शाक्तआगम ) प्राप्त नहीं होता । किन्तु गया का गम्भीर सत्फल उसे अवश्य प्राप्त होता है, वह अपने पुण्य सागर में गुरु के श्री चरण कमलों को अवश्य प्राप्त करता है ॥ ५५ ॥

**विसर्जनीये सुस्वरे समाप्तिकोमलान्वितम् ।**
**जनागमं धनागमं विशालवेदनान्वितम् ॥ ५६ ॥**
**मनोगतं कुबुद्धिदं स्वकीयबन्धुसज्जनम् ।**
**विसर्जनं कुलक्षणं भवेल्लभेत् कुबन्धनम् ॥ ५७ ॥**

उत्तम अकारादि स्वरों पर विसर्जनीय से युक्त अः यदि प्रश्न का आद्यअक्षर हो तो उसके कार्य की समाप्ति सुलभतया होती है । उसे विशाल वेदना से युक्त जनागम तथा धनागम होता है । मन में ही किए जाने वाले प्रश्नाद्यअक्षर प्रश्नकर्ता को उसके स्वकीय बन्धु एवं सज्जन उसे कुबुद्धि प्रदान करते हैं । केवल विसर्ग का प्रश्न कुलक्षण है, उससे प्रश्नकर्ता को बुरे बन्धनों में फसँना पड़ता है ॥ ५६-५७ ॥

**सकुलं निष्कुलं कान्तं विदुः श्रेष्ठा महर्षयः ।**
**हास्यसुखे हास्यफलं भावनायां भवेन्नहि ॥ ५८ ॥**

श्रेष्ठ महर्षियों ने ( प्रश्नकर्त्ता को ) सकुल और निष्कुल ( कान्त ? ) कहा है । हास्य तथा सुख 'पूर्वक प्रश्न करने वाला हास्य फल प्राप्त करता है, किन्तु ( काम ) भावना ( आसक्ति ) में प्रश्न करने पर कुछ भी फल नहीं होता ॥ ५८ ॥

**क्रोधक्रमेणैव तदैव चक्षुषो-**
**विकारभावेन हरेत् समस्तम् ।**
**शीर्षे करौ चेत् कलिकालसंयुतं**
**फलं हि लाभे वध एव भूषणम् ॥ ५९ ॥**

क्रोध में किए गये समस्त प्रश्न, जिसका प्रभाव दोनों नेत्रों के विकार से प्रगट होता है, वह प्रश्नकर्ता का सब कुछ हरण करने वाला है। यदि प्रश्न काल में प्रश्नकर्ता अपने सिर पर हाथ रख कर प्रश्न किया हो तो उसे कलह से संयुक्त समझना चाहिए। जिसके लाभ में वधरूप भूषण का फल प्राप्त होता है ॥ ५९ ॥

यहाँ तक तृतीय पत्र स्थित वर्णों का फल कहा गया है। अब चतुर्थ पत्र स्थित वर्णों का फल कहते हैं। ( द्र०. १३, ३६-५९ )।

**शेषे वेददले वराभयकरे हारावशब्दापहा**
**दूरादागमनं भवेद्धि नियतं बालागणैरावृतम् ।**
**घोरापायविसर्जनं जलगुणाह्लादेन सामोदितं**
**कूटे कूटघकारवर्गलहरी भासापभासारसे ॥ ६० ॥**
**जवर्गे जतुकं स्वर्णं जीवनोपायचिन्तनम् ।**
**जराव्याधिसमाक्रान्तं जीर्णवस्त्रापहारणम् ॥ ६१ ॥**

**चतुर्थ दल का फलादेश**—शेष चौथे पत्र पर जिसका वर एवं अभय होकर है, जो मास और अपभास रस वाला है, जिसके कूट में घकार कूट की वर्ग लहरी है, अर्थात् प्रश्नकर्ता का प्रश्नाद्यक्षर यदि धकार कूट हो तो उसे हारावशब्दापहा समझना चाहिए। उसे निश्चित रूप से दूर से बहुत से बालकों से घिरा हुआ आया समझना चाहिए। घोर विपत्ति से उसे छुटकारा प्राप्त होगा आदि जल के समान आह्लादकारी एवं शान्ति युक्त बचन कह कर उसे शान्त करना चाहिए। ज वर्ग प्रश्न का आद्यअक्षर होने पर प्रश्नकर्ता को जतुक ( लाह ), सुवर्ण तथा जीवन के उपाय की चिन्ता रहती हैं। ऐसा प्रश्नकर्ता जरा ( बुढ़ापा ) तथा व्याधि से समाक्रान्त रहता हैं तथा जीर्ण वस्त्र को धारण करने वाला होता है ॥ ६०-६१ ॥

**ठकारकूटे यदि चक्रवर्ती**
**भूमण्डले स्यात्पततीति निश्चितम् ।**
**अन्तःसुखं हन्ति यदादिभावे**
**ठकारमात्रेण [1]रिपूत्तमो भवेत् ॥ ६२ ॥**

चतुर्थपत्र पर स्थित ठकार कूट प्रश्न का आद्य अक्षर होने पर प्रश्नकर्ता यदि भूमण्डल में चक्रवर्ती हो तो भी वह निश्चित रूप से नीचे गिरेगा। यदि आद्य अक्षर ठकार हो तो उसके अन्तःकरण का सुख जाता रहता है, तथा उसके बहुत बड़े बड़े शत्रु होने चाहिए ॥ ६२ ॥

**आद्यप्रश्नाक्षरं नाथ तकारं तरुणप्रियम् ।**
**पापान्धकार[1]पटलध्वंसाय[2] कल्पयते तदा ॥ ६३ ॥**
**नकारमाद्ये यदि प्रश्नवाग्मी जिज्ञासमानो ध्रुवमर्थसञ्चयम् ।**
**आलापमात्रेण नरा वशा स्युः प्रवेशनं राजकुलेन्द्रसन्निधौ ॥ ६४ ॥**

---

१. विभोत्तमो—ख० ।

२. पापान्धकारपटलस्य ध्वंसायेत्यर्थः ।

हे नाथ ! यदि प्रश्न का आद्यअक्षर तकार हो तो वह प्रश्नकर्ता तरुण जनों का प्रिय होता है तथा वह पाप रूपी अन्धकार को विनष्ट करने के लिए सदैव प्रयत्न शील रहता है । यदि प्रश्नकर्ता अपने प्रश्न के आद्यअक्षर में नकार का प्रयोग करे तो वह निश्चित रूप से अर्थ सञ्चय की अभिलाषा करने वाला है । उसके आलाप मात्र से लोग वशीभूत हो जाते हैं । और वह राजकुल के सर्वश्रेष्ठ अधिकारी के यहाँ प्रवेश प्राप्त करता है ॥ ६३-६४ ॥

**भीतो भवति देशे च भयस्थाने न दुःखभाक् ।**
**भूषासम्पत्तिवृद्धिश्च[१] भकारकूटमङ्गले ॥ ६५ ॥**
**लोकानुरागं सर्वत्र आद्यक्षरविचारतः ।**
**लकारस्यापि लोकेश भार्यादुःखं विमुञ्चति ॥ ६६ ॥**

यदि प्रश्न का आद्य अक्षर परम मङ्गलदायक भकार कूट हो तो प्रश्नकर्ता अपने देश में भयभीत रहता है, किन्तु अन्यत्र भय स्थान प्राप्त होने पर भी भयभीत नहीं होता । ऐसे प्रश्नकर्ता की दिन प्रतिदिन भूषण और संपत्ति की वृद्धि कहनी चाहिए । हे लोकेश ! प्रश्न का आद्यअक्षर लकार होने पर उसे लोकानुराग प्राप्त होगा, ऐसा कहना चाहिए । उसे भार्या का सुख मिलना चाहिए ॥ ६५-६६ ॥

**सकारे मैथुनं कान्ताकुलस्य कुलवर्द्धनम् ।**
**धनवृद्धिर्वंशवृद्धिः सरस्वतीकृपा भवेत् ॥ ६७ ॥**
**वेदपत्रे अकारस्य फलमाहात्म्यनिर्णयम् ।**
**शृणु नाथ प्रवक्ष्यामि सावधानाऽवधारय[२] ॥ ६८ ॥**

प्रश्न का आद्यअक्षर सकार होने पर उत्तम सुन्दरियों के साथ मैथुन, तथा कुल की वृद्धि, धन की वृद्धि एवं वंश की वृद्धि के साथ साथ सरस्वती की कृपा भी प्राप्त होती है । हे नाथ ! हे सावधान मन वाले ! अब चतुर्थ पत्र पर स्थित् अकार के फल माहात्म्य के निर्णय को सुनिए जिसे मैं कहती हूँ ॥ ६७-६८ ॥

**ककारादि क्षकारान्तं व्याप्त तिष्ठति तत्त्वतः ।**
**अकारेण विना शक्तिर्ज्जायते कुत्र न प्रभो ॥ ६९ ॥**
**अकारे ग्रथितं सर्वं चराचरकलेवरम् ।**
**यद्यकारमाद्यभागे प्रश्नजिज्ञासने भवेत् ॥ ७० ॥**
**कुफलेऽपि सत्फलानां सञ्चयं भवति ध्रुवम् ।**
**शत्रूणां वासहेतोर्धनादीनाञ्चैव सञ्चये ॥ ७१ ॥**
**अन्तर्यजनविद्यासु लोकस्यागमने तथा ।**
**निजदुःखानुतापे स्याद्यकारविधिरुच्यते ॥ ७२ ॥**

---

१. भूषायाः सम्पत्तेश्च वृद्धिः ।
२. सावधानोऽवधारयेति पाठ उचितः, नाथेत्यस्य विशेषणम् सावधान इत्येव । अथवा हे नाथ सावधाना अहं प्रवक्ष्यामि, इत्यन्वयः ।

**स्वरों के फलादेश**—यह अकार तत्त्व रूप से अकार से लेकर क्षकार पर्यन्त वर्णों में व्याप्त हो कर स्थित रहने वाला हैं । हे प्रभो ! अकार के बिना किसी भी वर्ण में उच्चारण शक्ति नहीं उत्पन्न होती है । समस्त चराचर का कलेवर अकार से अनुस्यूत है । यदि प्रश्न जिज्ञासा में आद्य अक्षर अकार हो तो उसके कुफल में भी निश्चित रूप से सभी सत्फलों का सञ्चय कहना चाहिए । उसे शत्रु से बचे रहने के लिए, धनादि के सञ्चय में, अन्तर्यजन विद्या में, लोगों के आने जाने में तथा अपने दुःख के अनुताप में सर्वत्र सत्फल की प्राप्ति होती है । यहाँ तक अकार अक्षर में प्रश्न का विधान कहा गया ॥ ६९-७२ ॥

**उकारफलमाहात्म्यं शृणु प्रश्नार्थपण्डित ।**
**उषाकाले चौर्यप्रश्नमुल्लासं मानसोद्धमम् ॥ ७३ ॥**
**उत्तमस्थलवासञ्च उत्कृष्टभोजनादिकम् ।**
**उल्बणाबुद्धिरुत्पत्तिरुमादेवीपदे मतिः[१] ॥ ७४ ॥**

हे प्रश्नार्थ पण्डित ! अब उकार के फल माहात्म्य को सुनिए । यदि उषा काल में प्रश्न का आद्य अक्षर उकार हो तो चोरी विषयक प्रश्न समझना चाहिए । ऐसा प्रश्नकर्ता उल्लास पूर्ण तथा मानसी औद्धत्त्व से युक्त होता है । उसका निवास उत्तम स्थल में तथा भोजन उत्तमोत्तम एवं उत्कृष्ट होता है । वह उल्बण बुद्धि से युक्त तथा उमादेवी में भक्ति रखने वाला होता है ॥ ७३-७४ ॥

**रकारलक्षणं चक्षुः शब्दस्य वचनं भवेत् ।**
**लोचने दर्शनं स्त्रीणां लिखनं दूरसम्भवम् ॥ ७५ ॥**
**प्राप्नोति परमां लक्ष्मीं लोकवश्याय केवलम् ।**
**लाङ्गलानां सञ्चयञ्च भूमिलाभो भवेद् ध्रुवम् ॥ ७६ ॥**

रकार लक्षण वाला प्रश्न चक्षु तथा शब्द विषयक प्रश्न से संयुक्त होता है । अपने लोचन से वह स्त्री का दर्शन प्राप्त करता है तथा दूर होने वाले किसी व्यक्ति के विषय में पत्र लिखता है । ऐसा व्यक्ति बहुत बड़ी संपत्ति प्राप्त करता है । वह लोक को वशीभूत करने वाला होता है । अनेक हलों का सञ्चय करने वाला तथा निश्चित रूप से भूमि का लाभ करने वाला होता है ॥ ७५-७६ ॥

**ओकारे राज्यवृद्धिः स्यात् पुत्रवृद्धिस्तथैव च ।**
**सदा सन्तोषमाप्नोति प्रणवः सर्वसिद्धिदः ॥ ७७ ॥**

प्रश्न का आद्य अक्षर 'ॐकार' होने पर राज्य वृद्धि तथा पुत्रवृद्धि होती है । उसे सर्वदा संतोष रहता है । इस प्रकार प्रणव समस्त सिद्धियों को देने वाला होता है ॥ ७७ ॥

**मीने कर्कटराशिवृश्चिकतुले धर्माग्निभानूदये**
**गेहे वेदविचारणे शुभफलं श्रीलाभगत्युन्नतिम् ।**
**विद्यावेदकथादिकं जयवतामानन्दसिन्धोः फलं**
**प्राप्नोति प्रतिपत्तिसिद्धपदवीं मर्त्यो मुदा हर्षणम् ॥ ७८ ॥**

---

१. उमा देवि पदे सति—ख० ।

मीन, कर्कराशि, वृश्चिक तथा तुला राशि में प्रश्न करने पर और धर्मकाल में अग्नि सामने होने पर तथा भानू के उदय काल में घर पर एवं वेद पाठ के समय प्रश्न करने पर श्री लाभ, गति ( यात्रा ) में उन्नति आदि शुभ फल होते हैं । ऐसा मनुष्य विद्या, वेद, कथादि तथा जीतने वालों के आनन्द समुद्र का फल प्राप्त करता है, इतना ही नहीं यश प्राप्त कर प्रसन्नतापूर्वक सिद्ध पदवी एवं हर्ष प्राप्त करता है ॥ ७८ ॥

**पत्रप्रमाणं कथितं हीनविद्याविनिर्गमम् ।**
**पुनः शृणु महाकालकलिकालस्य उद्भवम् ॥ ७९ ॥**

हीन विद्या ( श्रेष्ठ वेद विद्या ? ) से निकले हुये पत्रों के प्रमाण के अनुसार हमने फल निरूपण किया । अब हे महाकाल ! कलि में होने वाले काल के उद्भव को पुनः सुनिए ॥ ७९ ॥

**यद्यन्मासस्य प्रथमे तथा चाह्नोऽर्भकस्य च ।**
**दण्डद्वये शुभफलं प्रथमस्य महेश्वर ॥ ८० ॥**
**तृतीयैकदण्डमात्रं विपरीतफलप्रदम् ।**
**तत्र दण्डेषु नक्षत्रं यदि चेन्नाशुभं भवेत् ॥ ८१ ॥**

**दण्ड आदि काले परिमाण का फलादेश**—हे महेश्वर ! जिस जिस मास के प्रथम दिन के प्रथम दो दण्ड लड़कों के प्रश्न के लिए शुभकारक फल देने वाले हैं । उन उन मासों के अन्य अन्य दिन के तृतीय दण्ड तथा प्रथम दण्ड विपरीत फल देने वाले हैं, किन्तु यदि उन उन दण्डों में शुभ नक्षत्र हों तो वे अशुभ फल नहीं देते ॥ ८०-८१ ॥

**अश्विन्याद्यष्टनक्षत्रं पूर्वप्रथमपत्रके ।**
**तत्सुतारं[१] विजानीयात् दुष्टदोषे सुखं भवेत् ॥ ८२ ॥**
**आश्लेषाभादिचित्रान्तं द्वितीये दक्षिणे दले ।**
**तत्फलं विपरीताख्यं सफलेऽपि फलापहम् ॥ ८३ ॥**

**नक्षत्रों का फलादेश**—पूर्व दिशा के प्रथम पत्र पर अश्विनी आदि ८ नक्षत्र ( अश्विनी से पुष्य ) ये सुन्दर तारे कहे गए हैं इनमें यदि दुष्ट दोष भी हों तो भी ये सुख देने वाले कहे गए हैं । इसके बाद दक्षिण दिशा के द्वितीय पत्र पर स्थित आश्लेषा से चित्रापर्यन्त नक्षत्र विपरीत फल देने वाले हैं, उनमें अच्छा योग होने पर भी उत्तम फल नहीं होता ॥ ८२-८३ ॥

**स्वात्यादिवसुनक्षत्रं तृतीयाधोदले लिखेत् ।**
**तत्सुतारं क्रमाज्ज्ञेयं नान्यथाशुभमानयेत् ॥ ८४ ॥**
**तत्फलार्थं कुत्सितञ्च विपरीतफलस्थले ।**
**अशुभं तत्फलस्थाने कुफले सुफलं भवेत् ॥ ८५ ॥**

इसके बाद स्वाती से लेकर आठ नक्षत्र ( स्वाती से पूर्वाषाढ़ तक ) तृतीय दल पर लिखना चाहिए । उन्हें क्रमशः सुन्दर तारा समझना चाहिए । अन्यथा अशुभ ? समझना

---

१. सुष्ठु तार्यते इति सुतारम्, तृधातोर्घञ्प्रत्ययः कर्मणि ।

चाहिए । उनका फल विपरीत स्थान में कुत्सित तो कहा गया है, किन्तु सुफल के स्थान में वे कुफल देने वाले हैं, और कुफल स्थान में सुफल देने वाले है ॥ ८४-८५ ॥

**उत्तराषाढकातारादिरेवत्यन्तमेव च ।**
**तत्फलं तु भवेद् मर्त्यो यदि कर्मपरो भवेत् ॥ ८६ ॥**
**अथ वक्ष्ये महादेव अश्विन्यादिफलं प्रभो ।**
**यज्ज्ञात्वा देवताः सर्वा दिग्विदिक्ष्वादिरक्षकाः ॥ ८७ ॥**
**तत्प्रकारं महापुण्यं देवदेव फलोद्भवम् ॥ ८८ ॥**

इसके बाद उत्तराषाढ़ से रेवती पर्यन्त नक्षत्रों का फल तभी होता है जब मनुष्य कर्म ( उद्योग ) में निरत रहे । हे महादेव ! हे प्रभो ! अब अश्विनी आदि नक्षत्रों के फल को कहती हूँ । जिसका ज्ञान हो जाने पर देवता दिशाओं और विदिशाओं की रक्षा करने में समर्थ हो गये । उसका कारण यहीं है कि उसका ज्ञान महापुण्य कारक तथा फलदायी है ॥ ८६-८८ ॥

**त्रैलोक्ये सौख्यपूजां त्रिभुवनविदितां त्रैगुणाह्लादसिद्धां**
**सिद्धभ्रान्तो विशालो वरदविदलितां वेदनार्द्रापशङ्काम् ।**
**मन्दानां मन्दभाग्योपहगुणहननं हीनदीनापदाहां**
**लोकानां सत्फलानां फलगतवपुषा साश्विनी सा ददौ चेत् ॥ ८९ ॥**

यदि वह अश्विनी है तो वह इस प्रकार का फल देने वाला नक्षत्र है—त्रिभुवन में विदित कराने वाला, त्रैलोक्य में आह्लाद की सिद्धि करने वाला और सौख्य पूजा प्रदान करने वाला है । ऐसा पुरुष सिद्ध, भ्रान्त तथा विशाल होता है । वह विदलित ( दीन-हीन ) को वर देने वाला, वेदना से युक्त, आर्द्र हृदय वाला और शङ्का से रहित करने वाला होता है । किं बहुना लोक के समस्त फलों को अपने फलमय शरीर में धारण कर मन्दों के मन्दता युक्त गुणों का अपहनन करता है और हीन तथा दीनों के दुःख को दूर करता है ॥ ८९ ॥

**एवं क्रमेण देवेश तारकाणां फलाफलम् ।**
**पुनः पुनः शृणु प्राण-वल्लभ प्रेमभावक ॥ ९० ॥**

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावनिर्णये पाशवकल्पे आज्ञाचक्र-सारसङ्केते सिद्धमन्त्रप्रकरणे भैरवीभैरवसंवादे त्रयोदशः पटलः ॥ १३ ॥**



हे प्राण वल्लभ ! हे प्रेम भावक ! हे देवेश ! इस प्रकार समस्त तारा गणों का फलाफल पुनः पुनः सुनिए ॥ ९० ॥

**॥ इस प्रकार श्री रुद्रयामल के उत्तरतन्त्र में महातन्त्रोद्दीपन के भावनिर्णय में पाशव कल्प में आज्ञाचक्रसारसंकेत में सिद्धमन्त्रप्रकरण में भैरवी-भैरव संवाद के तेरहवें पटल की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ १३ ॥**



# अथ चतुर्दशः पटलः

आनन्दभैरवी[1] उवाच

अथातः सम्प्रवक्ष्यामि योगमार्गेण शङ्कर ।
भरण्यादिसप्तविंशान् नक्षत्रार्थं सुसत्फलम् ॥ १ ॥
तत्फलाफलमाहात्म्यं साक्षात्कारकलेः फलम् ।
फलार्थं भरणीक्षेत्रं धर्मविद्यादिनिर्णयम् ॥ २ ॥
धर्मचिन्ताविनिर्बोधं गमनाभावमङ्गलम् ।
मकारादिवर्णजातां प्राप्नोति भरणीं भके ॥ ३ ॥

**नक्षत्रों के फल**—हे शङ्कर ! अब इसके बाद योगमार्ग से भरणी से प्रारम्भ कर सत्ताईस नक्षत्रों को तथा उन नक्षत्रों में होने वाले उत्तम फलों को भी मैं कहती हूँ । उनके फल का इतना माहात्म्य है कि जितना कलि के साक्षात्कार का होता है ॥ १-२ ॥

( १ ) **भरणी नक्षत्र** धर्म विद्यादि के निर्णय के लिए फलदायक है । भरणीनक्षत्र धर्म चिन्ता के लिए प्रशस्त कहा गया है । यह बिना यात्रा के ही मङ्गल देने वाला है, भरणी नक्षत्र वाला पुरुष मकारादि वर्णों वाली वस्तुओं को प्राप्त करता है ॥ २-३ ॥

कृत्तिकायां शादिवर्णं व्याधिशङ्करसंक्षयम् ।
आरोग्याय धनस्यार्थे तत्र सूर्यं न चाचरेत् ॥ ४ ॥

( २ ) **कृत्तिका** में उत्पन्न पुरुष शादि ( श ष स ह ) वर्णों वाली वस्तुओं को प्राप्त करता है । आरोग्य तथा धन के लिए भी वह उत्तम है यदि उसमें सूर्य दृष्ट न हों तो ? ॥ ४ ॥

या रोहिणी धनवतां धनहानयोर्न प्राणप्रियं गणसुबुद्धविबुद्धिशुद्धिम् ।
नागादिदोषशमनं क्षितिचक्रमध्ये राजश्रियं विबुधशुद्धिमुपैति वृद्धिम् ॥ ५ ॥

( ३ ) **रोहिणी नक्षत्र** में उत्पन्न पुरुष धनिकों के धन की हानि नहीं करता । वह सबका प्राणप्रिय रहता है, अपने समाज में बुद्धिमान् तथा बुद्धि ( विवेक ) से शुद्ध रहता है । पृथ्वी मण्डल में वह नागादि ( काद्रवेय सर्पों ) के दोषों को शान्त करने वाला होता है । वह राज्य श्री की प्राप्ति कर बुद्धिमानों में श्रेष्ठ तथा वृद्धि प्राप्त करता है ॥ ५ ॥

मृगेन्द्रशीर्षगामिनी नरेन्द्र मन्दिरे निधिं
ददाति पापनिर्मले जले घन्यशून्यके ।
भयं विवाहकालके कुले शुभं शुभेक्षणा
स्वकीयकिल्बिषं दहेदनन्तबुद्धिसञ्चयम् ॥ ६ ॥

(४) **मृगशिरा नक्षत्र** राजा के मन्दिर में निधि देती है, पाप रहित निर्मल जल में भय शून्य करती है। विवाहकाल में कल्याणकारिणी सुलोचना प्रदान करती है, वह जातक के सारे पापों को नष्ट कर देती है, तथा उसमें अनन्त बुद्धि का संचय करती है ॥ ६ ॥

**आर्द्राविद्रुमरूपिणी रतिकलाकोलाहलोल्लासिनी**
**सा मत्यार्पणमेव सम्प्रकुरुते काले फलालापनम्।**
**सौख्यं मुख्यसमृद्धिदा दरदलाम्भोजच्छटालिम्पटा**
**सा धीरं परिरक्ष्यति प्रतिदिनं शान्तं दृशान्तं दहेत् ॥ ७ ॥**

(५) **आर्द्रा नक्षत्र** का वर्ण विद्रुमा (मूगा) के समान है। रतिकला में होने वाले कोलाहल को उल्लसित करने वाला है। वह अपने को मनुष्यों के लिए समर्पण कर देता है, और समय से फल देता है। सौख्य तथा मुख्य रूप से समृद्धि देता है। खिले हुये दल युक्त कमल की शोभा के समान वह प्रतिदिन धीरों की रक्षा करता है। इस प्रकार वह शान्त स्वभाव वाला है तथा अपने नेत्रों से अनिष्ट का वारण करता है ॥ ७ ॥

**पुनर्वसुसुतारिका तरुणरूपकूपा कृपा-**
**विशिष्टफलभावनारहितचित्तदोषापहा[1]।**
**धनमन्तपरिमाणगं प्रचुरशोकसङ्घापहा**
**प्ररक्षति महाग्रहः परमपीडितं मानुषम् ॥ ८ ॥**

(६) **पुनर्वसु नक्षत्र** तरुणरूपकूपा (समुद्र) है, कृपाविशिष्ट फल वाली हैं बिना भावना के ही चित्त के दोषों को दूर करने वाली हैं। अन्तिमावस्था तक धन देती है, बहुत शोक समुदाय को नष्ट करती है, यह महाग्रह की तरह अत्यन्त पीड़ा में पड़े हुये मनुष्य की रक्षा करती है ॥ ८ ॥

**पुण्या पौषमाकरोति सहसा तेजस्विनां कान्तिदा**
**कान्तायाः कनकादि-लाभविपदां ध्वंसेन वंशादिदा।**
**बाधायां फलदा मृगा मृगपतेरानन्दतुल्यं श्रियम्**
**काद्या पञ्चमवर्णज्ञानललिता पातीह पुत्रं यथा ॥ ९ ॥**

(७) **पुष्य नक्षत्र** सहसा पुण्य तथा पुष्टि प्रदान करती है, तेजस्वियों में कान्ति देती है, पुष्य नक्षत्र में जातक की स्त्री का विपत्ति का विनाश कर कनकादि का लाभ तथा वंशादि प्रदान करती है, बाधा उपस्थित होने पर फल प्रदान करती हैं, मृगा मृगपति के समान आनन्ददायिनी श्री प्रदान करती है, कादि पञ्च वर्णों के ज्ञान से मनोहर है तथा पुत्र के समान जातक की रक्षा करती है ॥ ९ ॥

**एतद्धि पूर्वपत्रान्ते तारा मङ्गलदायिकाः।**
**प्रतिभान्ति यथा चक्रे ग्रहाणां भ्रामणे शुभे ॥ १० ॥**

---

१. विशिष्टफलभावनाभिः रहितं यच्चित्तम्, तस्य दोषान् अपजहातीति कप्रत्यये सति साधुत्वम्।

**विपरीतफलं नाथ प्राप्नोति पातके बहु ।**
**पुष्यायां स भवेत् क्रूरः कर्कटस्थोऽपि भास्करः ॥ ११ ॥**

पूर्व में रहने वाले इतने ही तारे ( नक्षत्र ) मङ्गल देने वाले हैं । ये ताराएँ इस नक्षत्र चक्र में ग्रहों को घुमाती हुई शोभित होती हैं । हे नाथ ! यदि बहुत पाप रहता है तो ये तारे विपरीत फल भी प्रदान करते हैं । कर्क राशि में यदि सूर्य हों तो पुष्य में उत्पन्न हुआ जातक अत्यन्त क्रूर होता है ॥ १०-११ ॥

**एतासां तारकाणाञ्च राशिदेवान् शृणु प्रभो ।**
**मेषः सिंहो धनुश्चैव अश्विन्यादिकदेवताः ॥ १२ ॥**
**येषां राशिस्थितं वर्णं न हानिर्विषयास्पदे ।**
**सर्वत्र जयमाप्नोति ग्रहे क्रूरेऽपि सौख्यदः ॥ १३ ॥**

हे प्रभो ! अब इन ताराओं ( नक्षत्रों ) के राशि देवताओं को सुनिए । मेष, सिंह तथा धनु ये अश्विन्यादि नक्षत्रों के देवता है । जिन राशियों में स्थित वर्ण विषयास्पद में हानि नहीं करते, उन राशियों में क्रूर ग्रहों के रहने पर भी जातक को सुख देवे वाले तथा सर्वत्र विजय प्राप्त कराते है ॥ १२-१३ ॥

**विभिन्नराशौ संभिन्नो धर्मनिन्दाविवर्जितः ।**
**स्वनक्षत्रफलं[1] ज्ञात्वा प्रश्नार्थं कोमलं वदेत् ॥ १४ ॥**
**तत्तन्नक्षत्रसुफलं कुफलं वा भवेद्यदि ।**
**तदा वर्णविचारञ्च कृत्वा [2]पुष्पं तदा वदेत् ॥ १५ ॥**

विभिन्न राशियों में संभिन्न ये क्रूर ग्रह धर्म निन्दा नहीं करवाते । इस प्रकार अपने नक्षत्र फलों को जानकर प्रश्न के लिए कोमल अक्षरों का उच्चारण करे । यदि उन उन नक्षत्रों के फल सुन्दर हैं, तब तो अच्छी बात है । किन्तु यदि उनका बुरा फल है, तो वर्ण का विचार कर किसी फूल का नाम लेना चाहिए ॥ १४-१५ ॥

**अक्षमालाक्रमेणैव तद्वर्णानां विचारतः ।**
**तत्तद्वर्णविचारे तु यद्यत् सौख्यं प्रवर्त्तते ॥ १६ ॥**
**अधिके दोषजाले तु अधिकं दुःखमेव च ।**
**बहुसौख्यं[3] नित्यसौख्यं[4] प्राप्नोति साधकोत्तमः ॥ १७ ॥**

---

१. अल्पजयमल्पकार्यप्रधानफलमङ्गलम् ।
अल्पकर्मणि संसक्तो हीनबुद्ध्या विबोधनम् ॥
अथवा स्वस्वनक्षत्रं यदि यागादिसंयुतम् ।
तथापि फलमाप्नोति निन्दधर्मविवर्जितः ॥

२. प्रश्नं—ग० ।

३. बहु अतिशयितं सौख्यम्, सुखमेव सौख्यम्, स्वार्थे ष्यञ् ।

४. नित्यं सार्वकालिकं सौख्यम् । सुखं बहु भवेत्, सदा भवेत्—इति भावः ।

## नक्षत्र चक्र

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| अश्विनी<br>अ आ<br>देव | भरणी<br>इ<br>नर | कृत्तिका<br>ई उ ऊ<br>राक्षस | रोहिणी<br>ऋ ॠ ऌ ॡ<br>नर | मृगशिरा<br>ए<br>देव | आर्द्रा<br>ऐ<br>नर | पुनर्वसु<br>ओ औ<br>देव | पुष्य<br>क<br>देव | आश्लेषा<br>ख ग<br>राक्षस |
| मघा<br>घ ङ<br>राक्षस | पू०फाल्गुनी<br>च<br>नर | उ०फाल्गुनी<br>छ ज<br>नर | हस्त<br>झ ञ<br>देव | चित्रा<br>ट ठ<br>राक्षस | स्वाती<br>ड<br>देव | विशाखा<br>ढ ण<br>राक्षस | अनुराधा<br>त थ द<br>देव | ज्येष्ठा<br>ध<br>राक्षस |
| मूल<br>न प फ<br>राक्षस | पूर्वाषाढा<br>ब<br>नर | उत्तराषाढा<br>भ<br>नर | श्रवण<br>म<br>देव | धनिष्ठा<br>य र<br>राक्षस | शतभिषा<br>ल<br>राक्षस | पू०भाद्रपद<br>व श<br>नर | उ०भाद्रपद<br>ष स ह<br>नर | रेवती<br>ळ क्ष अं अः<br>देव |

साधक इस चक्र के अनुसार अपना और मन्त्र का गण निश्चित करे। यदि साधक का गण मनुष्यगण है तो मनुष्यगण का मन्त्र ही उसके लिए श्रेष्ठ है। देवगण का भी उत्तम है, किन्तु राक्षसगण का मन्त्र घातक है। देवगण के लिए मनुष्य गण का मन्त्र मध्यम है और राक्षस गण का शत्रु है। राक्षस गण के लिए केवल राक्षसगण का मन्त्र ही उपयोगी है। अतः इस चक्र के अनुसार साधक को अपना और मन्त्र का नक्षत्र निश्चित करके अपने नक्षत्र से मन्त्र का नक्षत्र गिनना चाहिए और क्रमशः जन्म, सम्पत्, विपत्, क्षेम, प्रत्यरि, साधक, वध, मित्र और परममित्र समझना चाहिए। यदि मन्त्र इतनी संख्या के अन्दर न आवे तो इनकी दुबारा और तिबारा गणना करनी चाहिए।

**एतासां तारकाणां तु वारान् शृणु यथाक्रमम् ।**
**रव्यादिरविवारान्तं ताराणामधिपं शुभम् ॥ १८ ॥**

अक्षमाला ( अ से लेकर क्ष पर्यन्त वर्ण ) के क्रम से ही वर्णों के फल का विचार करते हुये प्रश्न करे । उन उन वर्णों के विचार से जो जो सुख प्राप्त होता है, वही प्रश्न करे । किन्तु अधिक दुःखदायी वर्णों पर प्रश्न करने से अधिकाधिक दुःख प्राप्त होता है, सौख्यकारक वर्णों द्वारा प्रश्न करने पर साधक बहुत सौख्य तथा नित्य सुख प्राप्त करता है । हे भैरव ! अब इन नक्षत्रों के क्रमानुसार उन उन वारों को भी सुनिए । रवि से लेकर रविवार पर्यन्त दिन ( आठ आठ नक्षत्रों के क्रम से ) ताराओं ( नक्षत्रों ) के शुभ अधिपति कहे गये हैं ॥ १६-१८ ॥

**अशुभञ्च तथा रुद्र ज्ञात्वा प्रश्नार्थमावदेत् ।**
**तद्वारनिर्णयं वक्ष्ये पूर्वपङ्केरुहे दले ॥ १९ ॥**

हे रुद्र ! इन वारों के शुभाशुभ का विचार कर तदनन्तर फल कहना चाहिए । वे वार पूर्व दिशा में रहने वाले कमलचक्र पर स्थित हैं ॥ १९ ॥

**रवौ राज्यं बालकानां यदि प्रश्नं प्रियं फलम् ।**
**धर्मार्थलाभमेवं हि त्रयोविंशाधिके नरे ॥ २० ॥**

**रविवार का फल**—रविवार को प्रश्न करने से राज्य की प्राप्ति होती है । बालकों का यदि प्रश्न हो तो उसका फल उत्तम कहा गया है । उक्त दिन प्रश्न करने पर तेइस वर्ष की अवस्था के बाद प्रश्नकर्ता को धर्म, अर्थ की प्राप्ति तथा ( यश ) लाभ होता है ॥ २० ॥

**संहितं परमानन्दं योगेन तत्त्वचिन्तनम् ।**
**इत्यादि रविवारस्य वृद्धानामशुभं शुभे ॥ २१ ॥**

प्रश्नकर्ता का हित होता है । आनन्द की प्राप्ति होती है । योग से तत्त्वचिन्तन होता है, इत्यादि रविवार के फल हैं । हे शुभे ! किन्तु वृद्धों द्वारा रविवार को प्रश्न किए जाने पर अशुभ फल होता है ॥ २१ ॥

**सोमे रत्नमुपैति देवकुसुमामोदेन पूर्ण सुखम्**
**बालायां नवकन्यका शुभफलं मुद्रामयार्थं लभेत् ।**
**कैवल्यार्थविचेष्टनं नृपवधूप्रेमाभिलापः सदा**
**वाञ्छा पुण्यसुखास्पदेषु विमला भक्तिश्च सोमे दिने ॥ २२ ॥**

**सोमवार का फल**—सोमवार के दिन प्रश्न करने पर प्रश्नकर्ता को रत्न की प्राप्ति होती है । देवता को सुगन्धित पुष्प चढ़ाने से पूर्ण सुख मिलता है । यदि बाला स्त्री प्रश्न करे तो नवकन्यका की प्राप्ति तथा शुभ फल प्राप्त होता है । उसे मुद्रा तथा आरोग्य भी मिलता है। पुरुष कैवल्य प्राप्ति की चेष्टा करता है । राजपत्नी से प्रेम तथा प्रेमालाप की प्राप्ति होती है । वाञ्छा एवं पुण्य तथा सुखास्पद वाले उस व्यक्ति को विमल भक्ति प्राप्त होती है । ऐसा सोमवार के दिन प्रश्न करने का फल है ॥ २२ ॥

पृथ्वीपुत्रो रुधिरवदनो बालबाली विशेषो
मुख्यं कार्यं दहति सहसा साहसं वासनायाम् ।
हन्ति प्रायो विफलघटितं शोकसन्तानसारं
मोक्षं[1] पुण्यं घटयति सदा मङ्गले भूमिवारे ॥ २३ ॥

**मङ्गलवार का फल**—पृथ्वी पुत्र ( मङ्गल ) का मुख रुधिर के समान लाल है । वह प्रश्नकर्ता बालक या बालिका के प्रधान कार्य को विनष्ट कर देते हैं । वासनाओं में सहसा साहस उत्पन्न करता है और उसे विनष्ट भी कर देता है । उसके समस्त कार्य विफल हो जाते है, शोक संताप का सार प्रदान करता है । बहुत क्या कहना, भूमिवार मङ्गल के दिन प्रश्न करने पर मोक्ष तथा पुण्य की ओर साधक से चेष्टा करवाते हैं ॥ २३ ॥

बुधे वारमुख्ये महापुण्यपुञ्जं[2] समाप्नोति मर्त्यस्तथा दुर्बलञ्च ।
सदा कालदोषं महाघोरदुःखं रिपूणां धनीनां महावीर्यदर्पम्[3] ॥ २४ ॥

**बुधवार का फल**—वारों में प्रधान बुधवार को प्रश्न करने पर प्रश्नकर्ता महान् पुण्य पुञ्ज प्राप्त करता है । वह कालदोष, दुर्बलता, महाघोर दुःख प्राप्त करता है और वह धनिक शत्रुओं के महावीर्य युक्त अभिमान का भाजन बनता है ॥ २४ ॥

सुराणां देवानां विविध धनलाभं वितरणं
प्रतापं सत्कीर्त्तिं क्रतुफलविशेषं विधिगतम् ।
जनानामानन्दं समर वसगतानन्द हृदये
प्रतिष्ठा सद्धर्मं गमयति मुदा वासनगुरौ ॥ २५ ॥

**गुरुवार का फल**—गुरुवार के दिन प्रश्न करने पर प्रश्नकर्ता सुरों के तथा देवताओं के विविध धन का लाभ प्राप्त करता है । उसका वितरण भी करता है । प्रताप, सत्कीर्ति तथा विधानपूर्वक किए गये यज्ञादि का फल पाता है । उसका परिवार आनन्दपूर्वक फूलता फलता है । अपने समरस वाले ( समरवसगत ? ) आनन्दपूर्ण हृदय में प्रतिष्ठा तथा सद्धर्म प्रसन्नता पूर्वक प्राप्त करता है । यह गुरुवार के प्रश्न का फल है ॥ २५ ॥

मन्दारमालान्वित देहधारी नाकस्थले गच्छति देवनिष्ठः ।
हरेः पदे भक्तिमुपैति सत्यं प्रसाधनात् शुक्रसुवारकाले ॥ २६ ॥
शनैश्चरदिने भयं [4]भुवनदोषमोहान्वितं
क्षितिप्रियसुतप्रियं परमतारकं स्त्रीसुखम् ।
विशिष्टधननीरदं वयसि सिद्धिर्ऋद्धचर्कजं
भजन्ति यदि मानुषाः सकलकामनादेः प्रभोः ॥ २७ ॥

---

१. मुख्यम्—ख० ।

२. महान्ति यानि पुण्यानि, विद्यादानान्नदानकन्यादानादिजानि तेषां पुञ्जम् ।

३. महान्ति यानि वीर्याणि, तेषां दर्पम् ।

१. गुरुजनेषु दोषान्वितम्—ख० ।

**शुक्रवार का फल**—शुक्रवार जैसे सुन्दर दिन में प्रश्नकर्ता मन्दार माला से परिपूर्ण शरीर धारण करने वाला, देवताओं में प्रीति रखने वाला, स्वर्गगामी और श्री भगवान् के चरण कमलों में भक्ति प्राप्त करने वाला होता है—यह सत्य है ।

**शनैश्चर** के दिन प्रश्न करने वाला भय प्राप्त करता है । भुवन के मोहादि दोषों से ग्रस्त रहता है । राजा के प्रिय पुत्र का प्रिय होता है । उसके नेत्र सुन्दर होते हैं । स्त्री सुख की प्राप्ति, विशिष्ट जल देने वाले बादल के समान, समय आने पर सिद्धि-ऋद्धि की प्राप्ति का फल कहा गया है । यदि मनुष्य अर्कज ( शनि ) का जप पूजा पाठ करे तो उसे सब समृद्धि प्राप्त होती है; हे प्रभो ! क्योंकि वे विशिष्ट कामना के फल देने वाले हैं ॥ २६-२७ ॥

**पुनश्च रविवारगं फलमतीव दुःखास्पदं**
**प्रचण्डकिरणं सदा विकललोकरोगापहम् ।**
**तमेव परिभावनं परिकरोति यो वा नरो**
**न[१] नश्यति कदाचन प्रचुरतापशापाकरम् ॥ २८ ॥**

**रविवार का फल**—अब फिर रविवार का फल कहती हूँ । उनका फल अत्यन्त दुःखास्पद है ये रवि प्रचण्ड किरणों वाले हैं । सदैव ताप से विकल लोगों के रोगों को दूर करने वाले हैं, जो मनुष्य इस प्रकार प्रचुर ताप तथा शाप के आकर सूर्य भगवान् का भजन करता है वह कभी भी विनष्ट नहीं होता ॥ २८ ॥

**कलाधरफलं शृणु प्रणवबाह्यसूक्ष्माश्रयं**
**समग्रखचराफलं फलवतां हि सञ्ज्ञाफलम् ।**
**गभीरवचनं नृपप्रियकरस्य रक्षाकरं**
**यदीन्दुभजनं यदा कलिशुभादिशम्भोऽकरोत् ॥ २९ ॥**

**सोमवार का फल**—अब हे भैरव ! कलाधर ( चन्द्रमा ) सोमवार के फल को पुनः सुनिए । यह फल प्रणव से बाहर सूक्ष्माश्रय वाला है । इसी में समस्त ग्रहों का फल समाहित है । यह सभी फलों में ग्रह संज्ञा फल है । सोमवार के दिन प्रश्नकर्ता गम्भीर वचन बोलने वाला और राजा का प्रिय करने वाले की रक्षा करता है । यदि वह पुरुष सोम का भजन पूजन करे तो कलि में शुभ एवं शान्ति की प्राप्ति होती है ? ॥ २९ ॥

**विमर्श**—रविवार से लेकर रविवार पुनः सोमवार कुल ९ वार ये ही २७ नक्षत्रों के क्रमशः देवता हैं । ९ संख्या सूचित करने के लिए रवि का २ वार फल तथा सोमवार का दो वार फल कहा गया है ।

पूर्व में प्रथम दल पर भरणी, कृत्तिका, रोहिण, मृगशिरा, आर्द्रा, पुनर्वसु पुष्य पर्यन्त सात नक्षत्रों का फल है जो १४. ३-१० तक कह आये हैं । इसके बाद प्रसङ्गानुसार राशि-देवता का वर्णन है । अत्र पुनश्च सत्ताईस नक्षत्रों के वार देवता का वर्णन है । रविवार से आरम्भ कर पुनः रविवार एवं पुनः सोमवार पर्यन्त नव वार होते हैं जो क्रमेण सत्ताईस नक्षत्रों के देवता हैं । उनका फल भी १४. २०-२९ पर्यन्त श्लोक में कहा गया है ।

---

१. लभ्यते—ख० ।

**द्वितीयदलमाहात्म्यं नक्षत्रमण्डलावृतम् ।**
**तत्तत्ताराफलं वक्ष्ये येन प्रश्नार्थनिर्णयः ॥ ३० ॥**

अब आश्लेषा से लेकर चित्रा पर्यन्त द्वितीय सकात्मक दल का फल पुनः आरम्भ करते हैं—अब द्वितीयदल का माहात्म्य जो नक्षत्र मण्डल से आवृत हैं उन उन नक्षत्रों का फल कहती हूँ जिससे प्रश्न के अर्थ का निर्णय किया जाता है ॥ ३० ॥

**अश्लेषा[१] बहुदुःखवादनगतं व्यामोहशोभावृतं**
**नानाभृङ्गनिषेवणं धनवतां हानिः पदे सम्पदे ।**
**भूपानां परिवर्ज्जनं खलजनैराच्छादितं तापितं**
**सन्दद्यात् क्षितिजातिभाति नियतं कोलाहले नारके ॥ ३१ ॥**

( ८ ) **आश्लेषा** अनेक प्रकार के दुःख के दावानल से परिपूर्ण है । यह नक्षत्र व्यामोह की शोभा से आवृत है । नाना भृङ्गों ( याचकों या चाटुकारों ) से निषेवित है । प्रत्येक पग में धनवानों के संपत्ति की हानि करता है । राजा उसका त्याग कर देते हैं और दुष्ट लोग उसे घेर कर संतप्त करते हैं ॥ ३१ ॥

**मघायां महेशि धनं हन्ति मध्ये महोल्लासवृद्धिं भयं तस्य शत्रोः ।**
**क्षितिक्षोभहन्तारमेत्यन्तभावं कुकामातुराणां सदा सङ्गकारम् ॥ ३२ ॥**

( ९ ) हे महेशी ! **मघा** नक्षत्र में मङ्गल धन का नाश करता है । उसके आनन्द की अभिवृद्धि में शत्रु का भय सताता है । वह पृथ्वी का क्षोभ मिटाने वाले का आश्रय लेता है फिर भी मारा जाता है । बुरे एवं कामातुरों का वह साथ पकड़ता है ॥ ३२ ॥

**पूर्वफल्गुनिनक्षत्रे दूरगानां[२] फलं पठेत् ।**
**अतिधैर्यं शत्रुपक्षे हानयो यान्ति निश्चितम् ॥ ३३ ॥**
**फलमुत्तरफल्गुन्या दीयते गतिरीश्वरी ।**
**यदि देवपरो नाथ तदा सर्वत्र सुन्दरम् ॥ ३४ ॥**

( १० ) **पूर्वाफाल्गुनी** नक्षत्र में प्रश्न होने पर फल को दूरगामी बताना चाहिए । प्रश्नकर्ता के अत्यन्त धैर्यवान् होने पर भी शत्रुपक्ष से हानि उठानी पड़ती है—यह निश्चित है । ( ११ ) **उत्तराफाल्गुनी** में प्रश्नकर्ता ईश्वरी गति के अनुसार फल प्राप्त करता है । हे नाथ ! यदि वह आस्तिक है तो उसे सर्वत्र सुन्दर फल प्राप्त होता है ॥ ३३-३४ ॥

**हस्तामस्तकव्रीडया शुभविलोकत्रये भाग्यदा**
**रक्ताङ्गीगतिचञ्चलामलगुणाह्लादेन कल्याणदा ।**
**सा नित्यं प्रददाति रुक्मशतकं भक्ताय यज्ञार्थिने**
**नानाव्यञ्जनभोजनैरतिसुखी संज्ञासमूहं ददेत् ॥ ३५ ॥**

---

१. आश्लेषा इति पाठ उचितः ।

२. दूरगाणामिति पाठ उचितः, कुमति चेति नित्यं णत्वप्राप्तेः ।

( १२ ) **हस्त तारा** शिर पर लज्जालु होने से अपने शुभावलोकन से सौभाग्य प्रदान करता है, उसके समस्त अङ्ग रक्त वर्ण वाले हैं गति चञ्चल है । वह अपने स्वच्छ गुणों के आह्लाद से कल्याण देने वाला नक्षत्र है । वह अपने यज्ञ करने वाले भक्त को नित्य सौ कार्षापण सोना देता है । अनेक प्रकार के व्यञ्जन भोजनों से अत्यन्त सुखकारी वह अपने भक्त को विभिन्न सञ्ज्ञा समूह प्रदान करता है ॥ ३५ ॥

**ददाति वित्तं जगतीह चित्रा मनोरथं व्याकुलतामलङ्कृता ।**
**कदाचिदेवं हि शरीरदुःखदं न प्राप्नुयादीश्वरभक्तिमालभेत् ॥ ३६ ॥**

( १३ ) **चित्रा नक्षत्र** इसी जगत् में वित्त तथा मनोरथ प्रदान करता है । ( अन्य ग्रहों से ) अलंकृत होने पर भी वह कभी व्याकुलता प्रदान करती है । ऐसा कभी नहीं हो सकता कि उसके साधक को शरीर का दुःख प्राप्त हो । बहुत क्या, वह साधक ईश्वर की भक्ति प्राप्त करता है ॥ ३६ ॥

**अश्लेषानाथ शुक्रो विपदमपि कदा नो ददाति प्रदुःखं**
**दक्षे पत्रे विहारोत्तरभयहराचण्डतापं न हन्ति ।**
**जीवः श्रीमानमोघाशाधनमपि विविधं ब्राह्मणः पीतवर्णः**
**पूर्वान्तःफल्गुनीशो विधुतनुजवरो नीलवर्णः [1]स्वपत्रम् ॥ ३७ ॥**
**कुरुते बहुसुखवित्तं उत्तरफल्गुनीनाथो मङ्गलेन ।**
**हस्तायाः पतिश्चन्द्रो विभवमनन्तं चित्रेशो रविः ॥ ३८ ॥**

**नक्षत्राधिपति फल विचार**—आश्लेषा के अधिपति शुक्र हैं जो कभी विपत्ति तथा दुःख नहीं देते । दक्षिण वाले द्वितीय पत्र पर स्थित वह बिहार करवाते हैं, उत्तर में आने वाले भय को विनष्ट करता है, उसके प्रचण्ड ताप का हनन नहीं करता । मघा का अधिपति जीव ( बृहस्पति ) हैं जो विविध प्रकार की धन-सम्पत्ति प्रदान करते हैं । बृहस्पति ब्राह्मण है । उनके शरीर का वर्ण पीत है । पूर्वाफाल्गुनी के अधिपति चन्द्रमा के लड़के बुध हैं । जिनके शरीर का वर्ण नीला है । वे अपने पत्र पर तथा उत्तरा फाल्गुनी के अधिपति मङ्गल के साथ अनेक प्रकार के सुखों से चित्त को पूर्ण कर देते है, हस्त के अधिपति चन्द्रमा तथा चित्रा के अधिपति रवि हैं जो अनन्त वैभव संपन्न बनाते हैं ॥ ३७-३८ ॥

**अधस्तृतीयपत्रस्य नक्षत्राणि शृणु प्रभो ।**
**यासां वारविशिष्टानां प्रश्ननिष्कर्षसत्फलम् [2]॥ ३९ ॥**

हे प्रभो ! अब अधः **तृतीय पत्र** पर रहने वाले नक्षत्रों को सुनिए, जो वार विशिष्ट होने पर प्रश्न के निष्कर्ष का उत्तम फल प्रदान करते हैं ॥ ३९ ॥

**स्वातीं रविः पाति महोग्र तेजसा [3] विनाशकाले विपरीतबुद्धिदः ।**
**इन्दुर्विशाखां सुखदः सरस्वतीं कुजोऽनुराधां विपदां प्रबाधाम् ॥ ४० ॥**

---

१. सुपुत्रम्—ख० । २. प्रश्नस्य यो निष्कर्षः, सारांशः तस्य सत्फलम् ।
३. महच्च तदुग्रं चेति महोग्रम्, तच्च तत्तेजश्च, तेनत्यर्थः ।

(१४) **स्वाती** नक्षत्र की रक्षा रवि अपने तेज से करते हैं । किन्तु जब विनाशकाल उपस्थित होता है तो वे ही विपरीत बुद्धि प्रदान करते हैं । (१५) **विशाखा** के अधिपति इन्दु हैं जो सुख तथा सरस्वती प्रदान करते हैं । (१६) अनुराधा के अधिपति कुज ( मङ्गल ) हैं जो समस्त विपत्तियों को प्रबाधित करते हैं ॥ ४० ॥

**बुधो हि पायात् सकलार्थसाधिनीं तथा हि मूलां सुखदाञ्च जीवः ।**
**तदा धनार्थं प्रददाति शुक्रः पूर्वान्विताऽऽषाढिकयाऽन्वितः सुखम् ॥ ४१ ॥**

(१७) सम्पूर्ण अर्थों का साधक ( ज्येष्ठा ) नक्षत्र है । उसके अधिपति बुध हैं जो रक्षा करते हैं। (१८) इसी प्रकार **मूल** सुख देने वाले हैं । जीव ( बृहस्पति ) उसके अधिपति हैं। (१९) पूर्वाषाढ़ के अधिपति शुक्र है । वे सुख देते हैं तथा धन भी ॥ ४१ ॥

**चतुर्थपत्रं वामस्थं महामङ्गलकारणम् ।**
**अथर्ववेदरूपं तत् सर्वप्रश्नकथावृतम् ॥ ४२ ॥**
**विपरीते महद्दुखं वर्णसौख्येऽपि हानयः ।**
**भवन्ति तारकाणाञ्च शुभदृष्ट्या महोदयाः ॥ ४३ ॥**

**चौथा पत्र** बाई ओर स्थित है, वह महामङ्गलकारी है वह अर्थववेद का स्वरूप है, तथा सारे प्रश्नों के कथा से आवृत है । प्रश्न वर्ण के विपरीत होने पर महान् दुःख तथा वर्णों के सुखकारक होने पर भी हानि उठानी पड़ती है । किन्तु यदि नक्षत्रों की शुभदृष्टि हो तो महान् अभ्युदय या लाभ होता है ॥ ४२-४३ ॥

**तत्तारकानाथगुणं शुभाशुभफलप्रदम् ।**
**प्रश्नवर्णसमूहानां मतमालोक्य निर्णयम् ॥ ४४ ॥**
**शनिः पात्युत्तराषाढां हानिरूपां विपाकदाम् ।**
**दुःखदारिद्र्यसंयुक्तां देवनिष्ठेन बाधते ॥ ४५ ॥**

यह शुभाशुभ फल तारकों ( नक्षत्रों ) के अधिपति के गुण से प्रगट होते हैं, इसलिए प्रश्नवर्ण के समूहों का मत जानकर तब निर्णय देना चाहिए । ( २० ) **उत्तराषाढ़** के अधिपति शनि हैं । वे विपाक ( परिणाम ) में होने वाली हानि ही देते हैं वह दुख दारिद्र्य देने वाले होते हैं किन्तु देवता में निष्ठा होने पर वह बाधित भी हो जाती है ॥ ४४-४५ ॥

**रविः प्रपाति श्रवणां धनादिभिः प्रधानदेवाश्रयनिर्विकल्पाम् ।**
**तथा धनिष्ठां फलदां सुधांशुः कुजो विपत्तिं शतभिग्गणेशः ॥ ४६ ॥**

( २१ ) श्रवण के अधिपति रवि धनादि द्वारा रक्षा करते हैं । प्रधान देव ( सूर्य ) के आश्रय लेने से उसका ऐसा फल निर्विकल्प समझना चाहिए । ( २२ ) **धनिष्ठा** के अधिपति सुधांशु ( चन्द्रमा ) हैं। इसलिए वह उत्तम फल देने वाले नक्षत्र हैं । ( २३ ) **शतभिषा** तारागणों के देवता कुज ( मङ्गल ) हैं, जो विपत्ति प्रदान करते हैं ॥ ४६ ॥

**विमर्श**—शतभिषा में १०० तारे होते हैं । उसका अधिपति होने के कारण मङ्गल को गणेश कहा गया है । ( द्र० १४. ४८ ) । 'शतभिशजां गणनामीशा' या 'शतभिग्गणेश' ।

पूर्वभाद्रपदानाथो[1] बुधः काञ्चनवर्धनः ।
तथा लोकं महादेवोत्तरभाद्रपदापतिः ॥ ४७ ॥
बृहस्पतिः सुखोल्लासं रेवती शस्तथा भृगुः ।
ददाति परमाह्लादं स्वस्व पत्रस्थराशिभिः ॥ ४८ ॥

( २४ ) **पूर्वाभाद्रपद** के अधिपति बुध हैं जो सुवर्ण की वृद्धि करते हैं । ( २५ ) **उत्तरभाद्रपद** के अधिपति महान्देव बृहस्पति हैं जो उत्तम लोक प्रदान करते हैं तथा सुखों को उल्लसित करते हैं । ( २६ ) **रेवती** के अधिपति भृगु ( शुक्र ) हैं, जो अपने अपने पत्र पर रहने वाली राशियों के साथ परम आह्लाद प्रदान करते हैं ॥ ४७-४८ ॥

अभिजित्तारकं पाति शनिः श्रीमान् धनप्रदः ।
फलभागं मुदा दातुं शनी राजमृगान्तिके ॥ ४९ ॥
तच्चन्द्रोच्चस्थमिति के वदन्ति परमप्रियम् ।
राहुराजा ग्रहाः क्षेत्रे अभिजित् कालवेष्टितः ॥ ५० ॥

श्री सम्पन्नता एवं धन देने वाले शनि ( २७ ) **अभिजित् तारे** की रक्षा करते हैं । वस्तुतः प्रसन्नतापूर्वक फल प्रदान करने के लिए शनि राजा मृगान्तक ( सिंह ) है । उसमें भी यदि चन्द्रमा उच्च का हो तो बुद्धिमान् लोग उसे अत्यन्त उत्तम कहते है । राहु राजा ग्रहों के क्षेत्र में अभिजित् काल से परिवेष्टित है ॥ ४९-५० ॥

तत्कालं सूक्ष्मतद्रूपं यो जानाति महीतले ।
सन्ध्याकालमिति ज्ञेयं शनिराहू सुखान्तयोः ॥ ५१ ॥
तत्सन्धिकालमेवं हि सत्त्वगुणमहोदयम् ।
तत्कुम्भकं विजानीयान्मदीय देहसम्भवम् ॥ ५२ ॥
महासूक्ष्मक्षणं तद्धि कुण्डलीमण्डलं यथा ।
तस्याः प्रथमभागे च धारणाख्यः शनिः प्रभुः ॥ ५३ ॥

वह काल अत्यन्त सूक्ष्म है, पृथ्वीतल में जो उसे जान लेता है वह सुखी रहता है । शनि और राहु एकत्र रहने पर सुख का अन्त करने के लिए सन्ध्या काल के समान है । उनका सन्धिकाल इस प्रकार सत्त्वगुण का महान् उदय करने वाला होता है, उसे कुम्भक जानना चाहिए, जो मेरे शरीर से उत्पन्न हुआ है, वह क्षण कुण्डली मण्डल के समान अत्यन्त सूक्ष्म हैं । उसके प्रथम भाग में 'धारणा' नामक शनि प्रभु है ॥ ५१-५३ ॥

स्वयं ब्रह्मा मुदा भाति निरञ्जनकलेवरः ।
तस्याः शेषे रेचनाख्यः संहारविग्रहः शुचिः ॥ ५४ ॥
राहुरूपी स्वयं शम्भुः पञ्चतत्त्वविधानवित् ।
कालरूपी महादेवो विकटास्यो[2] भयङ्करः ॥ ५५ ॥

---

१. पूर्वभाद्रपदाया नाथः, बुधो देवः काञ्चनस्य सुवर्णस्य वर्धनः, वर्धक इत्यर्थः । एवमेव सर्वनक्षत्रेषु स्वामिफलं बोध्यम् ।

२. विकटमास्यं मुखं यस्य स इत्यर्थः ।

जहाँ पर निरञ्जन ( माया रहित ) ब्रह्मदेव स्वयं प्रसन्नता पूर्वक निवास करते है । उसके शेष भाग में संहार विग्रह वाले शुचि रेचन नाम से राहु रूप धारण करने वाले पञ्च तत्त्व विधान वेत्ता सदाशिव प्रभु हैं । ये महादेव ही काल स्वरूप है, जिनका मुख अत्यन्त विकट तथा भयङ्कर है ॥ ५४-५५ ॥

**सर्वपापानलं हन्ति चन्द्ररूपी सुधाकरः ।**
**कृष्णवर्णः कालयमः पुण्यापुण्यनिरूपकः ॥ ५६ ॥**
**द्वयोर्मध्ये सूक्ष्मरूपा तडित्कोटिसमप्रभा ।**
**महासत्त्वाश्रिता देवी विष्णुमायाग्रहाश्रिता ॥ ५७ ॥**
**अभिजित्तारका सूक्ष्मा सन्धिकाललया जया ।**
**कुम्भकाक्रान्तहृदया ग्रहचक्रपुरोगमा ॥ ५८ ॥**

चन्द्रमा रूप में सुधाकर स्वरूप धारण कर वही महादेव अपने साधक के सारे पापाग्नि को विनष्ट कर देते हैं और वही काले स्वरूप वाले काल यम बनकर पुण्यापुण्य का फल भी प्रदान करते हैं । उन दोनों के मध्य में करोड़ों विद्युत के समान देदीप्यमान, सूक्ष्मरूप वाली, महासत्त्व का आश्रय लिए हुये, ग्रहों पर आश्रित रहने वाली, विष्णुमाया स्वरूपा, सूक्ष्मा एवं जया अभिजित् नक्षत्र है जिसका लय सन्धिकाल में होता है । उसका हृदय कुम्भक से आक्रान्त है वही अभिजित् समस्त ग्रहसमूहों के आगे चलता है ॥ ५६-५८ ॥

**नक्षत्रमण्डलग्राममध्यस्था तिथिषोडशी ।**
**असामयी सूक्ष्मकला तरुणानन्दनिर्भरा ॥ ५९ ॥**
**अस्या आद्यभागसंस्थो ब्रह्मरूपी रजोगुणः ।**
**अस्याः शेषः कालरूपी तमोगुणलयप्रियः ॥ ६० ॥**

**तिथिविवेचन**—नक्षत्र मण्डल समूहों के मध्य में रहने वाली षोडशी तिथि हैं जिसका समय निर्धारित नहीं है और वह सूक्ष्म कला से युक्त है । वह तरुणों के समान आनन्द से परिपूर्ण रहने वाली तिथि है । इसके प्रथम भाग में स्थित रहने वाला ब्रह्मरूप रजोगुण है, इसका शेष ( भाग ) काल रूप धारण करने वाला तमोगुण है और सबको अपने में लय कर लेना ही इसे प्रिय है ॥ ५९-६० ॥

**चन्द्रो ब्रह्मा शिवः सूर्यो महामायातनूत्तरः ।**
**आत्रेयी परमा शक्तिः सुषुम्नान्तरगामिनी ॥ ६१ ॥**
**मध्यस्था ब्रह्मशिवयोर्विधिशास्त्रस्य सिद्धिदा ।**
**यैर्ज्ञायते सर्वसंस्था सर्वानन्दहृदि स्थिता ॥ ६२ ॥**

**सुषुम्ना नाड़ीस्थ आत्रेयी शक्ति का विवेचन**—चन्द्रमा ब्रह्मा हैं, सूर्य शिव हैं जो महामाया के उत्तर ( पश्चात् ) शरीर है, उसकी आत्रेयी नाम की शक्ति है जो सुषुम्ना के भीतर गमन करती है । वह सुषुम्ना ब्रह्मा और शिव के मध्य में रहने वाली है जो विधि शास्त्र की सिद्धि दात्री है । जिससे सब कुछ का ज्ञान होता है । किं बहुना, वह सबको आनन्द देने वाली है तथा हृदय में निवास करने वाली है ॥ ६१-६२ ॥

तैरानन्दफलोपेतै: सत्त्वसम्भोगकारिणी ।
महाविष्णुर्महामाया चन्द्रतारास्वरूपिणी ॥ ६३ ॥
मुक्तिदा भोगदा भोग्या शम्भोराद्या महेश्वरी ।
अज्ञानावृतता घोरान्धकारकालसंहारहंसिनी ॥ ६४ ॥

वह ( आत्रेयी शक्ति ) आनन्द रूप फलों से युक्त होने के कारण सत्त्व के संभोगो को प्रदान करने वाली हैं । यह महाविष्णु स्वरूपा है और महामाया हैं तथा चन्द्र तारा स्वरूपिणी हैं । वह भोग तथा मुक्ति प्रदान करती हैं तथा सदाशिव की भोग्या है । यह आद्या माहेश्वरी है । अज्ञान से आवृत होने पर यह घोर अन्धकार वाली है तथा काल का संहार करने वाली एवं हंसिनी है ॥ ६३-६४ ॥

मन्दवायुप्रिया यस्य कल्पनार्थे च वीरहा ।
सा पाति जगतां लोकान् तस्याधीनमिदं जगत् ॥ ६५ ॥
नाकाले म्रियते कश्चिद् यदि जानाति वायवीम् ।
वायवी परमा शक्तिरिति तन्त्रार्थ निर्णय: ॥ ६६ ॥

**वायवी कला का विवेचन**—वह ( आत्रेयी शक्ति ) मन्द वायु से प्रेम करने वाली हैं। जिसके कल्पना के लिए वही सारे संसार के जीवों की रक्षा करती हैं, सारा संसार उसी के आधीन है । यदि कोई साधक उस वायवी कला को जान ले तो उसकी अकाल मृत्यु कभी नहीं हो सकती । क्योंकि समस्त तन्त्रों का तात्पर्य यही है कि वायवी कला सर्वश्रेष्ठ शक्ति है ॥ ६५-६६ ॥

सूक्ष्मागमनरूपेण सूक्ष्मसिद्धिं ददाति या ।
नराणां भजनार्थाय अष्टैश्वर्यजयाय[१] च ॥ ६७ ॥
कथितं ब्रह्मणा पूर्वं शिष्याय तनुजाय च ।
लोभमोहकामक्रोधमदमात्सर्यहाय च ॥ ६८ ॥

जो अपने सूक्ष्म आगमन रूप से मनुष्यों के भजन के लिए तथा आठो ऐश्वर्य पर विजय पाने के लिए सूक्ष्म सिद्धि प्रदान करती है । यह बात ब्रह्मदेव ने पूर्व काल में अपने शिष्यों के लिए और अपने पुत्रों के लिए कही थी, जिन्होंने लोभ, मोह, काम, क्रोध, मद तथा मात्सर्य का परित्याग कर दिया था ॥ ६७-६८ ॥

तत्क्रमं परमं प्रीतिवर्धनं भूतले प्रभो ।
आज्ञाचक्रस्य मध्ये तु वायवी परितिष्ठति ॥ ६९ ॥
चन्द्रसूर्याग्निरूपा सा धर्माधर्मविवर्जिता ।
मनोरूपा[२] बुद्धिरूपा शरीरं व्याप्यं तिष्ठति ॥ ७० ॥

हे प्रभो ! उस वायवी कला का यही सर्वोत्कृष्ट क्रम है । यह भूतल में प्रेम की वृद्धि

१. अष्टौ च तानि ऐश्वर्याणि चेति अष्टैश्वर्याणि, तेषां जयाय, तदुपरि विजयसिद्धये ।
२. मनोरूपं शरीरं हि व्याप्य तिष्ठति खेचरी—ख० ।

करने वाली है । उक्त लक्षणलक्षित वायवी कला आज्ञाचक्र में निवास करती है । वह चन्द्र सूर्य तथा अग्नि स्वरूपा है, धर्म और अधर्म दोनों से रहित है । यह कला मनोरूपा एवं बुद्धिरूपा है तथा समस्त शरीर में व्याप्त हो कर स्थित रहती है ॥ ६९-७० ॥

**आज्ञा द्विदलमध्ये तु चतुर्द्दशमुदाहृतम् ।**
**वेददले वेदवर्णं वादिसान्तं महाप्रभम् ॥ ७१ ॥**
**तदग्निरूप सम्पन्नम् ऋग्वेदादिसमन्वितम् ।**
**शृणु तद्वेदमाहात्म्यं क्रमशः क्रमशः प्रभो[1] ॥ ७२ ॥**

**॥ इति श्री रुद्रयामले उत्तरतन्त्रे भावप्रश्नार्थनिर्णये आज्ञाचक्रसङ्केते वेदप्रकरणे भैरवी भैरवसंवादे चतुर्दशः पटलः ॥ १४ ॥**



आज्ञाचक्र में दो दल हैं, जिसमें चौदह अक्षर हैं, यह हम पहले कह आये हैं । वेद दल में ( व श ष स ) ये चार वर्ण हैं जो अत्यन्त तेजोमय है । वे सभी अग्निस्वरूप हैं और ऋग्वेदादि से युक्त हैं । हे प्रभो ! अब उन वेदों का माहात्म्य एक एक के क्रम से श्रवण कीजिए ॥ ७१-७२ ॥

**॥ श्री रुद्रयामल के उत्तरतन्त्र में भावप्रश्नार्थनिर्णय में आज्ञाचक्रसंकेत में सिद्धमन्त्र प्रकरण के वेद प्रकरण में भैरवी-भैरव संवाद के चौदहवें पटल की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ १४ ॥**



---

१. प्रभो ! इति सम्बोधनान्तः पाठ उचितः ।

# अथ पञ्चदशः पटलः

आनन्दभैरवी[1] उवाच

देवकार्यं वेदशाखापल्लवं [2]प्रणवं परम् ।
वदामि परमानन्द भैरवाह्लादमाशृणु ॥ १ ॥
आद्यपत्रे अकारञ्च ऋग्वेदं परमाक्षरम् ।
ब्रह्माणं तं विजानीयाद् आद्यवेदार्थनिर्णयम् ॥ २ ॥

**आनन्दभैरवी ने कहा**—हे भैरव ! अब देवकार्य, वेदशाखा के पत्र तथा पर स्वरूप प्रणव को और जो परमानन्द भैरव को आह्लादित करने वाला है उसके विषय में सुनिए । आद्यपत्र में रहने वाला अकार ऋग्वेद का सर्वश्रेष्ठ अक्षर है । उसे ब्रह्मा का स्वरूप समझना चाहिए, जो सर्वप्रथम वेदार्थ का निर्णय करता है ॥ १-२ ॥

वेदेन लभ्यते सर्वं वेदाधीनमिदं जगत् ।
वेदमन्त्रविहीनो[3] यः शक्तिविद्यां समभ्यसेत् ॥ ३ ॥
स भवेद्धि कथं योगी कौलमार्गपरायणः ।

श्रीआनन्दभैरव उवाच

ब्रह्मस्तोत्रं हि किं देवि! ब्रह्मविद्या च कीदृशी? ॥ ४ ॥

वेद से सब कुछ प्राप्त किया जा सकता है । यह सारा जगत् वेद के अधीन है । जो वेदमन्त्र नहीं जानता किन्तु शक्ति विद्या का अभ्यास करता है वह शक्ति ( कौल ) मार्ग का उपासक भला किस प्रकार योगी बन सकता है ।

**श्री आनन्दभैरव ने कहा**—हे देवि ! ब्रह्मस्तोत्र क्या है, तथा ब्रह्मविद्या का स्वरूप कैसा है ? ॥ ३-४ ॥

ब्रह्मज्ञानी च को वा स्यात् को वा ब्रह्मशरीरधृक् ।
तत्प्रकारं कुलानन्दकारिणि प्रियकौलिनि ॥ ५ ॥
वद शीघ्रं यदि स्नेहदृष्टिश्चेन्मयि सुन्दरि ।

श्री आनन्दभैरवी उवाच

तदेव ब्रह्मणः स्तोत्रं वायवीशक्तिसेवनम् ॥ ६ ॥

---

१. आनन्दभैरव उवाच—ख० । २. देवकार्यात् देवशाखा—ख० ।
३. वेदानां मन्त्रैर्विहीनो रहितः ।

**ब्रह्मविवेचन**—कौन लोग ब्रह्मज्ञानी होते हैं ? तथा कौन ब्रह्म का शरीर धारण करता है । हे कुलानन्दकारिणि ! हे शक्ति मार्ग से प्रेम करने वाली ! हे सुन्दरि ! यदि मुझ पर स्नेह रखती हो तो शीघ्र उसे बतलाइए ।

**श्री आनन्दभैरवी ने कहा**—वायवी शक्ति की जो सेवा है, वही ब्रह्मस्तोत्र हैं ॥ ५-६ ॥

**सूक्ष्मरूपेण[१] मग्ना या ब्रह्मविद्या प्रकीर्तिता ।**
**सदा[२] वायू[३] प्राणरससूक्ष्मोन्मत्तप्रसन्नधी: ॥ ७ ॥**

उसी में सूक्ष्मरूप से जो निमग्न है वही ब्रह्मविद्या कही जाती हैं । वही वायुरूप प्राणरस का सूक्ष्म स्वरूप तथा उन्मत्त ( आनन्दोद्रेक ) एवं बुद्धि में प्रसन्नता उत्पन्न करने वाली हैं ॥ ७ ॥

**एकान्तभक्ति: श्रीनाथे ब्रह्मविद्या प्रकीर्तिता ।**
**अष्टाङ्गन्यासनिहत: सूक्ष्मसञ्चारहृत् शुचि: ॥ ८ ॥**
**सदा[४] विवेकमाकुर्याद् ब्रह्मज्ञानी प्रकीर्तित: ।**
**ब्रह्मानन्दं हृदि श्रीमान् शक्तिमाधाय वायवीम् ॥ ९ ॥**
**सदा भजति यो ज्ञानी ब्रह्मज्ञानी प्रकीर्तित: ।**
**विजयारससारेण बिना बाह्यासवेन च ॥ १० ॥**
**वायव्यानन्दसंयुक्तो ब्रह्मज्ञानी प्रकीर्तित: ।**

श्री नाथ विष्णु में अनन्य भक्ति ही 'ब्रह्मविद्या' कही गई हैं । जो अष्टाङ्ग योग में निरत हृदय से सूक्ष्म में विचरण करने वाला पवित्र, तथा नित्य विवेक धारण करने वाला है, वह 'ब्रह्मज्ञानी' कहा जाता है । जो श्रीमान्, ब्रह्मानन्द में निमग्न रहने वाला, हृदय में वायवी शक्ति धारण कर सर्वदा भजन करता है, वह ज्ञानी 'ब्रह्मज्ञानी' कहा जाता है । बिना बाह्य आसव का सेवन किए मात्र विजया रस का सार ग्रहण करने वाला वायव्य आनन्द से संयुक्त साधक 'ब्रह्मज्ञानी' कहा जाता है ॥ ८-१० ॥

**सदानन्दरसे मग्न: परिपूर्णकलेवर: ॥ ११ ॥**
**आनन्दाश्रुजलोन्मत्तो[५] ज्ञातो ब्रह्मशरीरधृक् ।**
**शक्ति:[६] कुण्डलिनी देवी जगन्मातास्वरूपिणी ॥ १२ ॥**
**प्राप्यते यै: सदा भक्तै: [७]मुक्तिरेवागमं फलम् ।**
**आद्यपत्रे प्रतिष्ठन्ति वर्णजालसमाश्रिता: ॥ १३ ॥**

---

१. ऋग्वेदस्थं परमहंसमण्डलारूढमीश्वरम् । वेदवक्त्रं वेदविद्या वेदकायं प्रकाशकम् ॥
श्रुतिकन्या वेदकन्या सुन्दरानन्दमाश्रिता । वायुकृष्टशरीरे च प्राणिनां वायवी श्रुति: ॥
इति क० अ० पाठ: ।

२. पानरससूक्ष्मा प्रसन्नधी:—ख० । ३. वायुप्राण इति समस्तं पदं प्रतिभाति ।

४. एकान्तभक्ति: श्रीनाथे जीवात्मपरमात्मनि । विवेकी विचरेदेको ज्ञातो ब्रह्मशरीरधृक् ॥
वायवीं शक्तिमाश्रित्य सदा ध्यानपरायण: । वशी ज्ञानवशाच्छन्नो ज्ञातो ब्रह्मशरीरधृक् ॥

५. विवेकमत् कुर्यात:—ख० । ७. सर्वदा जननायिका:—ख० ।

६. आनन्दोद्भूतो योऽश्रुजलात्मको रस:, तेन उन्मत्त इति भाव: ।

**ब्रह्मशरीर विवेचन**—जो नित्य आनन्द रस में निमग्न, परिपूर्ण इच्छा वाला, आनन्द से प्रवाहित अश्रु जल में उन्मत्त एवं ज्ञान संपन्न है, उसे ब्रह्मशरीर धारण करने वाला समझना चाहिए ।

**कुण्डलिनी विवेचन**—समस्त जगत् की मातृ-स्वरूपा कुण्डलिनी ही शक्ति पद से कही जाती है, जिसकी उपासना से भक्त लोग आगम फल के स्वरूप मुक्ति को प्राप्त करते हैं, उसके आद्य पत्र पर समस्त वर्णसमूहों का निवास है ॥ ११-१३ ॥

**वायवीशक्तयः कान्ता ब्रह्माण्डमण्डलस्थिताः ।**
**राशिनक्षत्रतिथिभिः सर्वदोज्ज्वलनायिकाः**[1] **॥ १४ ॥**
**भवानी ब्रह्मशक्तिस्था साऽवश्यमेवमाश्रयेत् ।**
**मासेन जायते सिद्धिः खेचरी वायुशोषणी ॥ १५ ॥**

समस्त वायवी शक्ति, राशि, नक्षत्र तथा तिथियों के सहित समस्त ब्रह्माण्ड मण्डल जिसमें स्थित हैं ऐसी मनोहर कुण्डलिनी सर्वदा उज्ज्वल नायिका स्वरूपा है । इसलिए साधक को ब्रह्मशक्ति में रहने वाली उस भवानी स्वरूपा कुण्डलिनी का अवश्य आश्रय प्राप्त करना चाहिए । जिसके आश्रय करने से एक महीने के भीतर वायुशोषणी खेचरी सिद्धि प्राप्त हो जाती है ॥ १४-१५ ॥

**द्विमासे वज्रदेहः स्यात् क्रमेण वर्धयेत् पुमान् ।**
**द्विमासे कल्पसंयुक्तो यस्य सम्बन्धरूपतः ॥ १६ ॥**
**चैतन्या कुण्डली शक्तिर्वायवी बलतेजसा ।**
**चैतन्यसिद्धिहेतुस्था ज्ञानमात्रं ददाति सा ॥ १७ ॥**

जिस कुण्डलिनी के सम्बन्ध रूप से पुरुष दो महीने में वज्र के समान सुपुष्ट शरीर वाला तथा प्रत्येक कार्य के करने में सक्षम हो जाता है । यह कुण्डलिनी शक्ति सर्वदा चैतन्य स्वरूपा है । यह बल और तेज से वायवी शक्ति है । इस प्रकार चैतन्य मात्र में स्थित होने के कारण वह समस्त ज्ञान प्रदान करती है ॥ १६-१७ ॥

**ज्ञानमात्रेण मोक्षः स्याद् वायवी ज्ञानमाश्रयेत् ।**
**महाबली महावाग्मी वर्धते च दिने दिने ॥ १८ ॥**

साधक को ज्ञान से ही मोक्ष प्राप्ति होती है । इसलिए वायवी ( शक्ति ) ज्ञान का आश्रय लेना चाहिए । कुण्डलिनी का आश्रय लेने वाला महाबली तथा महावक्ता होता है । इस प्रकार वह रात दिन बढ़ता रहता है ॥ १८ ॥

**आयुर्वृद्धिः सदा तस्य जरामृत्युविवर्जितः ।**
**कुण्डलीकृपया नाथ विना किञ्चिन्न सिद्ध्यति ॥ १९ ॥**
**ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरञ्च सदाशिवः ।**
**ततः परशिवो देव वायवी परिकल्पिता ॥ २० ॥**

---

१. भान्ति ब्रह्मसिद्धये सा—ख० । सर्वदोज्ज्वलनायिका इत्येकवचनान्तः पाठ उचितः ।

कुण्डलिनी का साधक जरा मृत्यु से विवर्जित रहता है । उसकी निरन्तर आयु की वृद्धि होती रहती है । हे नाथ ! कुण्डलिनी की कृपा बिना प्राप्त किए पुरुष का कुछ भी इष्ट सिद्ध नहीं होता ।

**वायवीशक्ति निरूपण**—ब्रह्मा, विष्णु, रुद्र, ईश्वर, सदाशिव उसके बाद परशिव ये सभी वायवी शक्ति के स्वरूप हैं ॥ १९-२० ॥

**एते षट्शङ्कराः सर्वसिद्धिदाः चित्तसंस्थिताः ।**
**सर्वे तिष्ठन्ति [1]पत्राग्रेऽमृतधारारसाप्लुताः ॥ २१ ॥**
**अधोमुखाः सूक्ष्मरूपाः कोटिसूर्यसमप्रभाः ।**
**ब्रह्ममार्गस्थिताः सर्वे सन्ति षट्चक्रमण्डले ॥ २२ ॥**

चित्त भूमिका में निवास करने वाले ये छ शङ्कर समस्त सिद्धियाँ प्रदान करने वाले हैं ये सभी उस पत्र के अग्रभाग में ( द्र० . १५. २, १३ ) अमृतधारा रस से परिपूर्ण हो कर निवास करते हैं । इनका मुख नीचे की ओर है, और स्वरूप अत्यन्त सूक्ष्म है, इनकी कान्ति करोड़ों सूर्य के समान है, ये सभी षट् चक्रमण्डल के ब्रह्ममार्ग में स्थित रहने वाले है ॥ २१-२२ ॥

**आज्ञया अध एवं हि चक्रं द्वादशकं स्मरेत् ।**
**गलितामृतधाराभिराप्लुतं कुण्डलीप्रियम् ॥ २३ ॥**
**आग्नेयीं कुण्डलीं मत्त्वा अधोधाराभितर्पणम् ।**
**प्रकुर्वन्ति परानन्दरसिकाः षट्शिवाः सदा ॥ २४ ॥**

आज्ञा चक्र के नीचे द्वादश चक्र ( द्र० . ११ . ७०-७३ ) का ध्यान करना चाहिए जो कुण्डलिनी को अत्यन्त प्रिय हैं और गिरते हुये अमृत धाराओं से नित्य परिपूर्ण रहते हैं । यतः कुण्डलिनी शक्ति अग्नि देवता से सम्बन्धित हैं, अतः उन्हें इस अधोभाग में स्थित रहने वाली अमृत धारा से तृप्त करना चाहिए । इसीलिए परानन्द के रस का अनुभव करने वाले ये षट् शिव ( द्र० . १५ . २० ) उसको तृप्त करते रहते है ॥ २३-२४ ॥

**चन्द्रमण्डलसञ्जाता जीवरूपधरा यथा ।**
**आत्मज्ञानसमाशक्ताः शक्तितर्पणतत्पराः ॥ २५ ॥**
**द्वितीयदलरूपं हि यजुर्वेदं कुलेश्वर ।**
**अकस्मात् सिद्धिकरणं विष्णुना परिमीलितम् ॥ २६ ॥**

ये चन्द्रमण्डल में निवास करने वाले जीवों के समान आत्मज्ञान की आसक्ति में लीन रह कर शक्ति तर्पण में लगे रहते हैं ।

**विष्णु का ध्यान**—हे कुलेश्वर ! उस वेद शाखा का द्वितीय दल यजुर्वेद का स्वरूप है । यह विष्णु से संयुक्त रहता है तथा अकस्मात् सिद्धि प्रदान करता है ॥ २५-२६ ॥

**वज्रकोटिमहाध्वानघोरनादसमाकुलम् ।**
**हरिमीश्वरमीशानं वासुदेवं सनातनम् ॥ २७ ॥**

---

१. मन्त्राधिष्ठानविलयम्—ख० ।

अनन्तभावनं शम्भोरशेषसृष्टिशोभितम् ।
अथर्वं भावयेन्मन्त्री शक्तिचक्रक्रमेण तु ॥ १०० ॥
आज्ञाचक्रे वेददले चतुर्दलसुमन्दिरे ।
अथर्वयोगिनीं ध्यायेत् समाधिस्थेन चेतसा ॥ १०१ ॥

यह अथर्व अनन्त भावना वाला है । सदाशिव की समस्त सृष्टि से शोभित है । उसका शक्ति चक्र के क्रम से मन्त्रवेत्ता साधक ध्यान करे । आज्ञाचक्र में चार पत्तों वाला कमल है उस चतुर्दल कमल कोष में अथर्व रूप योगिनी का समाधि में स्थित चित्त से ध्यान करे ॥ १००-१०१ ॥

ततोऽच्युताख्यं जगतामीश्वरं शीर्षपङ्कजे ।
प्रपश्यति जगन्नाथं नित्यसूक्ष्मसुखोदयम्[१] ॥ १०२ ॥
आज्ञाचक्रे शोधनमशेषदलमथर्वं परिकीर्तितम् ।
ज्योतिश्चक्रे तन्मध्ये योगमार्गेण सद्बिलम् ॥ १०३ ॥

तदनन्तर शीर्षस्थ कमल में जगत् के ईश्वर जिन्हें अच्युत कहा जाता है उन जगन्नाथ का दर्शन होता है, जो नित्य सूक्ष्म तथा सुखोदय स्वरूप हैं । इस आज्ञाचक्र में जिसका संपूर्ण दल शुद्ध करने वाला है वही अथर्व नाम से पुकारा जाता है उसी के मध्य में ज्योतिश्चक्र है जिसका उत्तम बिल ( द्वार ) योगमार्ग से जाना जाता है ॥ १०२-१०३ ॥

प्रपश्यति महाज्ञानी बाह्यदृष्ट्या यथाम्बुजम् ।
कालेन सिद्धिमाप्नोति ब्रह्मज्ञानी च साधकः ॥ १०४ ॥
ततो भजेत् कौलमार्गं ततो विद्यां प्रपश्यति ।
महाविद्यां कोटिसूर्यज्वालामालासमाकुलम् ॥ १०५ ॥

महाज्ञानी बाह्य दृष्टि से जिस प्रकार कमल देखते हैं उसी प्रकार उस द्वार का भी दर्शन करते है, जिससे ब्रह्मज्ञानी साधक काल ( समय ) पाकर सिद्धि प्राप्त करते हैं । इसलिए कौलमार्ग का आश्रय लेना चाहिए । तभी महाविद्या का दर्शन संभव है । वह महाविद्या करोड़ों सूर्य की ज्वालामाला से व्याप्त है ॥ १०४-१०५ ॥

एतत्तत्त्वं विना नाथ न पश्यति कदाचन ।
वसिष्ठो ब्रह्मपुत्रोऽपि चिरकालं सुसाधनम् ॥ १०६ ॥
चकार निर्जने देशे कृच्छ्रेण तपसा वशी ।
शतसहस्रं वत्सरं च व्याप्य योगादिसाधनम् ॥ १०७ ॥

**बुद्ध-वशिष्ठ वृत्तान्त**--हे नाथ ! यही तत्त्व है, जिसके बिना महाविद्या का दर्शन नहीं होता । ब्रह्मा के पुत्र वशिष्ठ जी ने भी बहुत काल तक निर्जन स्थान में निवास कर बहुत बड़ी कठिन तपस्या से श्रेष्ठ साधन किया । इस प्रकार वे योगादि साधन निरन्तर एक लाख वर्ष तक करते रहे ॥ १०६-१०७ ॥

---

१. नित्यं सूक्ष्मसुखोदयो यस्मिन्, तं जगन्नाथमित्यर्थः ।

**तथापि साक्षाद्विज्ञानं न बभूव महीतले ।**
**ततो जगाम क्रुद्धोऽसौ तातस्य निकटे प्रभुः ॥ १०८ ॥**
**सर्वं तत् कथयामास स्वीयाचारक्रमं प्रभो ।**
**अन्यमन्त्रं देहि नाथ एषा विद्या न सिद्धिदा ॥ १०९ ॥**

इतना करने पर भी उन्हें इस पृथ्वीतल पर साक्षाद् महाविद्या का विज्ञान नहीं हुआ । तब सर्वसमर्थ वशिष्ठ ऋषि क्रुद्ध हो कर अपने पिता ब्रह्मदेव के पास गये । हे प्रभो ! वहाँ जाकर उन्होंने अपने पिता से सभी आचार का क्रम बतलाया, और कहा–हे पिता ! मुझे अन्य मन्त्र प्रदान कीजिये । क्योंकि यह विद्या सिद्धि नहीं देती ॥ १०८-१०९ ॥

**अन्यथा सुदृढं शापं तवाग्रे प्रददामि हि ।**
**ततस्तं वारयामास एवं न कुरु भो सुत ॥ ११० ॥**
**पुनस्तां भज भावेन योगमार्गेण पण्डित ।**
**ततः सा वरदा भूत्वा आगमिष्यति तेऽग्रतः ॥ १११ ॥**

यदि आप ऐसा नहीं करते तो मैं उस महाविद्या को आप के आगे ही दृढ़तर शाप दूँगा । तब ब्रह्मा ने उन्हें मना किया कि हे पुत्र ! ऐसा मत करो । हे पण्डित ! तुम पुनः **भावपूर्वक** 'योग-मार्ग' से उन महाविद्या की आराधना करो । पुनः ऐसा करने से वह वरदायिनी बन कर तुम्हारे आगे आएंगी ॥ ११०-१११ ॥

**सा देवी परमा शक्तिः सर्वसङ्कटतारिणी ।**
**कोटिसूर्यप्रभा नीला चन्द्रकोटिसुशीतला ॥ ११२ ॥**
**स्थिरविद्युल्लताकोटिसदृशी कालकामिनी ।**
**सा[१] पाति जगतां लोकान् तस्याः कर्म चराचरम् ॥ ११३ ॥**

वह देवी परमा शक्ति है । समस्त सङ्कटों से तरण तारण करने वाली है । वह करोड़ों सूर्यों के समान कान्तिमती तथा नीलवर्णा हैं और करोड़ों चन्द्रमा के समान सुशीतल भी हैं । सर्वदा स्थिर रहने वाली और करोड़ों विद्युल्लता के समान प्रकाश करने वाली महाकाल की कामिनी है । वह समस्त जगत् के लोगों का पालन करने वाली हैं, यह चराचर जगत् उन्ही का कार्य है ॥ ११२-११३ ॥

**भज पुत्र स्थिरानन्द कथं शप्तुं समुद्यतः ।**
**एकान्तचेतसा नित्यं भज पुत्र दयानिधे ॥ ११४ ॥**

हे स्थिरानन्द ! हे पुत्र ! तुम उन्ही का भजन करो । उन्हे शाप देने के लिए क्यों उद्यत हो ? हे दयानिधे ! हे पुत्र ! तुम मन को एकाग्र कर निरन्तर भजन करो ॥ ११४ ॥

**तस्या दर्शनमेवं हि अवश्यं समवाप्स्यसि ।**
**एतत् श्रुत्वा गुरोर्वाक्यं प्रणम्य च पुनः पुनः ॥ ११५ ॥**

---

१. सर्वस्वरूपा सर्वाख्या धर्माधर्मविवर्जिता । शुद्धचीनाचारता शक्तिचक्रप्रवर्तिका ॥
अनन्तानन्तमहिमा संसारावर्तनाशिनी । बुद्धेश्वरी बुद्धमाता अर्भकवेदश्लाघिनी ॥ क०।

**जगाम जलधेस्तीरे वशी वेदान्तवित् शुचिः ।**
**सहस्रवत्सरं सम्यक् जजाप परमं जपम् ॥ ११६ ॥**

ऐसा करते रहने से आप उनका दर्शन अवश्य प्राप्त करेंगे । अपने पिता ब्रह्मा की इस बात को सुनकर वेदान्तवेत्ता, परम पवित्र, इन्द्रियों को वश में रखने वाले वशिष्ठ जी बारम्बार उन्हें प्रणाम कर समुद्र के किनारे गये । वहाँ जाकर उन्होंने पुनः एक सहस्र वर्ष पर्यन्त नियमपूर्वक देवी के श्रेष्ठ मन्त्र का जप किया ॥ ११५-११६ ॥

**आदेशोऽपि न बभूव ततः क्रोधपरो मुनिः ।**
**व्याकुलात्मा महाविद्यां वसिष्ठः शप्तुमुद्यतः ॥ ११७ ॥**
**द्विराचम्य महाशापः प्रदत्तश्च सुदारुणः ।**
**तेनैव मुनिना नाथ मुनेरग्रे कुलेश्वरी ॥ ११८ ॥**

इतना कहने पर भी जब देवी का कोई संदेश नहीं प्राप्त हुआ । तब वे मुनि बहुत क्रुद्ध हो उठे और व्याकुल चित्त हो कर महाविद्या को शाप देने के लिए उद्यत हो गये । उन्होंने दो बार आचमन किया फिर बहुत कठिन शाप दिया । तब वह कुलेश्वरी मुनि के आगे आ कर खड़ी हो गईं ॥ ११७-११८ ॥

**आजगाम महाविद्या योगिनामभयप्रदा ।**
**अकारणमरे विप्र शापो दत्तः सुदारुणः ॥ ११९ ॥**

योगियों को अभयदान देने वाली महाविद्या ने वशिष्ठ से कहा—हे ब्राह्मण ! तुमने अकारण ही ऐसा कठिन शाप दिया ॥ ११९ ॥

**मम सेवां न जानाति मत्कुलागम चिन्तनम्[1] ।**
**कथं योगाभ्यासवशात् मत्पदाम्भोजदर्शनम् ॥ १२० ॥**
**प्राप्नोति मानुषो देवे मनध्यानमदुःखदम् ।**
**यः कुलार्थी सिद्धमन्त्री मद्वेदाचार निर्मलः ॥ १२१ ॥**
**ममैव साधनं पुण्यं वेदानामप्यगोचरम् ।**
**बौद्धदेशेऽथर्ववेदे महाचीने तदा व्रज ॥ १२२ ॥**

तुम न तो मेरी सेवा का विधान जानते हो और न मेरे कुलागम के चिन्तन का प्रकार ही जानते हो । कोई भी मनुष्य योगाभ्यास मात्र से मेरे चरण कमलों का दर्शन किस प्रकार प्राप्त कर सकता है ? देवताओं में मन द्वारा किया गया ध्यान सुख का कारण होता है । सिद्ध मन्त्रज्ञ और मेरे वेद का स्वच्छ रूप से आचरण करने वाला शक्ति मार्ग का अधिकारी तो वेद से भी अगोचर मेरा ही साधन करता है जो महापुण्यदायक है । अतः यदि तुम मेरी साधना चाहते हो तो अथर्ववेद वाले बौद्धों के देश महाचीन में जाओ ॥ १२०-१२२ ॥

**तत्र गत्वा महाभावं विलोक्य मत्पदाम्बुजम् ।**
**मत्कुलज्ञो महर्षे त्वं महासिद्धो भविष्यसि ॥ १२३ ॥**

---

१. मत्कुलस्य आगमस्तस्य चिन्तनं ध्यानम् ।

**एतद्वाक्यं कथयित्वा सा वायव्याकाशवाहिनी ।**
**निराकाराऽभवत् शीघ्रं ततः साकाशवाहिनी ॥ १२४ ॥**

हे महर्षे ! वहाँ जाकर अत्यन्त भावपूर्वक मेरी साधना से मेरे चरण कमलों का दर्शन करोगे, मेरा कुलाचार जान लोगे तब महासिद्ध हो जाओगे । आकाश में रहने वाली उस वायवी शक्ति ने इतना कह कर शीघ्र ही निराकार रूप धारण कर लिया ॥ १२३-१२४ ॥

**ततो मुनिवरः श्रुत्वा महाविद्यां सरस्वतीम् ।**
**जगाम चीनभूमौ च यत्र बुद्धः प्रतिष्ठति ॥ १२५ ॥**
**पुनः पुनः प्रणम्यासौ वसिष्ठः क्षितिमण्डले ।**
**रक्ष रक्ष महादेव सूक्ष्मरूपधराव्यय ॥ १२६ ॥**

तदनन्तर उन श्रेष्ठ महामुनि वशिष्ठ ने महाविद्या सरस्वती के द्वारा कहे गये वाक्य को सुनकर फिर वे चीन देश को चले गये, जहाँ बुद्ध प्रतिष्ठित हैं । महामुनि वशिष्ठ ने उस देश में जाकर बारम्बार प्रणाम कर कहा—हे सूक्ष्मरूप ! हे अव्यय ! हे महादेव ! मेरी रक्षा करो, मेरी रक्षा करो ॥ १२५-१२६ ॥

**अतिदीनं वसिष्ठं मां सदा व्याकुलचेतसम् ।**
**ब्रह्मपुत्रो महादेवीसाधनायाजगाम च ॥ १२७ ॥**
**सिद्धिमार्गं न जानामि वेदमार्गपरो हर ।**
**तवाचारं समालोक्य भयानि सन्ति मे हृदि ॥ १२८ ॥**

मैं अत्यन्त दीन वशिष्ठ हूँ, तथा सर्वदा मन्त्र साधन के लिए चित्त से व्याकुल रहने वाला हूँ, ब्रह्मदेव का पुत्र हूँ, तथा महादेवी की आराधना के लिए आया हुआ हूँ । हे हर ! मैं सिद्धिमार्ग को नहीं जानता, क्योंकि मैं वेदमार्ग में परायण रहने वाला हूँ, आपके ( सिद्धि ) मार्ग को देखकर मेरे हृदय में अनेक भय उत्पन्न हो रहे हैं ॥ १२७-१२८ ॥

**तन्नाशय मम क्षिप्रं दुर्बुद्धिं भेदगामिनीम् ।**
**वेदबहिष्कृतं कर्म सदा ते चालये प्रभो ॥ १२९ ॥**
**कथमेतत् प्रकारञ्च मद्यं मांसं तथाङ्गनाम् ।**
**सर्वे दिगम्बराः सिद्धा रक्तपानोद्यता वराः ॥ १३० ॥**

इसलिए भेद में पड़ी हुई मेरी दुर्बुद्धि का शीघ्र ही विनाश कीजिये । हे प्रभो ! अब मैं आपके वेद बहिष्कृत मार्ग का सर्वदा प्रचार करूँगा । मद्य मांस तथा अङ्गना सेवन का यह कौन सा प्रकार है ? जिससे ये नग्न रहने वाले रक्तपायी सभी जन श्रेष्ठ तथा सिद्ध हो जाते हैं ॥ १२९-१३० ॥

**मुहुर्मुहुः प्रपिबन्ति रमयन्ति वराङ्गनाम् ।**
**सदा मांसासवैः पूर्णा मत्ता रक्तविलोचनाः ॥ १३१ ॥**
**निग्रहानुग्रहे शक्ताः पूर्णान्तःकरणोद्यताः ।**
**वेदस्यागोचराः सर्वे मद्यस्त्रीसेवने रताः ॥ १३२ ॥**

ये बारम्बार मद्य पान करते हैं वराङ्गनाओं को रमण कराते है, मद्य, मांस, तथा आसव से उदर पूर्ति करते हैं, इनके नेत्र मद्य से निरन्तर लाल रहते हैं तथा उन्मत्त वेष धारण किए रहते हैं। ये निग्रह और अनुग्रह ( कोप तथा प्रसाद ) में समर्थ हैं। ये अन्तःकरण से परिपूर्ण हैं ये मद्य एवं स्त्री सेवन में सर्वदा निरत हैं, जो वेद से सर्वथा परे हैं ॥ १३१-१३२ ॥

**इत्युवाच महायोगी दृष्ट्वा वेदबहिष्कृतम् ।**
**प्राञ्जलिर्विनयाविष्टो वद चैतत् कुलं प्रभो ॥ १३३ ॥**
**मनःप्रवृत्तिरेतेषां कथं भवति पावन ।**
**कथं वा जायते सिद्धिर्वेदकार्यं बिना प्रभो ॥ १३४ ॥**

वेद बहिष्कृतों को देखकर महायोगी वशिष्ठ ने हाथ जोड़कर विनय वेष धारण करते हुये बुद्ध से कहा—कि हे प्रभो ! आप इसका कारण कहिये कि यह कुलमार्ग क्या है ?। हे पावन ! इनके मन की प्रवृत्ति इन कार्यों में किस प्रकार होती है और हे प्रभो ! वेद कार्य के बिना इन्हे किस प्रकार सिद्धि प्राप्त होती है ? ॥ १३३-१३४ ॥

**श्रीबुद्ध उवाच**

**वसिष्ठ शृणु वक्ष्यामि कुलमार्गमनुत्तमम् ।**
**येन विज्ञातमात्रेण रुद्ररूपी भवेत् क्षणात् ॥ १३५ ॥**
**साक्षेपेण सर्वसारं कुलसिद्ध्यर्थमागमम् ।**
**आदौ शुचिर्भवेद् धीरो विवेकाक्रान्तमानसः[1] ॥ १३६ ॥**

**तब श्रीबुद्ध ने कहा**–हे वशिष्ठ ! सुनिए, मैं सर्वश्रेष्ठ कुलमार्ग कहता हूँ, जिसके विज्ञान मात्र से साधक क्षण मात्र में रुद्रस्वरूप हो जाता है। संक्षेप में कुलमार्ग की सिद्धि के लिए आगम को कहता हूँ जो सबका स्थिर अंश है ॥ १३५-१३६ ॥

**पशुभावस्थिरचेताः[2] पशुसङ्गविवर्जितः ।**
**एकाकी निर्जने स्थित्वा कामक्रोधादिवर्जितः ॥ १३७ ॥**
**दमयोगाभ्यासरतो योगशिक्षादृढव्रतः ।**
**वेदमार्गाश्रयो नित्यं वेदार्थनिपुणो महान् ॥ १३८ ॥**

१. सर्वप्रथम विवेक चाहने वाला धीर साधक पवित्र रहे। २. पशुओं का साथ न करे, किन्तु पशुभाव में चित्त को स्थिर रखे। ३. अकेला निर्जन बन में निवास करे, तथा काम क्रोधादि दोषों से अलग रहे। ४. इन्द्रियों का दमन करते हुये योगाभ्यास करे। ५. योगशिक्षा में दृढ़ता का नियम रखे, निरन्तर वेदमार्ग का आश्रय ले कर वेदार्थ में महती निपुणता प्राप्त करें ॥ १३६-१३८ ॥

**एवं क्रमेण धर्मात्मा शीलो दार्ढ्यगुणान्वितः ।**
**धारयेन्मारुतं नित्यं श्वासमार्गे मनोलयम् ॥ १३९ ॥**

---

१. विवेकेनाक्रान्तं मानसं यस्य सः । २. पशुभावे स्थिरं चेतो यस्य सः ।

**एवमभ्यासयोगेन वशी योगी दिने दिने ।**
**शनैः क्रमाभ्यासाद् दहेद् स्वेदोद्गमोऽधमः ॥ १४० ॥**

इस प्रकार के क्रमशः अभ्यास से धर्मात्मा, शीलवान् और दृढ़ता गुण से संपन्न साधक ( प्राणायाम द्वारा ) वायु को धारण करे तथा श्वास मार्ग में अपने मन का लय करे । इन्द्रियों को वश में रखने वाला योगी इस प्रकार प्रतिदिन के अभ्यास से धीरे-धीरे अधम सिद्धि ( द्र० . १७. ५८ ) में प्राप्त स्वेद के उद्गम को भस्म कर देवे ॥ १३९-१४० ॥

**मध्यमः कल्पसंयुक्तो भूमित्यागः परो मतः ।**
**प्राणायामेन सिद्धिः स्यान्नरो योगेश्वरो भवेत् ॥ १४१ ॥**

मध्यम कल्प से संयुक्त भूमित्याग ( भूमि से ऊपर उठाने वाला प्राणायाम ) उसकी अपेक्षा श्रेष्ठ होने के कारण मध्यम है । क्योंकि प्राणायाम से सिद्धि होती है और साधक मनुष्य योगेश्वर बन जाता है ॥ १४१ ॥

**योगी भूत्वा कुम्भकज्ञो मौनी भक्तो दिवानिशम् ।**
**शिवे कृष्णे ब्रह्मपदे एकान्तभक्तिसंयुतः ॥ १४२ ॥**
**ब्रह्मविष्णुशिवा एते वायवीगतिचञ्चला ।**
**एवं विभाव्य मनसा कर्मणा वचसा शुचिः ॥ १४३ ॥**
**आदौ चित्तं समाधाय चिद्रूपायां स्थिराशयः ।**
**ततो महावीरभावं कुलमार्गं महोदयम् ॥ १४४ ॥**

**महावीर भाव के लक्षण**—योगी बन कर कुम्भक का ज्ञान करे । दिन रात मौन धारण करे और ( एकाग्र मन से ) शिव कृष्ण तथा ब्रह्मपद में निश्चल भक्ति रखकर भक्त बने । ब्रह्मा, विष्णु तथा शिव ये वायवी गति से चञ्चल रहते हैं, ऐसा विचार कर मन से, कर्म से तथा वचन से पवित्र रहकर चित्त को एकाग्र कर चिद्रूपा महाविद्या में सर्व प्रथम मन को समाहित करे । यही महाभ्युदय कारक कुलमार्ग महावीर भाव कहा जाता है ॥ १४२-१४४ ॥

**शक्तिचक्रं सत्त्वचक्रं वैष्णवं नवविग्रहम् ।**
**समाश्रित्य भजेन्मन्त्री कुलकात्यायनीं पराम् ॥ १४५ ॥**
**प्रत्यक्षदेवतां श्रीदां चण्डोद्वेगनिकृन्तिनीम् ।**
**चिद्रूपां ज्ञाननिलयां चैतन्यानन्दविग्रहाम्[१] ॥ १४६ ॥**
**कोटिसौदामिनीभासां[२] सर्वतत्त्वस्वरूपिणीम् ।**
**अष्टादशभुजां रौद्रीं शिवमांसाचलप्रियाम् ॥ १४७ ॥**

**वीरभाव की प्रक्रिया**--शक्तिचक्र, तथा नवीन विग्रह वाला वैष्णव सत्त्वचक्र का

---

१. चैतन्यं चानन्दश्च विग्रहो यस्यास्ताम् ।
२. कोटिसौदामिनीनां भासोऽस्ति यस्यास्ताम् ।

आश्रय ले कर मन्त्रज्ञ साधक कुल में रहने वाली परा कात्यायनी की सेवा करे । यह कात्यायनी प्रत्यक्ष देवता हैं और श्री प्रदान करने वाली हैं । यह प्रचण्ड उद्वेण को नाश करने वाली, चित्स्वरूपा, ज्ञाननिलया और चैतन्यानन्द स्वरूपिणी है । इनकी कान्ति करोड़ों विद्युत् के समान हैं, यह सर्वसत्त्व स्वरूपा अठारह भुजा वाली हैं शिव में, मांस ( बलि ) में तथा अचल ( कैलासादि ) में प्रेम करने वाली हैं ॥ १४५-१४७ ॥

**आश्रित्य प्रजपेन्मन्त्रं कुलमार्गाश्रयो नरः ।**
**कुलमार्गात् परं मार्गं को जानाति जगत्रये ॥ १४८ ॥**
**एतन्मार्गप्रसादेन ब्रह्मा स्रष्टा स्वयं महान् ।**
**विष्णुश्च पालने शक्तो निर्मलः सत्त्वरूपधृक् ॥ १४९ ॥**
**सर्वसेव्यो महापूज्यो यजुर्वेदाधिपो महान् ।**
**हरः संहारकर्त्ता च वीरेशोत्तममानसः ॥ १५० ॥**

कुलमार्ग का आश्रय लेने वाला साधक इन्हीं का आश्रय लेकर मन्त्र का जप करे । इस त्रिलोकी में कुलमार्ग से श्रेष्ठ अन्य मार्ग को कौन जानता है । इस कुलमार्ग की कृपा से ब्रह्मदेव महान् बन गये तथा सत्त्वरूपधारी एवं निर्मल विष्णु सृष्टि पालन करने में समर्थ हो गये । सदाशिव इस कुलमार्ग की कृपा से सबके सेवनीय सर्वपूज्य, यजुर्वेद के अधिपतिः महान् वीरेश तथा उत्तम मन वाले हो गए ॥ १४८-१५० ॥

**सर्वेषामन्तकः क्रोधी क्रोधराजो महाबली ।**
**वीरभावप्रसादेन दिक्पाला रुद्ररूपिणः ॥ १५१ ॥**
**वीराधीनमिदं विश्वं कुलाधीनञ्च वीरकम् ।**
**अतः कुलं समाश्रित्य सर्वसिद्धीश्वरो जडः ॥ १५२ ॥**

वे सभी के काल, क्रोध करने वाले, क्रोधराज तथा महाबली हो गये । वीरभाव की कृपा से सभी दिक्पाल रुद्ररूप वाले हो गये । यह सारा विश्व वीरभाव के अधीन है, और वीरभाव कुल मार्ग के अधीन है, इसलिए जड़ ( जल ) कुल मार्ग का आश्रय ले कर सर्व सिद्धिश्वर बन गया ॥ १५१-१५२ ॥

**मासेनाकर्षणं सिद्धिर्द्विमासे वाक्पतिर्भवेत् ।**
**मासत्रयेण संयोगाज्ज्ञायते सुखवल्लभः ॥ १५३ ॥**
**एवं चतुष्टये मासि भवेद् दिक्पालगोचरः ।**
**पञ्चमे पञ्चबाणः स्यात्षष्ठे रुद्रो भवेद् ध्रुवम् ॥ १५४ ॥**

साधक को मास मात्र के अभ्यास से सिद्धि का आकर्षण प्राप्त होता है, दो मास के अभ्यास से वह वाक्पति बन जाता है और तीन मास के अभ्यास से आनन्द का वल्लभ जाना जाता है । इस प्रकार चार मास के अभ्यास से उसे दिक्पालों के दर्शन होते हैं, पञ्चम मास में काम के समान सुन्दरता प्राप्त होती है तथा छः मास में रुद्रस्वरूप बन जाता है ॥ १५३-१५४ ॥

**एतदाचारसारं हि सर्वेषामप्यगोचरम् ।**
**एतन्मार्गं कौलमार्गं कौलमार्गं परं नहि ॥ १५५ ॥**

मात्र इतना ही वीराचार का सार है जो सबके लिए अगोचर है । इसी को कौलमार्ग कहते हैं । कौलमार्ग से बढ़कर कोई अन्य मार्ग नहीं ॥ १५५ ॥

**योगिनां दृढचित्तानां भक्तानामेकमासतः ।**
**कार्यसिद्धिर्भवेन्नारी कुलमार्गप्रसादतः ॥ १५६ ॥**

**कौलमार्ग की फलश्रुति**—दृढ़ता से चिन्तन करने वाले भक्त योगियों को कुल मार्ग की कृपा से एक मास में ही कार्य सिद्धि हो जाती है उसके शत्रु नहीं होते ॥ १५६ ॥

**पूर्णयोगी भवेद् विप्रः षण्मासाभ्यासयोगतः ।**
**शक्तिं बिना शिवोऽशक्तः किमन्ये जडबुद्धयः ॥ १५७ ॥**

ब्राह्मण साधक छः महीने के योगाभ्यास से पूर्णयोगी बन जाता है । शक्ति के बिना शिव जैसा योगी भक्त भी असमर्थ बन जाता है, फिर अन्य जड़बुद्धियों की बात ही क्या ? ॥ १५७ ॥

**इत्युक्त्वा बुद्धरूपी च कारयामास साधनम् ।**
**कुरु विप्र महाशक्तिसेवनं मद्यसाधनम् ॥ १५८ ॥**
**महाविद्यापदाम्भोजदर्शनं[१] समवाप्स्यसि ।**
**एतच्छ्रुत्वा गुरोर्वाक्यं स्मृत्वा देवीं सरस्वतीम् ॥ १५९ ॥**

ऐसा कहकर बुद्धरूपी सदाशिव ने साधन का उपदेश किया और कहा—हे ब्राह्मण ! मद्य साधना करो, यही महाशक्ति का सेवन है । ऐसा करने से महाविद्या के चरण कमलों का दर्शन प्राप्त कर सकोगे । अपने गुरु सदाशिव की बात सुन कर वशिष्ठ ने सरस्वती देवी का स्मरण किया ॥ १५८-१५९ ॥

**मदिरासाधनं कर्तुं जगाम कुलमण्डले ।**
**मद्यं मांसं तथा मांसं मुद्रा मैथुनमेव च ॥ १६० ॥**
**पुनः पुनः साधयित्वा पूर्णयोगी बभूव सः ।**
**योगमार्गं कुलमार्गमेकाचारक्रमं[२] प्रभो ॥ १६१ ॥**

वे मदिरा की आराधना के लिए कुल मण्डल ( शाक्त समुदायों ) में गये । वहाँ मद्य, मांस, मत्स्य, मुद्रा, तथा मैथुन की बारम्बार साधना कर वशिष्ठ पूर्णयोगी बन गये । हे प्रभो ! योगमार्ग तथा कुल मार्ग दोनों ही एक मार्ग के क्रम है ॥ १६०-१६१ ॥

**योगी भूत्वा कुलं ध्यात्वा सर्वसिद्धीश्वरो भवेत् ।**
**सन्धिकालं कुलपथं योगेन जडितं सदा ॥ १६२ ॥**

---

१. महाविद्यायाः पदाम्भोजयोः दर्शनम् ।

२. एकाचारस्य क्रमः, तम् ।

पहले योगी बनें । फिर कुल ( शक्ति ) का ध्यान करे, तब साधक सभी सिद्धियों का अधीश्वर बन जाता है । यह कुलपथ जीवात्मा तथा परमात्मा का सन्धिकाल है जो योगमार्ग से सर्वदा जोड़ा गया है ॥ १६२ ॥

**भगसंयोगमात्रेण सर्वसिद्धीश्वरो भवेत् ।**
**एतद्योगं विजानीयाज्जीवात्मपरमात्मनोः ॥ १६३ ॥**

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावप्रश्नार्थनिर्णये सिद्धमन्त्रप्रकरणे चतुर्वेदोल्लासे भैरवभैरवीसंवादे सप्तदशः पटलः ॥ १७ ॥**



जब उसमें भग ( ऐश्वर्य ) का संयोग कर दिया जाता है तो साधक सर्व सिद्धिश्वर बन जाता है और योग उसी को कहते हैं जिसमें जीवात्मा और परमात्मा एक में मिल जाते हैं ॥ १६३ ॥

**॥ श्रीरुद्रयामल के उत्तरतन्त्र में महातन्त्रोद्दीपन के भावप्रश्नार्थबोधनिर्णय में सिद्ध-मन्त्र प्रकरण के चतुर्वेदोल्लास में भैरवभैरवी संवाद में सत्रहवें पटल की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ १७ ॥**



# अथाष्टादशः पटलः

आनन्दभैरवी उवाच

**श‍ृणु नाथ प्रवक्ष्यामि असाध्यसाधनं परम् ।**
**कामचक्रस्य वर्णानां वर्णनं प्रश्ननिर्णयम् ॥ १ ॥**

**आनन्द भैरवी ने कहा**—हे नाथ ! अब मैं परम असाध्य के साधनभूत कामचक्र पर स्थित वर्णों का वर्णन तथा प्रश्न के विषय में निर्णय कहती हूँ उसे सुनिए ॥ १ ॥

**आज्ञाचक्रमध्यभागे नाडीकोटिरसालिनी ।**
**तन्मध्ये भावयेन्मन्त्री कामचक्रं मनोरमम् ॥ २ ॥**
**कामचक्रे च पूर्वोक्तवर्णमालोक्य साधकः ।**
**न्यासमन्त्रे पुटीकृत्य जपित्वा योगिराड् भवेत् ॥ ३ ॥**
**एको मन्दिरमध्यस्थो मन्त्रमाश्रित्य यत्नतः ।**
**निजनामाक्षरं तत्र तत्कोष्ठमनुमाश्रयेत् ॥ ४ ॥**

आज्ञाचक्र के मध्य में करोड़ों सरस नाड़ियाँ प्रवाहित हैं, मन्त्रज्ञ साधक उसके मध्य में अत्यन्त मनोहर कामचक्र का ध्यान करे । उस कामचक्र में साधक पूर्व में कहे गए वर्णों को देखकर न्यास मन्त्र में उसका सम्पुट कर जप करे तो वह योगिराज बन जाता है । साधक अकेले किसी मन्दिर के मध्य में स्थित होकर यत्नपूर्वक मन्त्र का आश्रय लेकर उस वर्ण के कोष्ठक में अपने नाम के अक्षरों को देखे ॥ २-४ ॥

आनन्दभैरव उवाच

**एतेषां कोष्ठसंस्थानां वर्णानां हि फलाफलम् ।**
**वद कान्ते रहस्यं मे कामचक्रफलोद्भवम् ॥ ५ ॥**

**आनन्दभैरव ने कहा**—हे कान्ते ! कोष्ठ में स्थित रहने वाले उन वर्णों के फलाफल को तथा कामचक्र के फल से उत्पन्न उस रहस्य को भी कहिए ॥ ५ ॥

आनन्दभैरवी उवाच

**कामचक्रं कालरूपं ततो वाराणसीपुरम् ।**
**तत्र सर्वपीठचक्रं चक्राणामुत्तमोत्तमम् ॥ ६ ॥**

**आनन्दभैरवी ने कहा**—यह कामचक्र काल ( राशि नक्षत्रादि ) का स्वरूप हैं । उसके बाद वाराणसीपुर है, वहीं पर सभी चक्रों में उत्तमोत्तम 'सर्वपीठचक्र' है ॥ ६ ॥

**एतच्चक्रप्रसादेन ते पादाम्बुजदर्शनम् ।**
**प्राप्नोति साधकान् सत्यं सर्वं जानाति साधकः ॥ ७ ॥**

कामनाफलसिद्ध्यर्थं मन्त्रार्थादिविचारणाम् ।
वृद्धमस्तमितं[1] त्यक्त्वा गृह्णीयान्मन्त्रमुत्तमम् ॥ ८ ॥

इसी चक्र ( वाराणसीस्थ सर्वपीठचक्र ) की कृपा होने पर, हे सदाशिव ! साधकों को आपके चरणकमलों का दर्शन होता है, वह बहुत से साधकों को भी प्राप्त करता है, किं बहुना, साधक सब कुछ सत्य जान लेता है । मन्त्र द्वारा अपनी कामना की फलसिद्धि के लिए मन्त्र के अर्थ आदि का विचार करना चाहिए । अतः कोष्ठ में वृद्ध तथा अस्तमित भावों को छोड़कर उत्तम मन्त्र का ग्रहण करना चाहिए ॥ ७-८ ॥

( आनन्दभैरवी उवाच )

शृणु वर्णफलं नाथ असाध्यप्रश्ननिर्णयम्[2] ।
वर्णानाञ्च नाथ राशिभेदेन संशृणु प्रभो ॥ ९ ॥

हे नाथ ! अब वर्णफलों को तथा असाध्य प्रश्नों के निर्णय को सुनिए । हे प्रभो ! सर्वप्रथम राशिभेद से उन वर्णों का फल कहती हूँ उसे सुनिए ॥ ९ ॥

बाल्यादिषु स्थितान् वर्गान् आश्रयेत् साधकोत्तमः ।
वर्जयेद् वृद्धभावञ्च तथास्तमितमेव च ॥ १० ॥
आश्रयेद् राशिभावेन बाल्यकैशोरयौवनम् ।
अथ बाल्यं वर्गभेदं विचारे वामयोगतः ॥ ११ ॥
मन्त्राणाञ्चापि गणयेत् प्रश्नकर्माणि दक्षिणात् ।
मध्यकोणावधिं नाथ गणनीयं विचक्षणैः ॥ १२ ॥
ऊर्द्ध्वदक्षिणयोगेन गणयेत् प्रश्नकर्मणि ।
वामयोगेन गणयेद् मन्त्रादीनां विचारणे ॥ १३ ॥

बाल्य, कैशोर तथा युवाभाव में आश्रित वर्ण मन्त्रों को साधकोत्तम ग्रहण करे । किन्तु वृद्धभाव को तथा अस्तमित भाव को प्राप्त मन्त्राक्षरों का त्याग कर देवे । राशि के भेद से बाल्य, कैशोर और युवा वर्ण वाले अक्षरों को ग्रहण करे और अपने बाल्यादिवर्ग भेद का विचार करते समय बायें से गणना करे । मन्त्रों के प्रश्न कर्म में दक्षिण से गणना करनी चाहिए । हे नाथ ! विद्वान् पुरुष को यह गणना मध्यकोण को अवधि बनाकर करनी चाहिए । प्रश्न कर्म में ऊर्द्ध्वस्थ की दक्षिण के योग के द्वारा गणना करनी चाहिए । किन्तु मन्त्र आदि के विचार में बायें के योग से गणना करनी चाहिए ॥ १०-१३ ॥

शृणु तद्वर्गवर्गाणां फलमत्यन्तसुन्दरम् ।
वदामि परमानन्दरससिन्धुमधुव्रतः(त)[3] ॥ १४ ॥

---

१. बुद्धमस्तमितं इति सं पुस्तके पाठः ।

२. आनन्दभैरव उवाच—असाध्या निरुत्तरा ये प्रम्नास्तेषा निर्णयम्—इति सं पुस्तके पाठः । द्र० भूमिका, पाठसमीक्षा ।

३. परमानन्दरससिन्धौ मधुव्रतः—सं० ।

अब हे परमानन्द सिन्धु मधुव्रत ! वर्ग कु आदि अर्थात् क वर्ग ( क ख ) आदि के अत्यन्त सुन्दर फलों को मैं कहती हूँ उसे सुनिए ॥ १४ ॥

**वर्णदेवता तस्य स्वरूपकथनम्**

**कवर्गं कामाख्याभवनमणिपीठे त्रिजगतां**
**धरित्री सा धात्री वसति सततं सिद्धिनवके ।**
**हुताशेष्वाकाशे[1] जलदतनुसाकाशजननी**
**गभीरा खड्गाभा करहर(भयवर)करा घोरमुखरा ॥ १५ ॥**

**क वर्ग के क वर्ण के देवता और फल**—क वर्ग कामाख्या हैं, जो मन्दिर के मणि पीठ पर स्थित हैं, वही तीनों जगत् को धारण करने वाली तथा धात्री ( पालन करने वाली ) हैं, सर्वदा नवसिद्धि में अग्नि में निवास करती हैं । जलद के समान शरीर वाली वही आकाश की जननी हैं और गम्भीर तथा खड्ग के समान आभा वाली हैं । हाथ में अभय तथा वर मुद्रा धारण की हैं और घोर तथा मुखर हैं ॥ १५ ॥

**अभ्यासयोगात् कलिकालपावनीं कालीं[2] कुलानन्दमयीं रमेशीम् ।**
**महारसोल्लाससुवक्त्रलोचनां कामेश्वरीं कूर्मपदं(दां) भजेज्जयी ॥ १६ ॥**

निरन्तर अभ्यास के योग से वह कलिकाल में पवित्र करने वाली हैं, काली कुल में आनन्द देने वाली रमेशी हैं, महारस के उल्लास में उनके मुख और नेत्र अत्यन्त सुन्दर दिखाई पड़ते हैं, ऐसी कामेश्वरी तथा कूर्मपद का भजन करने वाले को जय की प्राप्ति होती है ॥ १६ ॥

**कालागुरोरुत्तमसिद्धसेविता मनोहरा खेचरसारशाखिनी[3] ।**
**उल्कासमग्रा भवदीपवृत्तिस्तेज(:)(प्र)कूटामलनीलदेहा ॥ १७ ॥**

जो उत्तम सिद्धों से काला अगुरु के द्वारा सेवित हैं, अत्यन्त मनोहर तथा खेचर सार की शाखिनी ( वृक्षस्वरूपा ) हैं समग्र उल्का स्वरूपा हैं । संसार की दीपक, तेजों का समूह तथा अमल नीलवर्ण युक्त शरीर धारण करने वाली ( नीलसरस्वती ) हैं ॥ १७ ॥

**खड्गायुधा खर्परधारिणी सा चण्डोद्गमा वायुपथस्थ खेचरी ।**
**विद्याभयाखञ्जनलोचना गतिः क्षितिक्षये खेचरवर्गधारिणी ॥ १८ ॥**

**ख वर्ण का स्वरूप तथा देवता**—वही खड्ग आयुध वाली एवं खप्पर धारण करने वाली हैं जो ऊपर प्रचण्ड रूप से चलने वाली तथा वायुमार्ग में खेचरी हैं, विद्या तथा अभय से युक्त हैं खञ्जन के समान नेत्र वाली, समस्त प्राणियों की गति तथा क्षिति के क्षय हो जाने पर खेचर वर्गों को धारण करती हैं ॥ १८ ॥

**खारी विहारी खलखेलनेन खराखरोन्मत्तगतिप्रिया खगा ।**
**महाखगारूपखलस्थिता[4] सदा प्रपाति विद्याबलविक्रमस्थिता ॥ १९ ॥**

---

१. हुताश्वेषाकाशे—ग० । २. कुलानन्दरूपं रमेशीं महेशीम्—ग० ।
३. खेचरसारस्य शाखा, खेचरसारशाखा,
सा अस्ति यस्यां सा, इनिप्रत्यये सति साधुता । ४. रुपोढषादा खलसंस्थिता—ग० ।

**व्यापारनिद्रागहनार्थचिन्ताखरप्रभाभाति यदा यदा ॥ २० ॥**

जो परिमाण में खारी ( द्रोण ) हैं, खलों के साथ खेल में विहार करने वाली हैं, खरा ( कठोर ) तथा खरों के समान उन्मत्तगति जिन्हें प्रिय है, जो खगा ( आकाशाचारी ) हैं, सदैव महाखगरूप तथा खल में स्थित रहने वाली हैं तथा विद्या, बल एवं विक्रम में स्थित रह कर जगत् की रक्षा करती है । व्यापार, निद्रा, गहन अर्थों में चिन्ता तथा खर ( तीक्ष्ण ) प्रभा हैं वे जहाँ-तहाँ सर्वत्र शोभित हैं ॥ १९-२० ॥

**गायत्री गणनायिका मतिगतिग्लानिरगूढाशया**
**गीता गोकुलकामिनी गुरुतरा गार्ह्याग्निजेयोदया ।**
**गोरूपा गयहा गया गुणवती गाथापथस्थायिनी**
**श्रीगुर्वी प्रतिपालनं त्रिजगतां गायन्ति यां तां भजेत् ॥ २१ ॥**

**ग वर्ण के देवता**—जो गायत्री गणनायिका मति, गति तथा ग्लानि हैं, जिनका आशय अत्यन्त गूढ़ है, गीता तथा गोकुल कामिनी हैं, गुरुतरा हैं, गृह की अग्नि वाली एवं उदया हैं, गोरूपा, गय नामक राक्षस का हनन करने वाली, गया स्वरूपा, गुणवती एवं गाथापथ में स्थित रहने वाली हैं । श्री गुर्वी हैं, तीनों जगत् का पालन करने वाली हैं, लोग जिनका गान करते हैं ऐसी ग स्वरूपा भगवती का भक्तों को भजन करना चाहिए ॥ २१ ॥

**वायोर्घर्मकरानन्दमोहिनी घर्घरा घना ।**
**निद्रामाध्याति घटना नीला घोटकवाहिनी ॥ २२ ॥**

**घ वर्ण विचार**—जो वायु से घाम करने वाली, आनन्द को भी मोहित करने वाली घर्घरा एवं घन स्वरूपा हैं, निद्रा देने वाली घटना, नीला तथा घोटक के ऊपर सवार रहने वाली हैं उनका भजन करना चाहिए ॥ २२ ॥

**बिन्दुस्था विषभोजनानलकथा बीजश्रमायोप्रिया ।**
**पञ्चाढ्यामनुनासिका सुखमयी वेदक्रिया षण्मुखी ॥ २३ ॥**

**ङ वर्ण के देवता**—बिन्दु में स्थित रहने वाली, विष का भोजन करने वाली अग्नि के समान तेजस्विनी, बीज के लिए श्रम करने वाली तथा तीक्ष्ण लोहे के शस्त्रों से प्रेम करने वाली, पाँच से पूर्ण, नासिका से उच्चरित होने वाली, सुखमयी, वेदक्रिया तथा छः मुखों वाली ऐसी ङकार की देवता है ॥ २३ ॥

**विचित्रवस्त्राचरणाब्जचालनम्[१] ।**
**विचारचेष्टां मयि देहि चञ्चले ॥ २४ ॥**
**इति वर्णं चवर्गस्य महापातकनाशनम् ।**
**कामचक्रे स्थितं यद्यत् प्रश्ने मन्त्रगृहे यथा ॥ २५ ॥**

---

१. कृत्या भूतनिवारिणी करणगणने गात्रशिष्टामुखी ।
वरस्याहितकारिणी कलियुगे योगाटवी पातु वः ॥
चराचरत्वं चमरी चचार प्रचारचन्द्राननचञ्चला च । —क० ।

**चवर्गफलमत्यन्तनिष्कर्षं सूक्ष्मभावनम् ।**
**धिया सर्वाक्षरश्रेणीं भावयन्ति पुनः पुनः ॥ २६ ॥**

**च वर्ण के देवता**—हे चञ्चल ! आप विचित्र वस्त्रों वाली, अपने चरणकमलों से जगत् को चलाने वाली हैं मुझ में विचार की चेष्टा प्रदान कीजिए । चवर्ग वर्ण का यही माहात्म्य है कि वह महापातकों का नाशकर देता है यह कामचक्र में स्थित है, यही च प्रश्न में उस प्रकार से स्थित है, जैसे मन्त्र गृह में रहता है । च वर्ग का फल अत्यन्त सारयुक्त है, सूक्ष्म भावना वाला है, साधक लोग सभी अक्षरों की श्रेणी में बारम्बार इसका ध्यान करते हैं ॥ २४-२६ ॥

**सर्वं[1] जानाति शम्भो त्वं परं किं कथयामि ते ।**
**तथापि वर्गमाहात्म्यं कामचक्रस्थनिर्मलम् ॥ २७ ॥**

हे शम्भो ! आप तो सब जानने वाले हैं, फिर मैं और आप से क्या कह सकती हूँ, कामचक्र में स्थित रहने वाले अत्यन्त निर्मल वर्गों का माहात्म्य इस प्रकार है ॥ २७ ॥

**यो जानाति कामचक्रं यमो हन्ति न तं जनम् ।**
**तत्प्रकारं भावयुक्तं [2]भावनाध्याननिर्मलम् ॥ २८ ॥**

जो कामचक्र को जानता है, उस मनुष्य को यमराज नहीं मारते, उसके जानने का प्रकार यही है कि भाव युक्त होकर भावना तथा निर्मल ध्यान करे ॥ २८ ॥

**ध्यात्वा[3] कामरूपस्था मूलाधारनिवासिनः ।**
**देवताः पार्थिवाः सर्वे आत्मानं परमेष्ठिनः ॥ २९ ॥**

पूर्वकाल में सभी राजाओं ने मूलाधार स्थित तथा कामरूप स्थित देवताओं का ध्यान कर अपने को परमेष्ठी में मिला दिया ॥ २९ ॥

**न जानन्ति बालका मे तेषां योगादिसिद्धये ।**
**कामचक्रं कामरूपं कामनाफलसिद्धिदम् ॥ ३० ॥**
**तन्मन्त्रग्रहणादेव साक्षादीशो भवेन्नरः ।**
**श्रुतिशास्त्राणि सर्वाणि करे तस्य न संशयः ॥ ३१ ॥**
**योगशिक्षादिकं सर्वं जानाति [4]कामचक्रतः ।**
**कामचक्रप्रसादेन कामरूपी भवेद् ध्रुवम् ॥ ३२ ॥**

मेरे बालक ( भक्त गण ) कुछ भी नहीं जानते हैं । उनके योगादि सिद्धि के लिए कामनाफल की सिद्धि देने वाला यह कामरूप कामचक्र है । मात्र उस कामचक्र के ज्ञान से मनुष्य ईश्वर स्वरूप हो जाता है । उसके हाथ में समस्त श्रुतियाँ तथा समस्त शास्त्र आ

---

१. वृद्धास्तमितमेवं हि त्यक्त्वा मन्त्राणि दापयेत् ।
अन्यकोणस्य वर्णानां गृह्णीयान्मन्त्रमुत्तमम् ॥
चवर्गपुत्रजालस्या देवता दयिता प्रभो ।
तत्प्रकारं प्रवक्ष्यामि शृणुष्व विश्वभावन ॥ —क० ।

२. ज्ञान—ग० । ३. ज्ञात्वा—ग० । ४. ब्राह्मणाः शुद्ध—ग० ।

जाते हैं इसमें संशय नहीं । कामचक्र से साधक योग तथा शिक्षादि सभी जान लेता है । निश्चय ही कामचक्र की कृपा होने पर साधक कामरूपी ( इच्छानुसार रूप धारण करने वाला ) हो जाता है ॥ ३०-३२ ॥

**तद्वर्णस्थं तदन्तःस्थं दशकोणस्थमेव च ।**
**अष्टदलस्थं तत्रापि विचार्य साधकोत्तमः ॥ ३३ ॥**
**अनुलोमविलोमेन शास्त्रस्यानुक्रमेण च ।**
**बाल्यं कैशोरमुल्लासं वृद्धिः सिद्धिश्च यौवने ॥ ३४ ॥**

उस कामचक्र के वर्गों में स्थित उसके भीतर स्थित, दशकोण स्थित, अष्टदल पर स्थित ( बाल्य कैशोरादि ) भावों की गणना साधकोत्तम शास्त्रीय पद्धति के अनुसार अनुलोम विलोम क्रम से ( दाहिने बायें, सीधे उल्टे ) विचार करके करे । बाल कैशोरादि भाव उल्लास प्रदान करते हैं, युवाभाव वृद्धि और सिद्धि प्रदान करता है ॥ ३३-३४ ॥

**वृद्धो वृद्धत्वमाप्नोति अस्ते च निधनं भवेत् ।**
**नवग्रहास्तत्र मध्ये पञ्चप्राणाश्च सन्ति वै ॥ ३५ ॥**
**अनुलोमविलोमेन गणयेद्दशकोणके ।**
**दशकोणे सर्वसिद्धिरष्टसिद्धिश्च तत्र वै ॥ ३६ ॥**

वृद्ध भाव से वृद्धता प्राप्त होती है तथा अस्तमित भाव से साधक मृत्यु प्राप्त करता है, उसके मध्य में नवों ग्रह तथा पाँचों प्राण भी हैं वहीं दशकोण में सर्वसिद्धियाँ तथा अष्टसिद्धियाँ भी हैं ॥ ३५-३६ ॥

**अष्टपत्रे प्रशंसन्ति अधोऽनन्तमध्ये गृहे ।**
**ब्राह्मणमूर्ध्वगेहे च मन्त्रवर्णांश्च तत्तु तान् ॥ ३७ ॥**

अष्टपत्र के अधोभाग में, अनन्त के मध्य गृह में तथा उसके ऊपर वाले गृह में उन-उन मन्त्र वर्णों का पड़ना प्रशंसास्पद है ॥ ३७ ॥

**समाश्रित्य जपेद्विद्यां सूरयः क्रमरूपिणीम् ।**
**ह्रस्वदेवीं ह्रस्वबुद्धिं ददाति साधकाय च ॥ ३८ ॥**

विद्वान् लोगों को क्रमस्वरूपा इस विद्या का आश्रय लेकर जप करना चाहिए । ह्रस्व देवी अपने साधक को ह्रस्व बुद्धि देती है ॥ ३८ ॥

**यदि क्रोधपरा विद्या भक्षयेत् साधकं लघु ।**
**अतः समवयोरूपां देवतामष्टसिद्धिदाम् ॥ ३९ ॥**

यदि विद्या क्रोध में रहने वाली है तो साधक का शीघ्र ही भक्षण कर जाती है, अतः अपने समान वय रूप वाले देवता का पूजन करे क्योंकि वह इष्टसिद्धि प्रदान करते हैं ॥ ३९ ॥

**देवो भूत्वा यजेद्देवं तदा मोक्षं समाप्नुयात् ।**
**यदि वर्णं न जानाति कौलपुत्रोऽप्यधो व्रजेत् ॥ ४० ॥**

स्वयं देवता बन कर ही देवता का यजन पूजन करना चाहिए, तभी साधक को मोक्ष

प्राप्ति होती है । यदि वर्णों का ज्ञान नहीं है तो साधक कौल पुत्र ( शक्ति का उपासक ) हो कर भी नीचे गिर जाता है ॥ ४० ॥

**डाकिनी तं भक्षयति दीक्षामन्त्रार्णहीनकम् ।**
**ततो वर्णविचारञ्च प्रवक्ष्यामि समासतः ॥ ४१ ॥**

दीक्षा मन्त्र के वर्ण से रहित साधक को डाकिनी खा जाती है । हे शिव ! इसलिए मन्त्र के वर्ण का विचार संक्षेप में कहती हूँ ॥ ४१ ॥

**चापान् धृत्वा नरेन्द्रस्तमपि मनुजकं पालयन्तीह लोके**
**सर्व[1] चन्द्रो विघातं प्रचुरमयभयं भास्करो हन्ति शोकान् ।**
**चातुर्थ्या चक्रपाणेः पदमपि चपला सन्ददातीह माया-**
**योगोद्योगी[2] चरुगतमनसा साधकायाऽऽशु योगम् ॥ ४२ ॥**

**च वर्ण विचार**—इस लोक में ( चवर्गोपासक ) मनुष्य की राजा स्वयं बाण लेकर पालन करते हैं । चन्द्रमा प्रचुरता युक्त उसके भय को विनष्ट करते हैं । भास्कर शोक दूर करते हैं । चौथी चपला माया उसे चक्रपाणि विष्णु का पद देती है । किं बहुना, योग में तत्पर योगी हूयमान अन्न वाले मन से उस साधक को शीघ्र ही योग प्रदान करते हैं ॥ ४२ ॥

**छत्राशा कमले स्थिता स्थितिलये वाञ्छाफलश्रीधरा**
**छायामण्डपमध्यगाच्छलगता छत्रञ्छटा तेजसा ।**
**त्रैलोक्यं प्रतिपाति पाशुपतिभिः क्षेत्राधिपैः श्रीधरैः**
**प्राणप्रेमविहारिणी भगवतीच्छत्रेण तं साधकम् ॥ ४३ ॥**

**छ वर्ण विचार**—छः की देवता छत्रशा कमल पर स्थित हैं । वे स्थिति तथा लय में वाञ्छा फल की श्री धारण करने वाली हैं, छाया मण्डप के मध्य में गमन करती है, छल करने वाली हैं, अपने तेज से छत्र की छटा से युक्त है, वे पाशुपतियों तथा श्री धारण करने वाले क्षेत्राप्पिों के साथ त्रैलोक्य का पालन करती हैं, ऐसी प्राणों में प्रेम पूर्वक विहार करने वाली भगवती उस छकारोपासक साधक की अपने छत्र से रक्षा करें ॥ ४३ ॥

**जातिख्यातिरनुत्तमा[3] प्रभवति प्रीतायमाभ्यासतां**
**जीवानामतिदुःखराशिहननात् एकार्थसञ्चारिणी ।**
**वज्रा जीवनमध्यगा गतिमती विद्या जया यामिनी**
**जाता जातनिवारिणी जनमनःसंहारचिन्तावतु ॥ ४४ ॥**

**ज वर्ण विचार**—जिस जकार का अभ्यास करने वालों की जाति तथा ख्याति सर्वश्रेष्ठ रूप में उत्पन्न हो जाती है, जीवों के अत्यन्त दुःख राशि का हनन करने से एकार्थ सञ्चारिणी जिस पर प्रसन्न रहती हैं ऐसी वज्रा, जीवन मध्यगा, गतिमती, विद्या, जया यामिनी, जाता, जातनिवारिणी संहार चिन्ता स्वरूपा भगवती मनुष्यों के मन की रक्षा करें ॥ ४४ ॥

**झं झंत्वादविवादं झटिति झरझरा झारयाबीजझङ्कां**

---

१. चिन्ता—ग० ।   २. योगे उदयोगी ।   ३. नास्ति उत्तमो यस्याः सा ।

गङ्गा हन्ति हताशुभा धनमुखी कैवल्यमुक्तिप्रदा ।
कृत्वा रक्षति साधकं झरझनत्कारेण सूक्ष्मानिला
कामक्रोधविनाशिनी शशिमुखी झङ्कारशब्दप्रिया ॥ ४५ ॥

**झ विचार**—शीघ्र ही वाद विवाद को विनष्ट कर झर्झरा ( झाँझ ) के समान शब्द करने वाली जो गङ्गा अपने झं झं शब्द से जन्म मरण के बीजझङ्कार को नष्ट कर देती हैं, अशुभों का हनन कर देती हैं धन प्रदान करने वाली तथा कैवल्य मुक्ति देने वाली हैं सूक्ष्म वायु से परिपूर्ण ऐसी काम क्रोध की विनाशिनी, चन्द्रमुखी, झङ्कार शब्द से प्रेम करने वाली गङ्गा अपने झरझनत्कार शब्द से ( झकारोपासक ) साधक की रक्षा करती है ॥ ४५ ॥

ञकारबीजामलभावसारैः बाणस्य पुञ्जं प्रतिहन्ति योगिनी ।
खड्गायुधा सा रसपानमत्ता संहारनिद्राकुलसाधुदुःखहा ॥ ४६ ॥

**ञवर्ण का विचार**—जो अकार बीजाधिष्ठात्री योगिनी अकारबीज रूप स्वच्छ भाव सार से बाण समूहों को नष्ट कर देती हैं, वह खड्ग का आयुध धारण करने वाली, रस पान से प्रमत्त संहार निद्रा से आकुल साधुजनों के दुःख को दूर करें ॥ ४६ ॥

चन्द्रातपस्निग्धसुकान्त विग्रहा टङ्कास्त्र वज्रास्त्रहतारिपुङ्गवाः ।
टिं टिं महामन्त्रजपेन सिद्धिदा हन्ति श्रियं कापुरुषस्य पातकम् ॥ ४७ ॥

**ट वर्ण विचार**—चन्द्रमा की चन्द्रकिरण के समान स्निग्ध तथा मनोहर विग्रह वाली अपने टङ्कास्त्र ( त्रिशूल ) तथा वज्रास्त्र से अरिपुङ्गवों का विनाश करने वाली, टिं टिं इस बीज रूप मन्त्र से सिद्धि देने वाली टकाराधिष्ठातृ देवता दारिद्र पुरुष के पातक का विनाश करती हैं और श्री प्रदान करती हैं ॥ ४७ ॥

विशालनेत्रा यदि चारुकाङ्गी[१] ठं ठं स्वबीजं परिपाति कक्षरी ।
मनोगतं दुःखसमूहमुर्वशी रत्नाकरा सैन्यकुलं निहन्ति ॥ ४८ ॥

**ठकार वर्ण विचार**—ठकार की अधिष्ठातृ देवी विशाल नेत्रों वाली अत्यन्त मनोहर अङ्गो वाली है और ठं ठं अपने इस बीज की रक्षा करती हैं । ऐसी कक्षरी रत्नाकरा उर्वशी देवी उपने उपासकों के मन में रहने वाले समस्त दुःख समूहों को तथा शत्रु के सैन्य कुलों को विनष्ट करती हैं ॥ ४८॥

डामरा जगतामाद्या डं डां डिं डीं स्वरूपिणी ।
कामचक्रे सुखं दत्वा सारयैवं तनोति सा ॥ ४९ ॥

**ङ वर्ण विचार**—ड की अधिष्ठात्री जगत् की आदि भूता डामरा हैं । वे डं डां डिं डीं स्वरूपिणी हैं । वे अपने डकारोपासक को सुख प्रदान कर शीघ्रता पूर्वक उसे आगे बढ़ाती हैं ॥ ४९ ॥

ढं ढां बीजात्मिका विद्या रत्नमन्दिरसंस्थिता ।
ढक्कारी पाशहस्ता च साधक पाति सुन्दरी ॥ ५० ॥

---

१. चक्कवाङ्गी—क० ।

**ढ वर्ण विचार**—ढ की अधिष्ठातृ देवता ढं ढां बीजात्मिका विद्या हैं, जो रत्न मन्दिर में निवास करती हैं । ऐसी ढक्कारी सुन्दरी अपने हाथ में पाश लेकर ढकारोपासक साधक की रक्षा करती हैं ॥ ५० ॥

**णं णां णिं णीं जपति सुजनो जीवनीमध्यसंस्था**
**अष्टैश्वर्या प्रभवति हृदि क्षोभपुञ्जापहाय ।**
**वाराणस्यां सकलभयहा सन्ददातीह लक्ष्मीं**
**सूक्ष्मात्यन्तानलपथमुखी कालजालं निहन्ति ॥ ५१ ॥**

**ण वर्ण विचार**—जो सुजन णं णां णिं णीं इस मन्त्र का जप करता है उसके हृदय में समस्त क्षोभ पुञ्जों को विनष्ट कर ण की अधिष्ठात्री जीवनी मध्यसंस्था अष्टैश्वर्या देवी स्वयं उत्पन्न हो जाती हैं । वह वाराणसी में समस्त भय को विनष्ट करने वाली हैं और अपने साधक ( णकारोपासक ) को लक्ष्मी प्रदान करती हैं । वह सूक्ष्मा हैं । जाज्वल्यमान अग्नि के समान प्रदीप्त मुख वाली हैं तथा काल के जाल को नष्ट कर देती हैं ॥ ५१ ॥

**तारारूपा तरुस्था त्रिनयन कुटिला तारकाख्या**
**निहन्त्री तन्वश्रेणी तरुवरकलात्राणहेतोरतीता ।**
**तालक्षेत्रा तडिदिव कलाकोटिसूर्यप्रकाशा**
**तोकादीनां बहलतरुणी तारकं पाति भक्तम् ॥ ५२ ॥**

**त.वर्ण विचार**—त की अधिष्ठात्री तारारूपा तरु पर स्थित रहने वाली, तीन नेत्रों से भयङ्कर, तारका नाम से प्रसिद्ध, संहार करने वाली, तन्त्र की श्रेणी ( पंक्ति ) के त्राण के लिये वर्तमान रहने वाली, तरुवर की कला, मन कर्म और वाणी से अगम्या, तालों के क्षेत्र में निवास करने वाली. बिजली के समान कलाओं से युक्त, करोड़ों सूर्य के समान दीप्तिमती, कन्या पुत्रादि सन्तानों के संरक्षण के लिए अत्यन्त तरुणी स्वरूपा ऐसी तकाराधिष्टातृ देवता तारा अपने तारक मन्त्रों के जप करने वाले भक्त की रक्षा करती हैं ॥ ५२ ॥

**कालक्रमेणैव विमुक्तिदायिनी मनोरमा नीरजनेत्र कोमला[१]।**
**स्थिता क्ष(थ)काराक्षरमालिनीस्थला प्रपाति मुख्यं वरसाधकं शिवा ॥ ५३ ॥**

**थ वर्ण विचार**—थकाराधिष्ठातृ देवी भी कालक्रम से विमुक्ति देने वाली हैं । अत्यन्त मनोहर तथा नीले कमल के समान कोमल नेत्र वाली हैं । सर्वदा स्थित रहने वाली, थकार रूप अक्षरों की माला धारण करने वाली, स्थल ( पृथ्वी ) स्वरूपा शिवा अपने मुख्य वर साधक ( थकारोपासक ) की रक्षा करती हैं ॥ ५३ ॥

**दाली दरिद्रातिनिकृष्टदुःखहा दान्तप्रिया दैत्यविदारिणी दहा ।**
**दानस्थलस्था दयिता जगत्पतेर्दयां ददाति द्रवदेवदारा ॥ ५४ ॥**

**द वर्ण विचार**—द की अधिष्ठात्री देवी दाली ( दलन करने वाली ) हैं । दरिद्रता तथा अत्यन्त निकृष्ट दुःख की हन्त्री हैं, दान्त ( उदार पुरुषों ) पर प्रेम करने वाली, दैत्य

---

१. नीरजे इव नेत्रे, तयोः ( तदवच्छेदेन ) कोमला ।

विदारिणी तथा दहन करने वाली हैं, दान स्थल में निवास करने वाली तथा जगत्पति की दयिता हैं । दकाराधिष्ठात्री ऐसी द्रवित होने वाली देवधरा अपने ( दकारोपासकों ) को दया प्रदान करती हैं ॥ ५४ ॥

**धात्री धराधारणतत्परा धनी धनप्रदा धर्मगतिर्धरित्री ।**
**दधार धीरं धनबीजमालिनी ध्यानस्थिता धर्मनिरूपणाय ॥ ५५ ॥**

**ध वर्ण** विचार—धकाराधिष्ठात्री धात्री धरा स्वरूपा, जगत् के धारण में तत्पर धनी, धनप्रदा, धर्म की एकमात्र गति तथा धरित्री स्वरूपा है । धन बीज की माला धारण करने वाली वे धीरों को धारण करती हैं किं बहुना धर्म के निरूपण के लिए ध्यान में स्थित रहती है ॥ ५५ ॥

**नन्दस्य प्रतिपालनाय जगतामानन्दपुञ्जोदया**
**योगिन्यो नयनाम्बुजोज्ज्वलशिखाशोभा प्रमालाक्षरा ।**
**नीता नावपथस्थिता मतिमती याः पालयन्तीह ताः**
**पान्तु श्रीमुखतेजसा खलु यथा कालक्रमात् साधकम् ॥ ५६ ॥**

**न वर्ण विचार**—जिस नकाराधिष्ठात्री देवी का उदय नन्द के प्रति पालन के लिए जगत् के आनन्दपुञ्ज के रूप में हुआ है, जो योगिनी के नयनाम्बुज के लिए उज्ज्वल शिखा है, शोभा की माला धारण करने वाली तथा अक्षरा हैं, विनीत एवं नाव पथ में स्थित रहने वाली तथा मति सम्पन्ना हैं, ऐसी भगवती जिनका पालन करती हैं उनकी रक्षा भी अपने श्री मुख तेज से इस प्रकार करें जिस प्रकार कालक्रम से अपने साधक ( नकारोपासक ) की रक्षा करती हैं ॥ ५६ ॥

**पीता प्रेमविलासिनी वरपथज्ञानाश्रया पालनात्**
**पूज्या पायसपा परापरपदा पीताम्बरा पोषणा ।**
**प्रौढा प्रेमवती पुराणकथना पायात् पुरा पावनी**
**या कामेश्वरपावनं परजनं श्री साधकं प्रस्थिता ॥ ५७ ॥**

**प वर्ण विचार**—जो पकाराधिष्ठात्री देवी प्रसन्न रहने वाली, प्रेम में विलास करने वाली हैं, श्रेष्ठ मार्ग वाले ज्ञान का आश्रय करने वाली तथा पालन करने के कारण पूज्य हैं, पायस का पान करने वाली पर तथा अपर को देने वाली हैं । पीत वस्त्र धारण करने वाली, सबका पोषण करने वाली, पौढ़ा, प्रेमवती तथा पुराण का कथन करने वाली हैं, अतीत काल से वर्तमान रहने वाली, पावन करने वाली तथा प्रकर्ष रूप से स्थिति करने वाली हैं ऐसी वह जिसने कामेश्वर को पवित्र किया था अपने अनुत्तमजन श्री साधक की भी रक्षा करें ॥ ५७ ॥

**फुत्फणिवरमाला फेरवी फेरुरूपा**
**फणधरमुखकुल्याम्भोजवाक्यामृताब्धौ ।**
**निरवधिहरिकण्ठे वाक्यरूपा फलस्था**
**फलगतफणिचूडा पातु फुल्लारविन्दे ॥ ५८ ॥**

**फ कार वर्ण विचार**—जो फकाराधिष्ठात्री फुत्कार करने वाले सर्प की श्रेष्ठ माला धारण करने वाली शृगाली तथा शृगाल का रूप धारण करने वाली हैं, अनन्त के मुख कुल्या में विकसित कमल रूपी वाक्य के अमृत समुद्र के समान अपार श्री विष्णु के कण्ठ में वाक्य स्वरूपा एवं फल में स्थित रहने वाली, फलगता ( प्रग्रह के समान लटकते ) फणि को अपने चूड़ा में धारण करने वाली हैं वह फुल्लारविन्द में अपने फकारोपासक साधक की रक्षा करें ॥ ५८ ॥

**वज्राख्यां वशकारिणीं यदि जपेत् श्रीपादसंसेवनात्**
**बाल्यं वेदविनिर्गतां भगवतीं श्रीरामदेवोर्व्वराम् ।**
**वश्या तस्य कराम्बुजे वसति सा वीरासनःस्था वशा**
**वक्त्राम्भोरुह कोमले भगवती भूतेश्वरी भूतगा ॥ ५९ ॥**

**बकार भकार वर्ण विचार**—वकार की अधिष्ठात्री बज्रनाम से पुकारी जाने वाली, सबको वश में करने वाली, वेद से निकली हुई श्री रामदेव को उत्पन्न करने वाली, ऐसी भगवती का जो साधक बाल्यावस्था में जप करता है तो उस श्री पाद के संसेवन के प्रभाव से उसके कर कमल में वीरासन से स्थित रहने वाली वशा नाम वाली भगवती वश्य हो जाती हैं। किं बहुना भूतगा भूतेश्वरी भगवती उसके कोमल मुख कमल में निवास करती हैं ॥ ५९ ॥

**माता मन्दिरमालिनी मतिमतामानन्दमालामला[१]**
**मिथ्यामैथुनमोहिनी मनसि या(जा) मि(मे)ला महन्मेलनी ।**
**मानी तं वदते महेश्वरमहित्वं तस्य वक्षःस्थले**
**स्थित्वा सा मरणं निहन्ति सहसा [२]मौनावलम्बी भवेत् ॥ ६० ॥**

**म वर्ण विचार**—म की अधिष्ठात्री माता मन्दिर माला में निवास करने वाली बुद्धिमानों की आनन्द माला तथा अमला हैं । मिथ्या तथा मैथुन से मोहित करने वाली हैं मन से उत्पन्न काम स्वरूपा हैं, मेला स्वरूपा महान् लोगों को मिलाने वाली हैं, जो मानी उस मकार को महेश्वर की महनीयता कहते हैं उसके वक्षःस्थल पर स्थित हो कर वह मकाराधिष्ठात्री उसके मृत्यु को मार डालती हैं और वह सहसा मौन का आलम्बन ग्रहण करता है ॥ ६० ॥

**यातप्रिया[३] या प्रतिभाति योगिनी**
**यामास्थिता योगमुखास्पदा यथा ।**
**योनिस्थले सा यतिसाधकं**
**यशोयात्रा सदा पाति यमादिकं दहेत् ॥ ६१ ॥**

**य वर्ण विचार**—जो यतियों से प्रेम करने वाली यकाराधिष्ठात्री योगिनी हैं जो यामा ( रात्रि दिन के अष्टम भाग ) में स्थित रहने वाली अथवा रात्रि स्वरूपा हैं वह जिस प्रकार योनिस्थल की मुख्य आस्पदा हैं उसी प्रकार योग की भी मुख्य आस्पदा हैं, यशः स्वरूपा

---

१. आनन्दमाला चासौ अमला चेति आनन्दमालामला ।
२. मौनमवलम्बते तच्छील: ।
३. याति प्रिया—ग० ।

तथा प्रव्रज्या स्वरूपा हैं, वह अपने यति साधक की सदैव रक्षा करती हैं ओर उसके यम (मृत्यु) को नष्ट कर देती हैं ॥ ६१ ॥

रत्नस्था रतिराजिता रणमुखे राज्ञः [१]प्रियाभीतिहा-
रुक्ष्मा(क्ष्या)लङ्कृतरङ्गिणी रसवती रागापहा रोगहा ।
राजेन्द्रं रजनीस्थे प्रकुपिता राधामृता पाति तं
स्वाहारूपमनोरमा सुरमणी रामा रकाराक्षरी ॥ ६२ ॥

**र वर्ण विचार**—र वर्ण की अधिष्ठात्री रत्नों में रहने वाली रति से शोभित होने वाली युद्धस्थल में राजाओं की प्रिय तथा भीति (भय) का हरण करने वाली हैं, सुर्वण के अलङ्कार से अलंकृत, नटों के वेशभूषा वाला स्थान रंगशाला में निवास करने वाली हैं । रस से पूर्ण, राग का अपहरण करने वाली तथा रोगों को दूर करने वाली हैं, राधा एवं अमृता हैं । राजेन्द्र की रक्षा करने वाली तथा रजनी (अन्धकार) या अज्ञान में रहने वाले पर कोप करती हैं । स्वाहा का स्वरूप, मनोरमा सुरमणी है ऐसी रकाराक्षर वाली रामा अपने उपासक की रक्षा करे ॥ ६२ ॥

लक्ष्मीर्लाङ्गलिलक्षणा सुललना लोलामला निर्भया
बालामूलमिवासतां[२] लवणाकुला सिन्धूल्लासलीलाकुला ।
लोलाकोलकुलान्न[४]जानलमुखी लग्नालघूराकुला
कौलार्काकुल[३]लोचना लयकरी लीलालयं पाति माम् ॥ ६३ ॥

**ल वर्ण का स्वरूप**—जो लकाराधिष्ठात्री लक्ष्मी हैं लाङ्गलि (हल) लक्षण वाली हैं। सुललना, लोला, अमला (विमला) तथा निर्भया हैं, बाला हैं, असतों (दुष्टों) का अमूलीकरण करने वाली हैं, लावण्य युक्त तथा समुद्र के उल्लास के समान लीला से आकुल हैं । लोला, कोलकुलान्नजा, अनलमुखी लग्ना, लघू तथा आकुला हैं । कौल मार्ग की सूर्य स्वरूपा, आकुल नेत्रों वाली, लयकरी हैं—ऐसी भगवती लीला के आलयभूत मेरी रक्षा करती हैं ॥ ६३ ॥

विषासवस्थानरणस्थवासना
वश्यावहन्ती[५] ललनावशार्थम् ।
सा पाति वीरं यदि तां भजेद् वशी
विषाशनं ते निवसन्ति वारुणीम् ॥ ६४ ॥

**वकार स्वरूप विचार**—जो विष (पारद) के आसव की स्थान, रण स्थल में उत्पन्न वासना वाली, वश्या ललना के वेशभूषा वाले अर्थ (प्रयोजन) वहन करने वाली हैं,

---

१. रीतिहा—ग० ।
२. मूलामूलनिरामतां सबलकुल्लासलोलाकुला—क० ।
३. कुलानलमूलीलन्गालधूरा कुला—ग० ।
४. कौलालौलिललोचना नयबला वालोज्ज्वला पाति नः—क० ।
५. सकला—ग० ।

वशी वीर यदि ऐसी देवी का भजन करे तो वह उस वीर की रक्षा करती हैं । हे देवि ! आपका विष ( पारा ) भोजन है, जिसमें वारुणी का निवास है ॥ ६४ ॥

**शीतां शशीशोक विशेषनाशिनीं**
**भजेत् सुशीलां स भवेद्दिवाकरः ।**
**शिवां शचीं शौचशुभां शवप्रियां**
**शवस्थितां शीतलदेशशोभिताम् ॥ ६५ ॥**

**श वर्ण विचार**—शीत, शशी के शोक विशेष का नाश करने वाली ऐसी शकाराधिष्ठात्री शिवा, शची, पवित्रता से कल्याणकारिणी, शव से प्रेम करने वाली, शव में निवास करने वाली, शीतल देश में शोभित होने वाली सुशीला का जो साधक भजन करता है वह सूर्य के समान तेजस्वी हो जाता है ॥ ६५ ॥

**षट्चक्रे षट्पदाषाढी षडङ्गस्था षडानना ।**
**षट्चक्रे सिद्धिदा पाति साधकं षोडशी मुदा ॥ ६६ ॥**

**ष वर्ण विचार**—षकार की अधिष्ठात्री षट्चक्र में षट्पदा है आषाढ़ी ( पलाश दण्ड धारण करने वाली ब्रह्म धारिणी ) वेद के छः अङ्गो में रहने वाली तथा छः मुखों वाली हैं ऐसी षट्चक्र में रहने वाली सिद्धिदा षोडशी देवी प्रसन्नतापूर्वक अपने षकारोपासक साधक की रक्षा करती हैं ॥ ६६ ॥

**सा मा सूक्ष्मा [१]वहति सुजलं सप्तनाकस्थलाढ्या[२]**
**सारा साक्षात् सुखसमरसोज्ज्वालसाह्लादसाम्या ।**
**साकारा साम्बुजमधुगिरा पूरयन्ती महार्थं**
**वेदा सौरा सुरमतिनिवहा सामवेदान्तरस्था ॥ ६७ ॥**

**सकार वर्ण विचार**—सकार की वही अधिष्ठात्री माँ ( लक्ष्मी ) हैं, सुन्दर जल धारण करती है, पात, आकाश अथवा स्वर्ग स्थल में निवास करने वाली हैं, वस्तुओं की सार हैं, साक्षात् सुख की समता वाली रस से उत्कृष्ट ज्वाला से आह्लाद सहित, समतायुक्त साकारस्वरूप वाली, कमल में रहने वाली, मधुरता के समान कोमल वाणी वाली, सबके महान् अर्थों को पूर्ण करती हुई, वेद स्वरूपा सूर्य की किरणों के समान देदीप्यमान देवताओं के समान मति वाली सामवेद के अन्तर में निवास करने वाली अपने सकारोपासक की रक्षा करें ॥ ६७ ॥

**हठात्कारेण सहारा हरति प्राणहं जनम् ।**
**निहारिणं न सा हन्ति हिरण्याहारमालिनी ॥ ६८ ॥**

**हकार वर्ण विचार**—जो हकाराधिष्ठात्री हठ पूर्वक हार ( माला ) के सहित हो जाती हैं, दूसरे के प्राण लेने वाले जन को मार डालती हैं, किन्तु जो दूसरे के प्राणों की रक्षा करता है उसे वह हिरण्यहार मालिनी नहीं मारती ॥ ६८ ॥

---

१. सा मासूक्ष्मा रस इति सुजनं सप्तलोकस्थलाद्या ।
२. सप्तानां नाकस्थलानामाढ्या स्वामिनी ।

आलोका लक्षजपदा लाक्षरंल्लक्षणा[1] समा ।
आलग्दानाल सालापा ? पाति तं यो भजेल्लघु ॥ ६९ ॥

**क्षकार वर्ण विचार**—जो क्षकाराधिष्ठात्री प्रकाश स्वरूपा हैं, एक लाख जप करने वाले को दान करती हैं, ल अक्षर से युक्त हैं सर्वलक्षण तथा समता वाली कोश है आलग्नादानाल सालापा ( आलम्लोल्वान इति जीवानन्दपाठः ? ) हैं जो शीघ्रता से उनका भजन करता है उसकी वह शीघ्रता से रक्षा करती है ॥ ६९ ॥

क्षयं क्षितौ याति सुसूक्ष्मभावनं
विहाय मन्त्री क्षयरोगहारिणी ।
सूक्ष्मातिसूक्ष्मान्यतमं विचिन्तयेत्
क्षोभादिकं पक्षकलाक्षयन्ती ॥ ७० ॥

जो मन्त्री क्षयरोग का हरण करने वाली क्षकाराधिष्ठात्री देवी को छोड़कर सुसूक्ष्मभावना करता है वह इस पृथ्वी में ही विनष्ट हो जाता है अतः सूक्ष्म से भी अति सूक्ष्म सब से अन्यतम क्षकाराधिष्ठात्री की भावना करनी चाहिए, जो क्षोभादि समस्त दोषों को तथा पक्ष की कलाओं को विनष्ट करती हैं ॥ ७० ॥

### षोडशस्वरफलकथनम्

षोडशस्वरभेदेन फलं शृणु महाप्रभो ।
संक्षेपेण प्रवक्तव्यमुत्कृष्टं फलकाङ्क्षिणाम् ॥ ७१ ॥

हे महाप्रभो ! अब सोलह स्वर के भेद से वर्णों के फल को सुनिए, उसे मैं उत्कृष्ट फल चाहने वाले अपने भक्तों के लिए संक्षेप में कहती हूँ ॥ ७१ ॥

श्लोकत्रयेण(द्वयेन) तत्सर्वं फलमत्यन्तसाधनम् ।
ये कुर्वन्ति महादेव कामचक्रोत्सवं यथा ॥ ७२ ॥

अत्यन्त साधना से युक्त वह फल मात्र दो तीन श्लोक में ही कहती हूँ। हे महादेव ! जो कामचक्र का उत्सव करते हैं, यह उन्हीं के समान हैं ॥ ७२ ॥

अ आ इ ई उ ऊ ऋ ॠ
आद्याष्टस्वरमङ्गलं जपति यः श्रीनाथवक्त्राम्बुजां
प्राप्य श्रीधरनायकः क्षितितले सिद्धो भवेत् तत्क्षणात् ।
राजा राजकुलेश्वरो जयपथे दीपोज्वलामालया
सम्पश्येत् परमां कलां जयति सः कामानलं ताडयेत् ॥ ७३ ॥

आदि के आठ स्वर ( अ आ इ ई उ ऊ ऋ ॠ ) जो मङ्गल देने वाले हैं उनका जो जप करता है वह श्रीनाथ के मुख कमल में रहने वाली अष्ट स्वराधिष्ठात्री देवी को प्राप्त कर पृथ्वी में सम्पत्तिवानों का नायक बन जाता है । तत्क्षण सिद्धि प्राप्त कर लेता है, राजकुलों का

---

१. आलोका लक्षजयदा लालाक्षरांकलोमशा—क० ।

ईश्वर तथा राजा बन जाता है । वह जय के पथ में दीप की उज्ज्वल माला से परमा कला को प्राप्त करता है । किं बहुना कामानल को प्रताड़ित भी करता है ॥ ७३ ॥

**लृ लॄ ए ऐ ओ औ अं अः ।**
**शेषाष्टौ स्वरपावनी [1]प्रियजनानन्देन मन्दोदरी**
**मन्त्रं हन्ति मदानना त्रिजगतां [2]साधूत्तमानां सुखम् ।**
**दत्त्वा पालयति प्रभा प्रलयके[3] कौटिल्यविद्यापहा**
**भक्तये[4] क्षितिपालनं निजजपध्यानाकुलामङ्गलम्[5] ॥ ७४ ॥**

शेष आठ स्वर लृ लॄ ए ऐ ओ औ अं अः की अधिष्ठात्री पावन करने वाली हैं । प्रिय जनों को आनन्द देने से मन्द उदर वाली हैं । वह मद्य के मुख वाली, मन्त्र को नष्ट कर देती हैं । तीनों जगत् में रहने वाले उत्तम साधुओं को सुख देकर उनका पालन करती हैं, प्रभा होकर प्रलय काल में जो पालन करती हैं, कौटिल्य विद्या का जो अपहनन करती हैं, इस प्रकार पृथ्वी का पालन करती हुई जो अपने जप एवं ध्यान में आकुल भक्तों का मङ्गल करती हैं ॥ ७४ ॥

**इति वर्णफलं ज्ञात्वा यो गृह्णाति मनूत्तमम् ।**
**स भवेत् कुलयोगार्थी सिद्धज्ञानी महीतले ॥ ७५ ॥**

इस प्रकार वर्णों के फल को जान कर जो साधक उत्तम मन्त्र ग्रहण करता है वह पृथ्वीतल में कुल योग ( शाक्त सम्प्रदाय प्रचलित योग ) का अर्थी ( याचक ) हो जाता है । किं बहुना ऐसा करने से सिद्ध ज्ञानी हो जाता है ॥ ७५ ॥

**वर्गे वर्गे फलं नाथ शृणु वक्ष्यामि अद्भुतम् ।**
**प्रश्नादीनाञ्च कथनं यो जानाति स साधकः ॥ ७६ ॥**

हे नाथ ! अब प्रत्येक क वर्गादि वर्गों का अद्भुत फल कहती हूँ उसे सुनिए । यह उस साधक के लिए है जो प्रश्नादि के कथन की विधि जानता है ॥ ७६ ॥

### वर्गे वर्गे फलकथनम्

**कवर्गे कामसम्पत्तिं श्रिया व्याप्तं सुमन्दिरम् ।**
**प्राप्नोति कामचक्रार्थं राशिनक्षत्रसम्मतम् ॥ ७७ ॥**

**कवर्ग** में प्रश्न करने वाला काम सम्पत्ति तथा श्री ( लक्ष्मी ) से परिपूर्ण सुन्दर एवं धवल गृह प्राप्त करता है । यह कामचक्र में कहा गया अर्थ है और राशि तथा नक्षत्र से भी सम्मत है ॥ ७७ ॥

**चवर्गे दीर्घजीवी स्यात् दृढसम्पदमेव च ।**
**वृत्तिं प्राप्नोति गमनादनुद्दिश्य शरीरिणः ॥ ७८ ॥**

---

१. आलम्लोल्वान—क० । २. प्रियतम—ग० । ३. प्रबलये इति सं० पुस्तके पाठः । ४. साध्योत्तमानाम्—ग० । ५. निजजपध्यानाकुला इति कृत्वा मङ्गलम् ।

**चवर्ग** में प्रश्न करने वाला दीर्घजीवी होता है, पर्याप्त सम्पत्ति प्राप्त करता है, विदेशादि में गमन से उत्तम वृत्ति प्राप्त करता है किसी शरीरधारी का आश्रय लिए बिना वह अपनी यात्रा में अपने परिवार का समाचार प्राप्त करता है, इस प्रकार प्रवास गमन में उसे लाभ प्राप्त होता है ॥ ७८ ॥

**समाचारं समाप्नोति गमने सर्वमुत्तमम् ।**
**टवर्गे सम्भवे नाथ महदुच्चाटनादिकम् ॥ ७९ ॥**

हे नाथ ! **टवर्ग** में प्रश्न करने पर बहुत बड़ा उच्चाटन प्राप्त करता है, त वर्ग में प्रश्न करने पर पुत्रादि की वृद्धि तथा धन का लाभ होता है ॥ ७९ ॥

**पुत्राणामपि वृद्धिः स्यात् तवर्गे धनलाभकम् ।**
**पवर्गे मरणं नाथ यादि-क्षान्ते महागुणी ॥ ८० ॥**

हे नाथ ! पवर्ग में प्रश्न करने से मरण की प्राप्ति होती है, य से लेकर क्षान्त वर्णों में प्रश्न करने पर साधक महागुणी हो जाता है ॥ ८० ॥

**कामचक्रफलं नाथ राशिदण्डेन योजयेत् ।**
**निजगेहस्थितं राशिं ज्ञात्वा हि दिनदण्डतः ॥ ८१ ॥**
**गणयित्वाशुभं ज्ञानी अनुलोमविलोमतः ।**
**घटस्थं सकलं[१] सन्धिकोणस्थं पार्श्वके शुभम् ॥ ८२ ॥**
**शुभमन्त्रं गृहीत्वा तु सिद्धिमाप्नोति साधकः ॥ ८३ ॥**

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावप्रश्नार्थनिर्णये पाशवकल्पे कामचक्रसारसङ्केते सिद्धिमन्त्रप्रकरणे चतुर्वेदोल्लासे भैरवभैरवी संवादे अष्टादशः पटलः ॥ १८ ॥**



हे नाथ ! कामचक्र के फल को राशि तथा दण्ड से युक्त करना चाहिए दिन में दण्ड के अनुसार अपने गेह में स्थित राशि तक ज्ञानी अनुलोम विलोम क्रम से ( दायें तथा बायें क्रम ) से गणना करे । कुम्भ में रहने वाला सभी सान्धिकोणस्थ, वर्ण तथा पार्श्व में रहने वाले वर्ण ये सभी शुभ कारक हैं । साधक शुभ मन्त्र के ग्रहण से ही सिद्धि प्राप्त करता है ॥ ८१-८३ ॥

**॥ श्रीरुद्रयामल के उत्तरतन्त्र में महातन्त्रोद्दीपन में भावप्रश्नार्थनिर्णय में पाशवकल्प में कामचक्रसारसङ्केत में सिद्धमन्त्रप्रकरण के चतुर्वेदोल्लास में भैरवभैरवी संवाद में डॉ० सुधाकर मालवीय कृत अठारहवें पटल की हिन्दी पूर्ण हुई ॥ १८ ॥**



---

१. त्यक्त्वा यः—ग० ।

# अथोनविंशः पटलः

आनन्दभैरवी उवाच

इदं तु शृणु वक्ष्यामि सर्वतन्त्रार्थगोपनम् ।
तत्सर्वं प्रश्नचक्रे च षडाधारस्य भेदनम् ॥ १ ॥

**आनन्दभैरवी ने कहा**—हे भैरव ! अब सर्वतन्त्रों के द्वारा गुप्त रहस्यों को कहती हूँ । वह सब प्रश्नचक्र में षडाधार का भेदन है ॥ १ ॥

कालचक्रफलं तत्र [1]निर्विकल्पादिसाधनम् ।
प्रश्नचक्रं कामरूपं चैतन्यं सर्वदात्मनोः ॥ २ ॥
षड्मन्दिरे षट्कलापं कैवल्यसाधनादिकम् ।
नानाभोगं योगसिद्धिं हित्वा यो मन्त्रमाजपेत् ॥ ३ ॥
स भवेद् देवताद्रोही कोटिकल्पेन सिध्यति ।
हृदि यस्य महाभक्तिः प्रतिभाति महोदया ॥ ४ ॥
क्षणादेव हि सिद्धिः स्यात् किं जपैर्मन्त्रसाधनैः ।
अतो भक्तिं सदा कुर्याद् देवताभावसिद्धये ॥ ५ ॥

उस प्रश्न चक्र में निर्विकल्पादि साधन कालचक्र का फल है । प्रश्नचक्र कामरूप है और सर्वदा अपेक्षा आत्मा तथा आत्मीय शरीर को चेतना प्रदान करता है । षड्मन्दिर में षट्कलाप हैं कैवल्य साधनादि भी हैं । अनेक प्रकार के भोगों एवं योग सिद्धि का त्याग कर जो मन्त्र का जप करता है । वह देवताओं का द्रोही है, करोड़ों कल्पों में उसे सिद्धि प्राप्त होती है । किन्तु जिसके हृदय में महान् उदय वाली महाभक्ति भासित हो रही है उसे क्षणमात्र में सिद्धि मिल जाती है, जप एवं मन्त्र साधनों से क्या लाभ ? अतः देवता में अपनी भावना सिद्धि के लिए सदैव देव भक्ति करनी चाहिए ॥ २-५ ॥

भैरव उवाच

एतच्चक्रप्रसादेन को वा किं सिद्धिमाप्नुयात् ।
एतस्य भावनादेव किं फलं भावनं शुभम् ॥ ६ ॥

**भैरव ने कहा**—हे भैरवि ! इस चक्र की कृपा से किसने कब सिद्धि प्राप्त की है, इस चक्र की भावना करने से कौन सा शुभ भावना वाला फल प्राप्त होता है ॥ ६ ॥

---

१. समाधिर्द्विविधः, निर्विकल्पः सविकल्पश्च, निर्विकल्प आदिर्यस्य तस्य साधनम् ।

को वा प्रश्नादिकथने क्षमो भवति सुन्दरि ।
तत्प्रकारं विधानेन वद मे फलसिद्धये ॥ ७ ॥

हे सुन्दरि ! प्रश्नादि के कथन में कौन सक्षम है अतः फलसिद्धि के लिए आप उसके प्रकार को विधान पूर्वक कहिए ॥ ७ ॥

आनन्दभैरवी उवाच

यः करोति पूर्णहोमं पुत्रार्थं योगसिद्धये ।
कुण्डलीक्रमयोगेन पुनः पुनः क्रमेण च ॥ ८ ॥
एतच्चक्रार्थभावज्ञः स एव नात्र संशयः ।
यः करोति सदा नाथ वायुनिर्गमलक्षणम् ॥ ९ ॥
ऊर्ध्वं संस्थाप्य विधिवद् भावनां कुरुते नरः ।
स एव सिद्धिमाप्नोति सिद्धमार्गो(र्गे) न संशयः ॥ १० ॥

**आनन्दभैरवी ने कहा**—जो योगसिद्धि के लिए अथवा पुत्र प्राप्त के लिए कुण्डली के क्रम के योग से बारम्बार क्रमशः पूर्ण होम करता है वही इस चक्र के अर्थ के भाव को जानने वाला है, इसमें संशय नहीं । हे नाथ ! जो शरीर से वायु के निर्गम रूप लक्षण को करता रहता है और उसे ऊपर उठाकर विधिवत् इस चक्र की भावना करता है, वही सिद्धिमार्ग में सिद्धि प्राप्त करता है इसमें संशय नहीं ॥ ८-१० ॥

फलमेतद्भावनार्थं कामक्रोधादिवर्जितः ।
भावनाफलसिद्ध्यर्थं वायुसंयोगसंक्रमात् ॥ ११ ॥
लेपयित्वा शोधयित्वा मन्त्रयित्वा पुनः पुनः ।
धर्माधर्मविरोधेन सूक्ष्मवायुक्रमेण च ॥ १२ ॥
प्राप्नोति महतीं सिद्धिमेतच्चक्रस्य तत्फलम् ।
फलञ्च द्विविधं प्रोक्तं स्थूलसूक्ष्मपरस्थितम् ॥ १३ ॥

यह फल भावना के लिए कहा गया है, अतः काम क्रोधादि दोषों से विवर्जित हो इसकी भावना करनी चाहिए । भावना फल की सिद्धि के लिए धर्म पूर्वक अधर्म का विरोध करते हुए सूक्ष्म वायु के क्रम से लीपे शुद्ध करे बारम्बार मन्त्र का जप करे । तब साधक महती सिद्धि प्राप्त करता है, वही इस चक्र का फल है । इस प्रश्न चक्र के स्थूल और सूक्ष्म दो फल कहे गए हैं ॥ ११-१३ ॥

स्थूलं त्यक्त्वा महासूक्ष्मे मनो याति यदा यदा ।
तदा हि महती सिद्धिरमरस्तत्क्षणाद् भवेत् ॥ १४ ॥
एकबारं भावयेद्यः सिद्धचक्रस्य वर्णकान् ।
तस्यैव भावसिद्धिः स्याद् भावेन किं न सिद्ध्यति ॥ १५ ॥
महद्भावं विना नाथ कः सिद्धिफलकग्रही ।
योगभ्रष्टः स्थूलफले परजन्मनि सिद्धिभाक् ॥ १६ ॥

जब जब मन स्थूल फल को त्याग कर सूक्ष्म में प्रवेश करे, तभी उसे महती सिद्धि प्राप्त होती है और साधक तत्क्षण अमर हो जाता है । जो एक बार भी सिद्धि चक्र के वर्णों का ध्यान करता है, उसी को भावसिद्धि प्राप्त होती है, क्योकि भाव सिद्धि से क्या नहीं प्राप्त होता ? हे नाथ ! बिना महान् भाव के कौन सिद्धि के फल का आग्रही बन सकता है ? स्थूल फल में भावना करने वाला योग भ्रष्ट हो जाता है उसे अन्य जन्म में सिद्धि मिलती है ॥ १४-१६ ॥

**ऐहिके सिद्धिमाप्नोति सूक्ष्मफलक्रमेण च ।**
**यो जानाति सूक्ष्मफलं स योगी भवति ध्रुवम् ॥ १७ ॥**
**स एव प्रश्नकथने योग्यो भवति साधकः ।**
**यः सूक्ष्मफलभोक्ता स्यात् क्रियागोपनतत्परः ॥ १८ ॥**

सूक्ष्म फल में भावना क्रम से साधक इसी जन्म में सिद्धि प्राप्त कर लेता है जो योगी सूक्ष्म फल को जानता है वह निश्चय ही योगी बन जाता है । जो सूक्ष्म फल का भोग करने वाला तथा अपनी क्रिया के गोपन में उद्यत रहता है ऐसा साधक ही अपने प्रश्न कथन में योग्य होता है ॥ १७-१८ ॥

**निरन्तरं प्रश्नचक्रं आज्ञाचक्रोपरि स्थितम् ।**
**विभाव्य कालसिद्धिः स्यात् सर्वज्ञो वेदपारगः[1] ॥ १९ ॥**
**कालज्ञानी च सर्वज्ञ इति तत्त्वार्थ निर्णयः ।**
**प्रश्नचक्रस्थितं वर्णं सूक्ष्मकालफलावहम्[2] ॥ २० ॥**

आज्ञा चक्र पर स्थित रहने वाले प्रश्न चक्र का निरन्तर ध्यान करने से काल सिद्धि होती है, वही सर्वज्ञ एवं वेदों का पारगामी हो जाता है । कालज्ञानी ही सर्वज्ञ है ऐसा तत्त्वार्थ का निर्णय है । प्रश्नचक्र में रहने वाले वे वे वर्ण सूक्ष्म काल के फलों को देने वाले हैं ॥ १९-२० ॥

**मनोरूपं दण्डभेदं मासभेदं सवर्गकम् ।**
**मनसो भ्रम एवं हि काल एको न संशयः ॥ २१ ॥**

काल में दण्डादि ( दण्ड, पल, विपल ) तथा वर्ग सहित मास भेद ( द्वादस मास भेद, कृष्ण पक्ष भेद, शुक्ल पक्ष भेद तथा सप्ताहादि भेद ) मन के स्वरूप हैं, ये सभी मन के भ्रम हैं, वस्तुतः काल एक ही है इसमें संशय नहीं ॥ २१ ॥

**मृत्यु(त्युं)वशं करोत्येव कालज्ञानी स योगिराट् ।**
**कालेन लीयते सर्वं त्रैलोक्यं सचराचरम् ॥ २२ ॥**
**कालाधीनमिदं विश्वं तस्मात् काल(लं)वशं नयेत् ।**
**तत्कालं सूक्ष्मनिलयं दुर्वाच्यं[3] प्रश्नकं शृणु ॥ २३ ॥**

---

१. वेदानाम् ऋगादीनां पारं गच्छति । ३. दुर्भाव्यम्—ग० ।
२. सूक्ष्मकालस्य फलमावहति ।

काल ज्ञानी योगिराज है वह मृत्यु को भी अपने वश में कर लेता है एक काल ही ऐसा है जो समस्त चराचर जगत् को अपने में लीन कर लेता है । यह सारा जगत् कालाधीन है इसलिए काल को अपने वश में करना चाहिए । वह सूक्ष्म का निलय है । हे भैरव ! अब सर्वथा दुर्वाच्य कथन न करने योग्य, अर्थात् गुप्त प्रश्नों के विषय में सुनिए ॥ २२-२३ ॥

**मेषं तुलाराशिमनुत्तमं सदा**
**वैशाखमासे फलसिद्धिकारणम्[१] ।**
**कवर्गमावाप्य स्वरान् स एव**
**विभावयेत् स क्षितिनाथ आभवेत् ॥ २४ ॥**

मेष और तुला राशि सदैव श्रेष्ठ हैं, ये दोनों वैशाख मास में फलसिद्धि के कारण हैं जो इस राशि में क वर्ग तथा समस्त स्वरों को लिखकर भावना करता है, वह पृथ्वीपति बन जाता है ॥ २४ ॥

**आज्ञाचक्रोपरि ध्यात्वा सर्वचक्रं महाप्रभो ।**
**एकक्षणेन सिद्धिः स्यात् परभावेन हेतुना ॥ २५ ॥**
**सिद्धेशचक्रचैतन्यं यो जानाति महीतले ।**
**वाक्सिद्धिर्जायते मासाद्दिवारात्रिक्रमेण च ॥ २६ ॥**

हे महा प्रभो ! आज्ञाचक्र के ऊपर जो सर्वचक्र का ध्यान करता है उस पर (परमात्मा) में भावना के कारण एक क्षणमात्र में सिद्धि हो जाती है । हे भैरव ! जो इस पृथ्वी तल में सिद्धेशचक्र को महीने के नित्य दिन और रात के क्रम से चेतन करना जानता है, उसे वाक्सिद्धि प्राप्त हो जाती है ॥ २५-२६ ॥

**वर्णमालासमाक्रान्तं राशिनक्षत्रसंयुतम् ।**
**ग्रहचक्रं भावयित्वा सर्वं जानाति साधकः ॥ २७ ॥**
**च वर्गं वृषमीनस्थं कैशोरसिद्धिकारणम् ।**
**द्विमाससाधनादेव सर्वज्ञो भवति ध्रुवम् ॥ २८ ॥**

वर्णमालाओं से परिपूर्ण तथा राशियों एवं नक्षत्रों से युक्त ग्रहचक्र की भावना करने वाला साधक सब कुछ जानने में समर्थ हो जाता है । वृष तथा मीन राशि में रहने वाला च वर्ग किशोरावस्था में सिद्धि का कारण है, साधक दो मास पर्यन्त इसकी साधना से निश्चित रूप से सर्वज्ञ हो जाता है ॥ २७-२८ ॥

**योगिनी खेचरी[२] भूत्वा प्रयाति निकटे सताम् ।**
**ग्रहचक्रप्रसादेन जीवन्मुक्तस्तु साधकः ॥ २९ ॥**
**यदि कर्म करोत्येव एकान्तचित्तनिर्मलः[३] ।**
**तस्याऽसाध्यं त्रिभुवने न किञ्चिदपि वर्तते ॥ ३० ॥**

---

१. फलानां सिद्धयस्तासां कारणम् । २. विद्या आयाति—ग० ।

३. एकान्ते चित्तम्, अतएव निर्मलम् । एकान्ते—एकलक्ष्ये इत्यर्थः ।

योगिनी, आकाश मण्डल से उन सज्जनों के पास जाती है । बहुत क्या कहें, साधक ग्रहचक्र की कृपा से जीवन्मुक्त हो जाता है । यदि साधक निश्चित रूप से अपने चित्त को निर्मल कर कर्म करता है, तो उसे इस त्रिलोकी में कुछ भी असाध्य नहीं होता ॥ २९-३० ॥

**प्रश्नचक्र प्रसादेन सर्वे वै योगिनो भुवि ।**
**यदि योगी भवेद् भूमौ तदा मोक्षमवाप्नुयात् ॥ ३१ ॥**
**विना योगसाधनेन कः सिद्धो भूमिमण्डले ।**
**साधनेन विना सिद्धिः कस्य भक्तस्य जायते ॥ ३२ ॥**
**भक्तानां निकटे सर्वे प्रतिष्ठन्ति महर्षयः ।**
**अतो भक्तिं सदा कुर्यात् सर्वधर्मान् विहाय च ॥ ३३ ॥**

प्रश्न चक्र की कृपा होने पर इस भूमि में सभी योगी हो सकते हैं और यदि योगी बन जाये तो निश्चित ही उन्हें मुक्ति भी मिल सकती है । जब तक योग साधन न हो तब तक पृथ्वीमण्डल में कौन सिद्ध हो सकता है ? भला बिना योग साधन के किस भक्त को सिद्धि मिल सकती है ? महर्षि गण भक्तों के निकट ही निवास करते हैं । इसलिए समस्त धर्मों का त्याग कर सदैव भक्ति करनी चाहिए ॥ ३१-३३ ॥

**तत्कालं भक्तिमाप्नोति प्रश्नचक्रप्रसादतः ।**
**तत्प्रकारं महाधर्मं को वक्तुं क्षम एव हि ॥ ३४ ॥**
**कञ्चित्तद्भावसारञ्च प्रश्नचक्रे वदाम्यहम् ।**
**चवर्गभावनादेव भक्तिं प्राप्नोति साधकः ॥ ३५ ॥**

प्रश्नचक्र की कृपा होते ही तत्क्षण साधक भक्ति प्राप्त कर लेता है उस प्रकार वाले महाधर्म को कहने में कौन समर्थ हो सकता है । इस प्रश्न चक्र में मैं उसके कुछ भावसार को कहती हूँ । साधक व वर्ग की भावना, मान से भक्ति प्राप्त कर लेता है ॥ ३४-३५ ॥

**समाधाय परं देवमाज्ञाचक्रोपरि प्रभो ।**
**विभाव्य नित्यभावं हि प्राप्नोति तत्कुलाद(कलाम)पि ॥ ३६ ॥**
**आनन्दाश्रूणि पुलको देहावेशमनोलयम्[1] ।**
**सर्वकर्म स्वयं-त्यागी यः करोति स योगिराट् ॥ ३७ ॥**

हे प्रभो ! आज्ञाचक्र पर परमात्मा को स्थापित कर उनकी नित्यता का ध्यान कर साधक उसकी कला को भी प्राप्त कर लेता है । उसके नेत्रों से आनन्दाश्रु प्रवाहित होते रहते हैं, शरीर में परमात्मा का आवेश होने लगता है, मन का लय हो जाता है, स्वयं सर्वकर्म का त्याग कर देता है, ऐसा जो करता है वह योगिराज बन जाता है ॥ ३६-३७ ॥

**टवर्गे वासनासिद्धिः संसाररहितो भवेत् ।**
**बलवान् सर्वविज्ञानी त्रिमासे खेचरो भवेत् ॥ ३८ ॥**

---

१. देहावेशं देहे इष्टस्यावेशं मनोलयं च करोति इत्यनेनान्वयः ।
२. सुरम्—क० ।

**खेचरीमेलनं तस्य [2]परं प्राप्नोति चक्रतः ।**
**टवर्गं व्याप्य तिष्ठन्ति मिथुनं कुम्भयोनयः ॥ ३९ ॥**

ट वर्ग में ध्यान करने से वासनासिद्धि होती है साधक संसार वासना से रहित हो जाता है, बलवान् एवं सर्वविज्ञानी बन जाता है, मात्र तीन महीने में वह खेचर ( आकाशचारी ) हो जाता है । उसे चक्र द्वारा खेचरी से मिलते ही परमात्मा की प्राप्ति हो जाती है ट वर्ग को व्याप्त कर मिथुन तथा कुम्भराशियाँ स्थित रहती है ॥ ३८-३९ ॥

**स्वनक्षत्रस्वयोगञ्च विभाव्य योगिराड् भवेत् ।**
**चतुर्मासे पूर्णयोगी तवर्गसाधनादपि ॥ ४० ॥**
**वेतालादिमहासिद्धिमिन्द्र[1]सिद्धिं समाप्नुयात् ।**
**तवर्गं व्याप्य तिष्ठन्ति [2]मकरवृश्चिककर्कटाः ॥ ४१ ॥**

इस प्रकार उन राशियों पर अपने नक्षत्र से अपने को युक्त कर ध्यान करने से साधक योगिराज बन जाता है, तवर्ण की भी साधना करने से साधक चार मास मे पूर्ण योगी बन जाता है । ऐसा साधक वेतालादि महासिद्धियाँ तथा इन्द्र की भी सिद्धि प्राप्त कर लेता है । त वर्ग को व्याप्त कर मकर वृश्चिक एवं कर्क राशि स्थित रहते हैं ॥ ४०-४१ ॥

**चिरजीवी भवेदीश [3]इन्द्रतुल्यप्रियो भवेत् ।**
**तिष्ठेत् प्रलयपर्यन्तं महाप्रलयरूपवान् ॥ ४२ ॥**

हे ईश ! त वर्ग की भावना करने वाला चिरजीवी रहता है इन्द्र के समान सबको प्रिय हो जाता है । वह महाप्रलय का रूप धारण कर प्रलय पर्यन्त स्थित रहता है ॥ ४२ ॥

**कृत्वा काल(लं)वशं मन्त्री महावायौ महालयम् ।**
**महाचक्रे सूर्यमध्ये वह्निमण्डलमध्यगे ॥ ४३ ॥**

महाचक्र में स्थित सूर्य के मध्य में वहिन मण्डल के मध्य में तथा महावायु में महालय करके मन्त्रज्ञ साधक काल को अपने वश में करे ॥ ४३ ॥

**वाग्देवता[4] तस्य साक्षाद्‌भवतीति न संशयः ।**
**पवर्गं व्याप्य तिष्ठन्ति धनुःसिंहास्तु [5]चित्कलाः ॥ ४४ ॥**

उसे वाग्देवता साक्षाद्रूप में दर्शन देते हैं इसमें संशय नहीं । प वर्ग को व्याप्त कर चित्कला से परिपूर्ण धनुष् तथा सिंह राशि स्थित रहते हैं ॥ ४४ ॥

---

१. इन्दु—क० । २. मकरावृक्षकर्कटा—ग० ।
३. इन्दु—क० । ४. चन्द्र—क० ।
५. महाप्रलयभावेन लीनं कुर्याद् महानिले ।
महाप्रलयपर्यन्तं सैव तिष्ठति निश्चितम् ॥
पञ्चमे मासि सम्प्राप्ते पवर्गशुभलक्षणे ।
मनो निधाय यो योगी ध्यानचिन्तापरो यदि ॥ क० ।

**विभाव्य परमस्थानं स(न) नश्यति महानिलम् ।**
**त्रैलोक्यमष्टवर्गं च षट्चक्रं चक्षुषा क्षणात् ॥ ४५ ॥**

साधक त्रिलोकी, अष्टवर्ग, षट्चक्र तथा चक्षुरिन्द्रिय से महानिल का ध्यान कर स्वयं का नाश नहीं करता है ॥ ४५ ॥

**यदि वान्तं ब्रह्मरूपं सर्वतीर्थपदाश्रयम् ।**
**महासत्त्वगुणाक्रान्तं मत्वा निर्मलचक्षुषा ॥ ४६ ॥**
**कन्यावृश्चिकराशिभ्यां ब्रह्ममार्ग विलोकयेत् ।**
**षण्मासेन सिद्धिः स्याद् महाकौलो भवेद् ध्रुवम् ॥ ४७ ॥**

फिर सम्पूर्ण तीर्थ पदों का आश्रय, महासत्त्वगुण से आक्रान्त ब्रह्मस्वरूप वान्तबीज का अपने निर्मल चक्षु द्वारा दर्शन कर कन्या वृश्चिक राशि से ब्रह्ममार्ग का अवलोकन करता है। ऐसा करने से उसे छः महीने में सिद्धि हो जाती है और वह निश्चित रूप से कुल मार्ग का उपासक बन जाता है ॥ ४६-४७ ॥

**मौनी एकान्तभक्तः स्यात् श्रीपादाम्भोजदर्शनम् ।**
**प्राप्नोति साधकश्रेष्ठः सायुज्यपदवीं लभेत् ॥ ४८ ॥**

वह मौनी तथा एकान्त भक्त हो जाता है उसे महाश्री के चरणकमलों का दर्शन प्राप्त हो जाता है। फिर तो ऐसा साधक श्रेष्ठ सायुज्यपदवी प्राप्त कर लेता है ॥ ४८ ॥

**ततो मध्ये प्रगच्छन्ति योगिनस्तत्त्वचिन्तकाः ।**
**शादिक्षान्ते चतुष्कोणे सर्वयोगाश्रये पदे ॥ ४९ ॥**
**विभाव्य याति शीघ्रं सः श्री देवीलोकमण्डले ।**
**महाकालो भवेद् धीमान् प्रश्नचक्रस्य भावकः ॥ ५० ॥**

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावप्रश्नार्थनिर्णये पाशवकल्पे प्रश्नचक्रसारसङ्केते सिद्धमन्त्रप्रकरणे चतुर्वेदोल्लासे भैरवभैरवीसंवादे ऊनविंशः पटलः ॥ १९ ॥**



जिस सायुज्यपदवी को तत्त्व चिन्तक योगी जन प्राप्त करते हैं। श से लेकर (क्ष है अन्त में जिसके अर्थात् ह अर्थात् श ष स ह) पर्यन्त वर्ण वाले चतुष्कोण का, जो सभी योगाश्रयों का स्थान है, उसका ध्यान करने से साधक शीघ्र ही देवी लोकमण्डल में पहुँच जाता है, फिर वह प्रश्न चक्र का भावना करने वाला महाकाल हो जाता है ॥ ४९-५० ॥

**॥ श्रीरुद्रयामल के उत्तरतन्त्र में महातन्त्रोद्दीपन में भावप्रश्नार्थनिर्णय में पाशवकल्प में प्रश्नचक्रसारसङ्केत में सिद्धमन्त्रप्रकरण के चतुर्वेदोल्लास में भैरवभैरवीसंवाद में डॉ० सुधाकर मालवीय कृत उन्नीसवें पटल की हिन्दी पूर्ण हुई ॥ १९ ॥**



# अथ विंशः पटलः

आनन्दभैरवी उवाच

अथ वक्ष्ये महादेव सिद्धमन्त्रविचारणम् ।
जपित्वा भावयित्वा च नरो मुच्येत सङ्कटात् ॥ १ ॥

**आनन्द भैरवी ने कहा**—हे महादेव ! अब इसके अनन्तर सिद्धमन्त्र पर विचार कहती हूँ, जिनका जप तथा ध्यान करने से मनुष्य सङ्कट से छुटकारा पा जाता है ॥ १ ॥

आनन्दभैरव[1] उवाच

फलचक्रे सर्वमन्त्रं सर्वसारं तनुप्रियम् ।
क्रियायोगाद् भवेत् सिद्धिर्वायवीशक्तिसेवनात्[2] ॥ २ ॥

फल चक्र में सभी मन्त्रों का समावेश है जो सब मन्त्रों का सार एवं अत्यन्त सूक्ष्म है वायवी शक्ति सेवन रूप क्रिया योग से उनकी सिद्धि होती है ॥ २ ॥

वह्निबीजं त्रिकोणस्थं षट्कोणं तद् बहिः प्रभो ।
षट्कोणे षण्मनुं(नून्) ध्यात्वा षण्मासाद्रुद्ररूपिणः ॥ ३ ॥

हे प्रभो ! त्रिकोण में स्थित वह्निबीज ( रं ) तथा उसके बाहर रहने वाले षट्कोण में छः मन्त्रों का ध्यान कर साधक छः महीने में रुद्रस्वरूप हो जाते हैं ॥ ३ ॥

अष्टकोणे स्थितान् वर्णान् अङ्कभेदेन पण्डितः ।
अङ्कसंख्याक्रमेणैव ध्यात्वा तद् बहिरेव च ॥ ४ ॥
तत्संख्यासु गतान् वर्णान् विभाव्य खेचरो भवेत् ।
विना त्रिकोणयोगेन षटकोणं तत्र वर्णकान् ॥ ५ ॥

उसके बाहर रहने वाले अष्टकोण में स्थित रहने वाले वर्णों को पण्डित साधक अङ्क भेद से लिखे । अङ्क संख्या के क्रम से उन-उन संख्या वाले वर्णों का ध्यान करे तो साधक खेचर हो जाता है । प्रथम कहे गए त्रिकोण में तथा षट्कोण में स्थित उन-उन वर्णों का ध्यान ( द्र० २०. ३ ) न करे ॥ ४-५ ॥

आज्ञाचक्रमध्यदेशे कामचक्रं मनोरमम् ।
कामचक्रं(क्र) मध्यदेशे महासूक्ष्मफलोदयम् ॥ ६ ॥

---

१. इति—क० ।

२. वायवी चासौ शक्तिश्च, संज्ञात्वात् पुंवद्भावयः, तस्याः सेवनात् ।

**प्रश्नचक्रं षट्पदार्थं षट्चक्रफलसाधनम् ।**
**प्रश्नचक्रे फलचक्रं योगाष्टाङ्गफलप्रदम् ॥ ७ ॥**

आज्ञाचक्र के मध्य में अत्यन्त मनोरम कामचक्र है । उस कामचक्र के मध्य देश में महासूक्ष्म फल का उदय करने वाला प्रश्नचक्र है, जिसमें षट्चक्र के फलों का साधन करने वाले षट् पदार्थ हैं । उसी प्रश्नचक्र में फल चक्र है जो योग के आठों अङ्गो के फलों को देने वाला है ॥ ६-७ ॥

**फलचक्रस्योद्ध्र्वभागे वर्णमालाक्रमेण तु ।**
**तद्वर्णान् मौनजापेन फलसारं समाप्नुयात् ॥ ८ ॥**
**फलचक्रप्रसादेन तत्त्वचिन्तापरो(रा) मतिः ।**
**स्थित्वा भू(भ्रू)मध्यकुहरे सदा भावयतीश्वरम् ॥ ९ ॥**

फलचक्र के ऊर्ध्व भाग में वर्णमाला के क्रम से स्थापित कर उन वर्णों का मौन हो कर जप करने से समस्त फलों के सार की प्राप्ति होती है । फलचक्र की कृपा होने पर साधक की मति तत्त्वचिन्ता में निमग्न हो जाती है । जिससे साधक दोनों भ्रूमध्य के कुहर में स्थित हो कर ईश्वर का ध्यान करने लग जाता है ॥ ८-९ ॥

**भावज्ञानी भवेत् शीघ्रं मूढोऽपि भावनावशात् ।**
**आदौ सूक्ष्मफलं वक्ष्ये वर्णभेदेन शङ्कर ॥१०॥**

मूर्ख भी भावना करने से भावज्ञानी हो जाता है । हे शङ्कर ! अब सर्व प्रथम वर्णभेद से उनका सूक्ष्म फल कहती हूँ ॥ १० ॥

**वह्निर्भाति निरन्तरं त्रिजगतां नाशाय रक्षाकरो**
**जीवः सर्वचला चलस्थदहनं श्रीकालिकाविग्रहः ।**
**सर्वव्यापक ईश्वरः क्षयति यः कामान् मनःपल्लवं**
**ध्यात्वा तं समरूपवान् परशिवज्ञानी भवेत्तत्क्षणात् ॥ ११ ॥**

तीनों जगत् की रक्षा करने वाले अग्निदेव तीनों जगत् के विनाश के लिए भी भासमान रहते हैं । वही सभी प्राणियों के जीवन को धारण करते हैं तथा चराचर जगत् में रहने वाली समस्त वस्तुओं को जला भी देते हैं । इतना ही नहीं श्रीकालिका के विग्रहवान् स्वरूप हैं, इस प्रकार जिनका ध्यान करने से साधक तुरन्त श्रेष्ठ शिव-ज्ञानी हो जाता है ॥ ११ ॥

**वह्निबीजं सूक्ष्मफलं साक्षात् प्रत्यक्षकारणम् ।**
**त्रिकोणस्थं वह्निबीजं विधिविद्याप्रकाशकम् ॥१२॥**
**अकस्मात् सिद्धिदातारं यो भजेत् स भवेत् सुखी ।**

वह्नि बीज ( रं ) सूक्ष्म फल वाला है तथा साक्षात् प्रत्यक्ष प्रमाण में कारण है । किन्तु उक्त ( द्र० २०. ३ ) त्रिकोणस्थ वह्नि बीज ( रं ) ब्रह्मविद्या का प्रकाशक है । अकस्मात् सिद्धि देने वाले उस वह्निबीज का जो भजन करता है वह सुखी हो जाता है ॥ १२-१३ ॥

**षट्कोणस्थवर्णमन्त्रान् शृणुष्वानन्दभैरव ॥ १३ ॥**

यज्ज्ञात्वा देवताः सर्वा दिग्विदिक्षु प्रपालकाः ।
तद्भेदं रमणीयार्थं सङ्केतशुद्धिलाञ्छितम् ॥ १४ ॥

हे आनन्दभैरव ! अब षट्कोणों में रहने वाले ( द्र० २१. ३ ) उन-उन वर्णों को सुनिए । जिनको जान लेने से सभी देवता दिशाओं के तथा विदिशाओं ( कोणों ) के प्रपालक बन गए । सङ्केत शुद्धि से युक्त उन वर्णों के भेद अत्यन्त रमणीय अर्थ वाले हैं ॥ १३-१४ ॥

वह्निबीजस्योर्द्ध्वदेशे चन्द्रबीजमनुत्तमम् ।
तत्र यो भावयेन्मन्त्री स सिद्धो नात्र संशयः ॥ १५ ॥

वह्निबीज के ऊपरी भाग में सर्वश्रेष्ठ चन्द्र बीज है, उस चन्द्र बीज का जो मन्त्रज्ञ साधक ध्यान करता है, वह सिद्ध हो जाता है, इसमें संशय नहीं ॥ १५ ॥

विधोर्बीजं सूक्ष्मं विमलकमलं कान्तकिरणं
सदा [1]जीवस्थानं प्रलयनिलयं वायुजडितम् ।
ततो वामे सूर्यं सकलविफलध्वंसनिकरं
महावह्निस्थानं भजति सुजनो भावविधिना ॥ १६ ॥

चन्द्रमा का बीज सूक्ष्म है, स्वच्छ कमल के समान विमल है, उसकी किरणें अत्यन्त कमनीय हैं । वह जीवों का स्थान है प्रलयकारी एवं वायु के द्वारा जटित है । उसके वाम भाग में सूर्य है जो सम्पूर्ण विपरीत फलों का विध्वंसक है । सुजन लोग ऐसे महावह्निस्थान का भावना की विधि से भजन करते हैं ॥ १६ ॥

तदधः कोणगेहे च श्रीबीजं पञ्चमस्वरम् ।
भावकल्पलतासारमकारादिकुलाक्षरम् ॥ १७ ॥
चतुःपञ्चाशदङ्कस्थं वायुबीजमधस्ततः ।
विभाव्य वायवीसिद्धिमवाप्नोति नराधिपः ॥ १८ ॥
तदङ्गं दक्षिणे नाथ भवानीबीजमण्डलम् ।
युग्मस्वरसमाक्रान्तं विभाव्य योगिराड् भवेत् ॥ १९ ॥

उसके नीचे कोण वाले गृह में पञ्चम स्वर से युक्त श्रीबीज ( श्रीं ) है जो भाव कल्पलता का सार है एवं अकारादि कुलाक्षरों से युक्त है । उसके नीचे चौवन पर्यन्त अङ्कों से युक्त वायु बीज है । नराधिप उसका ध्यान कर वायवी सिद्धि प्राप्त कर लेता है । हे नाथ ! उसके दक्षिण में भवानी बीज मण्डल है, जो उसी का अङ्ग है और वह दो स्वरों से समाक्रान्त है । उस भवानी बीज मण्डल का ध्यान करने से साधक योगिराज बन जाता है ॥ १७-१९ ॥

तद्दक्षिणोर्ध्वकोणे च सोमबीजमनुत्तमम् ।
विभाव्य जगतामीशदर्शनं प्राप्नुयान्नरः ॥ २० ॥
तदूर्ध्वे परमं बीजं साक्षात्कारफलप्रदम् ।
मासैकभावनादेव देवलोके गतिर्भवेत् ॥ २१ ॥

---

१. जीवस्थानम्, अस्य भावयेदित्यनेनान्वयः ।

तदूर्ध्वकोणगेहे च रुक्मिणीबीजमद्भुतम्[१] ।
साधनादेव सिद्धिः स्याल्लक्ष्मीनाथो भवेदिह ॥ २२ ॥

उसके भी दक्षिण ऊर्ध्वकोण में सर्वश्रेष्ठ सोमबीज है, साधक जन उसका ध्यान करने से जगदीश का दर्शन प्राप्त कर लेते हैं । उसके भी ऊपर परमात्मा का बीज ( ॐ ? ) है, जो साक्षात् फल देने वाला है, मात्र एक मास तक परमात्मा बीज की भावना से साधक की गति देवलोक तक हो जाती है । उसके भी ऊपर वाले कोण गृह में अद्भुत रुक्मिणी बीज है । उसके साधे साधन से सिद्धि तो प्राप्त होती ही है, साधक इसी लोक में लक्ष्मीनाथ भी बन जाता है ॥ २०-२२ ॥

अङ्गक्रमेण सर्वत्र ज्ञेयं स्वरविधानकम् ।
येन तेन स्वरेणापि वेष्टितं फलबीजकम् ॥ २३ ॥

अङ्ग के क्रम से सर्वत्र स्वर का विधान भी उन-उन कोणों के बीज मन्त्र में समझना चाहिए । फल देने वाले बीज मन्त्र जिस क्रम से कहे गए हैं उसी क्रम से स्वरों द्वारा भी वे वेष्टित हैं ॥ २३ ॥

भवत्येव[२] महादेव वायुसिद्ध्यादिकारणम् ।
अष्टकोणं(ण)तले नाथ षट्कोणे योनि सन्ति वै ॥ २४ ॥
तद्बीजानि सत्फलानि ध्यात्वा वाक्सिद्धिमाप्नुयात्
रेफोद्र्ध्वे कमलाबीजं भावकल्पद्रुमाकरम् ॥ २५ ॥
सर्वत्र तेजसा व्याप्तं विभाव्य योगिनीपतिः ।
तदधः शीतलाबीजं वामभागक्रमेण तु ॥ २६ ॥
विभाव्य परमानन्दरसे मग्नो महासुखी ।
तदधः कामबीजञ्च कामनाफलसिद्धिदम् ॥ २७ ॥

हे महादेव ! ये स्वर वायु सिद्धि आदि में आवश्यक रूप से कारण हैं । हे नाथ ! अष्टकोण के नीचे षट्कोण में जो बीज हैं, उन-उन बीजों को तथा उनके उन-उन फलों का ध्यान कर साधक वाक्सिद्धि प्राप्त कर लेता है । रेफ के ऊपर कमला बीज है, जो भावरूप कल्पद्रुम का समूह है । वह सर्वत्र तेज से व्याप्त है उसका ध्यान करने से साधक योगिनीपति हो जाता है, बायें भाग के क्रम से उसके नीचे शीतला बीज है, उसका ध्यान कर साधक परमानन्द रस में निमग्न होकर महासुखी हो जाता है, उसके नीचे कामनाफल की सिद्धि देने वाला कामबीज है ॥ २४-२७ ॥

यो जपेत् परमानन्दो नित्यज्ञानी च वायुना ।
तदग्रे वेदकोणे च वारुणं बीजमुत्तमम् ॥ २८ ॥
विभाव्य भावको भूत्वा चिरजीवी स जीवति ।
तदूर्ध्वे[३] पञ्चमे कोणे वज्रबीजं वकारकम् ॥ २९ ॥

१. अद्भुतं कमनीयार्थम्—ग० । २. मण्डितम्—ग० । ३. फलत्येव ।

जो उस कामबीज का जप करता है वह वायु के द्वारा परमानन्द तथा नित्यज्ञान प्राप्त कर लेता है, उसके आगे चतुर्थ कोण में अत्यन्त उत्तम वरुण बीज है । उसका ध्यान कर भावुक बनने वाला साधक बहुत काल तक जीवित रहता है ॥ २८-२९ ॥

**अष्टसिद्धिकरं[१] साक्षाद् भजतां शीघ्रसिद्धिदम् ।**
**षट्कोणे च तदूर्ध्वे च सुरबीजं महाफलम् ॥ ३० ॥**

उसके ऊपर पञ्चम कोण में 'वकार' नाम वाला वज्रबीज है । वह आठों प्रकार की सिद्धि देने वाला तथा भजन करने वालों को साक्षात् रूप में शीघ्र सिद्धि देने वाला है । उसके ऊपर षट्कोण में सुरबीज है जो महा फलों वाला है ॥ ३० ॥

**हृदि यो भावयेन्मन्त्री तस्य सिद्धिः प्रतिष्ठिता ।**
**अष्टकोणस्योद्र्ध्वदेशे वर्णमालाविधिं शृणु ॥ ३१ ॥**

जो मन्त्रज्ञ हृदय में उसकी भावना करता है, उसके लिए सिद्धि प्रतिष्ठित है । अब अष्टकोण के ऊर्ध्व देश में स्थित वर्णमाला का विधान सुनिए ॥ ३१ ॥

**येन भावनमात्रेण सर्वज्ञो जगदीश्वरः ।**
**ओ औ पवर्गमिवं हि यो नित्यं भजतेऽनिशम् ॥ ३२ ॥**
**तस्य सिद्धिः क्षणादेव वायवीरूपभावनात् ।**
**चन्द्रबीजस्योद्र्ध्वदेशे विभाति पूर्णतेजसा ॥ ३३ ॥**

अष्टकोण के ऊर्ध्वदेश में वर्णमाला का विधान

जिसकी भावना मात्र से जगदीश्वर सर्वज्ञ बन गए । ओ औ तथा प वर्ग को जो निरन्तर भजता रहता है, उस वायवी रूप की भावना से उसे क्षणमात्र में सिद्धि हो जाती है, यह चन्द्रबीज के ऊपर वाले देश में पूर्ण तेज से शोभित होता है ॥ ३२-३३ ॥

**ॡ ए ऐ तवर्गञ्च तद्दक्षिणविधानतः ।**
**तेजोमयी वायुशक्तिर्ददाति सर्वमङ्गलम् ॥ ३४ ॥**
**टवर्गं भावयेन्मन्त्री ऋ ॠ ऌ स्वरसंयुतम् ।**
**अष्टैश्वर्यप्रदं नित्यं कमलासनसिद्धिदम् ॥ ३५ ॥**

ॡ ए ऐ तथा त वर्ग वर्ण उसके दक्षिण में विधान पूर्वक स्थित हैं । यही तेजोमयी

---

१. अष्टसिद्धिकरं साक्षाद् भजतां शीघ्रसिद्धिदम् ।
षट्कोणे च तदूर्ध्वे च स्वरबीजं महाफलम् ॥
हृदि यो भावयेन्मन्त्री तस्य सिद्धिः प्रतिष्ठिता ।
अष्टकोणस्योर्ध्वदेशे वर्णमालाविधिं शृणु ॥
येन भावेन मात्रेण सर्वज्ञो जगदीश्वरः ।
ओ औ पवर्गमिवं हि यो नित्यं भजतेऽनिशम् ॥
तस्य सिद्धिः क्षणादेव वायवीरूप भावनात् ।
चन्द्रबीजस्योर्ध्वदेशे विभाति पूर्णतेजसा ॥

वायुशक्ति है जो सब प्रकार का मङ्गल करने वाली है । ऋ ॠ और लृ स्वरों से संयुक्त ट वर्ग की मन्त्रज्ञ साधक को भावना करनी चाहिए, जो नित्य ही आठों प्रकार का ऐश्वर्य देने वाला है तथा कमलासन ब्रह्मदेव की सिद्धि देने वाला है ॥ ३४-३५ ॥

**तदधो भावयेद् यस्तु स भवेत् कल्पपादपः ।**
**भवानीबीजरूपस्य अधो गेहे विभावयेत् ॥ ३६ ॥**
**इ ई युग्मं चवर्गञ्च भावयित्वामरो भवेत् ।**
**अ आ इ संयुतो नाथ कवर्गं कुरुते जयम् ॥ ३७ ॥**

ट वर्ग चन्द्रबीज के नीचे जो उक्त वर्णों का ध्यान करता है, वह कल्पवृक्ष के समान हो जाता है । भवानी बीजरूप के अधोभाग में इ ई इन दो वर्णों की तथा च वर्ग की भावना करने वाला अमर हो जाता है । हे नाथ ! अ आ इ के सहित क वर्ग का ध्यान विजय देता है ॥ ३६-३७ ॥

**भावयेत् परया भक्त्या सोऽभीष्टं फलमाप्नुयात् ।**
**इत्येतत् कथितं नाथ फलचक्रं च सारदम् ॥ ३८ ॥**

जो पराभक्ति से संयुक्त हो कर इनका ध्यान करता है, वह अभीष्ट फल प्राप्त करता है, हे नाथ ! शारदा देवता वाले फल चक्र का मैंने इस प्रकार वर्णन किया ॥ ३८ ॥

**एतच्चक्रभावनाभिर्महाविद्यापतिर्भवेत् ।**
**कामरूपे महापीठे लिङ्गपीठे प्रयत्नतः ॥ ३९ ॥**
**आज्ञाचक्रं चतुश्चक्रं भावयित्वाऽमरो भवेत् ।**
**महायोगी हिरण्याक्षो मासैकभावनावशात् ॥ ४० ॥**
**सप्तद्वीपेश्वरो भूत्वा अन्ते विष्णुर्बभूव सः ।**
**स्थिरचेताः स योगी स्यादिति तन्त्रार्थनिश्चयः ॥ ४१ ॥**

इस फलचक्र की भावनाओं से साधक महाविद्यापति बन जाता है, कामरूप नामक

---

ट ए ऐ तवर्गञ्च तद्दक्षिणविधानतः ।
तेजोमयी वायुशक्तिर्ददाति सर्वमङ्गलम् ॥
टवर्गं भावयेन्मन्त्री ऋ ॠ लृ स्वरसंयुतम् ।
अष्टैश्वर्यप्रदं नित्यं कमलामन्त्रसिद्धिदम् ॥
तदधो भावयेद् यस्तु स भवेत् कल्पपादपः ।
भवानीबीजरूपस्य ह्यधो गेहे विचारयेत् ॥
इ ई युग्मं चवर्गं च भावयित्वाऽमरो भवेत् ।
अ आ इ संयुतं चात्र कवर्गं चारुतेजसम् ॥
भावयेत् परया भक्त्या सोऽभीष्टं फलमाप्नुयात् ।
इत्येतत् कथितं ह्यत्र फलचक्रञ्च सारदम् ॥
एतच्चक्रभावनाभिः महाविद्यापतिर्भवेत् ।
कामरूपमहापीठे लिङ्गपीठे प्रयत्नतः ॥

महापीठ में तथा लिङ्ग पीठ में स्थित आज्ञाचक्र तथा चतुश्चक्र की भावना कर साधक अमर बन जाता है मात्र एक मास में इसकी भावना के कारण ही हिरण्याक्ष महायोगी बन गया, फिर सातों द्वीपों का अधीश्वर बनकर अन्त में वही विष्णु भी बन गया । अतः इसकी भावना करने वाला स्थिर चित्त तथा योगी हो जाता है, यही इस तन्त्रार्थ का निर्णय है ॥ ३९-४१ ॥

**एतानि चक्रसाराणि आज्ञाचक्रस्थितानि च ।**
**विभाव्य [1]परमानन्दैरात्मसिद्धिर्भवेद् ध्रुवम् ॥ ४२ ॥**
**सूक्ष्मवायुप्रसादेन चिरजीवी भवेदिह ॥ ४३ ॥**

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावप्रश्नार्थनिर्णये पाशवकल्पे फलचक्रसारसङ्केते सिद्धमन्त्रप्रकरणे चतुर्वेदोल्लासे भैरवीभैरवसंवादे विंशः पटलः ॥ २० ॥**



आज्ञाचक्र में रहने वाले इतने ही प्रधान चक्र हैं परमानन्द पूर्वक इन चक्रों का ध्यान करने से निश्चित ही आत्मसिद्धि हो जाती है । वह सूक्ष्म वायु की कृपा से इस लोक में चिरञ्जीवी हो जाता है ॥ ४२-४३ ॥

**॥ श्रीरुद्रयामल के उत्तरतन्त्र में महातन्त्रोद्दीपन में भावप्रश्नार्थ निर्णय में पाशवकल्प में फलचक्रसारसङ्केत में सिद्धमन्त्र प्रकरण के चतुर्वेदोल्लास में भैरवी-भैरव संवाद में डॉ० सुधाकर मालवीय कृत बीसवें पटल की हिन्दी व्याख्या पूर्ण हुई ॥ २० ॥**



# अथैकविंशः पटलः

श्रीभैरव उवाच

वद कान्ते रहस्यं मे येन सिद्धो भवेन्नरः ।
तत्प्रकारं विशेषेण देवानामपि दुर्लभम् ॥ १ ॥

**श्री भैरव ने कहा**—हे कान्ते ! अब आप मुझसे उस रहस्य को कहिए, जिससे मनुष्य सिद्ध हो जाता है । विशेष रूप से उसके प्रकार को भी कहिए, क्योंकि वह देवताओं के लिए भी दुर्लभ है ॥ १ ॥

वीरभावस्य माहात्म्यम्

वीरभावस्य माहात्म्यमकस्मात् सिद्धिदायकम् ।
करुणादृष्टिरानन्दा यदि चेदस्ति सुन्दरि ॥ २ ॥

वीरभाव का माहात्म्य अकस्मात् सिद्धिदायक है । हे सुन्दरि ! यदि आपकी करुणापूर्ण, आनन्द देने वाली दृष्टि मुझ पर है तो उसे कहिए ॥ २ ॥

आनन्दभैरवी उवाच

परमानन्दसारज्ञो योगक्षेत्रप्रपालक[1] ।
रहस्यं शृणु मे नाथ महाकालज्ञ भावग ॥ ३ ॥

**आनन्दभैरवी ने कहा**—हे योगज्ञ ! हे क्षेत्रपालक ! हे महाकालज्ञ ! हे भावज्ञ ! हे नाथ ! आप परमानन्द सार के ज्ञाता हैं, अब उस रहस्य को सुनिए ॥ ३ ॥

योगमार्गानुसारेण वीरभावं श्रयेत कः ।
आनन्दोद्रेकपुञ्जं तत् शक्तिवेदार्थनिर्णयम् ॥ ४ ॥
वेदाधीनं महायोगं योगाधीना च कुण्डली ।
कुण्डल्यधीनं चित्तं तु चित्ताधीनं चराचरम् ॥ ५ ॥
मनसः सिद्धिमात्रेण शक्तिसिद्धिर्भवेद् ध्रुवम् ।
यदि शक्तिर्वशीभूता त्रैलोक्यञ्च तदा वशम् ॥ ६ ॥

योगमार्ग का अनुसरण करने से कौन वीरभाव का आश्रय ले सकता है ? क्योंकि वह आनन्दोद्रेक का पुञ्ज है तथा शक्ति एवं वेदार्थ का निर्णय है । वेद के अधीन महायोग है और योग के आधीन कुण्डली है तथा कुण्डली के आधीन चित्त है और यह सारा चराचर

---

१. क्षेत्रपारग—ग० ।

जगत् चित्त के आधीन है । अतः मन की सिद्धि मात्र से ही निश्चित रूप से शक्ति सिद्ध हो जाती है, यदि शक्ति अपने वशीभूत हो गई तो समझ लेना चाहिए कि सारी त्रिलोकी अपने वश में हो गई है ॥ ४-६ ॥

**अमरः स भवेदेव सत्यं सत्यं कुलेश्वर ।**
**सहस्रश्लोकयोगेन वीरयोगार्थनिर्णयम् ॥ ७ ॥**
**पटलैकादश [1]क्षेमयोगेन योगमण्डलम् ।**
**षट्चक्रबोधिनी विद्या सहस्रदलपङ्कजम् ॥ ८ ॥**
**कैलासाख्यं सूक्ष्मपथं ब्रह्मज्ञानाय योगिनाम् ।**
**कथयामि महावीर क्रमशः क्रमशः शृणु ॥ ९ ॥**

हे कुलेश्वर ! वह अवश्य ही अमर हो जाता है । यह सत्य है, यह सत्य है । ऐसे तो वीरभाव के अर्थ का निर्णय एक हजार श्लोक के योग से किया गया है । ग्यारह पटलों के योग और क्षेम के द्वारा योग-मण्डल कहा गया है । अब षट्चक्र बोधिनी विद्या, सहस्र दल पङ्कज, कैलास नामक सूक्ष्म पथ, जो योगियों के ब्रह्मज्ञान के लिए हैं । हे महावीर ! क्रम से कहती हूँ आप उसे सुनिए ॥ ७-९ ॥

**वीराणामुत्तमानाञ्च भ्रष्टानां प्रहिताय च ।**
**साक्षात् सिद्धिकरं यद्यत् तत्सर्वं प्रवदामि ते ॥ १० ॥**
**योगशास्त्र[2]क्रमेणैव यः सिद्धिफलमिच्छति ।**
**स सिद्धो भवति क्षिप्रं ब्रह्ममार्गे न संशयः ॥ ११ ॥**

वीरों के उत्तम जनों के तथा भ्रष्ट लोगों के लिए जो अत्यन्त हितकारी हैं, किं बहुना जो साक्षात् सिद्धि प्रदान करने वाला है उन सबको आपसे कहती हूँ । योगशास्त्र के क्रम से चल कर जो सिद्धिफल की अभिलाषा करता है, वह बहुत शीघ्र ही ब्रह्ममार्ग में सिद्ध हो जाता है, इसमें संशय नहीं ॥ १०-११ ॥

**ब्रह्मविद्यास्वरूपेण जपहोमार्चनादिकम् ।**
**कुरुते फलसिद्ध्यै यः स ब्रह्मज्ञानवान् शुचिः ॥ १२ ॥**
**षट्चक्रभेदने प्रीतिर्यस्य साधनचेतसः ।**
**संसारे वा वने वापि सिद्धो भवति ध्रुवम् ॥ १३ ॥**

जो साधक ब्रह्मविद्या की विधि के अनुसार, कामना सिद्धि के लिए जप, होम एवं अर्चनादि करता है, वही ब्रह्मज्ञानवान् तथा शुचि ( पवित्रात्मा ) है । साधन की इच्छा रखने वाले जिस साधक की षट्चक्र भेदन में रुचि हो गई हो, भले ही वह संसार में रहने वाला हो, वा वन में रहने वाला हो वह निश्चित रूप से सिद्ध हो जाता है ॥ १२-१३ ॥

---

१. एकादशाश्चासौ पटलश्चेति पटलैकादशः, पूर्वनिपातस्यानित्यत्वाद् व्यवस्था, क्षेमश्च योगश्चानयोः समाहारः, ततः षष्ठीतत्पुरुषः ।

२. मार्ग—ग० ।

**षट्चक्रार्थं न जानाति यो भजेदम्बिकापदम् ।**
**तस्य पापं क्षयं याति सप्तजन्मसु सिद्धिभाक् ॥ १४ ॥**
**ज्ञात्वा षट्चक्रभेदञ्च यः कर्म कुरुतेऽनिशम् ।**
**संवत्सरात् भवेत् सिद्धिरिति तन्त्रार्थनिर्णयः ॥ १५ ॥**

जो षट्चक्रों को नहीं जानता किन्तु अम्बा के श्रीचरणों की सेवा करता है, उसके समस्त पाप नष्ट हो जाते हैं, किन्तु सात जन्म में उसे सिद्धि प्राप्त होती है । जो षट्चक्र भेदन का ज्ञानवान् है और उसके भेदन के लिए दिन रात कर्म करता रहता है, उसे मात्र एक संवत्सर में सिद्धि मिल जाती है, ऐसा तन्त्रार्थ का निर्णय है ॥ १४-१५ ॥

**प्रस्वेदनं समाप्नोति मासत्रयनिषेवणात् ।**
**अष्टमासात् कल्प(म्प)नाशो वत्सरात् खेचरी गतिः ॥ १६ ॥**
**प्रस्वेदमधमं प्रोक्तं कल्प(म्प)नं मध्यमं स्मृतम् ।**
**भूमेरुत्थापनं नाथ खेचरत्वं महासुखम् ॥ १७ ॥**

मात्र तीन महीने उस कर्म को करते रहने से साधक प्रस्वेदन ( शरीर में पसीना ) प्राप्त करने लगता है, आठ मास निरन्तर कर्म करते रहने से कम्पन की प्राप्ति तथा उस कर्म को एक संवत्सर करते रहने से आकाश में उठने की शक्ति प्राप्त हो जाती है । योग में प्रस्वेदन को अधम ( छोटा ) कहा गया है और कम्पन को मध्यम कहा गया है । हे नाथ ! भूमि से ऊपर उठ जाना उत्तम है । वही महासुख है तथा खेचरी गति कही गई है ॥ १६-१७ ॥

**द्वात्रिंशद् ग्रन्थिभेदञ्च मूलाधारावधिस्थितम् ।**
**मेरुदण्डाश्रितं देशं कृत्वा ब्रह्ममयो भवेत् ॥ १८ ॥**
**सुषुम्ना बाह्यदेशे च यद् यद् ग्रन्थिपदं प्रभो ।**
**क्रमशः क्रमशो भित्वा खेचरो भवति ध्रुवम् ॥ १९ ॥**

इस शरीर में मूलाधार पर्यन्त बत्तीस ग्रन्थियाँ हैं जो मेरुदण्डाश्रित देश में रहती हैं उनका भेदन कर देने से साधक साक्षात् ब्रह्ममय हो जाता है । हे प्रभो ! सुषुम्ना से बाहर प्रदेश में रहने वाले जितने ग्रन्थि स्थान हैं उनका एक-एक क्रम से भेदन करने वाला साधक निश्चित रूप से खेचर हो जाता है ॥ १८-१९ ॥

**अल्प(न्य)कार्ये मनो दत्वा ध्यानज्ञानविवर्जितः ।**
**उन्मत्तः स भवेदेव शास्त्राणां योगिराड् भवेत् ॥ २० ॥**
**हिमं[1]कुन्देन्दुधवलां बालां शक्तिं महोज्ज्वलाम् ।**
**कलिकालफलानन्दां मूले ध्यात्वा भवेद् वशी ॥ २१ ॥**

जो ध्यान और ज्ञान से रहित है और अन्य कार्यों में मन लगाता है, वह अवश्य ही उन्मत्त हो जाता है । अन्यथा स्वयं योगादि ( प्राणायामों में मन लगाने वाला ) सभी शास्त्रों

---

१. हिमं च कुन्दश्च हिमकुन्दौ, ताभ्यां सहित इन्दुः, हिमकुन्देन्दुः, मध्यमपद-लोपिसमासः। स इव धवला, 'उपमानानि सामान्यवचनैः' इति कर्मधारयसमासः ।

का ज्ञाता योगिराज बन जाता है । हिम एवं कुन्दपुष्प तथा इन्दु के समान धवल वर्ण वाली, अत्यन्त प्रकाश युक्त जो कलि काल में आनन्द रूप फल वाली है, उस **महाशक्ति बाला** का, मूलाधार में ध्यान करने से साधक जितेन्द्रिय हो जाता है ॥ २०-२१ ॥

**मूलपद्मं(द्मे) महाज्ञानी ध्यात्वा चारुचतुर्दले ।**
**कपिलाकोटिदानस्य फलं प्राप्नोति योगिराट् ॥ २२ ॥**
**मूलपद्मे कोटिचन्द्रकलायुक्तं सरक्तकम् ।**
**गलत्सुधा[1]रसामोदवदनाब्जं फलं भजेत् ॥ २३ ॥**

अत्यन्त मनोहर दल वाले मूलपद्म में ध्यान करने से साधक महाज्ञानी हो जाता है, ऐसा योगिराज साधक करोड़ों कपिला के दान का फल प्राप्त कर लेता है । मूलाधार रूप पद्म में करोड़ों चन्द्रमा की कलाओं से युक्त, रक्त वर्ण वाले, आमोद युक्त मुख कमल, जिससे सुधारस प्रवाहित हो रहा है, उसका ध्यान कर साधक सब प्रकार का फल प्राप्त कर लेता है ॥ २२-२३ ॥

**निर्मलं कोटिवीरोग्रतेजसं ब्रह्मरूपिणम् ।**
**वामपार्श्वे कुण्डलिन्या विभाव्य शीतलो भवेत् ॥ २४ ॥**
**ततः श्रीयामलं वीरं तदाकारं तदुद्भवम् ।**
**ललाटवह्निजं देव्या नाथं भजति योगिराट् ॥ २५ ॥**

कुण्डलिनी की बायीं ओर अत्यन्त निर्मल करोड़ों वीरों के समान उग्र तेज वाले ब्रह्मस्वरूप का ध्यान कर साधक शीतल हो जाता है । उसके बाद योगिराज उससे उत्पन्न उसी आकार वाले, श्रीयामल वीर, जो ललाटस्थ वह्नि से उत्पन्न हैं और देवी के नाथ हैं, उनकी सेवा करता है ॥ २४-२५ ॥

**तत्र पद्मपूर्वदले सिन्धूरारुणविग्रहम् ।**
**वकारं कोटिचपलामालं भजति योगिराट् ॥ २६ ॥**
**तत्पार्श्वे शोणितदले आज्ञाचक्रं मनोरमम् ।**
**यथा ध्यानं कुण्डलिन्या आज्ञाचक्रे तथात्र च ॥ २७ ॥**

तदनन्तर योगिराज, उस कमल के पूर्व दिशा वाले पत्र पर सिन्दूर के समान अरुण विग्रह वाले करोड़ों चपला के समान देदीप्यमान, वकार अक्षर की सेवा में संलग्न हो जाता है । उसी के पार्श्वभाग में स्थित रक्त वर्ण वाले दल पर अत्यन्त मनमोहक आज्ञाचक्र है, पूर्व में कुण्डलिनी का ध्यान जिस प्रकार कहा गया है उसी प्रकार का ध्यान इस आज्ञाचक्र में करना चाहिए ॥ २६-२७ ॥

**भूमिचक्रक्रमं नाथ शृणु शङ्कर योगिनाम् ।**
**यं ध्यात्वा सिद्धिमाप्नोति सिद्धिदं षड्गृहं भवेत् ॥ २८ ॥**

---

१. गलँश्चासौ सुधारसश्च, गलत्सुधारसस्तस्यामोदो गलत्सुधारसामोदः, तेन पूर्ण वदनाब्जम्, मध्यममदलामिसमासः ।

षड्गृहं त्रिकालागेहमेकत्रस्थं महाप्रभम् ।
ध्यायेद् योगिनीगेहं मध्यगेहे रबीजकम् ॥ २९ ॥

**भूमिचक्रनिरूपण**—हे योगियों का कल्याण करने वाले शङ्कर ! हे नाथ ! अब भूमिचक्र के क्रम को सुनिए जिसका ध्यान करने से साधक सिद्धि प्राप्त करता है तथा षड्गृह भी उसे सिद्धि प्रदान करता है । महाप्रभा से युक्त षड्गृह तथा त्रिकालागेह (?) एक स्थान पर ही स्थित हैं । उनके मध्य वाले गेह में र बीज वाले योगिनी गेह का ध्यान करना चाहिए ॥ २८-२९ ॥

वकारं दक्षिणे गेहे हेममालिनमञ्जनम् ।
डाकिनी परमाबीजं ब्रह्मबीजं विभावयेत् ॥ ३० ॥
वकारवामपार्श्वे च योगिनां योगसाधनम् ।
सदाशिवमहाबीजं विभाव्य योगिराड् भवेत् ॥ ३१ ॥
वं बीजं वारुणाध्यक्षं हिमकुन्देन्दुनिर्मलम् ।
तद्विष्णोर्जन्मसंस्थानं सत्त्वं द्रवमुपाश्रयेत् ॥ ३२ ॥

उसके दक्षिण भाग वाले गेह में, सुवर्ण की माला पहने, अञ्जन के आकार वाले, डाकिनी के परम बीज 'ब्रह्मबीज' वकार का ध्यान करना चाहिए । वकार के बायीं ओर योगियों के योग का साधन सदाशिव का महाबीज है । उसका ध्यान करने से साधक योगिराज बन जाता है । वं बीज वारुण बीज है, जो हिम एवं कुन्दपुष्प तथा इन्दु के समान निर्मल है, वहीं विष्णु के जन्म का संस्थान है और वह सत्त्व से युक्त एवं द्रव वाला है । अतः उसकी उपासना करनी चाहिए ॥ ३०-३२ ॥

तदूर्ध्वपूर्वगेहे च लं बीजमिन्द्रपूजितम् ।
विद्युल्लताहेमवर्णं विभाव्य योगिनां पतिः ॥ ३३ ॥
इन्द्रबीजं दक्षपार्श्वे श्रीबीजं बिन्दुलाञ्छितम् ।
स्थिरविद्युल्लतारूपमिन्द्राण्याः साधु भावयेत् ॥ ३४ ॥

उसके ऊपर पूर्व वाले गेह में इन्द्र द्वारा पूजित 'लं' बीज है जो विद्युल्लता के समान एवं सुवर्ण के समान देदीप्यमान है उसका ध्यान करने से साधक योगियों का स्वामी बन जाता है । उसके दाहिने भाग में इन्द्रबीज ( ? ) तथा बिन्दु से युक्त श्रीबीज ( श्रीं ) तथा स्थिर विद्युत् लता के समान रूपवाले इन्द्राणी के बीज की भली प्रकार से भावना करे ॥ ३३-३४ ॥

तद्वामपार्श्वभागे च प्रणवं ब्रह्मसेवितम् ।
विभाव्य कोटिमिहिरं योगिराड् भवति ध्रुवम् ॥ ३५ ॥
वं बीजाधोमन्दिरे श्रीविद्यायाः बीजतेजसम् ।
कोटिसूर्यप्रभाकारं[१] विभाव्य सर्वगो भवेत् ॥ ३६ ॥

---

१. कोटिसंख्याकाः सूर्याः, कोटिसूर्याः, मध्यमपदलामिसमासः, तेषां प्रभां करोति इति विग्रहः ।

उसके बायें भाग में, ब्रह्मदेव द्वारा सेवित, करोड़ों सूर्य के समान देदीप्यमान प्रणव का ध्यान कर साधक निश्चित रूप से योगिराज बन जाता है । वं बीज के नीचे वाले मन्दिर में श्रीविद्या का तैजस बीज है, जो करोड़ों सूर्य के समान तेजस्वी है, उसका ध्यान करने से साधक सर्वगामी बन जाता है ॥ ३५-३६ ॥

**निजदेव्या वामभागे अधः कनकमन्दिरे ।**
**श्रीगुरो रमणं बीजं ध्यात्वा वाग्भवमीश्वरम् ॥ ३७ ॥**
**निजदेव्या दक्षपार्श्वे दीर्घप्रणवतेजसम् ।**
**कोटिसूर्यप्रभारूपं ध्यात्वा योगी भवेद् यतिः ॥ ३८ ॥**
**निजदेवीं तत्र पद्मे मनःसद्वाक्ययोगकैः ।**
**यथा ध्यानं तथा मौनं ध्यानं कुर्याज्जगत्पतेः ॥ ३९ ॥**

नित्यरूपा देवी के वामभाग के नीचे सुवर्णमय मन्दिर में श्रीगुरु के रमण वाला, जो वाग्भव एवं ईश्वर हैं, उसका ध्यान करे । उसी नित्य देवी के दाहिने भाग में करोड़ों सूर्य के समान प्रकाश वाले तैजस दीर्घ प्रणव ( आँ ) का ध्यान कर योगी यति बन जाता है । वहाँ पर स्थित पद्म में नित्य देवी का, मन को सद्वाक्य से युक्त कर, जिस प्रकार ध्यान एवं मौन धारण किया जाता है उसी प्रकार वहाँ जगत्पति का ध्यान करे ॥ ३७-३९ ॥

**ब्रह्मणः पूरकेणैव महायोगक्रमेण तु ।**
**सूक्ष्मवायूद्गमेनापि भूमिचक्रे जपञ्चरेत् ॥ ४० ॥**
**चतुष्कोणं धरायास्तु नवभूमिगृहान्वितम् ।**
**अष्टगेहं विभेद्यादौ वसुशून्ये यजेद् यतिः ॥ ४१ ॥**

वहाँ उस भूमिचक्र में पूरक प्राणायाम के द्वारा महायोग क्रम के द्वारा तथा सूक्ष्म वायु की उत्पत्ति के द्वारा ब्रह्मदेव के मन्त्र का जप करना चाहिए । वह धराचक्र चतुष्कोण है जिसमें नव पृथ्वी के घर हैं, उनमें आठ गृहों का भेदन कर वसु ( ८ ) से शून्य वाले नवें गृह में यति को जप पूजा करनी चाहिए ॥ ४०-४१ ॥

**धराबीजं वान्तवर्णं शक्रेण परिपूजितम् ।**
**विभाव्य कुण्डलीतत्त्वं सर्वसिद्धीश्वरो भवेत् ॥ ४२ ॥**
**भजेदिन्द्रं तत्र नाके श्वेतकुञ्जरवाहनम् ।**
**चतुर्बाहुं देवराजं विद्युत्पुञ्जं भवक्षयम् ॥ ४३ ॥**

'व' है अन्त में जिसके अर्थात् 'लं' अक्षर धरा बीज है, जिसका पूजन इन्द्र देव ने स्वयं किया था, वहाँ कुण्डली तत्त्व का ध्यान कर साधक सर्वसिद्धिश्वर हो जाता है । वहाँ के आकाश मण्डल में श्वेत हाथी पर विराजमान्, विद्युत्पुञ्ज के समान देदीप्यमान् तथा संसारचक्र के विनाशक चार बाहुओं वाले देवराज इन्द्र का ध्यान करना चाहिए ॥ ४२-४३ ॥

**डाकिन्या मन्दिरे कान्तं ब्रह्माणं हंसहंसगम् ।**
**नवीनार्कं चतुर्बाहुं चतुर्वक्त्रं भजेद् वशी ॥ ४४ ॥**

**ब्रह्माणं डाकिनीयुक्तं सिन्दूराप्लुतभास्करम्[१] ।**
**परमामोदमत्तं तं विभाव्य योगिराड् भवेत् ॥ ४५ ॥**

डाकिनी के मन्दिर में अत्यन्त सुन्दर हंस पर गमन करने वाले, चार भुजा तथा चार मुख वाले, नवीन उदीयमान सूर्य के समान भासमान ब्रह्मदेव का जितेन्द्रिय साधक को ध्यान करना चाहिए । डाकिनी से संयुक्त, सिन्दूर से परिपूर्ण, भास्कर के समान तेजस्वी तथा अत्यन्त आनन्द में मदमत्त ब्रह्मदेव का ध्यान कर साधक योगिराज बन जाता है ॥ ४४-४५ ॥

**विद्युल्लतावदुज्ज्वलां श्रीदेवडाकिनीं सुराट् ।**
**अभीक्षां(क्ष्णा) रक्तनयनां हंसस्थां भावयेद् वशी ॥ ४६ ॥**
**हंसोद्‌र्ध्वे कमलाबीजं सर्वालङ्कारभूषितम् ।**
**महालक्ष्मीस्वरूपं यत्तद् भजन्ति महर्षयः ॥ ४७ ॥**

विद्युल्लता के समान प्रकाशित श्रीदेव डाकिनी का, जिनके नेत्र रक्त वर्ण के हैं तथा जो हंस की सवारी पर आसीन हैं, वशी एवं सुराट साधक उनका बारम्बार ध्यान करे । हंस के ऊर्ध्वभाग में सर्वालङ्कार से विभूषित कमलाबीज ( श्रीं ) है जो महालक्ष्मी का स्वरूप है, ऐसे स्वरूप का ध्यान महर्षि लोग करते हैं ॥ ४६-४७ ॥

**इन्द्रपृथ्वीबीजवामे प्रणवं ब्रह्मसेवितम् ।**
**प्राणायामसिद्धिदं यत्तद् भजन्ति महर्षयः ॥ ४८ ॥**

**भूमिचक्रम्**

**तदधः प्राणनिलयं प्रेतबीजं शशिप्रभम् ।**
**विभाव्य शिवतुल्यः स्याद् भूमिचक्रे सदाशिवः ॥ ४९ ॥**

इन्द्र तथा पृथ्वी बीज ( लं ) के वामभाग में ब्रह्मदेव द्वारा सेवित प्रणव ( ॐ ) है, जो प्राणायाम करने से सिद्धि प्रदान करता है । अतः महर्षि लोग उस प्रकार के प्रणव का जप करते हैं । उसके नीचे सभी प्राणों का स्थान चन्द्रमा के समान उज्ज्वल वर्ण वाला प्रेत बीज ( हंसो ) है, वहीं उस भूमिचक्र में सदाशिव का स्वरूप है । उसका ध्यान करने से साधक शिव तुल्य हो जाता है ॥ ४८-४९ ॥

**तदधो वाग्भवं ध्यायेत् कोटिसौदामिनीप्रभम् ।**
**गुरुबीजं भूमिचक्रे महाविद्यागुरुर्भवेत् ॥ ५० ॥**
**दक्षिणे मध्यगेहे च श्रीविद्यानिर्मलं पदम् ।**
**विभाव्य मानसध्यानात् सिद्धो भवति साधकः ॥ ५१ ॥**
**तद्दक्षिणे शेषगेहे प्रणवान्तं मनूत्तमम् ।**
**सर्वाधारं ब्रह्मविष्णुशिवदुर्गापदं भवेत् ॥ ५२ ॥**

भूमि चक्र के नीचे करोड़ों विद्युत् के समान भासमान वाग्भव बीज ( ऐं ) का ध्यान

---

१. सिन्दूराप्लुतो भास्करो यस्येति विग्रहो बहुव्रीहौ ।

करना चाहिए । वही गुरुबीज है । साधक उसका ध्यान करने से महाविद्याओं का ज्ञाता हो जाता है । दक्षिण दिशा में मध्य भाग में श्रीविद्या का निर्मल स्थान है । उनका मानस ध्यान करने से साधक सिद्ध हो जाता है । उसके दक्षिण शेष गृह में प्रणवान्त उत्तम मन्त्र का स्थान है । वही ब्रह्मा, विष्णु, शिव एवं दुर्गा का स्थान है इसलिए सर्वाधार है ॥ ५०-५२ ॥

**एतत् श्रीभूमिचक्रार्थं सर्वं चैतन्यकारकम् ।**
**मूलाधारपूर्वदले वकारं व्याप्य तिष्ठति ॥ ५३ ॥**
**भूमिचक्रमण्डले तु वकारस्थं स्मरेद्यदि ।**
**ब्रह्माण्डमण्डलेशः स्यादण्डं व्याप्यैकपत्रकम् ॥ ५४ ॥**

यह सब भूमिचक्र के अभिधेय हैं । सभी चैतन्य करने वाले हैं और मूलाधार के पूर्वदल में रहने वाले वकार को व्याप्त कर स्थित हैं । भूमिचक्र के मण्डल में समस्त ब्रह्माण्ड को व्याप्त कर एक पत्ते वाले वकारस्थ उस मन्त्रोत्तम का स्मरण करे तो साधक ब्रह्माण्ड मण्डल का ईश्वर बन जाता है ॥ ५३-५४ ॥

**तदेकपत्रं पदस्य शोणितं निर्मलद्युतिम् ।**
**तन्मध्यान्ते भूमिचक्रे मध्ये वं भावयेद् वशी ॥ ५५ ॥**
**एतच्चक्रप्रसादेन वरुणो मदिरापतिः ।**
**अमृतानन्दहृदयः सर्वैश्वर्यान्वितो भवेत् ॥ ५६ ॥**

कमल का वह एक पद्मपत्र रक्तवर्ण का एवं निर्मल द्युति वाला है । उसके मध्यान्त में स्थित भूमिचक्र के मध्य में जितेन्द्रिय साधक को 'वं' बीज का ध्यान करना चाहिए । इस चक्र की कृपा से वरुण समस्त मदिरा के पति बन गए । इस चक्र के ध्यान से साधक का हृदय अमृतानन्द से परिपूर्ण हो जाता है, किं बहुना वह समस्त ऐश्वर्यों से युक्त हो जाता है ॥ ५५-५६ ॥

### स्वर्गचक्रम्

**द्वितीये दक्षिणे पत्रे वान्तबीजं महाप्रभम् ।**
**मनो विधाय योगीन्द्रो ध्यायेद् योगार्थसिद्धये ॥ ५७ ॥**

**स्वर्गचक्र का निरूपण**—दक्षिण के द्वितीय पत्र में अत्यन्त प्रकाशित वान्त ( लं ) बीज है योगीन्द्रों को अपने योग रूप प्रयोजन की सिद्धि के लिए उसी में मन लगाकर ध्यान करना चाहिए ।

**विमर्श**—वान्त का अर्थ २१. ४२ में बहुब्रीहि समास करके ल किया गया है ॥ ५७ ॥

**तत्र ध्यायेत् स्वर्गचक्रं स्वर्गशोभासमाकुलम् ।**
**विभाव्य स्वर्गनाथः स्याद्देवेन्द्रसदृशो भुवि ॥ ५८ ॥**

वहीं स्वर्ग की शोभा से संयुक्त स्वर्ग चक्र का ध्यान करना चाहिए । उस चक्र का ध्यान करने से साधक इस पृथ्वी पर ही स्वर्ग का स्वामी बन जाता है ॥ ५८ ॥

**पञ्चकोणं विभेद्यापि पञ्चकोणं विभाति यत् ।**
**तन्मध्ये वृत्तयुगलं तत्र षट्कोणगं भजेत् ॥ ५९ ॥**

**एतत् स्वर्गाख्यचक्रं तु भूपुरद्वयमध्यके ।**
**दक्षिणोत्तरपत्रस्थे विभाव्य वान्तमीश्वरम् ॥ ६० ॥**

पञ्चकोण का भेदन करने के बाद भी एक पञ्चकोण शोभित होता दिखाई पड़ता है। उस दृश्यमान् पञ्चकोण के मध्य में दो वृत्त हैं। उन दोनों वृत्तों में रहने वाले षट्कोण का ध्यान करना चाहिए। यही स्वर्ग नामक चक्र है। इसके दक्षिण उत्तर वाले पत्र के मध्य में दो भूपुर हैं उसमें 'व' बीज एवं ईश्वर स्थित हैं, उनका ध्यान करे ॥ ५९-६० ॥

**षट्कोणान्तर्गतं वान्तं विद्युत्कोटिसमप्रभम्[1] ।**
**तमाश्रित्य सुराः सर्वे दशकोणे वशन्ति ते ॥ ६१ ॥**
**पूर्वकोणे महेन्द्रश्च सर्वदेवसमास्थितः ।**
**इन्द्राणी सहितं ध्यात्वा योगीन्द्रो भवति ध्रुवम् ॥ ६२ ॥**
**तद्दक्षिणे रक्तकोणे वह्निं स्वाहान्वितं स्मरेत् ।**
**कोटिकाला[2]नलालोलं परिवारगणान्वितम् ॥ ६३ ॥**

करोड़ों विद्युत् के समान प्रभा वाले षट्कोणान्तर्गत उस वान्त बीज का आश्रय लेकर ही उसके दशकोणों में सभी देवताओं का निवास है। उस वकार रूप बीज के पूर्वकोण में सभी देवताओं से संयुक्त इन्द्राणी सहित **इन्द्र का ध्यान** करने से साधक निश्चित रूप से योगीन्द्र हो जाता है। उसके दक्षिण रक्त वर्ण वाले कोण में करोड़ों कालानल के समान चञ्चल परिवार समन्वित स्वाहा युक्त **अग्निदेव का ध्यान** करना चाहिए ॥ ६१-६३ ॥

**तद्दक्षिणे कामरूपी भाति शक्तियुतः प्रभुः ।**
**परिवारान्वितं ध्यात्वा तं मृत्यु(त्यु)वशमानयेत् ॥ ६४ ॥**
**नैर्ऋतं विद्युदाकारं कन्दर्पदमनं प्रियम् ।**
**शक्तियुक्तं स्वरानन्दं विभाव्य योगिनीपतिः ॥ ६५ ॥**

उसके भी दक्षिण शक्ति संयुक्त कालरूपधारी स्वयं प्रभु ( शिव ) विराजमान हैं। परिवार सहित उन ( शिव एवं शक्ति ) का ध्यान करने से साधक उस मृत्यु को अपने वश में कर लेता है। उसके बाद कन्दर्प का दमन करने वाले विद्युत् के समान देदीप्यमान् नैर्ऋत्य हैं। शक्ति युक्त स्वरानन्द उन **नैर्ऋत्य का ध्यान** करने से साधक समस्त योगिनियों का पति हो जाता है ॥ ६४-६५ ॥

**तदधो वरुणं ध्यात्वा सुशक्तिपरिलालितम् ।**
**जलानामधिपं सत्त्वं नित्यसत्त्वश्रियो भवेत् ॥ ६६ ॥**
**तद्वामे मरुतः कोणं मरुद्गणविभाकरम् ।**
**वायुस्थानं लयस्थानं वायुव्याप्तं भवेत् सुधीः ॥ ६७ ॥**

---

१. विद्युतां कोटिः, तत्समा प्रभा यस्येति बहुव्रीहिः ।
२. कोटिकालानल इवालोलस्तम्, 'उपमानानि समान्यवचनैः' इति समासः कर्मधारयः ।

**तत्पश्चाद् गणनाथञ्च मत्तं शक्तिसमन्वितम् ।**
**परिवारगणानन्दं विभाव्य स्याद् गणेश्वरः ॥ ६८ ॥**

उसके नीचे सुन्दर शक्ति से लालित, जलों के अधिपति सत्त्व स्वरूप **वरुण का ध्यान** कर नित्य सत्त्व युक्त श्री से सम्पन्न हो जाता है । उसके बायें वायुकोण है जहाँ मरुद् गणों को विभावित करने वाला सबके लय का स्थान है वह वायु का स्थान है । वहाँ **( वायु ) का ध्यान** करने से सुधी साधक वायु से व्याप्त हो जाता है । उसके पश्चात् मदमत्त शक्ति समन्वित एवं अपने परिवार गणों से आनन्द पूर्वक रहने वाले गणनाथ **गणेश का ध्यान** कर साधक गणेश्वर हो जाता है ॥ ६६-६८ ॥

**तत्पश्चात् परमं स्थानमीशं शक्तिसमन्वितम् ।**
**परिवारान्वितं ध्यात्वा कामरूपी भवेद्यतिः ॥ ६९ ॥**
**तत्पश्चात् कोणगेहे च चन्द्रसूर्याग्नितेजसम् ।**
**एकरूपमूर्ध्वसंस्थं ब्रह्माणं भावयेद्यतिः ॥ ७० ॥**
**इन्द्रवामकोणगेहे अनन्तं वह्निरूपिणम् ।**
**अनन्तसदृशं[१] ध्यात्वा अनन्तसदृशो भवेत् ॥ ७१ ॥**

उसके बाद एक और उत्कृष्ट स्थान है, जहाँ शक्ति एवं परिवार गणों से युक्त **सदाशिव का ध्यान** कर यति इच्छानुसार रूप धारण करने वाला बन जाता है । उसके बाद कोने वाले गृह में चन्द्रमा सूर्य एवं अग्नि के समान तेजस्वी एकाकार में रहने वाले ऊपर की ओर स्थित **ब्रह्मदेव का ध्यान** करना चाहिए । इन्द्र के बायें कोने वाले गृह में अनन्त सदृश अग्नि का रूप धारण करने वाले **अनन्त का ध्यान** कर साधक अनन्त के सदृश हो जाता है ॥ ६९-७१ ॥

**एतत् स्वचक्रमध्ये तु वृत्तयुग्मं महाप्रभम् ।**
**सर्वदा वह्निना व्याप्तं ज्वलदग्निं विभावयेत् ॥ ७२ ॥**
**वृत्तमध्ये च षट्कोणं कोणे कोणे रिपुक्षयम् ।**
**लोभमोहादिषट्कञ्च हरेत् षट्कोणसंस्थितान् ॥ ७३ ॥**

इस स्वर्ग चक्र के मध्य में आठ महाप्रभा वाले दो वृत्त हैं, वह सर्वदा अग्नि से व्याप्त रहता है । अतः वहाँ जलती हुई **अग्नि का ध्यान** करना चाहिए । उन दोनों वृत्त के मध्य में षट्कोण हैं । जिसके प्रत्येक कोणो में लोभ मोहादि छः शत्रुगणों का गृह है । दशकोण स्थित देवताओं का ध्यान षट्कोण संस्थित लोभ-मोहादि शत्रुओं को विनष्ट कर देता है ॥ ७२-७३ ॥

**लोभं हरति इन्द्राणी(ग्नी) मोहं हरति दण्डधृक् ।**
**कामं नैर्ऋतवरुणौ क्रोधं वायुश्च योगिनाम् ॥ ७४ ॥**
**मदं हरेदधीशश्च ब्रह्मानन्तौ हि योगिनाम् ।**
**मात्सर्यं संहरत्येव मासत्रयनिषेवणात् ॥ ७५ ॥**

---

१. अनन्तेन सदृशम्, 'पूर्वसदृशसमानार्थकलहनिपुणमिश्रश्लक्ष्णैः' इति समासः ।

**षट्कोणमध्यदेशस्थं वान्तबीजं शशिप्रभम् ।**
**स्वर्णालङ्कारजडितं भावयेद् योगसिद्धये ॥ ७६ ॥**

इन्द्राग्नी योगियों के लोभ का हरण करते हैं, यमराज मोह का हरण करते हैं, नैर्ऋत्य और वरुण काम का तथा वायु क्रोध का विनाश करते हैं । मात्र तीन महीने ध्यान करने से ईश्वर मद का तथा ब्रह्मा और अनन्त योगियों का मात्सर्य हरण करते हैं । इस षट्कोण के मध्य में चन्द्रमा के समान प्रकाश वाले, स्वर्णनिर्मित अलङ्कारों से विभूषित **वान्त बीज का ध्यान** योगसिद्धि के लिए करना चाहिए ॥ ७४-७६ ॥

**सदा व्याप्तं कुण्डलिन्या पालितं मण्डितं सुधीः ।**
**तैले यथा दीपपुञ्जं विभाव्य योगिराड् भवेत् ॥ ७७ ॥**
**स्वयंभूलिङ्गं तत्रैव विभाव्य चन्द्रमण्डलम् ।**
**आप्लुतं कारयेन्मन्त्री कुण्डलीसहितं वशी ॥ ७८ ॥**

ये चक्र कुण्डलिनी से सदैव व्याप्त रहने वाले हैं और उसी से उसी प्रकार पालित तथा मण्डित भी हैं जिस प्रकार तेल में दीप-पुञ्ज भासित होता है, इसका ध्यान करने से सुधी साधक योगिराज बन जाता है । वहीं **स्वयंभू लिङ्ग** है । जितेन्द्रिय एवं मन्त्रज्ञ साधक कुण्डली सहित उस स्वयंभू लिङ्ग को चन्द्रमण्डल से आप्लावित कर उसका ध्यान करे ॥ ७७-७८ ॥

**एवं क्रमेण सिद्धः स्यात् कुण्डल्याकुञ्चनेन च ।**
**सदाभ्यासी महायोगी संस्थाप्य वायवीं ततः ॥ ७९ ॥**
**वायव्याभासयुक्तेन एतच्चक्राश्रयेण च ।**
**मूकोऽपि वाक्पतिर्भूयात् फलभागी दिने दिने ॥ ८० ॥**

इस क्रम से तथा कुण्डली को बारम्बार संकुचित करने से साधक क्रमशः सिद्ध हो जाता है । इसके बाद सदाभ्यास में निरत महायोगी वायवी शक्ति का संस्थापन करे । वायवी शक्ति के अभ्यास से युक्त होने के कारण तथा इस चक्र के आश्रय करने के कारण गूँगा भी वाक्पति बन जाता है और दिन प्रतिदिन फल का भागी होता रहता है ॥ ७९-८० ॥

### तृतीयदलमाहात्म्यम्

**तृतीयदलमाहात्म्यं योगिज्ञानोदयं परम् ।**
**भावसिद्धिर्भवेत्तस्य यो भजेदात्मचिन्तनम् ॥ ८१ ॥**

### तुलाचक्रम्

**दलमध्ये तुलाचक्रं चतुष्कोणो गृहाणि च ।**
**द्वात्रिंशद् ग्रन्थिरूपाणि सन्ति ग्रन्थिविभेदने ॥ ८२ ॥**

**तुलाचक्रनिरूपण**—तृतीयदल का माहात्म्य योगियों के ज्ञान के उदय का कारण है, अतः जो आत्म चिन्तन करता है, उसे भावसिद्धि हो जाती है । इस तृतीयदल के मध्य में तुलाचक्र है जिसके चारों कोनों पर बत्तीस ग्रन्थि रूप गृह हैं । इन्हीं ग्रन्थियों का विभेदन करना चाहिए ॥ ८१-८२ ॥

**तुलाचक्रस्य नाडीभिर्द्वात्रिंशद् ग्रन्थिभेदनम्[१] ।**
**गलदेशावधि ध्यानं मेरुमध्ये प्रकारयेत् ॥ ८३ ॥**
**द्वात्रिंशद्ग्रन्थिगेहस्य मध्ये वृत्तत्रयं शुभम् ।**
**तन्मध्ये च त्रिकोणे च खं मूर्द्धन्यं भजेद् वशी ॥ ८४ ॥**

तुलाचक्र की नाडियों द्वारा इन ग्रन्थियों का भेदन किया जाता है अतः मेरुदण्ड के भीतर गलादेश पर्यन्त भाग में इनका ध्यान करना चाहिए । इन बत्तीस ग्रन्थियों वाले गृह के मध्य में अत्यन्त कल्याणकारी तीन वृत्त हैं । उनके मध्य में तथा त्रिकोण में वशी साधक मूर्धन्य 'खं' बीज का ध्यान करे ॥ ८३-८४ ॥

**एतद्गेहे विभाव्यानि वर्णजालफलानि च ।**
**दक्षिणावर्तयोगेन विभाव्य वाक्पतिर्भवेत् ॥ ८५ ॥**
**अकारमाद्यगेहे च अनुस्वारं द्वितीयके ।**
**विसर्गं तु तृतीये च यो भजेत्स भवेद्वशी ॥ ८६ ॥**

इन बत्तीस गृहों में दक्षिणावर्त वर्ण समूहों के फलकों को स्थापित करना चाहिए । ऐसा कर साधक वाक्पति हो जाता है । प्रथम गृह में अकार, द्वितीय में अनुस्वार, तृतीय में विसर्ग स्थापित करने वाला साधक वशी हो जाता है ॥ ८५-८६ ॥

**एतदन्यमन्दिरेषु कादिहान्तं विभावयेत् ।**
**वादिसान्तं वर्जयित्वा सबिन्दुं स भवेद्वशी ॥ ८७ ॥**

इसके अतिरिक्त शेष उन्तीस गृहों में बिन्दु सहित व, श, ष, स—इन अक्षरों को छोड़कर क वर्ग से ह पर्यन्त ( क, च, ट, त, प कुल पच्चीस किन्तु व श ष स इन अक्षरों को छोड़कर य, र, ल, ह पर्यन्त चार को लेकर ) कुल उन्तीस वर्णों को स्थापित करे तो साधक वशी हो जाता है ॥ ८७ ॥

**आज्ञाचक्रे यथानामफलं प्राप्नोति साधकः ।**
**वर्णानां मूलपद्मे तु तत्फलं हि तुलागृहे ॥ ८८ ॥**
**भजेन्मध्यं सकारस्य त्रिवृत्तस्थ त्रिकोणके ।**
**ज्वालामाल[२]सहस्राढ्यं स्वर्णालङ्कृतमाश्रयेत् ॥ ८९ ॥**
**प्रत्येकवर्णपुटितं तुलाचक्रे च मौनवान् ।**
**मौनं जपं यः करोति षकारं व्याप्य योगिराट् ॥ ९० ॥**

**तुलाचक्र की फलश्रुति**—आज्ञाचक्र के मूलपद्म में वर्णों को स्थापित करने से जैसा फल प्राप्त होता है वही तुलागृह में भी वर्णों के स्थापन से प्राप्त होता है । त्रिवृत्तस्थ त्रिकोण में सकार के मध्य भाग का, जो सहस्रों ज्वालाओं से परिपूर्ण एवं स्वर्ण से

---

१. द्वात्रिंशत्संख्याकग्रन्थीनां भेदनमिति—मध्यमपदलोपिसमासगर्भः षष्ठीतत्पुरुषः ।

२. ज्वालानां मालाः ज्वालामालाः, तासां सहस्रेणाढ्य, इति विग्रहः । ङ्यापोः संज्ञाछन्दसोर्बहुलमिति ह्रस्वः, छन्दोऽनुरोधात् ।

अलंकृत है, उसका आश्रय ग्रहण करना चाहिए। तुलाचक्र में मौन व्रत धारण कर प्रत्येक वर्ण से सम्पुटित षकार पर्यन्त वर्ण ( व, श, ष, स ) का जो साधक मौन हो कर जप करता है वह योगिराज हो जाता है ॥ ८८-९० ॥

**एतद्योगप्रसादेन चैतन्या कुण्डली भवेत्।**
**वाक्सिद्धिश्च भवेत्तस्य तापत्रयविनाशिनी ॥ ९१ ॥**
**सिद्धिर्मन्त्रस्य वर्णानां जपमात्रेण शङ्कर।**
**तुलाचक्रान्तरस्थानं विभाव्य मन्त्रसिद्धिभाक् ॥ ९२ ॥**
**एतच्चक्रं विना नाथ कुण्डली नापि सिद्ध्यति।**
**भावज्ञानं बिना कुत्र योगी भवति भारते ॥ ९३ ॥**

इस योग की कृपा होने पर ही कुण्डली चेतनता प्राप्त करती है। ऐसे साधक को त्रितापनाश करने वाली वाक्सिद्धि भी प्राप्त हो जाता है। हे शङ्कर ! ऐसे तो मन्त्रों के वर्णों के जप करने से भी सिद्धि प्राप्त होती है, किन्तु तुलाचक्र के मध्य में रहने वाले स्थान के ध्यान से भी साधक मन्त्रसिद्धि का भाजन बन जाता है। हे नाथ ! इस तुलाचक्र के बिना कुण्डलिनी किसी भी हालत में सिद्ध नहीं होती। भला भावज्ञान के बिना इस भारत में कब कौन योगी हुआ है ? ॥ ९१-९३ ॥

### अन्यदलमाहात्म्यम्

**अथान्यदलमाहात्म्यं शृणु वक्ष्यामि तत्त्वतः।**
**योगसञ्चारसारं यत् कुण्डलीशक्तिसाधनम् ॥ ९४ ॥**

**वारिचक्रनिरूपण**—अब हे शङ्कर ! अन्य दलों का माहात्म्य कहती हूँ, श्रवण कीजिए जो योग सञ्चार में सार हैं तथा कुण्डली शक्ति की सिद्धि के साधन हैं ॥ ९४ ॥

**शक्तिबीजं बिन्दुयुक्तम् अष्टकोणस्थनिर्मलम्।**
**विद्युत्पुञ्जं स्वर्णमालावेष्टितं भावयेद्यतिः ॥ ९५ ॥**
**चतुष्कोणं विभेद्यापि चतुष्कोणं मनोहरम्।**
**तन्मध्ये च चतुष्कोणं सबीजं भावयेत्ततः ॥ ९६ ॥**

आठ कोणों में रहने वाले निर्मल बिन्दु युक्त शक्ति बीज ( ह्रीं ) जो विद्युत् के पुञ्ज तथा स्वर्णमाला से वेष्टित है यति उसकी भावना करे। चतुष्कोण का भेदन करने पर भी एक मनोहर चतुष्कोण है। उसके मध्य में शक्तिबीज सहित चतुष्कोण की भावना करे ॥ ९५-९६ ॥

**कोटिसूर्यसमां देवीं कुण्डलीदेवमातरम्।**
**पादाङ्गुष्ठावधिं ध्यात्वा सर्वसिद्धीश्वरो भवेत् ॥ ९७ ॥**

### वारिचक्रम्

**यदि वारिचक्रमध्ये ध्यानं कुर्वन्ति मानुषाः।**
**अमराः सत्त्वयोगस्थाः षट्चक्रफलभोगिनः ॥ ९८ ॥**

उसे तृप्त कराने के बाद सुधी साधक पुनः उसी मार्ग से उसे मूलाधार में ले आवे । इस प्रकार प्रतिदिन वायु का अभ्यास करते हुए साधक जरा मरण तथा समस्त दु:खों से छुटकारा पा जाता है और वह संसार बन्धन से मुक्त हो जाता है, किं बहुना तन्त्र शास्त्र में कहे हुए वे, सभी मन्त्र उसे सिद्ध हो जाते है, जिसे सिद्ध करने का कोई अन्य उपाय नहीं है ॥ ८२-८३ ॥

**स्वयं सिद्धो भवेत् क्षिप्रं योगे हि योगवल्लभा ।**
**ये गुणाः सन्ति देवस्य पञ्चकृत्यविधायिनः[१] ॥ ८४ ॥**
**ते गुणाः साधकवरे भवन्त्येव न चान्यथा ।**
**इति ते कथितं नाथ मन्त्रयोगमनुत्तमम् ॥ ८५ ॥**

वह स्वयं शीघ्रतापूर्वक सिद्ध हो जाता है, योग में रहने वाली योगवल्लभा उस पर कृपा करती हैं, पञ्चकृत्य विद्यायी सदाशिव देव में जितने गुण हैं वे सभी गुण उस साधक श्रेष्ठ में आ जाते हैं । अन्यथा नहीं । हे नाथ ! इस प्रकार हमने श्रेष्ठ मन्त्र योग कहा ॥ ८४-८५ ॥

**इदानीं धारणाख्यञ्च शृणुष्व परमाञ्जनम् ।**
**दिक्कालाद्यनवच्छिन्नं त्वयि चित्तं निधाय च ॥ ८६ ॥**
**मयि वा साधकवरो ध्यात्वा तन्मयतामियात् ।**
**तन्मयो भवति क्षिप्रं जीवब्रह्मैकयोजनात् ॥ ८७ ॥**

**वैष्णव ध्यान** - अब सर्वश्रेष्ठ अञ्जन के समान दृष्टि प्रदान करने वाले **धारणा** के विषय में सुनिए । देश और काल से सर्वथा अनवच्छिन्न आप शङ्कर में अथवा मुझमें साधक अपना चित्त सन्निविष्ट कर तन्मयता प्राप्त करे । इस प्रकार जीव और **ब्रह्म में एकत्व** की भावना कर शीघ्र ही तन्मयता प्राप्त करे, इस प्रकार जीव और ब्रह्म में एकत्व की भावना करने से शीघ्र ही तन्मयता प्राप्त हो जाती है ॥ ८६-८७ ॥

**इष्टपादे मति दत्वा नखकिञ्जल्कचित्रिते ।**
**अथवा मननं चित्तं यदा क्षिप्रं न सिद्ध्यति ॥ ८८ ॥**
**तदावयवयोगेन योगी योगं समभ्यसेत् ।**
**पादाम्भोजे मनो दद्याद् नखकिञ्जल्कचित्रिते ॥ ८९ ॥**

अथवा नखकिञ्जल्क से चित्रित अपने इष्टदेव के पाद में मन लगावे तब भी चित्त स्थिर हो जाता है । अथवा मनन करने वाला यह चञ्चल चित्त यदि शीघ्रता से सिद्धक (स्थिर) न हो तो शरीर के अवयवभूत एक-एक अङ्गों में योगी योग द्वारा चित्त स्थिर रखे । प्रथम नखकिञ्जलक चित्रित इष्टदेव के चरण कमलों में मन लगावे ॥ ८८-८९ ॥

---

१. पञ्चसंख्याकानि च तानि कृत्यानि चेति पञ्चकृत्यानि, मध्यमपदलोपिसमासः । तानि विदधति तच्छीला इत्यर्थः ।

जङ्घायुग्मे तथाराम[1]कदलीकाण्डमण्डिते ।
ऊरुद्वये मत्तहस्तिकरदण्डसमप्रभे ॥ ९० ॥
गङ्गावर्त्तगभीरे तु नाभौ सिद्धिबिले ततः ।
उदरे वक्षसि तथा हस्ते श्रीवत्सकौस्तुभे ॥ ९१ ॥

इसके बाद वाटिका स्थित कदली काण्ड के समान प्रभा वाले दोनों जाँघों में मन लगावे । फिर मदमत्त हाथी के शुण्डाग्रदण्ड के समान दोनों ऊरु में मन को स्थिर करे । इसके बाद सिद्धि के लिए प्रवेश किए जाने वाले बिल के समान गङ्गा के आवर्त के समान गम्भीर नाभि स्थान में मन लगावे । इसके बाद श्रीवत्सकौस्तुभ से विराजमान उदर एवं वक्षःस्थल में, तदनन्तर कर कमल में मन लगावे ॥ ९०-९१ ॥

पूर्णचन्द्रामृतप्रख्ये ललाटे चारुकुण्डले ।
शङ्खचक्रगदाम्भोजदोर्दण्डपरिमण्डिते ॥ ९२ ॥
सहस्रादित्यसङ्काशे किरीटकुण्डलद्वये ।
स्थानेष्वेषु भजेन्मन्त्री विशुद्धः शुद्धचेतसा ॥ ९३ ॥
मनो निवेश्य श्रीकृष्णे वैष्णवो भवति ध्रुवम् ।
इति वैष्णवमाख्यातं ध्यानं सत्त्वं सुनिर्मलम् ॥ ९४ ॥

इसके बाद अमृत से संयुक्त पूर्णमासी के चन्द्रमा के समान तथा मनोहर कुण्डल से मण्डित ललाट में मन लगावे । फिर शंख, चक्र गदा और कमल से मण्डित चार भुजाओं से संयुक्त सहस्रों सूर्यों के समान देदीप्यमान किरीट एवं दो कुण्डलों से युक्त श्रीकृष्ण परमात्मा में मन लगावे । भगवान् श्रीकृष्ण के इन स्थानों में विशुद्ध चित्त से मन को लगाने वाला मन्त्रज्ञ साधक निश्चित रूप से विष्णुभक्त बन जाता है । यहाँ तक हमने सत्त्वगुण से संयुक्त अत्यन्त निर्मल वैष्णव ध्यान का वर्णन किया ॥ ९२-९४ ॥

विष्णुभक्ताः प्रभजन्ति [2]स्वाधिष्ठानं मनः स्थिराः ।
यावन्मनोलयं याति कृष्णे [3]आत्मनि चिन्तयेत् ॥ ९५ ॥
तावत् स्वाधिष्ठानसिद्धिरिति योगार्थनिर्णयः ।
तावज्जपेन्मनुं मन्त्री जपहोमं समभ्यसेत् ॥ ९६ ॥

जिनका मन स्थिर है, ऐसे विष्णुभक्त स्वाधिष्ठान चक्र में विष्णु का ध्यान करते हैं । जब तक मन श्रीकृष्ण में लय को न प्राप्त होवे, तब तब तक आत्मा में उक्त प्रकार से श्री कृष्ण का ध्यान करना चाहिए । तभी स्वाधिष्ठान चक्र की सिद्धि होती है, ऐसा योगशास्त्र का निर्णय है तभी तक मन्त्रज्ञ मन्त्र का जप करे तथा जप और होम का अभ्यास करे ॥ ९५-९६ ॥

---

१. सिद्धवने इति—ग० ।
२. चन्द्रायुत इति—ग० ।
३. स्वात्मनि चिन्ययेत् इति—ग० ।

अतः परं न किञ्चिच्च कृत्यमस्ति मनोहरे[1] ।
विदिते परतत्त्वे तु समस्तैर्नियमैरलम् ॥ ९७ ॥
अत[2] एव सदा कुर्यात् ध्यानं योगं मनुं जपेत् ।
तमः परिवृते गेहे घटो दीपेन दृश्यते ॥ ९८ ॥

सिद्धि प्राप्त कर लेने के पश्चात् और कोई कृत्य शेष नहीं रह जाता । क्योंकि मन को हरण करने वाले परतत्त्व परमात्मा का साक्षात्कार हो जाने पर समस्त नियम व्यर्थ ही हैं । इसीलिए सर्वदा ध्यान करे, योग करे, मन्त्र का जप करे, जिस प्रकार अन्धकारपूर्ण घर में रहने वाला घड़ा दीप से दिखाई पड़ता है ॥ ९७-९८ ॥

एवं स यो वृतो ह्यात्मा मनुना गोचरीकृतः ।
इति ते कथितं नाथ मन्त्रयोगमनुत्तमम् ॥ ९९ ॥
कृत्वा पापोद्भवैर्दुःखैर्मुच्यते नात्र संशयः ।
दुर्लभं विषयासक्तैः सुलभं योगिनामपि ॥ १०० ॥

उसी प्रकार माया से आवृत आत्मा मन्त्र के द्वारा प्रत्यक्ष हो जाती है । हे नाथ ! यहाँ तक हमने सर्वश्रेष्ठ मन्त्र योग कहा । ऐसा करने से साधक पापों से तथा सब प्रकार के दुःखों से छूट जाता है इसमें संशय नहीं । यह ध्यान विषयी लोगों के लिए दुर्लभ है तथा योगियों के लिए सुलभ हैं ॥ ९९-१०० ॥

सुलभं न त्यजेद्विद्वान् यदि सिद्धिमिहेच्छति ।
ब्रह्मज्ञानं योगध्यानं मन्त्रजाप्यं क्रियादिकम् ॥ १०१ ॥
यः करोति सदा भद्रो वीरभद्रो हि योगिराट् ।
भक्तिं कुर्यात् सदा शम्भोः श्रीविद्यायाः परात्पराम् ॥ १०२ ॥

विद्वान् साधक यदि सिद्धि चाहे तो उसे इस सुलभ मार्ग का त्याग नहीं करना चाहिए। जो ब्रह्मज्ञानी ! योग, ध्यान, मन्त्र का जाप तथा अपनी क्रिया करता रहता है वह सदा कल्याणकारी योगिराज वीरभद्र बन जाता है । इसलिए सदैव सदाशिव की भक्ति करनी चाहिए अथवा परात्परा श्रीविद्या की भक्ति करनी चाहिए ॥ १०१-१०२ ॥

योगसाधनकाले च केवलं भावनादिभिः ।
मननं कीर्त्तनं ध्यानं स्मरणं पादसेवनम् ॥ १०३ ॥
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।
एतद्भक्तिप्रसादेन जीवन्मुक्तस्तु साधकः ॥ १०४ ॥

---

१. हरति इति हरा, पचाद्यच् टाप् । मनसो हरा-मनोहरा, तत्सम्बोधने मनोहरे ! इति रूपम्।

२. तालवृन्तेन किं कार्यं लब्धे मलयमारुते ।
मन्त्राभ्यासेन योगेन ज्ञानं ज्ञानाय कल्प्यते ॥
न योगेन बिना मन्त्रो न मन्त्रेण विना हि सः ।
द्वयोरभ्यासयोगो हि ब्रह्मत्वं सिद्धिकारणम् ॥ इति—क० अधिकः पाठः ।

**योगिनां वल्लभो भूत्वा समाधिस्थो भवेद्यतिः ॥ १०५ ॥**

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावार्थनिर्णये पाशवकल्पे षट्चक्रसारसङ्केते सिद्धमन्त्रप्रकरणे भैरवीभैरवसंवादे[1] सप्तविंशः पटलः ॥ २७ ॥**



योगसाधन काल में केवल भावनादि से ही भक्ति करे । मनन, कीर्तन, ध्यान, स्मरण, पादसेवन, अर्चन, वन्दन, दास्य, सख्य तथा आत्मनिवेदन उक्त प्रकार वाली भक्ति के सिद्ध हो जाने पर साधक जीवन्मुक्त हो जाता है और योगियों का वल्लभ हो कर समाधि में स्थित ( प्रज्ञ ) योगी बन जाता है ॥ १०३-१०५ ॥

**॥ श्रीरुद्रयामल के उत्तरतन्त्र में महातन्त्रोद्दीपन में भावार्थ निर्णय में, पाशवकल्प में, षट्चक्रसङ्केत में सिद्धमन्त्रप्रकरण में भैरवी-भैरव संवाद में सत्ताइसवें पटल की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ २७ ॥**



---

१. ऊनविंशः पटल इति—क० ।

# अथाष्टाविंशः पटलः

आनन्दभैरव उवाच

त्रैलोक्यपूजिते कान्ते इदानीं सिद्धिहेतवे ।
मन्त्रसिद्धेर्लक्षणं तु योगिनामतिदुर्लभम् ॥ १ ॥
त्वन्मुखाम्भोरुहोल्लासनिःसृतं परमामृतम् ।
पीत्वा चकार तन्त्राणि[1] यत्तत्र नास्ति तद् वद ॥ २ ॥

**श्री आनन्दभैरव ने कहा**—हे त्रैलोक्यपूजिते ! हे कान्ते ! अब सिद्धि प्राप्ति के लिए और योगियों के लिए अत्यन्त दुर्लभ मन्त्र सिद्धि का लक्षण कहिए, क्योंकि जिन्होंने आपके मुखाम्भोज से उल्लास पूर्वक निकले हुए परमामृत का पान कर इन तन्त्र ग्रन्थों की रचना की है, उन तन्त्र ग्रन्थों में यह नहीं है ॥ १-२ ॥

आनन्दभैरवी उवाच

निश्चयं ते प्रवक्ष्यामि आनन्दभैरवेश्वर ।
मन्त्रसिद्धेर्लक्षणं तु योगमार्गानुकूलतः ॥ ३ ॥

**आनन्दभैरवी ने कहा**—हे आनन्दभैरवेश्वर ! योगमार्ग के अनुसार मन्त्र सिद्धि के लक्षणों को निश्चय ही आप से कहती हूँ ॥ ३ ॥

नित्यं चेतसि सुस्थिरे स्थितपथक्लेशादिदोषक्षयं[2]
सर्वञ्चोत्तम[3]मन्त्रसिद्धिकलितं संलक्षणं शोभनम् ।
मृत्यूनां हरणं जगत्पतिमतिं सन्दर्शनञ्चोत्तमं
योगोऽक्लेशविवर्द्धनं [4]समुदयाच्छेशप्रयोगेष्टभाक् ॥ ४ ॥

चित्त के नित्य सुस्थिर हो जाने पर अथवा स्थित पथ में वर्तमान होने पर क्लेशादि समस्त दोष अपने आप विनष्ट हो जाते हैं । इसके बाद उत्तम मन्त्र सिद्धि के द्वारा होने वाले शुभ लक्षण साधक में प्रगट होते हैं । साधक मृत्यु को अपने वश में कर लेता है । जगत्पति (ईश्वर) में उसकी बुद्धि होने लगती है, अथवा उनके उत्तम दर्शन उसे होते हैं । उसका योग बिना क्लेश किए ही आगे बढ़ता रहता है और योग की समुदयावस्था में वह अपनी इष्टसिद्धि का भाजन बन जाता है ॥ ४ ॥

---

१. तत्र यत्र सारमावद इति—क० । २. समम् इति—क० ।
३. कलिता इति—क० । ४. समुदयाक्लेशप्रयोगेष्वभाक् इति—ग० ।

नरेन्द्राणां[१] काये प्रविशति हठात् [२]क्षोभयति तं
पुरे[३] तेषामूद्ध्वोत्क्रमणचरस्यावरपुरे ।
अध:छिद्रं[४] पश्येत् खचरवनितामेलनमलं
शृणोति प्रध्माने[५] जगति जगतां कीर्तिरतुला ॥ ५ ॥

वह राजाओं के शरीर में प्रविष्ट हो कर हठात् उन्हें संक्षुब्ध कर देता है जो सबके लिए अगम्य है ऐसे राजाओं के पुर ( शरीर ) में वह ऊपर से चला जाता है, नीचे के सभी छिद्र उसे प्रकट रूप में दिखाई पड़ने लगते हैं और वह देवाङ्गनाओं से भी मिलता है, शरीर के भीतर होने वाले शब्दों को सुनता है, इस जगत में रहने वाले सभी लोगों में उसकी कीर्ति अतुलनीय हो जाती है ॥ ५ ॥

इतीह सिद्ध्यादिसुलक्षणेन[६]
प्रयाति वैकुण्ठपुरीं मनोरमाम् ।
हितं यदा पश्यति सत्त्वभूभृतां
जगद्विपक्षो निजपक्षमाश्रयेत् ॥ ६ ॥

इस प्रकार की सिद्धि के सुलक्षण द्वारा वह अत्यन्त मनोरम वैकुण्ठ पुरी तक पहुँच जाता है और जब समस्त जीवों एवं राजाओं का हित देखता है तो विपक्ष में स्थित सारे जगत् को अपने पक्ष में कर लेता है ॥ ६ ॥

कीर्तिर्भूषणमादि[७]भक्तिसफला भुक्तिक्रियासंयुता
देवानामतिभक्तियुक्तहृदयं सर्वक्रियादक्षता ।
त्रैलोक्यं निजदास्यकर्मनिपुणं जित्वा चिरं जीवति
अष्टाङ्गाभ्यसनं[८] जगद्वशकरं[९] चैतन्यतामुत्तमम् ॥ ७ ॥

उसे भोग एवं क्रिया से युक्त कीर्ति, भूषण तथा महाश्री में सफल भक्ति प्राप्त होती है, देवताओं के विषय में उसका हृदय अत्यन्त भक्ति से संयुक्त हो जाता है, सारी क्रियाओं में दक्षता प्राप्त होती है, वह सारे त्रैलोक्य को अपने दास्य कर्म के योग्य बना लेता है तथा कुशल लोगों को जीतकर स्वयं बहुत काल तक जीवित रहता है, अष्टाङ्ग योग में उसका अभ्यास बढ़ने लगता है, सारे जगत् को अपने वश में कर लेता है तथा उत्तम सचेतनता प्राप्त करता है ॥ ७ ॥

---

१. नरेन्द्राणि इति—ग० ।—नरेन्द्राणां राज्ञां काये शरीरे प्रविशति; अयमेव पाठक्रम: समीचीन:।
२. क्षोभहरितम् इति—ग० ।
३. पूरकेणामूर्ध्वोत्क्रमणसर्वमुच्चे परपुरे इति—ग० ।
४. अध: छित्रम् इति—ग० । ५. प्राधान्य इति—ग० ।
६. सुलक्षेन इति—ग० । ७. कीर्तिभ्रंसादिभक्ति: सदसि च इति—ग० ।
८. ज्येष्टाङ्गाभ्यसनम् ( ह्यष्टाङ्गाभ्यसनम् )—ग० ।
९. जगद्वशंकरम् इति—ग० ।

भोगेच्छारहितं जगज्जनचमत्कारानुकल्पान्वितं
रोगाणां दरणं विरक्तहृदयं [१]वैराग्यभक्तिप्रियम् ।
त्यागं संसरणं तथा [२]शमदयामायाब्धिजालस्य वा
ऐश्वर्यं कवितारसं धनजनं लक्ष्मीगणं जापनम् ॥ ८ ॥

वह भोगेच्छा से विरत रहता है, जगत के समस्त जनों को अपने चमत्कार के अनुकल्प से वश में कर लेता है, रोगों को नष्ट कर लेता है और हृदय से विरक्त हो जाता है ; उसे वैराग्य तथा भक्ति अच्छी लगती है, वह मायारूप समुद्र के जाल का त्याग कर देता है तथा शम दयादि योग गुणों को ग्रहण करने लगता है, उसे ऐश्वर्य, कवितारस, धन जन लक्ष्मी, गण एवं जप की प्राप्ति होने लगती है ॥ ८ ॥

उल्लासं हृदयाम्बुजे सुतधनं सम्माननं सत्पथं
वाञ्छा[३]सागररत्नपूर्णघटितं कान्तागणान्मोदितम्[४] ।
सङ्केतादिमनुप्रियं हरिहरब्रह्मैकभावान्वितं
लोकानां गुरुतानिरन्तरशिवानन्दैक मुद्राधरम्[५] ॥ ९ ॥
एतदुक्तं महादेवोत्तरतन्त्रनिरूपणम् ।
मन्त्रसिद्धिलक्षणं तदुत्तमाधममध्यमम् ॥ १० ॥

उसका हृदय कमल उल्लसित रहता है सुत एवं धन, सम्मान, सदाचार तथा वांच्छा रूप समुद्र से उत्पन्न हुई अनेक रत्न राशियाँ प्राप्त होने लगती हैं, किं बहुना वह सतत कान्तागणों का आमोद प्राप्त करता रहता है । सङ्केत अक्षर वाले मन्त्रों में उसकी प्रीति होने लगती है तथा ब्रह्मा एवं विष्णु में अभेद सबन्ध का ज्ञान होने लगता है । समस्त लोगों में उसका गौरव बढ़ जाता है तथा वह निरन्तर शिवानन्द की मात्र एक मुख्य मुद्रा धारण कर लेता है । हे महादेव ! इस प्रकार उत्तर तन्त्र में निरूपण किए गए मन्त्रों के सिद्धि के लक्षण को मैंने कहा, वह उत्तम, अधम तथा मध्यम भेद से तीन प्रकार का होता है ॥ ९-१० ॥

मुनयो देवमुख्याश्च नित्यं जन्मनि जन्मनि ।
दिव्यरूपं नरकुले धृत्वा तृप्यन्ति चानिशम् ॥ ११ ॥
तवैवापि ममैवापि तर्पणं होमभोजनम् ।
सर्वदा कुरुते साधु [६]तन्मनो भवति ध्रुवम् ॥ १२ ॥
एतत्प्राणवायुपाने सूक्ष्मचन्द्रनियोजने ।
कर्तव्यं प्रत्यहं कार्यं दिवारात्रौ मुहुर्मुहुः ॥ १३ ॥

हे महादेव ! मुनि तथा देवगण अनेक जन्म पर्यन्त मनुष्य कुल में दिव्य रूप धारण

---

१. मूर्ति इति—ग० । २. मात्रा निजालस्वया इति—ग० ।
३. रत्नपुष्पविटितम् इति—ग० । ४. गणामोदितम् इति—ग० ।
५. लोकानां गुरुतया गौरवेण निरन्तरो व्ववधानशून्यो य: शिवानन्दस्तस्य या एकमुद्रा तस्या धरं धारकम् । धरतीति: धर: पचाद्यच् । ६. चैतन्यम् इति—क० ।

कर निरन्तर मन्त्र सिद्धि के द्वारा तृप्त होते रहते हैं । मन्त्र सिद्धि के लक्षण जिसमें आ जाते हैं वह पुरुष आपको एवं हमारे निमित्त तर्पण, होम तथा ब्राह्मण भोजन कराता है अथवा अपना मन ऐसे भक्ति के कार्यों में लगाता है । साधक को चाहिए कि वह प्रतिदिन बारम्बार सूक्ष्मचन्द्र में अपने मन को सन्निविष्ट करने के लिए इसी प्रकार प्राणवायु का पान करता रहे ॥ ११-१३ ॥

**अद्यैतत् कर्म संस्कुर्यात् योगसाधनमुत्तमम् ।**
**यः श्रीमान् साधु सद्वक्ता [1]दुष्टमन्त्रोऽपि सिध्यति ॥ १४ ॥**
**एतद्दोषसमूहं [2] तु वदामि तत्त्वतः शृणु ।**
**छिन्नादिदोषदुष्टानां योगतत्त्वेन सिध्यति ॥ १५ ॥**

जो श्रीमान् साधु सद्वक्ता इस प्रकार से योग साधन को उत्तम प्रकार से सुसंस्कार सम्पन्न करता है उसे अच्छे मन्त्र की बात क्या ? दुष्ट मन्त्र भी सिद्ध हो जाते हैं, अब मन्त्रों के उन-उन दोष समूहों को कहती हूँ, हे सदाशिव ! सावधान हो कर सुनिए । ये छिन्नादि दोषों से दुष्ट मन्त्र जिस प्रकार योगतत्त्व से सिद्ध होते हैं ॥ १४-१५ ॥

**देवेन्द्र पाशदुष्टा च भुवनेशी सुसिद्धिदा ।**
**आराधिता महाविद्या वीर्यदर्पविवर्जिता ॥ १६ ॥**
**एकाक्षरी वीर्यहीना वाग्भवेन महोज्ज्वला ।**
**तदवद्युत्तमा [3] देवी तारसम्पुटहंसिनी ॥ १७ ॥**

भली प्रकार की सिद्धि देने वाली भुवनेशी देवेन्द्र के पाश से बँधे रहने के कारण सदोष हैं । अतः आराधना करने पर भी इस महाविद्या में वीर्य तथा दर्प का प्रादुर्भाव नहीं होता । वाग्भव ( ऐं ) से महान् प्रकाश उत्पन्न करने वाली एकाक्षरी वीर्यहीन हैं । इसी प्रकार उत्तम तार ( ॐ ) के सम्पुट से हंसिनी भी सर्वथा वीर्यहीना है ॥ १६-१७ ॥

**आविद्धा कामराजेन विद्या कामेश्वरी परा ।**
**शरेण पीडिता पूर्वं भुवनेश्याः प्रतिष्ठिता ॥ १८ ॥**
**या कुमारी महाविद्या [4]यया सप्तारिबोधिका ।**
**ताराचन्द्रस्वरूपाहं शिवशक्त्या च केवलम् ॥ १९ ॥**
**भैरवीणां [5]हि विद्यानां दोषजालं शृणु प्रभो ।**
**एतान्दोषान्प्रणश्यन्ति योगमार्गानुसारिणः ॥ २० ॥**

पूर्वकाल में परा कामेश्वरी महाविद्या कामराज के द्वारा आविद्ध है, अतः उस शर से पीड़ित रहती है तदनन्तर भुवनेशी ने उसे प्रतिष्ठित किया । जो कुमारी नाम की महाविद्या है तथा जिसके द्वारा सात शत्रु प्रबुद्ध किए जाते हैं वह शिव शक्ति से प्रतिष्ठित

---

१. शास्त्रोऽपि इति—ग० । २. तत्तद् इति—ग० ।
३. तदवभ्रुवरसा इति—क० । ४. माया सभ्राविरोधिका इति—ग० ।
५. श्रीविद्या इति—ग० । एषा श्रीविद्या तन्त्रज्ञानां निकाये अत्यन्तं प्रसिद्धाऽस्ति ।

रहने वाली तारा चन्द्र स्वरूपा मैं हूँ । हे प्रभो ! अब भैरवी विद्याओं के दोष समूहों को सुनिए । जिससे समस्त योग मार्ग का अनुसरण करने वाले साधक के लिए ये सभी दोष नष्ट हो जाते हैं ॥१८-२० ॥

यतः कुण्डलिनी देवी योगेन चेतनामुखी ।
अतो योगं सदा कुर्यात् सर्वमन्त्रप्रसिद्धये ॥ २१ ॥
भैरवी विधिशप्ता च दग्धा च कीलिता तथा ।
सैव संहारकरी मोहिता चानुमोदिता ॥ २२ ॥

यतः यह कुण्डलिनी देवी योगमार्ग के द्वारा चेतना प्राप्त करती है अतः सभी मन्त्रों की सिद्धि के लिए सर्वदा योगमार्ग का अवलम्बन करना चाहिए । यह भैरवी ब्रह्मदेव के द्वारा शापित हैं, दग्ध है तथा कीलित है, वही संहार करने वाली तब होती है जब ब्रह्मदेव उसको मोहित कर उसका अनुमोदन करते हैं ॥ २१-२२ ॥

महामदोन्मत्तचित्ता मूर्च्छिता वीर्यवर्जिता ।
स्तम्भिता मारिताच्छिन्ना विद्धा रुद्धा च त्रासिता ॥ २३ ॥
निर्बीजा शक्तिहीना च सुप्ता मत्ता च घूर्णिता ।
पराङ्मुखी नेत्रहीना [1]सा भीता दुःसंस्कृता ॥ २४ ॥
सुषुप्ता भेदिता प्रौढा बालिका[2] मालिनी क्षमा ।
भयदा युवती क्रूरा दाम्भिका शोकसङ्कटा ॥ २५ ॥
निस्त्रिंशका सिद्धिहीना कूटस्था मन्दबुद्धिदा ।
हीनकर्णा हीननासा [3]अतिक्रुद्धाङ्गभङ्गुरा ॥ २६ ॥
कलहा कलहप्रीता भ्रष्टस्थानक्षयाकुला ।
धर्मभ्रष्टा [4]चातिवृद्धातिबाला सिद्धिनाशिनी ॥ २७ ॥
कृतवीर्या महाभीमा क्रोधपुंजा च ध्वंसिनी ।
कालविद्या सूक्ष्मधर्मा [5]विधर्मा धर्ममोहिनी ॥ २८ ॥
दुर्गस्थिता क्षिप्तचित्ता प्रचण्डा चण्डगामिनी ।
उल्कावच्चलती[6] तीक्ष्णा [7]मन्दाहारा निरंशका ॥ २९ ॥
तत्त्वहीना केकरा च [8]घूर्णितालिङ्गिता जिता ।
अतिगुप्ता क्षुधार्त्ता च धूर्त्ता [9]ध्यानस्थिरास्थिरा ॥ ३० ॥
एता[10] विद्याः प्रसन्नाः स्युर्योगकालनिरोधनात् ।
वीरभावेन सिद्धिः स्यात् पुरश्चरणकर्मणा ॥ ३१ ॥

---

१. सुप्ता भीतानुसंस्कृता इति—क० ।
२. कामिनी क्रिया इति—ग० ।
३. तथा इति०—ग० ।
४. नातिवृद्धा इति—ग० ।
५. सूक्ष्मधर्मा च मोहिनी इति—ग० ।
६. उच्चावच्चलति इति—ग० ।
७. मन्दहासा इति—ग० ।
८. धूतिता इति—ग० ।
९. व्याला इति—ग० ।
१०. तत्राविध्या इति—ग० ।

महामद से उन्मत्त चित्तवाली, मूर्च्छित रहने वाली, वीर्य से वर्जित, जड़भाव में रहने वाली, मारी हुई, छिन्ना, विद्धा, रुद्धा, त्रासिता, निर्बीजा, शक्तिहीना, सुप्ता, मत्ता, चक्कर काटने वाली, उद्भ्रान्त, पराङ्मुखी, नेत्रहीना, भीता, दुःसंस्कृता, सुषुप्ता, भेदिता, प्रौढ़ा, बालिका, मालिनी, क्षमा, भयदा, युवती, क्रूरा, दम्भकारिणी, शोक से उद्विग्न रहने वाली, बिना शस्त्र वाली, सिद्धिहीना, कूटस्थ, मन्दबुद्धि प्रदान करने वाली, कर्ण रहित, नासिका रहित, अत्यन्त क्रोधी स्वभाव वाली, भंगुरा, कलहा, कलहप्रीता, भ्रष्टस्थान, क्षय से आकुल रहने वाली, धर्मभ्रष्टा, अतिवृद्धा, अतिबाला, सिद्धिनाशिनी, कृतवीर्या, महाभीमा, क्रोधपुञ्जा, ध्वंसिनी, कालविद्या, सूक्ष्मधर्मा, विधर्मा, धर्ममोहिनी, दुर्गस्थिता, क्षिप्तचित्ता, प्रचण्डा, चण्डगामिनी, उल्कावच्चलती, तीक्ष्णा, मन्दाहारा, निरंशका, तत्त्वहीना, केकरा, घूर्णिता, अलिंगिता, जिता, अतिगुप्ता, क्षुधार्त्ता, धूर्ता, ध्यानस्थिरा एवं अस्थिरा—ये सब महाविद्यायें विधि शप्त हैं। ये योगमार्ग के अनुसरण से प्रसन्न होती हैं। इनकी सिद्धि वीरभाव से होती हैं अथवा पुरश्चरण कर्म से होती है ॥ २३-३१ ॥

**आनन्दभैरवी उवाच**

**तत्र[१] वीरो यजेत् कान्तां परकीयामथापि वा ।**
**स्वीयामलङ्कार[२]युक्तां सुन्दरीं चारुहासिनीम् ॥ ३२ ॥**
**मदनानलतप्ताङ्गीमासवानन्द विग्रहाम्[३] ।**
**योगिनीं कौलिनीं योग्यां धर्मशीलां कुलप्रियाम् ॥ ३३ ॥**

इसके बाद पुनः **आनन्दभैरवी ने कहा**—महाविद्या की उपासना के लिए वीरभाव को प्राप्त कर अपनी स्त्री अथवा अन्य की स्त्री का पूजन करना चाहिए। अपनी स्त्री सुन्दरी हो मन्द हास्य से युक्त हो, नाना प्रकार के अलङ्कारों से सुशोभित हो। कामाग्नि से संतप्त हो, आसव के आनन्द से सारा शरीर आनन्द पूर्ण हो, योगिनी, कुलमार्ग ( महाशक्ति ) की उपासिका हो, योग्य हो, धर्म का आचरण करने वाली हो, कुल से प्रीति रखने वाली हो ॥ ३२-३३ ॥

**दीक्षितां लोलवदनां वदनाम्भोजमोहिनीम् ।**
**नानादेशस्थितां कन्यां युवतीं परिपूजयेत् ॥ ३४ ॥**
**जापिकां मन्दहास्यां च मन्दमन्द गतिप्रियाम् ।**
**कृशाङ्गीमतिसौन्दर्यामलङ्कृतकलेवराम् ॥ ३५ ॥**

शक्ति की दीक्षा से दीक्षित हो, चञ्चल मुख वाली ( बोलने में चतुर ) हो इतना ही नहीं अपने मुख कमल की शोभा से सबको मोह लेने वाली हो। इसके अभाव में किसी भी देश में उत्पन्न हुई युवती कन्या का भी पूजन किया जा सकता है। वह जप करने वाली, मन्द मन्द हास्य से युक्त, मन्द मन्द गति से प्रेम करने वाली हो, पतले शरीर वाली, अत्यन्त सौन्दर्य से संयुक्त तथा शरीर पर अलङ्कार धारण करने वाली हो ॥ ३४-३५ ॥

---

१. अत्र इति—ग०। २. स्त्रियालङ्कारसंयुक्ताम् इति—ग०।

३. मासवानन्द इति—ग०। आसवेन जनित आनन्द आसवानन्दः, मध्यमपदलोपिसमासः। स एव विग्रहः शरीरं यस्याः सा।

**कोटिकन्याप्रदानेन यत्फलं लभते नर: ।**
**तत्फलं लभते सद्य: कामिनीपरिपूजनात् ॥ ३६ ॥**
**तत: षोडशकन्याश्च योगिन्यो योगसिद्धये ।**
**पूजयेत् परया भक्त्या वस्त्रालङ्कारभूषणै: ॥ ३७ ॥**

मनुष्य करोड़ों कन्या दान से जितना फल प्राप्त करता है, उतना फल वह उसी क्षण कामिनियों के पूजन से प्राप्त कर लेता है । इसके बाद अपनी योगसिद्धि के लिए योगिनी स्वरूपा षोडश कन्याओं का अत्यन्त भक्ति से युक्त हो वस्त्र, अलङ्कार तथा आभूषणों से पूजन करना चाहिए ॥ ३६-३७ ॥

**नानाविधै: पिष्टकान्नै: पक्वान्नै: प्राणसम्भवै: ।**
**दधिदुग्धघृतैश्चापि नवनीतै: सशर्करै: ॥ ३८ ॥**
**उपलाखण्डमिश्रान्नै: नानारसफलान्वितै: ।**
**चूडादिभिर्नारिकेलै: कपिलैर्नागरङ्गकै: ॥ ३९ ॥**
**नानागन्धफलैश्चैव नानागन्धसमन्वितै: ।**
**मृगनाभिचन्दनैश्च श्रीखण्डैर्नवपल्लवै: ॥ ४० ॥**
**पूजयेत्ता: प्रयत्नेन जलजै: स्थलजैस्तथा ।**
**नानासुगन्धिपुष्पैश्च रक्तचन्दनकुङ्कुमै: ॥ ४१ ॥**

अनेक प्रकार के पिष्टान्नों से, प्राण ( बल ) देने वाले पक्वान्नो से, दही, दूध, घृत, नवनीत, मिश्री, खाँड आदि मिश्रित पदार्थों से अनेक प्रकार के फलों के रस से, चूड़ा, नारिफल, पीले पीले पके पके नारंग फलों से, अनेक प्रकार के सुगन्ध युक्त फलों से, अनेक प्रकार के गन्ध द्रव्यों से, कस्तूरी से, चन्दन से, नवीन पल्लवों से, जल में उत्पन्न होने वाले तथा स्थल में उत्पन्न होने वाले अनेक प्रकार के सुगन्ध युक्त पुष्पों से, रक्त चन्दन से एवं केशर से प्रयत्नपूर्वक उनका पूजन करना चाहिए ॥ ३८-४१ ॥

**पूजयेत् शून्यगृहे च निर्जने विपिने तथा ।**
**कुलदेवीं समानीय स्वागतं प्रवदेद्नु ॥ ४२ ॥**
**अर्घोदकेन संशोध्यामृतीकरणमाचरेत् ।**
**शक्तिञ्चाभिमुखीं नीत्वा वीरयोगी भवेद्ध्रुवम् ॥ ४३ ॥**
**शक्तिं च षोडशी देवीं कुलचक्रप्रियां शुभाम् ।**
**महाशक्तिं शृणु प्राणवल्लभे श्रीकलावतीम् ॥ ४४ ॥**

उनका पूजन शून्य गृह में निर्जन अथवा वन में करे । उन्हें अपनी कुलदेवी समझकर तदनन्तर 'स्वागतम्' ऐसा वचन उच्चारण करे । अर्घ के जल से शुद्ध कर अमृतीकरण करे । इस प्रकार शक्ति को अपने अनुकूल बनाकर साधु निश्चय ही वीरयोगी बन जाता है । कुलचक्र से प्रेम करने वाली, परम कल्याणकारिणी षोडशी देवी ही शक्ति के नाम से अभिहित हैं । अब हे प्राणवल्लभ ! श्री कला से युक्त उन महाशक्तियों को श्रवण कीजिए ॥ ४२-४४ ॥

**ब्राह्मणी क्षत्रिया वैश्या शूद्रा वेश्या च सुन्दरी ।**
**कुलभूषासमाक्रान्ता मानिनी नातिपिङ्गला ॥ ४५ ॥**

ब्राह्मणी, क्षत्रिया, वैश्या तथा शूद्रा अथवा वेश्या जो सुन्दर स्वरूप से युक्त हों उत्तम कुल तथा उत्तम आभूषण से अलंकृत हों, मानिनी हों तथा अत्यन्त पिङ्गल केशों वाली न हों, उन्हें दीक्षित कर उनकी पूजा करनी चाहिए ॥ ४५ ॥

**रजकी नटकी कौला श्यामाङ्गी स्थूलविग्रहा ।**
**सङ्केतागमना भार्या [1]विदग्धा रञ्जकी तथा ॥ ४६ ॥**
**खटकी[2] कोलकन्या[3] च कुलमार्गप्रवर्तिका ।**
**सर्वाङ्गसुन्दरी भव्या चारुनेत्रा हसन्मुखी ॥ ४७ ॥**
**यद्यद्दीक्षारतास्तास्तु देया दीक्षा तदा प्रभो ।**
**सूक्ष्मतन्त्रानुसारेण कथितं पूर्वसूचितम् ॥ ४८ ॥**

रजकी, नटकी, कोल कुलोत्पन्न, चाहे श्यामाङ्गी हो अथवा मोटे शरीर वाली हों सङ्केत स्थान पर पुरुष से सम्बन्ध रखने वाली किसी की भार्या हो, विदग्धा अथवा सबको प्रसन्न रखने वाली हों, खटकी कोलकन्या कुल मार्ग में प्रवृत्त रहने वाली हों, सर्वांग सुन्दरी, भव्या, सुन्दर नेत्रों वाली, हँसने वाली - ये सभी शक्तियाँ है । पूजा काल में यदि इनकी दीक्षा न हुई हो तो हे प्रभो ! पूजा के लिए इनको दीक्षित कर लेना चाहिए । यह सब हमने पूर्व ग्रन्थों में सूचित सूक्ष्मतन्त्र के अनुसार कहा ॥ ४६-४८ ॥

**सर्वाङ्गसुन्दरी शुद्धा शुद्धलोककुलोद्भवा[4] ।**
**युवती योगनिरता सा देवी डाकिनी मता ॥ ४९ ॥**
**तामानीय महामन्त्रं दापयेदिष्टसिद्धये ।**
**ततस्ताः पूजनीयास्तु दीक्षाहीनास्तु नाचरेत् ॥ ५० ॥**

जिसके प्रत्येक अङ्ग सुन्दरता से युक्त हों, जो शुद्ध तथा शुद्धलोगों के बीच में शुद्ध कुल में उत्पन्न हुई हों, ऐसी योगमार्ग में संलग्न रहने वाली युवती डाकिनी देवी के नाम से कही गई हैं । ऐसी युवती को अपने स्थान पर लाकर अपनी इष्ट सिद्धि के लिए महामन्त्र से दीक्षित करे । तब उनकी पूजा करे । बिना दीक्षा के उनकी पूजा न करे ॥ ४९-५० ॥

**श्रीकृष्णराममन्त्रं तु दापयेत्सत्त्वसिद्धये ।**
**ताभ्य आदौ ततो मृत्युञ्जयमन्त्रं ततश्चरेत् ॥ ५१ ॥**
**आनन्दभैरवीबीजं देवीं शक्तिं स्वबीजकम् ।**
**अथवा सिद्धमन्त्रं तु श्रीविद्यायाः प्रदापयेत् ॥ ५२ ॥**

उनमें तेज बल की सिद्धि के लिए सर्वप्रथम श्रीकृष्ण अथवा राम का मन्त्र प्रदान करे । तदनन्तर महामृत्युञ्जय का जप करे । अथवा आनन्दभैरवी बीज, देवी की शक्ति का बीज,

---

१. वञ्चकी इति—ग० । २. खल्वकी इति—ग० ।
३. लोलकन्या इति—ग० । ४. डाकिन्या लक्षणैकदेशभूतमिदम् ।

अथवा अपने इष्टदेव का बीज, अथवा श्रीविद्या का बीज, अथवा कोई सिद्ध मन्त्र उन्हें प्रदान करे ॥ ५१-५२ ॥

**किं वा केवलमायां तु क्रोधारुणकराकृतिम् ।**
**ज्वलन्तीं मूलपद्मे तु स्वयम्भूकुसुमाकराम् ॥ ५३ ॥**
**एतद्भूतां महामायां तस्मै दत्वा जयी भवेत् ।**
**आदौ वामकर्णपुटे अग्निवारं [1]परे त्रयम् ॥ ५४ ॥**

अथवा क्रोध से लाल, हाथ की आकृति वाली, मूलाधार पद्म में देदीप्यमान् स्वयंभू लिङ्ग रूप पुष्प को अपने कर कमलों में धारण करने वाली केवल माया का ही उपदेश प्रदान करे । इस प्रकार के स्वरूप वाली महामाया की दीक्षा उसे देकर साधक स्वयं का लाभ करता है । सर्वप्रथम बायें कान में तीन बार, तदनन्तर दाहिने कान में तीन बार मन्त्र दीक्षा का विधान कहा गया है ॥ ५३-५४ ॥

**अतः शिक्षां सदानन्ददीक्षान्ते कारयेद् बुधः ।**
**दीक्षामूलं जपं सर्वं दीक्षामूलं गुरोः कृपा ॥ ५५ ॥**
**दीक्षामाश्रित्य मायां या जपेत् सा खेचरी परा ।**
**तस्याः पूजनमात्रेण प्रसन्नाहं न संशयः ॥ ५६ ॥**

इसके बाद सर्वदा आनन्द देने वाली दीक्षा के अन्त में बुद्धिमान् साधक उसे इस प्रकार उपदेश करे । सारे जप की मूल दीक्षा है । गुरु की कृपा का मूल भी दीक्षा ही है । दीक्षा ग्रहण के उपरान्त माया मन्त्र का जप करे, अथवा परा खेचरी क्रिया का आश्रय लेवे । क्योंकि माया के पूजन मात्र से मैं प्रसन्न होती हूँ, इसमें संशय नहीं ॥ ५५-५६ ॥

**जगतां जगदीशानां नारीरूपेण संस्थितिः ।**
**अहं नारी न सन्देहः सुन्दरी कुत्सिता परा ॥ ५७ ॥**
**सुन्दरीपालनार्थाय विनाशायाशु कुत्सिता ।**
**साधकस्य भ्रान्तिरूपा संहिताः परिभावयेत् ॥ ५८ ॥**
**या परा मोक्षदा विद्या सुन्दरी कामचारिणी ।**
**भाविनी सा भवानी च तां विद्यां परिपूजयेत् ॥ ५९ ॥**

इस समस्त जगत् की तथा समस्त जगदीश्वरों की नारीरूप में ही संस्थिति है इसीलिए मैं भी नारी रूप धारण की हुई हूँ । इसमें संदेह नही । नारी दो प्रकार की है एक सुन्दरी दूसरी कुत्सिता । सुन्दरी नारी पालन करने के लिए है तथा दूसरी कुत्सिता विनाश के लिए है यह तो साधक की भ्रान्ति है, अतः उसे दोनों में शक्ति के स्वरूप का ध्यान करना चाहिए । परा विद्या मोक्ष देने वाली सुन्दरी तथा कामचारिणी है, वही भाविनी है, वही भवानी है । अतः उसी पराविद्या का पूजन करना चाहिए ॥ ५७-५९ ॥

---

१. परित्रयम् इति—ग० ।

**तस्या अङ्के स्थिरा नित्यं देवताया अहं प्रभो ।**
**यश्च योगी सर्वसमः स सर्वात्मा नयेत् किल ॥ ६० ॥**
**अन्यथा सिद्धिहानिः स्याद् भावाभावविचारणात्[१] ।**
**बिना भावं न सिद्ध्येत्तु भावानां[२] भावराशिग ॥ ६१ ॥**

हे प्रभो ! उस पराविद्या रूप देवता के अङ्क में मैं स्थिर रूप से निवास करती हूँ । सब में समता रखने वाला जो सर्वात्मा योगी है वही उसे प्राप्त कर सकता है । यह सुन्दर है या यह सुन्दर नहीं है—इस प्रकार के विचार से साधक की सिद्धि की हानि होती है । अतः हे भावों के भावराशि से प्राप्त होने वाले प्रभो ! भाव के बिना सिद्धि नहीं प्राप्त होती ॥ ६०-६१ ॥

**कुलपुरश्चरणं कुर्यात् कुलाकुलविमुक्तये ।**
**योगी स्यादव्ययो धीरो विद्वान्मुक्तो हि जीवने ॥ ६२ ॥**
**ब्राह्मणीं[३] सुन्दरीं चैव संस्थाप्य क्रमतो यजेत् ।**
**वामहस्ते महार्घ्यं तु दक्षिणे आसनादिकम् ॥ ६३ ॥**

कुल तथा अकुल से छुटकारा पाने के लिए कुल ( महाशक्ति ) का पुरश्चरण करना चाहिए । इस प्रकार का पुरश्चरण करने वाला सर्वथा विकार रहित धीर योगी होता है, वह विद्वान् अपने जीते जी ही विमुक्त रहता है । सुन्दरी ब्राह्मणी को स्थापित ( बैठा ) कर एक एक के क्रम से उसका पूजन करे । उसके बायें हाथ में अर्घ्य प्रदान करें और दाहिने हाथ में आसनादि देवे ॥ ६२-६३ ॥

**दद्यात् पाद्यमासनानि तत्तन्नाम्ना च स्वागतम् ।**
**तत्तदा अर्घपात्रस्थजलेन प्रोक्षयेच्च ताः ॥ ६४ ॥**
**धेनुमुद्रां समाकृत्य वं मन्त्रेणामृतीक्रियाम् ।**
**अमृतीकरणान्ते च रूपभेदं समानयेत् ॥ ६५ ॥**
**संज्ञाभिर्नामकरणं कृत्वा चासनमर्पयेत् ।**

तत्तन्नामों से ( पाद्यं समर्पयामि, आसनं समर्पयामि, स्वागतं समर्पयामि ) पाद्य, आसन तथा स्वागत समर्पित करना चाहिए । उसके पहले अर्घ्यपात्र के जल से समस्त पूजन सामग्री का प्रोक्षण करे । फिर धेनुमुद्रा प्रदर्शित कर वं मन्त्र के द्वारा अमृतीकरण करे । अमृतीकरण करने के अन्त में रूप भेद की कल्पना करे । शक्ति परक संज्ञा से पुनः उसका नामकरण करे । फिर आसन समर्पित करे ॥ ६४-६६ ॥

---

१. भावस्याभावस्य च विचारणात् चिन्तनात् । द्वन्द्वगर्भः षष्ठीतत्पुरुषः ।

२. वीराणाम् इति—ग० ।

३. ब्राह्मणीं सुन्दरीं नवयौवनशालिनीम् ।
आनीय दद्याद्दीक्षान्तु तस्यैतत्कर्म चाशृणु ।
कुलमार्गानुसारेण वक्तव्यं त्रिदशेश्वर ।
अत्यद्भुतो भवेन्मन्त्री पुरश्चरणकर्मणि ।
एता अष्टमहाशक्तीः संस्थाप्य क्रमतो यजेत् ॥

श्रीभैरवी उवाच[1]

अथ कान्त प्रवक्ष्यामि षट्चक्रभेदनक्रियाम् ॥ ६६ ॥
यत्कृत्वा अमरा लोके विचरन्ति चराचरे ।
अकालमृत्युहरणं सर्वव्याधिविनाशनम् ॥ ६७ ॥
योगेन [2]जीववर्गाश्च भवन्त्यमररूपिण: ।
षट्चक्रे च महापद्मे सर्वसत्त्वगुणान्विते ॥ ६८ ॥

**श्री भैरवीने कहा**—हे कान्त ! अब षट्चक्र भेदन की क्रिया कहती हूँ । जिसे करने के बाद योगीगण अमर होकर, इस चराचर लोक में विचरण करते हैं । यह षट्चक्र भेदन अकाल मृत्यु का हरण करने वाला है तथा समस्त व्याधियों का विनाश करने वाला है । सम्पूर्ण सत्त्व गुणों से युक्त इस षट्चक्र रूप महापद्म में युक्त होने से समस्त जीव वर्ग देव स्वरूप हो जाते हैं ॥ ६६-६८ ॥

धर्माधर्मे मनोराज्ये [3]सर्वविद्यानिधौ क्रतौ ।
कलिकल्मषमुख्यानां सर्वपापापहारकम् ॥ ६९ ॥
मनो दत्वा महाकाले जीवा: सर्वत्र गामिन: ।
एतच्छ्रुत्वा महावीरो विवेकी परमार्थवित् ॥ ७० ॥
पुनर्जिज्ञासयामास ज्ञानज्ञेयेन शङ्कर:।

धर्माधर्म स्वरूप मनोराज्य वाले, सर्वविद्यानिधान एवं क्रतुस्वरूप इन महाकाल में कलि के समस्त पापों को दूर करने वाले अपने मन को संयुक्त कर जीव सर्वत्र गमनशील हो जाता है, इस बात को सुनकर विवेकी, परमार्थवेत्ता, महावीर और ज्ञान ज्ञेय भगवान् शङ्कर ने पुन: जिज्ञासा की ॥ ६९-७१ ॥

आनन्दभैरव उवाच

षट्चक्रभेदनकथां कथयस्व वरानने ॥ ७१ ॥
हिताय सर्वजन्तूनां हिरण्यवर्णमण्डितम् ।
प्रकाशयस्व वरदे योगानामुदयं वद ॥ ७२ ॥

**आनन्दभैरव ने कहा**—हे वरानने ! अब आप सभी प्राणियों के हित के लिए षट्चक्रों के भेदन की क्रिया को कहिए । हे वरदे ! हिरण्यवर्ण से मण्डित उन षट्चक्रों को प्रकाशित कीजिए तथा जिससे योगों का उदय होता है उसे भी कहिए ॥ ७१-७२ ॥

येन योगेन धीराणां हितार्थं वाञ्छितं मया ।
कालक्रमेण सिद्धि: स्यात्[4] कालजालविनाशनात् ॥ ७३ ॥

---

१. क० पु० नास्ति० इति० क० पु० अधि० पाठ: ।
२. जीवगाश्च इति—ग०।
३. सत्त्व इति—क० ।
४. ज्ञान इति—ग० ।

कालक्षालनहेतोश्च [1]पुनरुद्यापनं कृतम् ।

आनन्दभैरवी उवाच

आदौ कुर्यात् परानन्दं रससागरसम्भवम् ॥ ७४ ॥
मान्द्यं मन्दगुणोपेतं शृणु तत्क्रममुत्तमम् ।
स्तोत्रं कुर्यात् मूलपद्मे कुण्डलिन्याः पुरश्क्रियाम् ॥ ७५ ॥

जिस योग से मैं धीर पुरुषों का हित चाहता हूँ तथा उनके काल जाल के विनाश के द्वारा कालक्रम से उनको सिद्धि भी मिले, उसे कहिए । काल के प्रक्षालन के लिए ही मैंने इस प्रकार के उद्यापन का आरम्भ किया है ।

**आनन्दभैरवी ने कहा**—हे शङ्कर ! साधक सर्वप्रथम रस सागर से उत्पन्न एवं मन्दगुण से युक्त परानन्द प्राप्ति का प्रयत्न करे । अतः उसका उत्तम क्रम सुनिए । मूलपद्म में रहने वाली कुण्डलिनी का पुरश्चरण करे तथा उसका स्तोत्र पढ़े ॥ ७३-७५ ॥

पुरश्चरणकाले तु जपान्ते नित्यकर्मणि ।
काम्यकर्मणि धर्मेषु तथैव धर्मकर्मसु [2] ॥ ७६ ॥
गुर्वाद्यगुरुनित्येषु भक्तिमाकृत्य सम्पठेत् ।
ॐ नमो गुरवे ॐ नमो गुर्वम्बपरदेवतायै ॥ ७७ ॥

इस स्तोत्र का पाठ साधक पुरश्चरण काल में, जप के अन्त में, नित्य कर्म के पश्चात्, काम्य कर्म में, धर्म में तथा धर्म कार्य में करे । इस स्तोत्र का पाठ गुरु, आद्यगुरु तथा नित्यगुरु का भक्तिपूर्वक ध्यान कर करना चाहिए । उसकी विधि इस प्रकार है—ॐ गुरु के लिए नमस्कार है । ॐ अम्ब परदेवता स्वरूपा गुरु के लिए नमस्कार है ॥ ७६-७७ ॥

सर्वधर्मस्वरूपायै सर्वज्ञानस्वरूपायै ।
ॐ भवविभवायै ॐ दक्षयज्ञविनाशिन्यै ॥ ७८ ॥
ॐ भद्रकाल्यै ॐ कपालिन्यै ॐ उमायै ॐ माहेश्वर्यै ।
ॐ सर्वसङ्कटतारिण्यै ॐ महादेव्यै नमो नमः ॥ ७९ ॥

ॐ सर्व धर्मस्वरूप वाली, सर्वज्ञान स्वरूप वाली, ॐ भव विभव स्वरूपा, ॐ दक्षयज्ञ विनाशिका, ॐ भद्रकाली, ॐ कपालिनी, ॐ उमा, ॐ माहेश्वरी, ॐ सर्वसङ्कट-तारिणी और ॐ महादेवी के लिए नमस्कार है, पुनः नमस्कार है ॥ ७८-७९ ॥

ॐ या माया मयदानवक्षयकरी शक्तिः क्षमा कर्तृका
शुम्भश्रीमहिषासुरासुरबलप्रात्रोलचण्डामहा [3] ।
भद्रार्द्रा [4] रुधिरप्रिया प्रियकरी क्रोधाङ्गरक्तोत्पला
चामुण्डा रणरक्तबीजरजनी ज्योत्स्ना मुखेन्दीवरा ॥ ८० ॥

---

१. पूर्व नोद्यापनम् इति—ग० । २. धर्मिषु इति—ग० ।

३. प्राणेन चण्डापहा इति—ग० ।—असुरासुरबलप्राणेन चण्डमेतन्नामानमसुरमपहन्ति या सा भगवती इत्यर्थः । ४. भक्तार्द्रा इति—ग० ।

जो माया स्वरूपा है, मयदानव की संहारकारिणी हैं, शक्ति तथा क्षमा करने वाली हैं, जो शुम्भ एवं महिषासुर तथा समस्त असुर बलों को समुन्मूलित करने के लिए महाक्रोध से परिपूर्ण हैं, जो सब का कल्याण करती हैं, सब के ऊपर दया करती हैं, जिन्हें रुधिर प्रिय हैं, जो सब का प्रिय करने वाली हैं, जिनके प्रत्येक अङ्ग क्रोध से परिपूर्ण होने पर लाल कमल के समान शोभित होते हैं, जो रण में रक्त बीज के लिए रजनी के समान हैं, चण्डमुण्ड की विनाशिका होने से जो चामुण्डा है, जिनका मुख कमल सर्वदा देदीप्यमान है उन कुण्डलिनी को नमस्कार है ॥ ८० ॥

**या जाया जयदायिनी नृगृहिणी भीत्यापहा भैरवी**
**नित्या सा परिरक्षणं कुरु शिवा सारस्वतोत्पत्तये ।**
**सा मे पातु कलेवरस्य विषयाह्लादेन्द्रियाणां बलं**
**वक्ष:[१] स्थायिनमुल्वणोज्ज्वलशिखाकारादिजीवान्विता ॥ ८१ ॥**

जो ब्रह्मदेव की जाया है, जय देने वाली विजया हैं, मनुष्यों के घर में रहने वाली लक्ष्मी हैं, भयहरण करने वाली भैरवी हैं और जो सब का कल्याण करने के कारण शिवा हैं । इस प्रकार की कुण्डलिनी देवी मुझ में सारस्वत ज्ञान देने के लिए नित्य मेरी रक्षा करें तथा अत्यन्त तेजस्वी शिखाकार जीव रूप से स्थित वही कुण्डलिनी देवी मेरे शरीर के वक्ष:स्थल पर रहने वाले विषयाह्लाद से इन्द्रियों में उत्पन्न होने वाले बल की रक्षा करे ॥ ८१ ॥

**कृत्वा योगकुलान्वितं स्वभवने नित्यं मनोरञ्जनं**
**नित्यं संयमतत्परं परतरे भक्तिक्रियानिर्मलम् ।**
**शम्भो[२] रक्षरजोऽपनीशचरणाम्भोजे सदा भावनं**
**विद्यार्थप्रियदर्शनं त्रिजगतां संयम्ययोगी भवेत् ॥ ८२ ॥**

हे शम्भो ! अपने घर में नित्य मन को प्रसन्न करने के लिए योग कुल का अनुष्ठान कर सर्वदा संयम में तत्पर रहने वाले, परात्पर परमात्मा में भक्ति क्रिया से निर्मल चित्त वाले, मेरे रजो गुण को दूर कर मेरी रक्षा कीजिए । जिससे आपके चरणाम्भोज में मेरी भावना बनी रहे, क्योंकि तीनो जगत के लिए आपका चरण कमल विद्या प्राप्ति के लिए प्रियदर्शन है, जिसमें संयम करने से साधक योगी बन जाता है ॥ ८२ ॥

**आकाङ्क्षापरिवर्जितं निजगुरो: सेवापरं पावनं**
**प्रेमाह्लादकथाच्युतं[३] कुटिलताहिंसापमानप्रियम् ।**
**कालक्षेपण[४] दोषजालरहितं शाक्तं सुभक्तं पतिं**
**श्रीशक्तिप्रियवल्लभं सुरुचिरज्ञानान्तरं मानिनम् ॥ ८३ ॥**

हे प्रभो ! मुझे आकांक्षा से परिवर्जित कीजिए । अपने गुरु की पवित्र सेवा में मेरा मन

---

१. रक्ष: इति—ग० । २. रक्षरजाप्यममीश इति—क० । ३. कथावृतम् इति—क० ।
४. कान्तिक्षेमकलाफलं कुलगतं मायाविहीनं कुलम् ।
कौलानामपि साङ्गमं तमिहे सम्पास्यहं सर्वदा ॥
मिथ्यावाग्रहितं स्वधार्थनिरतं नित्योक्तिभक्तिप्रियम् ॥ इति क० पु० अधि० पाठ: ।

लगाइए । मेरा मन आपके प्रेम तथा आह्लाद उत्पन्न करने वाली कथा से कभी विच्युत न हो मुझे कुटिलता एवं हिंसा करने वालों के द्वारा किए गए अपमान से ग्लानि न हो । आप कालक्षेप रूप दोष जाल से रहित कीजिए । शक्ति देवी में सुभक्ति प्रदान कर यति तथा श्री शक्ति का प्रेम पात्र बनाइए जिस प्रकार मेरा अन्तःकरण ज्ञान में सुरुचि पूर्ण रहे ऐसा तथा मुझे मानी बनाइए ॥ ८३ ॥

**मालासूक्ष्म सुसूक्ष्मबद्धनिलयं सल्लक्षणं साक्षिणं**
**नानाकारणकारणं[१] ससरणं साकारब्रह्मार्पणम् ।**
**नित्या सा जडितं महान्तमखिले [२]योगासनज्ञानिनं**
**तं वन्दे पुरुषोत्तमं त्रिजगतामंशार्कहंसं परम् ॥ ८४ ॥**

तीनों जगत् के अंशार्क एवं हंसरूप उस परमात्मा पुरुषोत्तम की मैं वन्दना करता हूँ, जो सूक्ष्म से सुसूक्ष्म सभी पदार्थों में माला के समान सर्वत्र अनुस्यूत है, सल्लक्षण से युक्त सबके साक्षी हैं अनेक कारणों के मात्र अकेले कारण हैं, सर्वत्र गमन करने वाले तथा साकार ब्रह्मरूप में रहने वाले हैं, जिस अखिल ब्रह्माण्ड नायक में यह नित्य महाशक्ति महान् रूप से जुड़ी हुई हैं और जो समस्त योगासन के ज्ञाता है ॥ ८४ ॥

**मायाङ्के प्रतिभाति[३] चारुनयानाह्लादैकबीजं विधिं**
**कल्लोलाविकुलाकुला समतुला [४]कालाग्निवाहानना ।**
**हालाहेलन [५]कौलकालकलिका [६]केयूरहारानना**
**सर्वाङ्गा मम पातु पीतवसना शीघ्रासना [७]वत्सला ॥ ८५ ॥**

पीताम्बरालंकृता, शीघ्रासना वत्स के समान कृपा करने वाली सर्वांगा देवी मेरी रक्षा करें । जो हालाहल विष से शक्ति स्वरूपा काल की कलिका हैं, केयूर तथा हार से सुमण्डित जिनका मुख है तथा जो अपने मुख में कालाग्नि का वहन करते हैं जो समानता में अतुलनीय हैं जो भ्रमर समूहों के गुञ्जार से आकुलित हैं जो सुन्दर नेत्र वाली कुण्डलिनी भगवती माया के अङ्क में शोभा पा रही हैं । जो समस्त आह्लाद देने वाले पदार्थों की एकमात्र बीज हैं तथा सबकी विधात्री हैं वे मेरी रक्षा करें ॥ ८५ ॥

**सा बालाबलवाहना [८]सुगहना सम्मानना धारणा**
**खं खं खं खचराचरा कुलचरा वाचाचरा वङ्कुरा ।**
**चं चं चं[९] चमरीहरीभगवती गाथागताः सङ्गतिः**
**बाहौ मे परिपातु पङ्कजमुखी या चण्डमुण्डापहा ॥ ८६ ॥**
**कं कं कं[१०] कमलाकला गतिफला फूत्कारफेरूत्करा[११]**
**पं पं पं परमा रमा जयगमा व्यासङ्गमा जङ्गमा ।**

---

१. नानाकारविकारसारसरणम् इति—ग० । २. योगोपलज्जानिलम् इति—क० ।
३. चला इति—ग० । ४. कालाग्निहालाहला इति—ग० । ५. कक्ष इति—क० ।
६. केयूरहा वामना इति—ग० । ७. वासना इति—ग० । ८. नगहना इति—ग० ।
९. गतिः इति—ग० । १०. फङ्कार इति—ग० । ११. कला इति—ग० ।

तं तं तं तिमिरारुणा सकरुणा मातावला तारिणी
भं भं भं भयहारिणी प्रियकरी सा मे भवत्वन्तरा ॥ ८७ ॥

खं खं खं खचरा, अचरा, कुलचरा, वाचाचरा, वंखरा, चं चं चं चमरी, हरी, भगवती, गाथागता, सङ्गति ऐसी चण्डमुण्डापहा पङ्कजमुखी भगवती मेरे दोनों बाहुओं की रक्षा करें। कं कं कं कमला, कला, गतिफला, फूत्कारफेरूत्करा, पं पं पं परमा, रमा, जयगमा, व्यासङ्गमा, जङ्गमा, तं तं तं तिमिरारुणा, सकरुणा, मातावला, तारिणी, भं भं भं भयहारिणी एवं प्रियकरी कुण्डलिनी देवी मेरी रक्षा करें ॥ ८७ ॥

झं झं झं [१]झरझर्मरीगतिपथस्थाता रमानन्दितं
मं[२] मं मं मलिनं हि [३]मां हयगतां हन्त्रीं रिपूणां हि ताम्।
भक्तानां भयहारिणी रणमुखे शत्रोः कुलाग्निस्थिता
सा सा सा भवतु प्रभावपटला दीप्ताङ्घ्रियुग्मोज्ज्वला ॥ ८८ ॥

झं झं झं झर, झर्मरी, गतिपथस्थाता, रमानन्दितं, मं मं मं मलिन मेरी रक्षा करें हयगता, रिपूणां हन्त्री, जो भक्तों का भय हरण करने वाली, शत्रु कुल को भस्म करने के लिए रणभूमि में अग्नि के समान स्थित रहने वाली, सा सा सा कुण्डलिनी भगवती अपने प्रभाव को प्रदर्शित करें। जिनके दोनों चरण कमल अत्यन्त उज्ज्वल हैं ॥ ८८ ॥

गं गं गं गुरुरूपिणी गणपतेरानन्दपुञ्जोदया
तारासारसरोरुहारुणकला[४] कोटिप्रभालोचना[५]।
नेत्रं पातु(सदा)[६]शिवप्रियपथा कौट्यायुतार्कप्रभा
तुण्डं मुण्डविभूषणा नरशिरोमाला विलोला समा[७] ॥ ८९ ॥

गं गं गं गुरु रूपिणी गणपति के लिए आनन्द पुञ्ज के समान उदय होने वाली ताराओं की सारभूता कमल के समान अरुण कला वाली करोड़ों विद्युत्प्रभा के समान देदीप्यमान नेत्रों वाली, शिव के लिए प्रशस्त पथ वाली एवं करोड़ों हजार सूर्य के समान प्रभा वाली भगवती कुण्डलिनी सर्वदा मेरे नेत्र की रक्षा करें। मुण्डमाला का विभूषण धारण करने वाली, मनुष्य के शिरों की माला से चञ्चल समदर्शिनी भगवती मेरे तुण्ड ( मुखाग्र भाग ठोड़ी ) की रक्षा करें ॥ ८९ ॥

योगेशी [८]शशिशेखरोल्वणकथालापोदया मानवी[९]
शीर्षं पातु ललाटकर्ण युगलानन्तस्ततः सर्वदा।
मूर्त्त[१०] मेरुशिखा स्थिता व्यवतु मे गण्डस्थलं कैवली
तुष्टं चाष्टमषष्टिकाधरतलं धात्री धराधारिणी ॥ ९० ॥

---

१. झरझरी इति—क०। २. सं सं सं इति—क०। ३. सा इति—क०।
४. भावासार इति—क०। ५. रुणरुणी कोटिप्रभा इति—क०।
६. ह्यसौ सदा शिवपथे इति—क०। ७. मालाघिलोला मम इति—क०।
८. शेखरान्दन इति—क०। ९. मारवि इति—क०। १०. अस्तम् (?) इति—क०।

शशि शेखर भगवान् सदाशिव उल्वण कथालाप से उदय को प्राप्त होने वाली मानुषी रूपधारिणी कुण्डलिनी मेरे शिर, ललाट तथा दोनों कानों की अन्तः करण की सर्वदा रक्षा करें। सुमेरु पर्वत के अग्रभाग पर रहने वाली मूर्तिमान् केवली मेरे गण्डस्थल की रक्षा करें। धरा धारण करने वाली एवं सब का पोषण करने वाली संतुष्ट होकर मेरे अष्टम षष्टिका अधरतल की रक्षा करें ॥ ९० ॥

**नासाग्रद्वयगह्वरं भृगुतरा नेत्रत्रयं तारिणी**
**केशान् कुन्तलकालिका सुकपिला कैलासशैलासना ।**
**कङ्कालामलमालिका सुवसना दन्तावलीं[1] दैत्यहा**
**बाह्यं मन्त्रमनन्तशास्त्रतरणी सञ्ज्ञावचःस्तम्भिनी ॥ ९१ ॥**

भृगुतरा देवी मेरे दोनों नासिका के अग्रभाग में रहने वाले दोनों गह्वरों की, तारिणी दोनों नेत्रों की, कुन्तल कालिका केशों की, सुकपिला कैलास शैल पर आसनासीन कङ्कालों की अमल माला धारण करने वाली सुवसना दन्तावलियों की दैत्यहा बाह्य स्थानों की, अनन्त शास्त्र तरणी मन्त्र की तथा स्तम्भिनी संज्ञा ( नाम ) तथा वचनों की रक्षा करे ॥ ९१ ॥

**हं हं हं नरहारघोररमणी सञ्चारिणी पातु मे**
**शत्रूणां दलनं करोतु नियतं मे चण्डमुण्डापहा ।**
**भीमा सन्दहतु प्रतापतपना संवर्द्धनं वर्द्धिनी**
**मन्दारप्रियगन्धविभ्रममदा [2]वैदग्धमोहान्तरा ॥ ९२ ॥**

हं हं हं मनुष्य के मुण्डमाला का हार धारण करने से घोर रमणी स्वरूपा, सञ्चारिणी देवी मेरी रक्षा करें। चण्ड मुण्ड का विनाश करने वाली भगवती नियत रूप से मेरे शत्रुओं का दलन करें। अपने प्रताप से जाज्वल्यमान भीमा मेरे शत्रुओं को जलावें, वर्द्धिनी मेरा संवर्धन करें और मन्दार के प्रिय गन्ध के विलास से मदमत्त अपनी विदग्धता से मेरे समस्त मोहों को नष्ट करें ॥ ९२ ॥

**श्यामा[3] पातु पतङ्गकोटिनिनदा[4] हङ्कारफट्कारिणी**
**आनन्दोत्सवसर्वसारजयदा सर्वत्र सा रक्षिका ।**
**क्षौं क्षौं क्षौं कठिनाक्षरा क्षयकरी सर्वाङ्गदोषंहना**
**देहारेः कचहा परा [5]कचकुचाकीलालपूराशिता ॥ ९३ ॥**

करोड़ों पतङ्ग के समान निनाद करने वाली, हङ्कार एवं फट्कारिणी, आनन्दोत्सव, सर्वसार जयदा एवं रक्षिका वह श्यामा सर्वत्र हमारी रक्षा करें। क्षौं क्षौं क्षौं कठिनाक्षरा, क्षयकरी, सर्वाङ्ग दोषों का विनाश करने वाली, परा, कचकुचा, कीलाल, पूराशिता, पर एवं कचहा मेरे देह के शत्रुओं से रक्षा करें ॥ ९३ ॥

---

१. मैथुनी इति—ग० । २. विदिग् दिग्दण्डमोहान्तरा इति—क० ।—विदग्धस्यायं वैदग्धः, स चासौ मोहश्चेति वैदग्धमोहः, तस्यान्तं राति ददाति या सा । आतोऽनुपसर्गे क इति कप्रत्ययः । ३. सा सा सा तु इति—ग० ।
४. निलयाबूकारटंकारिणी इति—ग०। ५. कचाकचकटा इति—ग० ।

घं घं घं घटघर्घरा विघटिता जायापते: पातु मे
कल्पे[१] कल्पा कुलानामतिभयकलितं सर्वत्र मे विग्रहम् ।
निद्रोद्रावितकालिका[२] मम कुलं [३]लङ्कातटाच्छादिनी
नं[४] नं नं नयनानना सुकमला सा [५]लाकिनी लक्षणा ॥ ९४ ॥

घं घं घं घटघर्घरा, विघटिता एवं जायापति मेरी रक्षा करें । कल्प, कल्पा, कुलों की अति भयकलिता सर्वत्र मेरे शरीर की रक्षा करें । निद्रोद्रावितकालिका, लङ्कातटाच्छादिनी देवी मेरे कुल की रक्षा करें । नं नं नं नयनानना, सुकमला, लक्षणा एवं लाकिनी देवी मेरे सर्वाङ्ग की रक्षा करें ॥ ९४ ॥

कुक्षौ[६] पृष्ठतलं सदा मम धनं सा पातु मुद्रामयी
मोक्षं पातु करालकालरजकी या रञ्जकी कौतुकी ।
कृत्या नापितकन्यका शशिमुखी सूक्ष्मा मम प्राणगं
मन्दारप्रियमालया मणिमयग्रन्थ्या महन्मण्डिता ॥ ९५ ॥

वह मुद्रामयी भगवती मेरी कुक्षि, पृष्ठभाग तथा मेरे धन की सदा रक्षा करें । जो सबका रञ्जन करती हैं, सब में कुतूहल उत्पन्न करती है तथा कराल काल की रजकी है वह हमारे मोक्ष की रक्षा करे । चन्द्रमा के समान मनोहर मुख वाली, अत्यन्त सूक्ष्म, नापित कन्यका एवं कृत्या अपनी प्रिय मन्दार माला से जिसमें मणिमय ग्रन्थि लगी हुई हैं, उससे मण्डित हो कर हमारे प्राण में निवास कर हमारी रक्षा करें ॥ ९५ ॥

पूज्या योगिभिरुत्सुकी भगवती मूलस्थिता सत्क्रिया
मत्ता पातु पतिव्रता मम गृहं धर्मं यश: श्रेयसम् ।
धर्माम्भोरुहमध्यदर्शनिकरे काली महायोगिनी
मत्तानामतिदर्पहा हरशिरोमाला[७] कला केवला ॥ ९६ ॥

योगियों के द्वारा पूज्य, उत्सुकता से युक्त, मूल में निवास करने वाली, सत्क्रिया पतिव्रता एवं मत्ता भगवती मेरे घर की, मेरे धर्म की, मेरे यश की तथा मेरे श्रेयस ( परलोक के कल्याण ) की रक्षा करें । मदमत्तों के अत्यन्त दर्प को दलन करने वाली, शिव के शिरो माला केवला कला महायोगिनी काली धर्म रूप कमल के मध्य दर्श निकर में हमारी रक्षा करें ॥ ९६ ॥

मे गुह्यं जयमेव लिङ्गमपि मे मूलाम्बुजं पातु सा
या कन्या हिमपर्वतस्य भयहा पायान्नितम्बस्थलम् ।
सर्वेषां हृदयोदयानलशिखाशक्तिर्मनोरूपिणी
मे भक्तिं परिपातु कामकुशला लक्ष्मी: प्रिया मे प्रभो ॥ ९७ ॥

मेरे गुह्य स्थान की जय की तथा लिङ्ग की मूलाम्बुज पर निवास करने वाली वह

---

१. कल्पेऽल्पा कुलसर्पकल्पलतिका इति—क० । २. व्यावति इति—क० ।
३. शङ्का इति—क० । ४. लं लं लं इति—ग० ।
५. लालाकिनी लक्षणी इति—ग० । ६. पृष्ठतरं मुदा समधनम् इति—ग० ।
७. हरति पापानि इति हर:, हृञ्—धातो: पचाद्यच्। हरस्य शिर:, तस्य माला इवेति विग्रह: ।

भगवती रक्षा करें, जो हिमालय पर्वत की कन्या हैं । सबके भय को हरण करने वाली मेरे नितम्ब स्थल की रक्षा करें । सभी के हृदय पर उदीयमान अनल शिखा शक्ति जो मनोरूपिणी हैं । हे प्रभो ! सबकी प्रिय कामकुशला ऐसी महालक्ष्मी मेरी भक्ति की रक्षा करें ॥ ९७ ॥

**गौरी गौरवकारिणी भुवि महामाया महामोहहा ।**
**वं वं वं वरवारुणी सुमदिरा मे पातु नित्यं कटिम् ।**
**कूटा सा रविचन्द्रवह्निरहिता स्वेच्छामयी मे मुखम् ॥ ९८ ॥**
**एतत्स्तोत्रं पठेद् यस्तु सर्वकाले च सर्वदा ।**
**स भवेत् [1]कालयोगेन्द्रो महाविद्यानिधिर्भवेत् ॥ ९९ ॥**

सबके गौरव की कारणभूता, महामाया एवं महामोह का हरण करने वाली गौरी वं वं वं वर वारुणी सुमिदरा मेरे कटि प्रदेश की नित्य रक्षा करें । सूर्य, चन्द्रमा तथा अग्नि के बिना भी जो सर्वत्र विद्यमान् हैं ऐसी स्वेच्छामयी भगवती मेरे मुख की रक्षा करें । जो इस कुण्डलिनी के स्तोत्र को सर्वदा सर्वकाल में पढ़ता है, वह काल विजयी योगेन्द्र बन जाता है तथा महाविद्या का निधान हो जाता है ॥ ९८-९९ ॥

**मूलपद्मबोधने च मूलप्रकृतिसाधने ।**
**निजमन्त्रबोधने च [2]घोरसङ्कटकालके ॥ १०० ॥**
**आपदस्तस्य नश्यन्ति अन्धकारं बिना रविः ।**
**सर्वकाले सर्वदेशे महापातकघातकः [3] ॥ १०१ ॥**
**स भवेद् योगिनीपुत्रः कलिकाले न संशयः ॥ १०२ ॥**

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावासननिर्णये पाशवकल्पे षट्चक्र प्रकाशे भैरवभैरवीसंवादे कन्दवासिनिस्तोत्रं नाम अष्टाविंशः [4] पटलः ॥ २८ ॥**

मूलाधर पद्म को उद्‌बुद्ध करने में, मूल प्रकृति ( कुण्डलिनी ) के साधन में अथवा अपने इष्टदेव के मन्त्र को जागरूक करने में या घोर सङ्कट काल उपस्थित होने के समय इस स्तोत्र का पाठ करना चाहिए । इस स्तोत्र का पाठ करने वाले साधक की सारी विपत्तियाँ नष्ट हो जाती हैं, वह इस प्रकार प्रकाशित होता है जैसे बिना अन्धकार के सूर्य प्रकाशित होता है । ऐसा पुरुष सर्वकाल में तथा सर्वदेश में महापातकों को विनष्ट कर देता है । इस प्रकार का साधक कलिकाल में योगिनी पुत्र बन जाता है, इसमें संशय नहीं ॥ १००-१०२ ॥

**॥ श्रीरुद्रयामल के उत्तरतन्त्र में महातन्त्रोद्दीपन में भावार्थनिर्णय में पाशवकल्प में षट्चक्रप्रकाश में भैरव-भैरवी संवाद के कन्दवासिनीस्तोत्र नामक अठ्ठाइसवें पटल की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ २८ ॥**



१. योगेन्द्र साध्यो विद्यानिधिर्भवेत् इति—क० ।
२. घोरसङ्कटकालके—क० ।
३. महान्ति यानि पातकानि तेषां घातको विनाशकः ।
४. त्रिंशः पटलः—क० ।

# अथैकोनत्रिंश: पटल:

आनन्दभैरवी उवाच

अथ षट्चक्रयोगं च प्रवक्ष्यामीह तत्त्वत: ।
कुण्डलीयोगविविधं कृत्वा योगी भवेन्नर: ॥ १ ॥
मूलादिब्रह्मरन्ध्रान्तं षट्चक्रभेदनं मतम् ।
षट्चक्रे योगशास्त्राणि विविधानि वसन्ति हि ॥ २ ॥
यो जानातीह षट्चक्रं सर्वशास्त्रार्थविद्भवेत् ।
चतुर्द्दलं मूलपद्मं वादिसान्तार्णसम्भवम् ॥ ३ ॥

**आनन्दभैरवी ने कहा**—हे महाभैरव ! अब षट्चक्र योगों को कहती हूँ क्योंकि कुण्डलिनी योग के अनेक प्रकार हैं जिनके करने से साधक योगी बन जाता है । मूलाधार से प्रारम्भ कर ब्रह्मरन्ध्र पर्यन्त षट्चक्रों का भेदन करना चाहिए । इन षट्चक्रों में अनेक प्रकार के योग शास्त्रों का निवास है । जो इन षट्चक्रों का स्वरूप जानता है, वह सर्वशास्त्रार्थ वेत्ता हो जाता है । मूलाधार में रहने वाला पद्म चार दलों का है जिस पर व श ष स ये चार वर्ण हैं ॥ १-३ ॥

हिरण्यवर्णममलं ध्यायेद्योगी पुन: पुन: ।
निर्जने विपिने शून्ये पशुपक्षिगणावृते[1] ॥ ४ ॥
निर्भये[2] सुन्दरे देशे दुर्भिक्षादिविवर्जिते ।
कृत्वा दृढासनं मन्त्री योगमार्गपरो भवेत् ॥ ५ ॥

योगी हिरण्य वर्ण के उन शुभ्र वर्णों का पुनः पुनः ध्यान करे । निर्जन में, वन में, शून्य स्थान में, पशुपक्षि गणों से घिरे हुए स्थान में, निर्भय अथवा सुन्दर प्रदेश में जहाँ दुर्भिक्षादि का भय न हो इस प्रकार के स्थान में दृढ़ता पूर्वक आसन लगाकर मन्त्रज्ञ साधक योग मार्ग में लग जावे ॥ ४-५ ॥

तदा योगी भवेत् क्षिप्रं मम शास्त्रानुसारत: ।
पूर्वदले वकारं च ध्यायेद्योगी सदा सुखी ॥ ६ ॥
सुवर्णवर्णं हितकारिणं नृणां सत्वोद्भवं पूर्वदलस्थितं सुखम् ।
मत्तप्रियं वारणमत्तमन्दिरं मन्त्रार्थकं शीतलरूपधारिणम् ॥ ७ ॥

ऐसा करने से मेरे शास्त्र के अनुसार वह शीघ्र ही योगी बन जाता है । सर्वप्रथम पूर्वदिशा वाले दल पर सुखपूर्वक साधक को 'वकार' ( १ ) का ध्यान करना चाहिए । इस

---

१. गणान्विते—ग० । २. निर्भरे—ग० ।

गुण वकार का वर्ण सोने के समान है, वह मनुष्यों का हितकारी है सत्त्व गुण से उत्पन्न हुआ है तथा पूर्व वाले दल पर सुखपूर्वक निवास करता है । वह मत्तों का प्रिय तथा मदमस्त हाथियों के निवास का मन्दिर है । समस्त मन्त्रों के अर्थों से युक्त शीतल रूप वकार का ध्यान करना चाहिए ॥ ६-७ ॥

**योगानुभावाश्रयकालमन्दिरं तेजोमयं सिद्धिसमृद्धिदं गुरुम् ।**
**आद्याक्षरं वं वरभावसाधनं नारायणं भावनपञ्चमच्युतम्**[1] **॥ ८ ॥**

**वकार का ध्यान**—जो योगानुभाव के आश्रय का समयोचित मन्दिर है, तेजोमय, सिद्धि तथा समृद्धि प्रदान करने वाला, गुरु, आद्याक्षर श्रेष्ठ भाव से साधन योग्य है ऐसे नारायण स्वरूप भावना के योग्य ( १. कण्ठ, २. तालु, ३. मूर्धा, ४. दन्त तथा ५. ओष्ठ ) स्थान से उच्चरित होने वाले वकार का ध्यान करना चाहिए ॥ ८ ॥

**ध्यायेत् शकारं कनकाचलप्रभं गौरीपतेः श्रीकरणं पुराणम् ।**
**लक्ष्मीप्रियं**[2] **सर्वसुवर्णवेष्टितं सदा मुदा दक्षिणपत्रमुत्तमम्**[3] **॥ ९ ॥**

**शकार का ध्यान**—इसके बाद कमल के दक्षिण पत्र पर उत्तम रूप से विराजमान सुवर्णाचल के समान प्रभा वाले गौरीपति को श्री सम्पन्न करने वाले पुराण, लक्ष्मी प्रिय, सुवर्ण वर्ण से वेष्टित 'शकार' ( २ ) का प्रसन्नतापूर्वक सर्वदा ध्यान करना चाहिए ॥ ९ ॥

**शमीश्वरीषष्ठगुणावतंसं षट्पद्मसम्भेदनकारकं परम् ।**
**परापरस्थाननिवासिनं गुणं**[4] **हेमाचलं पत्रमहं भजामि ॥ १० ॥**
**सकारमानन्दरसं प्रियं प्रियं**[5] **ध्याये महाहाटकपर्वताग्रकम् ।**
**ध्याये मुदाहं घननाथमन्दिरे मायामहामोहविनाशनं**[6] **जयम् ॥ ११ ॥**

इसके बाद ईश्वरी के षष्ठ गुणों का अवतंस षट् पद्म संभेदन करने वाले, परात्पर स्थान में निवास करने वाले, गुणों से युक्त हेमाचल के समान वर्ण वाले 'ष' ( ३ ) वर्ण से युक्त पत्र को मैं नमस्कार करता हूँ ॥ १० ॥

इसके बाद आनन्द रस वाले, प्रिय से भी प्रिय महान् सुर्वण पर्वत के अग्रभाग के समान देदीप्यमान, घननाथ मन्दिर में विराजमान, माया तथा महामोह का विनाश करने वाले जय प्रदान करने वाले 'सकार' ( ४ ) का मैं आनन्दपूर्वक ध्यान करता हूँ ॥ ११ ॥

**चतुर्भुजं भुजयुगं अष्टादशभुजं तथा ।**
**अष्टहस्तं सदा ध्यायेन्मन्त्री भावविशुद्धये ॥ १२ ॥**
**ततो ध्यायेत् कर्णिकायां मध्यदेशे मनोरमम् ।**
**स्वयम्भूलिङ्गपरमं योगिनां योगसिद्धिदम् ॥ १३ ॥**

इस प्रकार चार पत्रों पर स्थित चार वर्णों का क्रमशः चारभुजा से युक्त, दो भुजा से

---

१. भावनानां पञ्चमस्तेन च्युतम्, त्यक्तम् । २. लक्ष्मीमयम्—ग० ।
३. पत्रपावनम्—ग० । ४. मावलच्छन्दमहम्—ग०
५. प्रियाप्रियम्—ग० । ६. विनाशम्—ग० ।

युक्त, अष्टादश भुजा से युक्त तथा आठ हाथों से युक्त उन-उन वर्णों का भाव विशुद्धि के लिए मन्त्रज्ञ साधक ध्यान करे । इसके बाद कर्णिका के मध्य देश में स्थित अत्यन्त मनोरम योगियों को सिद्धि प्रदान करने वाले परम स्वयम्भू लिङ्ग का ध्यान करे ॥ १२-१३ ॥

**प्रातः सूर्यसमप्रख्यं तडित्कोटिसमप्रभम् ।**
**तं संवेष्ट्य महादेवी कुण्डली योगदायिनी ॥ १४ ॥**
**सार्धत्रिवेष्टनग्रन्थियुता सा मुक्तिदायिनी ।**
**निद्रिता सा सदा भद्रा[1] महापातकघातिनी[2] ॥ १५ ॥**

प्रातः कालीन सूर्य के समान अरुण वर्ण करोड़ों तडित्पुञ्ज प्रभा वाले उन स्वयंभू लिङ्ग को परिवेष्टित कर योगदायिनी कुण्डली देवी स्थित हैं । वह उन स्वयंभूलिङ्ग को साढ़े तीन बार घेर कर ग्रन्थि से उन्हें बाँधी हुई हैं, मुक्ति देती हैं, किन्तु निद्रित रहती हैं, सदा उपासकों का कल्याण करती हैं तथा महापातकों का नाश भी करती हैं ॥ १४-१५ ॥

**निरन्तरं तस्य शीर्षे विभाति शशधारिणी ।**
**तच्छ्वासधारिणी नित्या जगतां प्राणधारिणी ॥ १६ ॥**
**सुप्ता[3] सर्पसमा भ्रान्तिः यथार्कशतकोटयः ।**
**यदा[4] लिङ्गं सा विहाय [5]प्राक्तिष्ठति महापथे ॥ १७ ॥**
**तदा सिद्धो भवेद्योगी ध्यानधारणकृत् शुचिः ।**
**सदानन्दमयो नित्यश्चैतन्यकुण्डली यदा ॥ १८ ॥**

उस स्वयंभू लिङ्ग के शिर पर निरन्तर वह चन्द्रकला के रूप में विराजती रहती हैं उस शिवलिङ्ग से निर्गत श्वास धारण करती हैं, नित्या हैं तथा वही समस्त जगत् के प्राणों को धारण करती हैं । वह कुण्डलिनी साँप के समान हैं, सोई रहती है तथा सैकड़ो करोड़ सूर्य के समान कान्तिमती हैं । जब लिङ्ग छोड़कर वह महापथ में ऊपर की ओर गमन करती है, उस समय साधक सिद्ध योगी बन जाता है ध्यान तथा धारणा करने लगता है, पवित्र हो जाता है जब उसकी कुण्डलिनी सचेतनावस्था में जागने लगती है तब साधक, सदानन्दमय तथा नित्य हो जाता है ॥ १६-१८ ॥

**सुषुम्ना नाडिकामध्ये [6]महासूक्ष्मविले स्थितः ।**
**मनो निधाय यो योगी श्वासमार्गपरो भवेत् ॥ १९ ॥**
**तदा सा द्रवति क्षिप्रं चैतन्या कुण्डली [7]परा ।**

जो योगी सुषुम्ना नाड़िका के मध्य में रहने वाले महासूक्ष्म बिलमें स्थिर होकर अपने

---

१. सापदा भद्रा इति—ग० ।
२. महान्ति पातकानि हन्ति इति महापातकघातिनी, ताच्छील्ये णिनिः ।
३. सप्ता इति—ग० ।
४. यदासिद्धिदम् इति—क० ।
५. प्रगच्छति इति—क० ।
६. सूक्ष्मा विलोहिता इति—ग० ।
७. भवेत् इति—ग० ।

मन को धारण करता है, तब योगी में श्वास ग्रहण की योग्यता आ जाती है । इस प्रकार सुषुम्ना मध्य स्थित सूक्ष्म बिल में साधक का मन जब प्रविष्ट हो जाता है तब परा कुण्डलिनी शीघ्र ही द्रवीभूत होकर चैतन्य होने लगती है ॥ १९-२० ॥

**पृष्ठदेशे [1]महादण्डे मेरुमूले महाप्रभे ॥ २० ॥**
**मूलादिब्रह्मरन्ध्राधः सदास्थिरूपधारकः ।**
**कनकाचलनाम्ना च प्रतिभाति [2]जगत्त्रये ॥ २१ ॥**
**तन्मध्ये परमा सूक्ष्मा सुषुम्ना बहुरूपिणी ।**
**मनोमुनिस्वरूपा च मनश्चैतन्यकारिणी ॥ २२ ॥**

मनुष्यों के पृष्ठदेश में एक महादण्ड है, जो महाप्रभावान् मेरु का मूल कहा जाता है । वह मूलाधार से ब्रह्मरन्ध्र पर्यन्त अस्थि रूप में विराजमान है । तीनों जगत् में उसे सुवर्णाचल नाम से पुकारा जाता है । उस मेरुदण्ड के मध्य भाग में अत्यन्त सूक्ष्म बहुरूपा सुषुम्ना नाड़ी है, जो मनो मुनिस्वरूपा है तथा मन को चेतना प्रदान करती रहती है ॥ २०-२२ ॥

**तन्मध्ये भाति वज्राख्या [3]घोरपातकनाशिनी ।**
**सिद्धिदाभावविज्ञानां मोक्षदा कुलरूपिणाम् ॥ २३ ॥**
**तन्मध्ये चित्रिणी देवी देवताप्रीतिवर्द्धिनी ।**
**हितैषिणी महामाया [4]कालजालविनाशिनी ॥ २४ ॥**

उस सुषुम्ना के मध्य में महाघोर पापों को नष्ट करने वाली वज्रा नाम की नाड़ी है, जो भाव विज्ञों को सिद्धि प्रदान करती है तथा शक्ति के उपासकों को मोक्ष प्रदान करती है । उस वज्रा नामक नाड़ी के मध्य में चित्रिणी देवी हैं जो देवताओं में प्रीति उत्पन्न करती हैं, सबकी हितैषणी, महामाया तथा कालरूपी जाल को विनष्ट करने वाली है ॥ २३-२४ ॥

**सा पाति सकलान् चक्रान् पद्मरूपधरान् परान् ।**
**त्रैलोक्यमण्डलगतान् साक्षादमृतविग्रहान् ॥ २५ ॥**
**स्वयं दधार सा देवी चित्राख्या चारुतेजसी ।**
**तले पृष्ठे ऊर्द्ध्वदेशे शीर्षे वक्षसि नाभिषु ॥ २६ ॥**
**कण्ठकूपे चक्रमध्ये ब्रह्माण्डं पाति सर्वदा ।**
**शरीरात्मकमीशार्थं त्रैलोक्यं सचराचरम् ॥ २७ ॥**

वह कमल रूप धारण करने वाले, त्रैलोक्य मण्डल में स्थित, साक्षात् अमृत का शरीर धारण करने वाले समस्त षट्चक्रों का पालन करती है । उत्तम तेज वाली उस चित्रा नाम की नाड़ी ने ही उन षट्चक्रों को धारण किया है, वही दोनों तलवे, पृष्ठभाग, शीर्षस्थान, वक्षः-

---

१. महाकुण्डे इति—ग० । २. गुणद्वये इति—ग० ।
३. घातिनी—ग० ।
४. विकाशिनी—क० । 'कालजालविनाशिनी' इति पाठे कालस्य जालं विनाशयति, तच्छीला । ताच्छील्ये णिनिः ।

स्थल, नाभि प्रदेश, कण्ठकूप तथा चक्र के मध्य में रहकर समस्त ब्रह्माण्ड का पालन करती हैं । किं बहुना वही शरीरात्मक सचराचर त्रैलोक्य की ईश्वरी है ॥ २५-२७ ॥

**चित्रासुग्रथनं[1] पद्मं [2]योऽवभाव्यति भावकः ।**
**भावेन लभ्यते योगं भावेन भाव्यते शिवः ॥ २८ ॥**
**भावेन शक्तिमाप्नोति तस्माद्भावं समाश्रयेत् ।**
**षट्चक्रभावनां कृत्वा महायोगी भवेन्नरः ॥ २९ ॥**

अतः साधना करने वाला भावक उस चित्रा में अच्छी तरह गूँथे गए पद्म की भावना करता है । क्योंकि भाव से योग की प्राप्ति होती है भाव से ही अपना शिव भावित होता है । यतः भाव से ही शक्ति की प्राप्ति होती है, इसलिए भाव का आश्रय लेना चाहिए । षट्चक्रों में भावना करने से मनुष्य महायोगी हो जाता है ॥ २८-२९ ॥

**सर्वधर्मान्वितो भूत्वा राजते [3]क्षितिमण्डले ।**
**सर्वत्रगामी स भवेत् यदि पद्मे मनोलयम् ॥ ३० ॥**
**पद्मभावनमात्रेण आकाशसदृशो भवेत् ।**
**महापद्मे मनो दत्वा महाभक्तो भवेद्ध्रुवम् ॥ ३१ ॥**

षट्चक्रों की भावना से सभी धर्मों से युक्त हुआ पुरुष पृथ्वीतल पर शोभा प्राप्त करता है, इस प्रकार यदि षट्चक्र पद्मों में मन लीन हो जावे तो साधक सर्वत्र गमन करने वाला हो जाता है । षट्चक्र रूप पद्म में भावना मात्र से साधक आकाश के सदृश हो जाता है । महापद्म स्वरूप षट्चक्रों में मन लगाने से साधक निश्चय ही महाभक्त हो जाता है ॥ ३०-३१ ॥

**यदि भक्तो भवेन्नाथ तदा मुक्तो न संशयः ।**
**यदि मुक्तो महीमध्ये ध्यानयोगपरायणः ॥ ३२ ॥**
**तदा कालपरां ज्ञात्वा [4]सर्वदर्शी च सर्ववित् ।**
**सर्वज्ञः सर्वतोभद्रो भवतीति न संशयः ॥ ३३ ॥**

हे नाथ ! यदि महाभक्त हो जाता है तो वह मुक्त भी हो जाता है इसमें संशय नहीं यदि पृथ्वी पर रहकर ही ध्यान योग परायण साधक मुक्त हो जाता है तो वह काल से परे कुण्डलिनी का ज्ञान कर सर्वदर्शी, सर्ववेत्ता, सर्वज्ञ तथा सर्वतो भावेन कल्याणकारी हो जाता है, इसमें संशय नहीं ॥ ३२-३३ ॥

**चित्रिणी मध्यदेशे च ब्रह्मनाडी महाप्रभा[5] ।**
**सर्वसिद्धिप्रदा नित्या सा देवी सकला कला ॥ ३४ ॥**

---

१. चित्राख्या नयनम् इति—ग० । २. यो विभाव्यति भावुकः इति—ग० ।
३. स्थिति इति—ग० । ४. कृत्वा इति—ग० ।
५. महत्प्रभा इति—ग० ।—महतां प्रभेत्यर्थोऽत्र पाठे । महाप्रभेति पाठे तु महती चासौ प्रभा चेति सन्महदिति समासः ।

**व्योमरूपा भगवती सर्वचैतन्यरूपिणी ।**
**एकरूपं परं ब्रह्म ब्रह्मातीतं जगत्त्रयम् ॥ ३५ ॥**

इस चित्रिणी के मध्य प्रदेश में अत्यन्त दीप्त रहने वाली ब्रह्मनाड़ी है । वह देवी सभी प्रकार की सिद्धि देने वाली, नित्या, सकला तथा अकला है । वही भगवती व्योमरूपा है, सर्व चैतन्यरूपिणी है, एक रूप परब्रह्म है, यह सारा जगत् उस महा ब्रह्म से अतीत है ॥ ३४-३५ ॥

**यदा जगत्त्रयं ब्रह्म तदा [१]सत्त्वालयं प्रभो ।**
**महालये मनो दत्वा सर्वकालजयो भवेत् ॥ ३६ ॥**
**मृत्युञ्जयो महावीरो [२]महाच्छत्रो महागतिः ।**
**सर्वव्यापकरूपेण ईश्वरत्वेन भाषते ॥ ३७ ॥**

हे प्रभो ! जिसके मत में जगत्त्रय ही ब्रह्म है, तो यह सत्त्व का आलय है । अतः महा लय में मन लगाने से साधक सर्वकाल पर विजय प्राप्त करने वाला हो जाता है । वह मृत्युञ्जय है, महावीर है, महाच्छत्र है, महागति है तथा सर्वव्यापक रूपेण वही ईश्वर पद से वाच्य होता है ॥ ३६-३७ ॥

**सर्वदा मन्त्रसम्भूतो विशालाक्षः प्रसन्नधीः ।**
**एकस्थानस्थितो याति नक्षत्रं स हि शङ्कर ॥ ३८ ॥**
**एकदृष्टिः क्षुधातृष्णारहितो वाक्यवर्जितः ।**
**निराकारे मनो दद्यात्तदा [३]महानयं प्रभो ॥ ३९ ॥**

हे शङ्कर ! वह सर्वदा मन्त्र संभूत, विशालाक्ष तथा प्रसन्न बुद्धि वाला रहता है, वह एक स्थान पर स्थित हो कर कभी विनष्ट नहीं होता । वह सर्वत्र एक दृष्टि से देखता है, क्षुधा एवं तृष्णा से रहित तथा मौन रहता है । हे प्रभो ! इसलिए निराकार में मन लगाना चाहिए तभी वह महान् बन जाता है ॥ ३८-३९ ॥

**किन्तु[४] नाथाज्ञानिनां हि नापि नापि[५] महालयः ।**
**महाप्रलय एवं हि योगिनां नात्र संशयः ॥ ४० ॥**
**यदा मनोयोग विशुद्धये मनोलयं यः कुरुतेऽप्यहर्निशम् ।**
**स एव मोक्षो गुणसिन्धुरूपी कालाग्निरूपी निजदेवदैवतः ॥ ४१ ॥**

किन्तु हे नाथ ! अज्ञानी लोगों का उसमें महा लय नहीं होता, नहीं होता, योगियों का महा लय में मन को लीन करना ही महालय है, इसमें संशय नहीं । जब जो साधक अपने मनोयोग की शुद्धि के लिए दिन रात अपना मन उस परब्रह्म में लीन करता है तब वही मोक्ष है, वही गुण सिन्धुरूपी एवं कालाग्निरूपी तथा निजदेव का देवता है ॥ ४०-४१ ॥

---

१. महात्रयम् इति—ग० ।
२. क्षेत्रो महापतिः इति—ग० ।
३. महात्रयः इति—ग० ।
४. नात्र प्राणिनां हि इति—ग० ।
५. महात्ययः इति—ग० ।

महामनोयोग विकारवर्जितः[१]
कामक्रिया काण्डविशुद्धमण्डितः ।
हितो गतीनां मतिमान्निरस्तो
महालयस्थोऽमर एव भक्तः ॥ ४२ ॥
मानी विचारार्थविवेकचित्तश्-
चातुर्य चित्तोल्बणताविवर्जितः ।
योगी भवेत्साधक चक्रवर्ती
व्योमाम्बुजे चित्तविसर्जनं सदा ॥ ४३ ॥

॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने षट्चक्र प्रकाशे भैरवीभैरवसंवादे महाप्रलयनामा एकोनत्रिंशः[२] पटलः ॥ २९ ॥



महा लय में रहने वाला साधक अमर है, भक्त है, वह महा मनोयोग के विकार से वर्जित रहता है । वह काम तथा क्रिया काण्ड में विशुद्ध रूप से मण्डित रहता है । वह सभी गतियों का हितकारी एवं मतिमान् होता है तथा आसक्ति से दूर रहता है ॥ ४२ ॥

वही मानी है, विचार करने वाला है, विवेक युक्त चित्त वाला, चातुर्य युक्त चित्त वाला एवं उल्बणता से विवर्जित है । इस प्रकार जो व्योमाम्बुज में अपने चित्त का विसर्जन कर देता है, वही साधक चक्रवर्ती है ॥ ४३ ॥

**॥ श्रीरुद्रयामल के उत्तरतन्त्र में महातन्त्रोद्दीपन में षट्चक्रप्रकाश में भैरवी-भैरव संवाद के महाप्रलय नामक उन्तीसवें पटल की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ २९ ॥**



---

१. सुकण्डुममण्डितः ? (सुकाण्डमण्डितः) इति—क० । विशुद्धं यथा स्यात्तथा मण्डित इति । कामस्य क्रियाकाण्डेन विशुद्धमण्डित इति तृतीयातत्पुरुषः, कर्तृकरणे कृतेत्यनेन ।

२. एकत्रिंशः इति—क० ।

# अथ त्रिंशः पटलः

आनन्दभैरवी उवाच

अथ वक्ष्ये महाकाल मूलपद्मविवेचनम् ।
यत् कृत्वा अमरो भूत्वा वसेत् कालचतुष्टयम् ॥ १ ॥

**आनन्दभैरवी ने कहा**—हे महाकाल ! अब इसके अनन्तर **मूलाधार स्थित पद्म का विवेचन** कहती हूँ जिसे कर लेने पर अमर होकर साधक चारों कालों में अविच्छिन्न रूप से वर्तमान रहता है ॥ १ ॥

**विशेष**—कालचतुष्टयम्—चार काल—१. बाल, २. कैशोर, ३. युवा, ४. वृद्धावस्था ।

अथ षट्चक्रभेदार्थे भेदिनीशक्तिमाश्रयेत् ।
छेदिनीं सर्वग्रन्थीनां योगिनीं समुपाश्रयेत् ॥ २ ॥

इसके अनन्तर षट्चक्रों का भेदन करने के लिए भेदिनी शक्ति का आश्रय लेना चाहिए । यह भेदिनी नाम की योगिनी समस्त ग्रन्थियों का छेदन करने वाली है अतः इसका आश्रय लेना चाहिए ॥ २ ॥

तस्या मन्त्रान् प्रवक्ष्यामि येन सिद्धो भवेन्नरः।
आदौ शृणु महामन्त्रं भेदिन्याः परं[1] मनुम् ॥ ३ ॥

अब मैं उस **भेदिनी के मन्त्रों** को कहती हूँ, जिससे मनुष्यों को सिद्धि प्राप्त होती है । उसमें सबसे पहले भेदिनी के सर्वोत्कृष्ट मन्त्रों को सुनिए ॥ ३ ॥

आदौ[2] कालीं समुत्कृत्य[3] ब्रह्ममन्त्रं ततः परम् ।
देव्याः प्रणवमुद्धृत्य भेदनी तदनन्तरम् ॥ ४ ॥
ततो हि मम गृह्णीयात् प्रापय द्वयमेव च ।
चित्तचञ्चीशब्दान्ते मां रक्ष युग्ममेव च ॥ ५ ॥
भेदिनी मम शब्दान्ते अकालमरणं हर ।
हर[4] युग्मं स्वं महापापं नमो नमोऽग्निजायया ॥ ६ ॥

सर्वप्रथम 'काली' का उच्चारण कर इसके बाद ब्रह्ममन्त्र ( द्र० ३०. १६-१७ ) का उच्चारण करे, इसके बाद देवी का प्रणव ( ऐं ) उच्चारण कर 'भेदिनी' पद उच्चारण करे ।

---

१. प्रबलम् एति—ग० । २. आकालीम् इति—ग० ।
३. समुपाकृत्य इति—ग० । ४. हरस्व इति—ग० ।

तदनन्तर 'मम' पद का उच्चारण कर दो बार 'प्रापय' शब्द कहे । फिर चित्तचञ्ची शब्द के बाद 'मां', फिर दो बार 'रक्ष', फिर 'भेदिनी मम' शब्द के अन्त में 'अकालमरणं हर', फिर 'हर' युग्म, फिर 'स्वं महापापं नमो नमो' को अग्निजाया ( स्वाहा ) के साथ कहे ? ।

**विमर्श**—भेदिनी मन्त्र का स्वरूप इस प्रकार है—'काली ॐ ॐ ॐ आं आं ॐ ॐ ॐ ब्रह्म ब्रह्म ब्रह्म सर्वसिद्धिं पालय मां सत्त्वं गुणो रक्ष रक्ष ह्रीं स्वाहा ऐं भेदिनी मम प्रापय प्रापय चित्तचञ्ची मां रक्ष रक्ष भेदिनी मम अकालमरणं हर हर हर स्वं महापापं नमो नमो स्वाहा ॥ ४-६ ॥

**एतन्मन्त्रं जपेत्तत्र डाकिनीरक्षसि प्रभो ।**
**आदौ प्रणवमुद्धृत्य ब्रह्ममन्त्रं ततः परम् ॥ ७ ॥**
**शाम्भवीति[1] ततश्चोक्त्वा ब्राह्मणीति पदं ततः ।**
**मनोनिवेशं कुरुते[2] तारयेति द्विधापदम्[3] ॥ ८ ॥**
**छेदिनीपदमुद्धृत्य मम मानसशब्दतः ।**
**महान्धकारमुद्धृत्य छेदयेति द्विधापदम् ॥ ९ ॥**
**स्वाहान्तं मनुमुद्धृत्य जपेन्मूलाम्बुजे सुधीः ।**
**एतन्मन्त्रप्रसादेन जीवन्मुक्तो भवेन्नरः ॥ १० ॥**

फिर हे प्रभो ! डाकिनी राक्षसी के लिए इस मन्त्र का जप करना चाहिए । प्रथम प्रणव ( ॐ ) का उच्चारण कर फिर ब्रह्ममन्त्र ( ॐ ॐ ॐ आं आं ॐ ॐ ॐ ब्रह्म ब्रह्म ब्रह्म सर्वसिद्धिं पालय मां सत्त्वं गुणो रक्ष रक्ष ह्रीं स्वाहा ), इसके बाद 'शाम्भवी', फिर 'ब्राह्मणी मनो निवेशं कुरुत तारय तारय' फिर 'छेदिनी' पद का उच्चारण कर 'मम मानस महान्धकारं छेदय छेदय स्वाहा' इतने मन्त्र का उद्धार कर सुधी साधक को मूलाधार में जप करना चाहिए। फिर इस मन्त्र के सिद्ध हो जाने पर वह जीवन्मुक्त हो जाता है ।

**विमर्श**—मन्त्र का स्वरूप इस प्रकार है—ॐ ॐ ॐ आं आं ॐ ॐ ॐ ब्रह्म ब्रह्म ब्रह्म सर्वसिद्धिं पालय मां सत्त्वं गुणो रक्ष रक्ष ह्रीं स्वाहा शाम्भवी ब्राह्मणी मनोनिवेशं कुरुत तारय तारय छेदिनी मम मानसमहान्धकारं छेदय छेदय स्वाहा ॥ ७-१० ॥

**तथा स्त्रीयोगिनीमन्त्रं जपेत्तत्रैव शङ्कर ।**
**ॐ घोररूपिणिपदं[4] सर्वव्यापिनि शङ्कर ॥ ११ ॥**
**महायोगिनि मे पापं शोकं रोगं हरेति च ।**
**विपक्षं छेदयेत्युक्त्वा योगं मय्यर्पय द्वयम् ॥ १२ ॥**
**स्वाहान्तं मनुमुद्धृत्य जपाद्योगी भवेन्नरः ।**
**खेचरत्वं समाप्नोति योगाभ्यासेन योगिराट् ॥ १३ ॥**

हे शङ्कर ! इसके बाद **स्त्री-योगिनी** मन्त्र का जप करना चाहिए । वह इस प्रकार है

---

१. समुद्धत इति—क० । २. कुरु मे इति—क० ।
३. भावयेति द्विधापदम् इति—क० । ४. पदञ्चोक्त्वा सर्वव्यापिनि शाङ्करि इति—क० ।

'ॐ घोर रूपिणि', फिर 'सर्वव्यापिनि', फिर 'महायोगिनि मम पापं शोकं रोगं हर विपक्षं छेदय योगं मय्यर्पय अर्पय', फिर 'स्वाहा'—इतने मन्त्र का उद्धार कर जप करने से मनुष्य योगी हो जाता है । किं बहुना वह योगिराज इस प्रकार के योगाभ्यास से खेचरता प्राप्त कर लेता है ।

**विमर्श**—स्त्री-योगिनी मन्त्र का स्वरूप इस प्रकार है—ॐ घोररूपिणि सर्वव्यापिनि महायोगिनि मम पापं शोकं रोगं हर विपक्षं छेदय योगं मय्यर्पय अर्पय स्वाहा ॥ ११-१३ ॥

**डाकिनीं ब्रह्मणा युक्तां मूले ध्यात्वा पुनः पुनः ।**
**जपेन्मन्त्रं सदायोगी ब्रह्ममन्त्रेण योगवित् ॥ १४ ॥**

मूलाधार में ब्रह्मदेव से युक्त डाकिनी का बारम्बार ध्यान कर योगवेत्ता योगी ब्रह्ममन्त्र के साथ डाकिनी मन्त्र का जप करे ॥ १४ ॥

**ब्रह्ममन्त्रं प्रवक्ष्यामि तज्जापेनापि योगिराट् ।**
**ब्रह्ममन्त्रप्रसादेन जडो योगी न संशयः ॥ १५ ॥**

अब हे शङ्कर ! मैं **ब्रह्ममन्त्र** को कहती हूँ, जिसके जप मात्र से साधक योगिराज बन जाता है । इस ब्रह्ममन्त्र की सिद्धि हो जाने पर जड़ भी योगी हो जाता है इसमें संशय नहीं ॥ १५ ॥

**प्रणवत्रयमुद्धृत्य दीर्घप्रणवयुग्मकम् ।**
**तदन्ते प्रणवत्रीणि ब्रह्म ब्रह्म त्रयं त्रयम् ॥ १६ ॥**
**सर्वसिद्धिपदस्यान्ते पालयेति च मां पदम् ।**
**सत्त्वं गुणो रक्ष रक्ष मायास्वाहापदं जपेत् ॥ १७ ॥**

प्रथम तीन प्रणव ( ॐ ॐ ॐ ), फिर दीर्घ प्रणव दो बार ( आं आं ), फिर उसके अन्त में तीन प्रणव ( ॐ ॐ ॐ ), फिर ब्रह्म पद तीन बार ( ब्रह्म ब्रह्म ब्रह्म ), तत्पश्चात् 'सर्वसिद्धि' पदं 'पालय मां', फिर 'सत्त्वं गुणो रक्षा रक्ष', फिर माया ( ह्रीं ) स्वाहा—इस मन्त्र का जप करे ।

**विमर्श**—ब्रह्ममन्त्र का स्वरूप इस प्रकार है—ॐ ॐ ॐ आं आं ॐ ॐ ॐ ब्रह्म ब्रह्म ब्रह्म सर्वसिद्धिं पालय मां सत्त्वं गुणो रक्ष रक्ष ह्रीं स्वाहा ॥ १६-१७ ॥

**डाकिनीमन्त्रराजञ्च शृणुष्व परमेश्वर ।**
**यज्जप्त्वा डाकिनी वश्या त्रैलोक्यस्थितिपालकाः ॥ १८ ॥**

हे परमेश्वर ! अब डाकिनी मन्त्रराज को सुनिए जिसका जप करने से त्रैलोक्य की स्थिति तथा पालन करने वाली डाकिनी वशीभूत हो जाती है ॥ १८ ॥

**यो जपेत् डाकिनीमन्त्रं चैतन्या कुण्डली झटित् ।**
**अनायासेन सिद्धिः स्यात् परमात्मप्रदर्शनम् ॥ १९ ॥**

जो डाकिनी मन्त्र का जप करता है उसकी कुण्डली शीघ्र ही चैतन्य हो जाती है । उसे अनायास सिद्धि तो प्राप्त होती ही है और परमात्मा का दर्शन भी सुलभ हो जाता है ॥ १९ ॥

मायात्रयं समुद्धृत्य प्रणवैकं ततः परम् ।
डाकिन्यन्ते महाशब्दं डाकिन्यम्बपदं ततः ॥ २० ॥
पुनः प्रणवमुद्धृत्य मायात्रयं ततः परम् ।
मम योगसिद्धिमन्ते साधयेति द्विधापदम् ॥ २१ ॥

**डाकिनी मन्त्रराज**—तीन माया ( ह्रीं ह्रीं ह्रीं ) का उच्चारण कर उसके बाद एक प्रणव ( ॐ ), फिर 'डाकिनि' उसके बाद 'महाडाकिन्यम्ब' पुनः प्रणव ( ॐ ) का उच्चारण फिर तीन माया ( ह्रीं ह्रीं ह्रीं ) फिर 'मम योगसिद्धिं' फिर दो बार साधय ( साधय साधय ) पद यही डाकिनी का मन्त्र है ।

**विमर्श**—मन्त्र का स्वरूप इस प्रकार है—ह्रीं ह्रीं ह्रीं ॐ डाकिनी महाडकिन्यम्ब ॐ ह्रीं ह्रीं ह्रीं मम योगसिद्धिं साधय साधय ॥ २०-२१ ॥

मनुमुद्धृत्य देवेशि जपाद्योगी भवेज्जडः ।
जप्त्वा सम्पूजयेन्मन्त्री पुरश्चरणसिद्धये ॥ २२ ॥

हे देवेश ! इस प्रकार से उद्धार किए गए डाकिनी मन्त्र के जप से जड़ पुरुष भी योगी हो जाता है । जप करने के बाद पुरश्चरण की सिद्धि के लिए मन्त्रज्ञ साधक को डाकिनी का पूजन करना चाहिए ॥ २०-२२ ॥

सर्वत्र चित्तसाम्येन[1] द्रव्यादिविविधानि च ।
पूजयित्वा मूलपद्मे चित्तोपकरणेन च ॥ २३ ॥
ततो मानसजापञ्च स्तोत्रञ्च कालिपावनम्[2]।
पठित्वा योगिराट् भूत्वा वसेत् षट्चक्रवेश्मनि ॥ २४ ॥

मूलाधार पद्म में चित्त को समाहित कर, अनेक प्रकार के द्रव्यों से व अनेक उपकरणों से पूजाकर मानस जाप तथा कालिपावन स्तोत्र का पाठ करना चाहिए । इस प्रकार कालिपावन स्तोत्र का पाठ कर साधक योगिराज बनकर षट्चक्रों के भवन में निवास करता है ॥ २३-२४ ॥

शक्तियुक्तं विधिं यस्तु स्तौति नित्यं महेश्वर।
तस्यैव पालनार्थाय मम यन्त्रं महीतले ॥ २५ ॥

हे महेश्वर ! जो शक्ति ( = ब्रह्माणी ) से युक्त ब्रह्मदेव की स्तुति करता है उसी के पालन के लिए पृथ्वीतल में मेरे यन्त्र हैं ॥ २५ ॥

तत् स्तोत्रं शृणु योगार्थं सावधानावधारय ।
एतत्स्तोत्रप्रसादेन महालयवशो भवेत् ॥ २६ ॥

हे महेश्वर ! अब योगसिद्धि के लिए उस स्तोत्र को सावधान होकर श्रवण कीजिए । इस स्तोत्र के सिद्ध हो जाने पर महाकाल भी वश में हो जाते हैं ॥ २६ ॥

---

१. माल्येन इति—क० ।     २. पारणम् इति—ग० ।

कालिपावन स्तोत्रम्

ब्रह्माणं हंस[१]सङ्घायुतशरणवदावाहनं देववक्त्रं
विद्यादानैकहेतुं [२]तिमिचरनयनाग्नीन्दुफुल्लारविन्दम् ।
वागीशं वाग्गतिस्थं[३] मतिमतविमलं बालार्कं चारुवर्णं
डाकिन्यालिङ्गितं[४] तं सुरनरवरदं भावयेन्मूलपद्मे ॥ २७ ॥

मूलपद्म में देवता तथा मनुष्यों को वरदान देने वाले डाकिनी शक्ति से आलिङ्गित उन ब्रह्मदेव का ध्यान करना चाहिए । जो दश हजार हंस संघों से युक्त वाहन से युक्त शरण (विमान) वाले हैं, देवताओं के मुख हैं, विद्या दान में मात्र एक हेतु हैं, राक्षसों के नेत्रों को जलाने के लिए अग्नि हैं, फूले हुए कमल पर चन्द्रमा के समान, वागीश, वाणी में गति देने वाले, मतिमानों में सर्वश्रेष्ठ बाल सूर्य के समान अत्यन्त सुन्दर अरुण वर्ण वाले हैं ॥ २७ ॥

नित्यां ब्रह्मपरायणां सुखमयीं[५] ध्यायेन्मुदा डाकिनीं
रक्तां गच्छविमोहिनीं कुलपथे ज्ञानाकुलज्ञानिनीम् ।
मूलाम्भोरुहमध्यदेशनिकटे[६] भूविम्बमध्ये प्रभां
हेतुस्थां गतिमोहिनीं श्रुतिभुजां विद्यां भवाह्लादिनीम् ॥ २८ ॥
विद्यावास्तवमालया गलतलप्रालम्बशोभाकरां
ध्यात्वा मूलनिकेतने निजकुले यः स्तौति भक्त्या सुधीः ।
नानाकारविकारसारकिरणां[७] कर्त्रीं विधो योगिनां[८]
मुख्यां मुख्यजनस्थितां स्थितिमतिं सत्त्वाश्रितामाश्रये ॥ २९ ॥

नित्य स्वरूपा, ब्रह्म में परायणा, सुखमयी, डाकिनी का मूलपद्म में, प्रसन्नता पूर्वक ध्यान करना चाहिए । जो रक्त वर्ण वाली हैं, संसार को मोहने वाली हैं, कुल पथ में ज्ञान से अकुल लोगों को ज्ञान देने वाली है, भू विम्ब के मध्य में, मूलकमल के मध्य देश के निकट जिनकी आभा फैली हुई है, जो सभी हेतुओं में स्थित हैं, गति (काल) को मोहने वाली, वेद वेत्ताओं की विद्या तथा भाव में आह्लाद प्रदान करने वाली हैं । मूलाधार में विद्या रूप वस्तु माला से गले के तल भाग में लटकते रहने के कारण शोभा सम्पन्न जिस डाकिनी का ध्यान कर सुधी साधक भक्ति पूर्वक अपने कुल प्रदेश में स्तुति करता है, जो अनेक प्रकार के आकार विकार के सार से संयुक्त किरणों वाली है, सबकी विधात्री हैं, योगियों की विद्या हैं, मुख्य हैं, मुख्यजनों में निवास करने वाली हैं, सर्वत्र स्थित रहने वाली हैं, ऐसी सत्त्वाश्रित भगवती डाकिनी का मैं आश्रय लेता हूँ ॥ २८-२९ ॥

---

१. शववरदवाहनं वेदवक्त्रम् इति—क० । २. तिमिरहन इति—ग० ।
३. वाग्दति संमति इति—ग० ।
४. डाकिन्यालिङ्गितं तं स्वरनवजप्तं भावयेन्मूलपद्मम् इति—ग० ।
५. त्रिनयनाम् इति—ग० ।
६. मूले योऽम्भोरुहः कमलम्, तस्य मध्यदेशस्तस्य निकटे ।
७. करुणाम् इति—ग० । ८. मार्गिनीम् इति—ग० ।

या देवी नवडाकिनी स्वरमणी विज्ञानिनी मोहिनी
मां पातु प्रियकामिनी भवविधेरानन्दसिन्धूद्भवा ।
मे मूलं गुणभासिनी प्रचयतु श्रीः कीर्तिचक्रं हि मां
नित्या सिद्धिगुणोदया सुरदया श्रीसंज्ञया मोहिता ॥ ३० ॥

जो नवडाकिनी देवी हैं, स्वयं में रमण करने वाली हैं, विज्ञान से संयुक्त मोहिनी हैं, प्रिय कामिनी हैं तथा शङ्कर एवं ब्रह्मदेव के आनन्द रूप सिन्धु को उत्पन्न करने वाली हैं वह डाकिनी भगवती हमारी रक्षा करें । वह गुणभासिनी मेरे मूल को अधिक से अधिक एकत्रित करें । मुझे श्री तथा कीर्ति समूह प्रदान करें । जो नित्य हैं सिद्धगुणों का जिनमें उदय है, जो देवताओं के लिए कृपा स्वरूपा हैं और जो अपनी श्री संज्ञा से सबको मोहित करने वाली हैं वह नवडाकिनी भगवती मेरी रक्षा करें ॥ ३० ॥

तन्मध्ये परमाकला कुलफला बाणप्रकाण्डाकरा[1]
राका[2] राशषसादशा शशिघटा लोलामला कोमला[3] ।
सा माता नवमालिनी मम कुलं मूलाम्बुजं सर्वदा
सा देवी लवराकिणी कलिफलोल्लासैकबीजान्तरा ॥ ३१ ॥

जो लवराकिणी देवी के नाम से प्रसिद्ध हैं तथा कलिकाल में फलों को उल्लसित करने वाली बीज स्वरूपा हैं, जो मूलाधार में परमा कला, कुलफला तथा वाण प्रकाण्ड की आकर हैं । राका ( शरत्पूर्णिमा ) व 'श ष स' दशा वाली हैं । शशिघटा, लोला, अमला तथा कोमला हैं । वह नवीन माला धारण करने वाली कुण्डलिनी माता हमारे सर्वस्व भूत मूलाधार स्थित कमल की रक्षा करें ॥ ३१ ॥

धात्री धैर्यवती सती मधुमती विद्यावती भारती
कल्याणी कुलकन्यकाधरनरारूपा हि सूक्ष्मास्पदा ।
मोक्षस्था स्थितिपूजिता स्थितिगता माता शुभा[4] योगिनां
नौमि श्रीभविकाशयां शमनगां गीतोद्गतां गोपनाम् ॥ ३२ ॥

जो धात्री, धैर्यवती, सती, मधुमती, विद्यावती, भारती, कल्याणी, कुलकन्यका, स्त्री रूप धारण करने वाली, सूक्ष्म आस्पद वाली, मोक्ष में स्थित रहने वाली, अपनी स्थिति से पूजित, स्थिति में रहने वाली एवं योगियों की कल्याणकारिणी माता हैं, मैं उन सबका कल्याण करने वाली, शान्ति में निवास करने वाली, गीत से उद्गत, सर्वथा गोपनीय उन भगवती को नमस्कार करता हूँ ॥ ३२ ॥

कल्केशीं कुलपण्डितां कुलपथग्रन्थिक्रियाच्छेदिनीं
नित्यां[5] तां गुणपण्डितां प्रचपलां मालाशतार्कारुणाम्[6] ।

---

१. रत्नप्रकारान्तरा इति—ग० । २. शका राशषसादशा इति—ग० ।
३. कोमना इति—ग० । ४. सुता इति—ग० ।
५. नित्याशम् इति—ग० । ६. मालायां ये शतसंख्यका अर्काः सूर्याः, तैः अरुणा, ताम् ।

**विद्यां चण्डगुणोदयां समुदयां त्रैलोक्यरक्षाक्षरां**
**ब्रह्मज्ञाननिवासिनीं [1]सितशुभानन्दैकबीजोद्गताम् [2] ॥ ३३ ॥**

कल्केशी, कुलपण्डिता, कुलपथ में विद्यमान् ग्रन्थियों को क्रिया से च्छेदन करने वाली, नित्या, गुणपण्डिता, प्रकृष्ट चपल स्वभाव वाली, शतबाल सूर्य की माला के समान अरुण वर्ण वाली, महाविद्या, प्रकृष्ट गुणों से उद्दीप्त रहने वाली, सब का उदय करने वाली, त्रैलोक्य की रक्षा में अक्षर रूप से निरत रहने वाली, ब्रह्मज्ञान में निरन्तर निवास करने वाली, सितवर्णा शुभानन्द रूप एक बीज से उत्पन्न होने वाली भगवती को मैं नमस्कार करता हूँ ॥ ३३ ॥

**गीतार्थानुभवप्रियां सकलया [3] सिद्धप्रभापाटलाम् ।**
**कामाख्यां प्रभजामि जन्मनिलयां हेतुप्रियां सत्क्रियाम् ।**
**सिद्धौ साधनतत्परं परतरं साकाररूपायिताम् ॥ ३४ ॥**

गीत के अर्थ के अनुभव से प्रेम करने वाली, कला से युक्त, सिद्ध प्रभा से अरुण विग्रह वाली, सत्क्रिया स्वरूपा, जन्म की निलयरूप, सभी हेतुओं से प्रेम करने वाली, सिद्धि में साधन रूप से तत्पर रहने वाली, परतर तत्त्व से साकाररूप धारण करने वाली कामाख्या का मैं भजन करता हूँ ॥ ३४ ॥

यहाँ तक डाकिनी की स्तुति कही गई । अब ब्रह्मदेव की स्तुति कहते हैं—

**ब्रह्मज्ञानं निदानं गुणनिधिनयनं कारणानन्दयानम् ।**
**ब्रह्माणं ब्रह्मबीजं रजनिजयजनं यागकार्यानुरागम् ॥ ३५ ॥**

ब्रह्मज्ञान, सबके निदान, गुणों की निधियों का आनयन करने वाले, सबके कारण स्वरूप, आनन्द से चलने वाले, ब्रह्मबीज ( अ ) रूप रजनि में जायमान महाशक्ति का यजन करने वाले, याग कार्यों में अनुराग करने वाले ब्रह्मदेव का मैं भजन करता हूँ ॥ ३५ ॥

**शोकातीतं विनीतं नरजलवचनं सर्वविद्याविधिज्ञम् ।**
**सारात् सारं तरुं तं सकलतिमिरहं [4] हंसगं पूजयामि ॥ ३६ ॥**

शोक से सर्वथा अतीत, विनय युक्त, नर से उत्पन्न हुए जल में नारायण की स्तुति करने वाले, सम्पूर्ण विद्याओं के विधानवेत्ता, सार से भी सार, अंशों से परिपूर्ण, तरु स्वरूप ( फल फूल देने के कारण वृक्षरूपी ), समस्त तिमिर का विनाश करने वाले तथा हंस के समान गमन करने वाले ब्रह्मदेव का मैं यजन करता हूँ ॥ ३६ ॥

**एतत्सम्बन्धमार्गं नवनवदलगं [5] वेदवेदाङ्गविज्ञम् ।**
**मूलाम्भोजप्रकाशं तरुणरविशशिप्रोन्नताकारसारम् [6] ॥ ३७ ॥**

शक्ति से सम्बन्ध युक्त मार्ग वाले, नवीन-नवीन कमलदल रूप पद से गमन करने

---

१. मितसुता इति—क० । २. बीजामताम् इति—ग० ।
३. सकलसिद्धान्त इति—क० । ४. तिमिहरहरम् इति—ग० ।
५. नवनववदनं वेदवेदान्तविज्ञम् इति—क० । ६. प्रोल्लता इति—क० ।

वाले, वेद वेदाङ्गवेत्ता, मूलाधार स्थित कमल के प्रकाशभूत प्रचण्ड सूर्य तथा चन्द्रमा के प्रोन्नत आकार में सारभूत ब्रह्मदेव का मैं यजन करता हूँ ॥ ३७ ॥

**भावाख्यं[1] भावसिद्धं जयजयदविधिं ध्यानगम्यं पुराणम् ।**
**पाराख्यं पारणायं परजनजनितं ब्रह्मरूपं भजामि ॥ ३८ ॥**

भाव नाम से अभिहित होने वाले, भाव से सिद्ध, जय को भी जय प्रदान करने वाले, ध्यान गम्य, पुराण पुरुष, पार नाम वाले, सबको पार करने वाले एवं परब्रह्म से उत्पन्न उन ब्रह्मरूप देव का मैं भजन करता हूँ ॥ ३८ ॥

**डाकिनीसहितं ब्रह्मध्यानं कृत्वा पठेत् स्तवम् ।**
**पठनाद् धारणान्मन्त्री योगिनां सङ्गतिर्भवेत् ॥ ३९ ॥**
**एतत्पठनमात्रेण महापातकनाशनम् ।**
**एकरूपं जगन्नाथं[2] विशालनयनाम्बुजम् ॥ ४० ॥**
**एवं[3] ध्यात्वा पठेत् स्तोत्रं पठित्वा योगिराड् भवेत् ॥ ४१ ॥**

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रसिद्धिसाधने भैरवभैरवीसंवादे डाकिनी स्तोत्रं नाम त्रिंशः[4] पटलः ॥ ३० ॥**



डाकिनी के साथ ब्रह्मदेव का ध्यान कर इस स्तोत्र का साधक पाठ करे तो इसके पठन से एवं इसके धारण से उसे योगियों का साथ प्राप्त हो जाता है । इस स्तोत्र के पाठ मात्र से महापातकों का नाश हो जाता है, मात्र एक ही रूप में विद्यमान् विशाल नेत्र कमल वाले जगन्नाथ का इस प्रकार ध्यान कर स्तोत्र का पाठ करे, तो साधक योगिराज बन जाता है ॥ ३९-४१ ॥

**॥ श्रीरुद्रयामल के उत्तरतन्त्र के महातन्त्रोद्दीपन में सिद्धमन्त्रप्रकरण में षट्चक्रसिद्धि-साधन में भैरव-भैरवी संवाद में डाकिनी स्तोत्र की डॉ० सुधाकर मालवीय कृत तीसवें पटल की हिन्दी पूर्ण हुई ॥ ३० ॥**



---

१. भावसिन्धुम् इति—क० । २. पश्यतीह स तनः परमो भवेत् इति—क० ।
३. बालरूपं सदा ध्यायेत् ब्रह्माणं तेजसा कुलम् । डाकिनीशक्तिसहितं परमात्मानमीश्वरम् ॥
चर्तुमुखं महाकायं वनमालाविभूषितम् । नवीनं नवरूपाढ्यं लोकानामभिलाषदम् ॥
चतुर्भुजं महापुंसगामिनं नित्ययोगिनम् । स्रष्टारं तारकं भव्यं भगमालावृतं विभुम् ॥
सोमसूर्यप्रतीकाशं कुण्डलीशक्तिसेवकम् । पृथ्वीशादिबीजाङ्कविशालनयनाम्बुजम् ॥
इति—क० ।
४. द्वात्रिंश इति—क० ।

# अथैकत्रिंशः पटलः

**आनन्दभैरवी उवाच**

**अथ नाथ प्रवक्ष्यामि भेदिन्याः साधनं परम् ।**
**येन साधनमात्रेण योगी स्यात् कलिकालहा[1] ॥ १ ॥**

**आनन्दभैरवी ने कहा**—हे नाथ ! अब भेदिनी के साधन का सर्वोत्कृष्ट उपाय कहती हूँ, जिसके साधन मात्र से साधक कलिकाल में काल को जीतकर योगी बन जाता है ॥ १ ॥

**कलिकाले महायोगं साधय त्वं महाप्रभो ।**
**यदि न साधितः कालः स कालो देहभक्षकः ॥ २ ॥**
**भेदिनीसाधनेनैव ग्रन्थीनां भेदनं भवेत् ।**
**डाकिनीं हृदये ध्यायेत् परमानन्दरूपिणीम् ॥ ३ ॥**

हे महाप्रभो ! अब इस कलिकाल में आप भी इस महान् योगसाधना को कीजिये । यदि काल की साधना नहीं की गई तो वह काल देह का भक्षक बन जाता है । भेदिनी के सिद्ध कर लेने पर सभी ग्रन्थियाँ अपने आप खुल जाती हैं । भेदिनीसाधन के लिए परमानन्द स्वरूपा डाकिनी का हृदय में ध्यान करना चाहिए ॥ २-३ ॥

**अष्टहस्तां विशालाक्षीं शशाङ्कावयवाङ्किताम् ।**
**त्रैलोक्यमोहिनीं विद्यां भयदां वरदां सताम् ॥ ४ ॥**

डाकिनी का विग्रह आठ हाथ से युक्त है । नेत्र विशाल, शरीर के समस्त अङ्ग चन्द्रमा के समान मनोहर हैं । ये त्रैलोक्य का मोहन करने वाली महाविद्या हैं । दुष्टों को भय प्रदान करती हैं तथा सज्जनों को वर देने वाली हैं ॥ ४ ॥

**शुक्लवर्णां त्रिनयनां चारुरूपमनोहराम् ।**
**ध्यात्वा मूलाम्बुजे योगी पाद्याद्यैः परिपूजयेत् ॥ ५ ॥**

इनके शरीर का वर्ण शुभ्र है, जिसमें तीन नेत्र हैं तथा अपने सुन्दर रूप से ये सब का मन मोहित करती हैं । इस प्रकार डाकिनी के स्वरूप का मूलाधार में ध्यान कर साधक को पाद्यादि उपचारों से उनकी पूजा करनी चाहिए ॥ ५ ॥

**तत्र मनोलयं कृत्वा योगी भवति भूतले ।**
**यदा मनोलयं याति तदा तस्याः स्तवं पठेत् ॥ ६ ॥**

---

१. कलिकालजालहः इति—ग० ।

स्तोत्रं पठनमात्रेण सर्वसत्त्वाश्रितो भवेत् ।
ध्यानमाकृत्य प्रपठेत् सर्वसिद्धिमयो भवेत् ॥ ७ ॥

उन डाकिनी में अपना मन लीन कर साधक इस पृथ्वी में योगी बन जाता है । जब मन लीन हो जावे तब इस स्तव का पाठ करना चाहिए । स्तोत्र के पाठ मात्र से उसमें सत्त्व (बल, तेज, प्राण) का आश्रय हो जाता है, ध्यान लगाकर पढ़ने से वह साधक सर्व सिद्धिमय बन जाता है ॥ ६-७ ॥

या भेदिनी सकलग्रन्थिविनाशनानां
धर्मान्तरे सकलशत्रुविनाशनस्था ।
सा मे सदा प्रतिदिनं परिपातु[1] देहं
कालात्मिका[2] भगवती शुभकार्यकर्त्री[3] ॥ ८ ॥

जो सम्पूर्ण ग्रन्थियों का विनाश करने के कारण भेदिनी कही जाती हैं, धर्म न करने वाले समस्त शत्रुओं के विनाश में स्थित रहने वाली हैं ऐसी कालात्मिका एवं शुभकार्यकर्त्री भगवती प्रतिदिन सभी स्थानों में हमारे देह की रक्षा करें ॥ ८ ॥

या कान्ता करुणामयी त्रिजगतामानन्दसिद्धिस्थिता
नित्या[4] सा परिपालिका कुलकला नीला[5]मलाकोमला ।
वाणी सिद्धिकरी कृतार्थनिगडे शीघ्रोदया शाङ्करी
संज्ञाभेदनभेदिका शुभकरी[6] वेदान्तसिद्धान्तदा ॥ ९ ॥
वाणी बाला कुलाला कलकलचरणा यामलासंख्यमाला ।
हेलाभालान्तराला कुलकमलचला चञ्चला देहकाला ॥ १० ॥

जो अत्यन्त सुन्दर हैं, करुणामयी हैं तथा तीनों लोकों को आनन्द देने के लिए उद्यत रहती हैं । जो नित्य हैं, परिपालन करने वाली हैं, कुलमार्ग की कला, नीला, अमला तथा कोमला हैं, वाणी हैं, सिद्धि करने वाली, कृतार्थ करने के लिए निगड (बन्धन) में शीघ्र उदय हो जाती हैं, सबकी कल्याणकारिणी शुभकर्त्री हैं, वेदान्त की सिद्धि प्रदान करती हैं, जिन भगवती की भेदन भेदिका (भेदन करने योग्य ग्रन्थियों का भेदन करने वाली) संज्ञा है । जो वाणी हैं, बाला तथा सृष्टि करने के कारण कुलाला कही जाती हैं, जिनके चरण कमल में प्रणाम करने वाले देवताओं के चित्त में कलकल निनाद होते रहते हैं, भजन रात्रि में भजन किए जाने के कारण जो यामला हैं तथा जो असंख्यमाला से विभूषित हैं, जिनके भाल का अन्तराल (अन्तर) हेला (शृङ्गार विशेष) से युक्त है, जो कुलरूपी कमल में गतिशील रहती हैं, जो चञ्चला हैं एवं देह से काले वर्ण की हैं ॥ ९-१० ॥

भेदाख्या भेद्यभेदा[7] वरनदनिनदा नादबिन्दुप्रकाशा ।
सा मे शीर्षं ललाटं मुखहृदयकटिं मुख्यपद्मं प्रपायात् ॥ ११ ॥

---

१. प्रतिदिनम् इति—ग० । २. कालार्थिका इति—ग० । काल आत्मा यस्याः सा।
३. सुत इति—ग० । ४. स्थित्या इति—ग० ।
५. कला इति—ग० । ६. सुवरदा इति—ग० । ७. भेदभेद्या इति—ग० ।

जो भेद इस आख्या वाली हैं भेदन करने योग्य ग्रन्थियों का भेदन करने वाली है श्रेष्ठ शब्दों से शब्दायमान हैं, नाद तथा बिन्दु जिनके प्रकाश है, वह भगवती भेदिनी हमारे शिर, ललाट, मुख, हृदय, कटि तथा मूलाधारादि में स्थित मुख्य मुख्य पद्मों की सुरक्षा करें ॥ ११ ॥

**काञ्चीपीठप्रकाशा निजपदविलया योगिनीनेत्रवक्षा ।**
**नातियोगप्रकाश्या[1] चरुशतघटिता घोरसंहारकारा ॥ १२ ॥**
**ब्रह्मानन्दस्वरूपा विगतिमतिहरा हीरका भाति नेत्रा ।**
**हारश्रेण्यादिभूषा शशिशतकिरणा पातु मां भेद्यदेहम् ॥ १३ ॥**

काञ्चीपीठ को प्रकाशित करने वाली, अपने पद में सबका विलय करने वाली हैं, योगिनियों की नेत्र तथा वक्षःस्थल ( हृदय ) हैं, जो बिना योग के ही प्रकाश उत्पन्न करती हैं, जो सैकड़ों चरुओं ( यज्ञार्थ निर्मित पायस ) में विराजमान रहती हैं तथा घोर संहार के लिए आकार धारण करने वाली हैं, जो ब्रह्म के आनन्द की स्वरूपा हैं, भले लोगों की विमार्ग में जाने वाली मति का हरण करती हैं । जिनके नेत्र हीरे के समान चमकीले हैं, जो हार श्रेणी आदि आभूषणों से विभूषित हैं, सैकड़ों चन्द्रमा के समान जिनके शरीर की किरणें हैं ऐसी भगवती मेरे भेदन करने योग्य देह की रक्षा करें ॥ १२-१३ ॥

**या भेदिनी सकलपापरिपुप्रियाणां स्वर्गापवर्गविरला बगलामुखी सा ।**
**मे पातु देहघटितं सकलेप्सितार्थं[2] भावप्रभावपटला सहदेहसंस्था ॥ १४ ॥**

जो पाप रूपी शत्रु से प्रेम करने वाले दुष्टों का भेदन करती हैं जो स्वर्ग तथा अपवर्ग की प्रेरक हैं, भाव के प्रभाव में रहने वाली, देह के साथ ही रहने वाली ऐसी बगला भगवती हमारे शरीर में घटित होने वाले सम्पूर्ण मनोभिलाषा को पूर्ण कर मेरी रक्षा करें ॥ १४ ॥

**कामाश्रिता विविधदोषविनाशलेषा**
**सौन्दर्यवेशकरणी क्रतुकर्मरक्षा ।**
**दीक्षा सतां मतिमतां निजयोगदात्री**
**सा मे सदा सकलदेहमिहाशु[3] भेद्या ॥ १५ ॥**

काम ने जिनका आश्रय लिया है, जो लेशमात्र में अपने भक्तों के विविध दोषों को विनष्ट कर देती हैं, सौन्दर्य वेश प्रदान करती हैं, यज्ञकर्म की रक्षा करती हैं, दीक्षा स्वरूपा हैं, सज्जनों तथा विद्वानों को अपना योग प्रदान करती हैं । वह भगवती सदैव हमारे शरीर के ग्रन्थियों का शीघ्र भेदन करें ॥ १५ ॥

**कान्ता शान्तगुणोदया मम धनं देहस्य नित्याशया**
**पायात् श्रीकुलदैवतस्य जयदा या योगसारं परम् ।**
**साक्षादीश्वरपूजिता समुचिता चित्तार्थिता चार्थिता**
**यन्मे घोरतरे जये निजकुले कालाकुले व्याकुले ॥ १६ ॥**

---

१. नेति इति—ग० ।
२. सकलेन्द्रियार्थम् इति—ग० ।
३. मिहाश्वमेध्या इति—ग० ।

जो कमनीय गुणों वाली हैं, शान्त गुण को उदय करने वाली हैं, नित्याशाया, श्री कुलदेवता के योग प्रदान करने वाली हैं, ऐसी भगवती हमारे शरीर के धन तथा उत्कृष्ट योगसार की रक्षा करें। जो साक्षात् ईश्वर द्वारा पूजिता हैं जो सब प्रकार से उचिता हैं, चित्त की सङ्कल्पस्वरूपा हैं, धनादि ऐश्वर्य वाली हैं, वे काल से आकुल हुए व्याकुल रहने वाले मेरे कुल तथा घोरतर विपत्ति एवं विजय में हमारी रक्षा करें ॥ १६ ॥

**भेदाभेदविवर्जिता सुरवरश्रीहस्तपद्मार्चिते**
**मे मेढ्रं खलु लिङ्ग मूलकमलं कालप्रिया पातु सा।**
**सप्तस्वर्गतलं ममैव वपुषा मिथ्यावमानापहा**
**हेडम्बासुरसुन्दर[१] प्रियवती हेमावती भारती ॥ १७ ॥**

आप में भेद अभेद कुछ भी नहीं हैं (अर्थात् आप सबकी हैं)। हे देवेन्द्र ! इन्द्र के हस्त कमलों से अर्चना की जाने वाली भगवती ! ऐसी कालप्रिया आप हमारे मेढ्र तथा लिङ्ग मूल में स्थित कमल की रक्षा करें। इतना ही नहीं, मेरे शरीर से होने वाले मिथ्या अपमान को हरण करने वाली, हेडम्बनामक असुर की सुन्दर प्रिया, हेमावती भारती ! आप मुझे सप्त स्वर्ग का तल प्रदान कीजिए ॥ १७ ॥

**एतत् स्तोत्रं पठित्वा यः स्तौति मूलाम्बुजे च माम्।**
**स एव योगमाप्नोति स भवेद् योगिवल्लभः ॥ १८ ॥**
**मनः स्थिरं भवेत् क्षिप्रं राजत्वं लभते झटित्।**
**अनायासेन सिद्धिः स्यात् तस्य वायुर्वशो भवेत् ॥ १९ ॥**

जो इस स्तोत्र का पाठ कर मूलाधार स्थित कमल में मुझ कुण्डलिनी की स्तुति करते हैं, वे ही योग प्राप्त करते हैं तथा योगिवल्लभ होते हैं। उसका मन शीघ्र ही स्थिर हो जाता है। वह शीघ्र ही राजत्व प्राप्त करता है, उसे अनायास सिद्धि प्राप्त होती है तथा वायु उसके वश में हो जाता है ॥ १८-१९ ॥

**योगिनीनां दर्शनं हि अनायासेन लभ्यते।**
**भावसिन्धुयुतो भूत्वा विचरेदमरो यथा ॥ २० ॥**

उसे योगिनियों के दर्शन अकस्मात् होते हैं, वह भगवती के भाव सिन्धु में स्नान करता हुआ देवताओं के समान विचरण करता है ॥ २० ॥

**मूलपद्मे वसेद्देवी मूलाम्भोजप्रकाशिनी।**
**मालती मालवी मौना मालिनी च मनोहरा ॥ २१ ॥**
**मानसी[२] मदना मान्या मुद्रामैथुनतत्परा।**
**मेरुस्था माद्यकुसुमा मण्डिता मण्डलस्थिता ॥ २२ ॥**

---

१. हेतुम्बाम्बुदसुन्दर इति—क०।

२. मणिमन्त्रिमनक्षेत्रा मारणामारणापहा। मलहा मङ्गला माला मीनस्था मांसमोहिनी। मदिराष्टादशभुजा मोध्या मेध्या मनोहरा ॥ इति क० अ० पाठः।

**मनःस्थैर्यकरी देवी भाव्यते यैः कुमारकैः ।**
**अकस्मात् सिद्धिमाप्नोति कालेन परमेश्वर[१] ॥ २३ ॥**

मूल कमल को प्रकाशित करने वाली भगवती मूलाधार के कमल में निवास करती हैं। वही मालती, मालवी, मौना, मालिनी, मनोहरा, मानसी, मदना, मान्या, मुद्रा तथा मैथुन में सदा तत्पर, मेरु पर निवास करने वाली, आद्य कुसुमा, मण्डिता मण्डलस्थिता तथा मनः स्थैर्यकरी हैं। ऐसी भगवती का जो कुमार ध्यान करते हैं, हे परमेश्वर ! वह कुछ ही काल में अकस्मात् सिद्धि प्राप्त कर लेते हैं ॥ २१-२३ ॥

**अथ वक्ष्ये महादेव्याः छेदिन्याः स्तवमुत्तमम्[२]।**
**छेत्ता[३] त्वं सर्वग्रन्थीनां मत्प्रसादाद् यतीश्वरः ॥ २४ ॥**
**यत्प्रसादादनन्तो हि योगी संसारमण्डले ॥ २५ ॥**

हे महादेव ! अब इसके बाद महादेवी छेदिनी का उत्तम स्तोत्र कहती हूँ जिसके प्रसन्न होने के कारण ही आप सभी ग्रन्थियों के छेदन करने वाले यतीश्वर बन गए हैं। इतना ही नहीं जिसके प्रसन्न होने से भगवान् अनन्त योगी बन गए ॥ २३-२५ ॥

**छेदिनीस्तवम्**

**देशानन्दा सकलगुणदा छेदिनी छेदनस्था**
**हव्यस्था सा विभवनिरता या निधिस्था निशायाम् ।**
**सा मे नित्यं कुलकमलगा गोपनीया विधिज्ञा**
**श्रीवागेशी[४] गगनवसना सर्वयोगं प्रपायात् ॥ २६ ॥**

जो छेदन करने वाली भगवती छेदिनी, समस्त शरीर रूपी देश को आनन्द देती हैं, सम्पूर्ण गुण प्रदान करती हैं, हवि में स्थित रहने वाली हैं तथा रात्रि के समय निधि में निवास कर साधक को विभव प्रदान करती हैं ऐसी मूलाधार कमल में सर्वथा गोपनीया, विधिज्ञा, गगनवसना श्री वागेशी हमारे सभी योगों की प्रकृष्ट रूप से रक्षा करे ॥ २६ ॥

**कामानन्दा मदननिरता[५] भाविता भावसिन्धौ**
**कामानन्दोद्भवरसवती[६] योगियोगस्थधात्री[७] ।**
**देहक्लेदे निरसनरता ... ... ... ... ... ...**
**सा मे धौतं प्रकुरु वपुषो धर्मपुञ्जं प्रपायात् ॥ २७ ॥**

जो काम से आनन्द देने वाली, काम में निरत, भावसिन्धु में ध्यान के योग्य, काम के आनन्द से उत्पन्न रस से रसवती, योगियों के योग में रह कर उनका पालन करने वाली, शरीर की खिन्नता को दूर करने में रत देवी हमारे शरीर को स्वच्छ बनावें तथा हमारे धर्म पुञ्ज की रक्षा करें ॥ २७ ॥

---

१. परमाश्रव इति—ग० । २. सुरसत्तम इति—ग० ।
३. छित्ता इति—ग० । ४. श्रीपालेशी इति—ग० ।
५. निवृत्ता इति—ग० । ६. वसनरता इति—ग० । ७. धात्रि इति—ग० ।

कालाकालं कमलकलिकावासिनी कालिका मे
ग्रन्थिच्छेदं स्थिरगृहगता गात्रनाडीपथस्था ।
वक्त्राम्भोजे वचनमधुरं धारयन्ती जनानां
सा मे रन्ध्रं मम रुचिरतनोः पातु पञ्चानना या ॥ २८ ॥

**कालिका स्तुति**—काल एवं अकाल में कमल कलिका में निवास करने वाली तथा शरीर के प्रत्येक नाडी पथ में स्थित रहने वाली कालिका भगवती गृह में स्थिरता प्राप्तकर मेरी ग्रन्थियों का विच्छेद करें। जो मनुष्यों के मुख कमल में मधुर वचन धारण कराती हैं, जो पाँच मुखों वाली हैं, ऐसी कालिका भगवती मेरे सुन्दर शरीर के प्रत्येक रन्ध्रों की रक्षा करें ॥ २८ ॥

योगाङ्गस्था स्थितिलयविभवा लोमकूपाम्बुजस्था
माता गौरी गिरिपतिसुता भासुरास्त्रप्रदीप्ता ।
सम्पायान्मे हृदयविवरं छेदिनीमूलपूरे
कैलासस्था मममनुगिरिं पातु रुद्रप्रसादा[1] ॥ २९ ॥

योग के अङ्ग में निवास करने वाली, सृष्टि की स्थिति, लय तथा विभव से प्रकाशित, रोमकूप के कमल में निवास करने वाली, भासुर एवं प्रदीप्त हिमालय की कन्या माता गौरीरूप से कैलास पर निवास करने वाली, रुद्र का प्रसाद प्राप्त करने वाली ऐसी छेदिनी भगवती मेरे हृदय विवर की तथा मूलाधार चक्र में मेरे मन्त्र के शब्दों की रक्षा करें ॥ २९ ॥

नादान्तःस्था [2] मनगुणधरणासन्नसिद्धान्तपारा
भोगानन्दा भगनगबिले काशयन्ती जनानाम् ।
विद्याविद्या विविधगगना छेदिनी छन्नरूपा
सा सर्वान्तःकरणनिलया लाकिनी प्रेमभावा ॥ ३० ॥

**लाकिनी स्तुति**—नाद के भीतर रहने वाली, मन के गुणों को धारण करने वाली, (कुल) सिद्धान्त में आसन्न लोगों को पार लगाने वाली, भोग में आनन्द प्राप्त करने वाली, भगरूपी पर्वत के विल में मनुष्यों को प्रकाश देने वाली, विद्या, अविद्या, स्वरूपा, अनेक आकाशों वाली, ऐसी प्रच्छन्नरूपा छेदिनी तथा सभी के अन्तःकरण में गुप्त रूप से निवास करने वाली प्रेमस्वरूपा लाकिनी हमारी रक्षा करें ॥ ३० ॥

योगं स्वर्गेऽर्पयसि मनसि प्रेमभावं परेशे
या या यात्रा त्रिविधकरणा कारणा सर्वजन्तोः ।
माता ज्ञात्री गणेशे गृहिगणसदया सर्वकर्त्री मनो मे
रक्षा रक्षाक्षरगतकला [3] केवला निष्कला या ॥ ३१ ॥

जो स्वर्ग में जाने वालों को योग अर्पित करती हैं, परमेश्वर में लगाने के लिए साधकों के मन में प्रेम उत्पन्न करती हैं, जो यात्रा तत्स्वरूपा, त्रिगुणमयी, सभी जन्तुओं की उत्पत्ति की कारणभूता, जो गणेश की माता तथा उनकी ज्ञात्री हैं, गृहिणी जनों पर दया

---

१. फेरुप्रणादा इति—ग० । २. धरा सत्त्व इति—क० । ३. गणा इति—ग० ।

प्रदर्शित करती हैं तथा सबकी कर्त्री हैं ऐसी अक्षरगत कला वाली केवल निष्कला भगवती मेरे मन की रक्षा करें, रक्षा करें ॥ ३१ ॥

**सा योगेन्द्रा समवतु मुदा मे गुदं कुण्डलिन्यां**
**जह्नोः[१] कन्या कमलनिलया[२] राकिणी प्रेमभावान् ।**
**मोक्षप्राणान् तपनरहिता पातु मे वेदवक्त्रा**
**सिद्धा मूलाम्बुजदलगता पावनी पातु तुण्डम् ॥ ३२ ॥**

**राकिणी स्तुति**—वह योगेन्द्रा प्रसन्न होकर कुण्डलिनी में मेरे गुद की रक्षा करें, कमल में निवास करने वाली जह्नुकन्या राकिणी प्रेमभावों की रक्षा करें, वेदरूपी मुखों वाली, तपन ( दुःख ) से रहित भगवती मोक्ष केलिए मेरे प्राणों की रक्षा करें तथा मूलाधार के कमल दल पर निवास करने वाली पावनी सिद्धा मेरे तुण्ड ( ओष्ठाधर भाग ) की रक्षा करें ॥ ३२ ॥

**हेरम्बाज्ञा प्रलयघटिता काकिनी क्रोधरूपा ॥ ३३ ॥**
**यदि भजति कुलीनः[३] कामिनीं क्रोधविद्यां**
**स भवति परयोगी छेदिनीस्तोत्रपाठात् ।**
**सकलदुरितनाशः क्षालनादिप्रसिद्धिः**
**सकलजनवशः स्यात् तस्य नित्यं सुराज्यम् ॥ ३४ ॥**

हेरम्ब ( गणपति ) की आज्ञा स्वरूप प्रलय करने वाली क्रोधरूप काकिनी कही गई हैं । उत्तम कुल में उत्पन्न हुआ साधक यदि इन क्रोध विद्या स्वरूपा, काकिनी, कामिनी का भजन करें तो वह उत्कृष्ट योगी हो जाता है । छेदिनी स्तोत्र के पाठ से साधक के समस्त पापों का नाश हो जाता है । नेती, धौती तथा क्षालनादि क्रियायें सिद्ध हो जाती हैं । ऐसे साधक के वश में सम्पूर्ण चराचर जगत् हो जाता है । उसके लिए नित्य सर्वत्र सुन्दर राज्य है ॥ ३४ ॥

**एतत् स्तोत्रं पठेद्विद्वान् महासंयमतत्परः ।**
**मूले मनः स्थिरो याति [४]सर्वानिष्टविनाशनः ॥ ३५ ॥**
**सर्वसिद्धिः करे तस्य यो भावं समुपाश्रयेत् ।**

विद्वान् साधक महान् संयम में तत्पर होकर इस स्तोत्र का पाठ करे तो मूलाधार में उसका मन स्थिर हो जाता है और उसके समस्त पाप विनष्ट हो जाते हैं । इस प्रकार यदि भावपूर्वक छेदिनी स्तोत्र का आश्रय ग्रहण करे तो सभी सिद्धियाँ उसके हाथ में आ जाती हैं ॥ ३५-३६ ॥

**योगिनीस्तोत्रसार**

**शृणुष्व परमानन्द रससागरसम्भव ॥ ३६ ॥**
**योगिनीस्तोत्रसारं च श्रवणाद्धारणाद् यतिः ।**

---

१. मूलेऽर्पय पयसि मे खेलनेकौ सुवायौ इति—क० ।
२. कमला इति—ग० । ३. भक्तः इति—ग० ।
४. सर्वावृत इति—क० ।—सर्वाणि यानि अनिष्टानि, तेषां विनाशनः , विनाशक इत्यर्थः । बाहुलकात् कर्तरि ल्युट् ।

**अप्रकाश्यमिदं रत्नं[१] नृणामिष्टफलप्रदम् ॥ ३७ ॥**
**यस्य विज्ञानमात्रेण शिवो भवति साधकः ॥ ३८ ॥**

अब हे परमानन्द ! हे रस सागर ! संभव ! अब योगिनी स्तोत्र सार को सुनिए, जिसके श्रवण से एवं धारण से साधक योगी बन जाता है । यह मनुष्य को अभीष्ट प्रदान करता है, किन्तु इसे रत्न के समान गोपनीय रखना चाहिए । इसके ज्ञान मात्र से साधक साक्षात् शिव हो जाता है ॥ ३६-३८ ॥

**कङ्काली कुलपण्डिता कुलकला कालानला श्यामला**
**योगेन्द्रेन्द्रसुराज्यनाथयजिताऽन्या[२] योगिनीं मोक्षदा ।**
**मामेकं कुजडं सुखास्तमधनं हीनं च दीनं खलं**
**यद्येवं परिपालनं करोषि नियतं त्वं त्राहि तामाश्रये ॥ ३९ ॥**

जो कङ्काली, कुलमार्ग की पण्डिता, कुल की कला, कालाग्निस्वरूपा एवं श्याम वर्णा हैं । जो योगेन्द्रों से, इन्द्र से तथा श्रेष्ठ श्रेष्ठ देवताओं से यजन की जाती हैं, सबसे विलक्षण हैं, योगिनी तथा मोक्षदायिनी हैं, ऐसी योगिनी भगवती सुख रहित, निर्धन, हीन, दीन, खल तथा अत्यन्त कुत्सित एवं जड़ मात्र मेरा यदि पालन करती रहें तो निश्चय ही मेरी रक्षा भी करें । अतः मैं उनका आश्रय ग्रहण करता हूँ ॥ ३९ ॥

**यज्ञेशी शशिशेखरा स्वमपरा हेरम्बयोगास्पदा**
**दात्री दानपरा हराहरिहराऽघोरामराशङ्करा ।**
**भद्रे बुद्धिविहीन[३] देहजडितं पूजाजपावर्जितं**
**मामेकार्भमकिञ्चनं[४] यदि सरत्त्वं योगिनी रक्षसि ॥ ४० ॥**

जो यज्ञ की अधीश्वरी हैं, अपने ललाट में चन्द्रमा को धारण करती हैं, जो स्वकीय हैं तथा अपरा भी हैं, गणेश से युक्त रहने वाली हैं, भोग मोक्ष की दानपरायण होने के कारण दात्री हैं, सब कुछ हरण करने वाली हैं, हरिहर स्वरूपा, सर्वथा निष्पाप, अमरा तथा कल्याण कारिणी हैं, इस प्रकार की हे भद्रे योगिनी देवी ! बुद्धिरहित, जड़ देह वाले, पूजा तथा जप से वर्जित, मुझ अकिञ्चन अर्भक की यदि रक्षा करती हो तो आप ही सर्वश्रेष्ठ हो ॥ ४० ॥

**भाव्या भावनतत्परस्य करणा सा चारणा योगिनी[५]**
**चन्द्रस्था निजनाथदेहसुगता मन्दारमालावृता[६] ।**
**योगेशी कुलयोगिनी त्वममरा धाराधराच्छादिनी**
**योगेन्द्रोत्सवरागयागजडिता[७] या मातृसिद्धिस्थिता[८] ॥ ४१ ॥**

---

१. वर्णम् इति—क० । २. सा योगिनी इति—क० ।
३. विहन्य इति—ग० । ४. मासैकार्थक किञ्चनम् इति—ग० ।
५. भोगिनी इति—क० । ६. च्युता इति—ग० ।
७. योगेन्द्राणामुत्सवस्तस्य राग एव यागः, तेन जडिता इत्यर्थः ।
८. मोहसिद्धिस्थिता इति—ग० ।

जो भाव्या हैं, भावना में तत्पर साधक की करणा ( असाधारण कारण ) हैं, अरणा तथा योगिनी हैं, चन्द्रमा में तो निवास करती ही हैं, अपने नाथ महेश्वर के देह में भी विराजने वाली हैं, मन्दार माला से आवृत्त हैं, योगेशी कुल योगिनी हैं, धाराधर बादल पर सवार होकर उसे आच्छादित करने वाली हैं । हे देवी योगिनी ! आप इस प्रकार की अमरा ( देवता ) हो जो योगेन्द्रों के उत्सव राग तथा याग से जटित है तथा मातृ रूप से सिद्धि प्रदान करती हैं ॥ ४१ ॥

**त्वं मां[१] पाहि परेश्वरी सुरतरी श्रीभास्करी[२] योगगं**
**मायापाशविबन्धनं[३] तव कथालापामृतावर्जितम् ।**
**नानाधर्मविवर्जितं कलिकुले संव्याकुलालक्षणं**
**मय्येके[४] यदि दृष्टिपातकमला[५] तत् केवलं मे[६] बलम् ॥ ४२ ॥**
**मायामयी हृदि यदा मम चित्तलग्नं[७]**
**राज्यं तदा किमु फलं फलसाधनं वा ।**
**इत्याशया भगवती[८] मम शक्तिदेवी**
**भाति प्रिये श्रुतिदले मुखरार्पणं ते ॥ ४३ ॥**

हे परमेश्वरी, ! हे सर्वश्रेष्ठ देवी ! हे श्री भास्करी ! योग में गमन करने वाले, किन्तु मायापाश से बँधे हुए, आपकी कथा एवं वार्ता से वर्जित, किसी भी प्रकार के धर्म से वर्जित, कलिकाल से व्याकुल तथा सभी प्रकार के अलक्षणों से युक्त रहने वाले मुझ में आपकी दृष्टि के पात रूप कमल का ही एकमात्र बल है । यदि मायामयी भगवती योगिनी में मेरा चित्त लग गया तो राज्य से क्या, कर्म के फल से क्या तथा फल के लिए साधना का क्या फल है ? अर्थात् कुछ भी नहीं । इस प्रकार की आशा करने वाले मुझ साधक की शक्ति देवी हैं, इष्ट देवी हैं, मुझे यही अच्छा भी लगता है, श्रुतियाँ तो मुखर हैं ॥ ४२-४३ ॥

**या योगिनी सकलयोगसुमन्त्रणाढ्या**
**देवी महद्गुणमयी[९] करुणानिधाना ।**
**सा मे भयं हरतु वारणमत्तचित्ता**
**संहारिणी भवतु सोदरवक्षहारा[१०] ॥ ४४ ॥**

सम्पूर्ण योग में सुन्दर मन्त्रणा देने वाली, महान् गुणों वाली, करुणा की निधान, वह योगिनी देवी जिनका चित्त वारण ( हाथी ) के समान मदमत्त है और जो अपने उदर तथा वक्षःस्थल पर हार धारण करने वाली हैं ऐसी योगिनी देवी मेरा भय दूर करें तथा भय का संहार करने वाली होवें ॥ ४४ ॥

---

१. हं सं इति—ग० । २. वाराही सा भास्करी इति—ग० ।
३. योगं पाशविबन्धनम् इति—ग० । ४. यद्योके इति—ग० ।
५. कमला इति—ग० । ६. सेवनम् इति—ग० ।
७. मग्नम् इति—ग० । ८. बलवती इति—ग० ।
९. रुण्या सहद्भणमयी (?) इति—ग० । १०. रत्न इति—ग० ।

यदि पठति मनोज्ञो गोरसामीश्वरं यो[१]
वशयति रिपुवर्गं क्रोधपुञ्जं विहन्ति ।
भुवनपवनभक्षो भावुकः स्यात् सुसङ्गी
रतिपतिगुणतुल्यो रामचन्द्रो यथेशः ॥ ४५ ॥

**फलश्रुति**—जो वाणी की अधीश्वरी योगिनी के इस स्तोत्र का पाठ मन लगाकर करता है, वह अपने शत्रुओं को वश में कर लेता है तथा शत्रुवर्ग के क्रोधपुञ्ज को विनष्ट कर देता है । समस्त भुवनरूपी पवन का भक्षण कर लेता है, भावुक हो जाता है, सत्सङ्गति करता है तथा कामदेव के समान गुणवान् एवं रामचन्द्र के समान ईश्वर बन जाता है ॥ ४५ ॥

एतत्स्तोत्रं पठेद्यस्तु स भक्तो भवति प्रियः ।
मूलपद्मे स्थिरो भूत्वा षट्चक्रे राज्यमाप्नुयात् ॥ ४६ ॥

॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने षट्चक्रप्रकाशे सिद्धिमन्त्रप्रकरणे भैरवभैरवीसंवादे भेदिन्यादिस्तोत्रं नाम [२]एकत्रिंशः पटलः ॥ ३१ ॥



जो इस स्तोत्र का पाठ करता है, वह मेरा प्रिय भक्त बन जाता है तथा मूलाधार चक्र में स्थिर होने के बाद षट्चक्र में विचरण करता हुआ स्वराज्य प्राप्त कर लेता है ॥ ४६ ॥

**॥ श्री रुद्रयामल के उत्तरतन्त्र में महातन्त्रोद्दीपन के षट्चक्र प्रकाश में सिद्धिमन्त्र प्रकरण में भैरवभैरवी संवाद में भेदिन्यादि स्तोत्र नामक इक्तीसवें पटल की डा० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ ३१ ॥**



---

१. मनोगो गोरसानी सुरङ्गो इति—ग० ।   २. त्रयस्त्रिंशत्—क० ।

# अथ द्वात्रिंशः पटलः

श्रीआनन्दभैरवी उवाच

अथ कान्त प्रवक्ष्यामि शृणुष्व मम तत्त्वतः ।
शक्तिः कुण्डलिनी देवी सर्वभेदनभेदिनी ॥ १ ॥

**श्रीआनन्दभैरवी ने कहा**—हे मेरे कान्त ! अब तत्त्वतः श्रवण कीजिए । सभी ग्रन्थियों का भेदन करने वाली देवी कुण्डलिनी महती शक्ति हैं ॥ १ ॥

कलिकल्मषहन्त्री च जगतां मोक्षदायिनी ।
तस्याः स्तोत्रं तथा ध्यानं न्यासं मन्त्रं शृणु प्रभो ॥ २ ॥
यस्य विज्ञानमात्रेण मूलपद्मे मनोलयः ।
चैतन्यानन्दनिरतो भवेत् कुण्डलिसङ्गमात् ॥ ३ ॥
आकाशगामिनीं सिद्धिं ददाति कुण्डली[1] भृशम् ।
अमृतानन्दरूपाभ्यां करोषि पालनं नृणाम् ॥ ४ ॥

वे कलि के समस्त कालुष्य को नष्ट करने वाली, जगत् को मोक्ष देने वाली हैं । अब हे प्रभो ! उन कुण्डलिनी के स्तोत्र, ध्यान, न्यास तथा मन्त्र को सुनिए । जिसके जान लेने मात्र से मूल पद्म में मन का लय हो जाता है तथा साधक कुण्डलिनी को प्राप्त कर चैतन्यानन्द में निरत हो जाता है । यह कुण्डलिनी प्रसन्न हो जाने पर आकाश गामिनी सिद्धि प्रदान करती हैं । इतना ही नहीं वह पुरुषों को अमरत्व प्रदान कर आनन्द भी प्रदान करती हैं ॥ २-४ ॥

कुण्डलिनी-ध्यानम्

श्वासोच्छ्वासकलाभ्यां च शरीरं त्रिगुणात्मकम् ।
पञ्चभूतावृता नित्यं पञ्चानिला[2] भवेद् ध्रुवम् ॥ ५ ॥
कोटिसूर्यप्रतीकाशां[3] निरालम्बां विभावयेत् ।
सर्वस्थितां ज्ञानरूपां श्वासोच्छ्वासनिवासिनीम् ॥ ६ ॥

यह शरीर श्वास तथा उच्छ्वास की कला से त्रिगुणात्मक है । इसमें पञ्च महाभूतों से

---

१. कुण्डलिन्यहम् इति—ग० । २. नानाशक्तिर्भवेद् ध्रुवम् इति—ग० ।

३. पाल्यतेऽखिललोकानां संसारस्थितये मया । कुण्डल्या धारणं तत्र ब्रह्मणो निकटे घटे ॥
कुण्डल्या धारणं कृत्वा भोगी जितेन्द्रियो भवेत् । परिपालनशक्तिः स्यान्नाशक्तिर्भवेद् ध्रुवम् ॥
इति—क० पु० अधि० पाठः ।

आवृत तथा पञ्च प्राणों से नित्य युक्त कुण्डलिनी का निवास निश्चय ही होता है । साधक को करोड़ों सूर्यों के समान देदीप्यमान, आलम्ब से रहित, सबमें स्थित, ज्ञानस्वरूपिणी तथा श्वासोच्छ्वास में वर्तमान रहने वाली कुण्डलिनी का ध्यान करना चाहिए ॥ ५-६ ॥

**स्वयम्भूकुसुमोत्पन्नां ध्यानज्ञानप्रकाशिनीम् ।**
**मोक्षदां शक्तिदां नित्यां नित्यज्ञानस्वरूपिणीम् ॥ ७ ॥**

स्वयंभू लिङ्ग रूप कुसुम से उत्पन्न होने वाली, ध्यान एवं ज्ञान को प्रकाशित करने वाली, मोक्ष तथा शक्ति प्रदान करने वाली, नित्य स्वरूपा, नित्य ज्ञान रूपिणी कुण्डलिनी का ध्यान करना चाहिए ॥ ७ ॥

**लोलां लीलाधरां सर्वां शुद्धज्ञानप्रकाशिनीम् ।**
**कोटिकालानलसमां विद्युत्कोटिमहौजसाम् ॥ ८ ॥**

साधक को अत्यन्त लोल स्वभाव वाली, लीला धारण करने वाली, शुद्ध ज्ञान को प्रकाशित करने वाली, करोड़ों कालाग्नि के सदृश, करोड़ों विद्युत् के समान प्रभा वाली कुण्डलिनी का ध्यान करना चाहिए ॥ ८ ॥

**तेजसा व्याप्तकिरणां मूलादूर्ध्वप्रकाशिनीम् ।**
**अष्टलोकप्रकाशाढ्यां फुल्लेन्दीवरलोचनाम् ॥ ९ ॥**

अपने तेज के किरणों से सर्वत्र व्याप्त रहने वाली, मूलाधार से ऊपर प्रकाश करने वाली, आठों लोकों में प्रकाश उत्पन्न करने वाली, फूले हुए कमल के समान नेत्रों वाली कुण्डलिनी का ध्यान करे ॥ ९ ॥

**सर्वमुखीं सर्वहस्तां सर्वपादाम्बुजस्थिताम् ।**
**मूलादिब्रह्मरन्ध्रान्तस्थानलोकप्रकाशिनीम् ॥ १० ॥**

सर्वत्र व्याप्त मुख वाली, सर्वत्र व्याप्त हाथों वाली, सर्वत्र अपने चरण कमलों से स्थित रहने वाली, मूलाधार से लेकर ब्रह्मपर्यन्त स्थित स्थानों तथा लोकों को प्रकाशित करने वाली कुण्डलिनी का ध्यान करें ॥ १० ॥

**त्रिभाषां सर्वभक्षां च श्वासनिर्गमपालिनीम् ।**
**ललितां सुन्दरीं नीलां[१] कुण्डलीं कुण्डलाकृतिम् ॥ ११ ॥**

परा, पश्यन्ती तथा मध्यमा रूप तीन स्थानों से भाषण करने वाली, सब का भक्षण करने वाली, श्वास के निकलने वाले मार्ग का पालन करने वाली, ललिता सुन्दरी, नीला तथा सर्पाकृति वाली कुण्डलिनी का ध्यान करे ॥ ११ ॥

**अभूमण्डलबाह्यस्थां[२] बाह्यज्ञानप्रकाशिनीम् ।**
**नागिनीं नागभूषाढ्यां भयानककलेवराम् ॥ १२ ॥**

---

१. नित्याम् इति—ग० ।

२. अण्डस्यानन्द बाह्यस्थाम् इति—क० ।—न भूमण्डलबाह्यस्थामिति नञ्—समासः ।

पृथ्वी मण्डल में न रहकर उसके बाहर निवास करने वाली, बाह्य ज्ञान को प्रकाशित करने वाली, नागिनी, नाग का भूषण धारण करने वाली तथा भयानक शरीर वाली कुण्डलिनी का ध्यान करे ॥ १२ ॥

**योगिज्ञेयां शुद्धरूपां विरलामूर्ध्वगामिनीम् ।**
**एवं ध्यात्वा मूलपद्मे कुण्डलीं परदेवताम् ॥ १३ ॥**

योगिजनों से जानी जाने वाली, शुद्धस्वरूप वाली, अकेली ऊर्ध्वगामिनी, इस प्रकार की परदेवता स्वरूपा कुण्डलिनी का मूलाधार स्थित पद्म में ध्यान करे ॥ १३ ॥

**भावसिद्धिर्भवेत् क्षिप्रं कुण्डलीभावनादिह ।**
**ततो मानसजापं हि मानसं होमतर्पणम् ॥ १४ ॥**

इस प्रकार ध्यान करने वाले साधक को इस लोक में बड़ी शीघ्रता से सिद्धि मिल जाती है इसके बाद मानस जाप तथा मानस होम तर्पण करना चाहिए ॥ १४ ॥

**अभिषेकं मुदा कृत्वा प्रातः काले पुनः पुनः ।**
**प्राणायामं ततः कृत्वा स्तोत्रं च कवचं पठेत् ॥ १५ ॥**
**एतत्स्तोत्रस्य पाठेन स्वयं सिद्धान्तविद् भवेत् ।**
**कुण्डली सुकृपा तस्य मासाद् भवति निश्चितम् ॥ १६ ॥**

इस प्रकार प्रातः काल में प्रसन्नता पूर्वक अभिषेक सम्पादन कर प्राणायाम करे फिर बारम्बार स्तोत्र तथा कवच का पाठ करे । इस स्तोत्र का पाठ करने से साधक स्वयं सिद्धान्तों का ज्ञाता हो जाता है । उसके ऊपर एक महीने में ही निश्चित रूप से कुण्डली की सुकृपा हो जाती हैं ॥ १५-१६ ॥

**निद्रादोषादिकं[१] त्यक्त्वा प्रकाश्याहं शरीरके ।**
**अहं दात्री सुयोगानामधिपाहं जगत्त्रये ॥ १७ ॥**

हे सदाशिव ! ऐसे साधक के शरीर में रहने वाली निद्रादि समस्त दोषों को दूर कर मै स्वयं प्रकाशित होती हूँ, इस प्रकार के सुयोगों को देने वाली मैं ही हूँ तथा तीनों लोकों की स्वामिनी भी मैं ही हूँ ॥ १७ ॥

**अहं कर्म अहं धर्मः अहं देवी च कुण्डली ।**
**यो जानाति महावीर कुण्डलीरूपसेवनात् ॥ १८ ॥**
**इति तं पात्रकं कर्तुमवतीर्णास्मि[२] सर्वदा ।**
**अत एव परं मन्त्रं कुण्डलिन्याः स्तवं शुभम् ॥ १९ ॥**
**प्रपठेत् सर्वदा देहे यदि वश्या न कुण्डली ।**
**तावत् कालं जपं कुर्याद् यावत् सिद्धिर्न जायते ॥ २० ॥**

---

१. दशा इति—ग० ।

२. इहीदं पालनं कर्तुमवतीर्णा हि सर्वदा इति—ग० ।

मैं ही कर्म हूँ, मैं ही धर्म हूँ, मैं ही देवी कुण्डलिनी हूँ। हे महावीर ! जो कुण्डलिनी के स्वरूप के सेवन से ऐसा जानता है उसी को अपना सत्पात्र बनाने के लिए मैं पृथ्वी पर सर्वदा अवतीर्ण होती हूँ। इसीलिए कुण्डलिनी का मन्त्र तथा कुण्डलिनी का स्तोत्र सर्वोत्कृष्ट है और कल्याणकारी तो है ही। यदि शरीर में रहने वाली कुण्डलिनी वश में न हो तो स्तोत्र का पाठ सर्वदा करते रहना चाहिए, तबतक जप भी करे जब तक सिद्धि न हो ॥ १८-२० ॥

### कुण्डलिनीस्तोत्रम्

**आधारे परदेवता भवनताधोकुण्डली देवता।**
**देवानामधिदेवता त्रिजगतामानन्दपुञ्जस्थिता ॥ २१ ॥**
**मूलाधारनिवासिनी त्रिरमणी या ज्ञानिनी मालिनी।**
**सा मे मातृमनुस्थिता कुलपथानन्दैकबीजानना ॥ २२ ॥**

जो आधार में परदेवता, उसके अधोभाग में देवता हैं तथा देवताओं की अधि देवता हैं तीनों लोकों में आनन्द पुञ्ज रूप से स्थित रहने वाली हैं। मूलाधार में निवास करने वाली सत्त्व, रज तथा तमोगुण वाली रमणी हैं, ज्ञान सम्पन्न हैं, मालाधारण करने वाली हैं, कुलपथ में आनन्द बीज स्वरूपा मुख वाली हैं हमारे मातृका वर्णों के मन्त्र में निवास करने वाली वह हमारी रक्षा करें ॥ २१-२२ ॥

**सर्वाङ्गस्थितिकारिणी सुरगणानन्दैकचिन्हा शिवा ।**
**वीरेन्द्रा नवकामिनी वचनदा श्रीमानदा[1] ज्ञानदा ॥ २३ ॥**
**सानन्दा घननन्दिनी घनगणा छिन्ना भवा योगिनी।**
**धीरा धैर्यवती समाप्तविषया श्रीमङ्गली कुण्डली ॥ २४ ॥**

वह सभी अङ्गों में स्थित रहने वाली, देवताओं में आनन्द संचार के चिन्ह से प्रगट होती हैं। सबका कल्याण करती हैं। वीरेन्द्रा तथा नव युवती हैं, उत्कृष्ट वचन देने वाली, श्री तथा मान देने वाली एवं ज्ञान देने वाली हैं। वह आनन्द के साथ रहती हैं, घन-नन्दिनी घनगणा, छिन्ना, भवपत्नी तथा योगिनी हैं। धीरा, धैर्यवती तथा विषयों को समाप्त करने वाली हैं ऐसी श्री तथा मङ्गल स्वरूपा कुण्डलिनी हमारी रक्षा करे ॥ २३-२४ ॥

**सर्वाकारनिवासिनी जयधराधाराधरस्थागया ।**
**गीता गोधनवर्द्धिनी गुरुमयी ज्ञानप्रिया गोधना ॥ २५ ॥**

मैं सभी प्रकार के आकारों में निवास करने वाली, विजय धारण करने वाली, धाराधर ( बादलों ) में रहने वाली विद्युत् हूँ। गीता, गोधनवर्द्धिनी, गुरुमयी, ज्ञानप्रिया और गोधना हैं ऐसी कुण्डलिनी हमारी रक्षा करें ॥ २५ ॥

**गार्हाग्निस्थिति[2] चन्द्रिका सुलतिका[3] जाड्यापहा रागदा।**
**दारा गोधनकारिणी मृगमना ब्रह्माण्डमार्गोज्ज्वला ॥ २६ ॥**

---

१. स सर्वदा इति—ग० ।
२. गौद्दर्दग्धि इति—ग० ।
३. मुलतिका इति—ग० ।

# अथ षट्त्रिंशः पटलः

**श्रीआनन्दभैरवी उवाच**

**अथ कान्त प्रवक्ष्यामि कुण्डलीचेतनादिकम् ।**
**सहस्रनामसकलं[1] कुण्डलिन्याः प्रियं सुखम् ॥ १ ॥**
**अष्टोत्तरं महापुण्यं साक्षात्[2] सिद्धिप्रदायकम् ।**
**तव[3] प्रेमवशेनैव कथयामि शृणुष्व तत् ॥ २ ॥**

**श्रीआनन्दभैरवी ने कहा**—हे कान्त ! इसके अनन्तर कुण्डलिनी को चेतन करने के लिए महापुण्यदायक कुण्डलिनी का अष्टोत्तरसहस्र नाम कहती हूँ, जो साधक को प्रिय सुख देने वाला तथा साक्षात् सिद्धि देने वाला है उसे आपके प्रेम वश कहती हूँ, सुनिए ॥ १-२ ॥

**विना यजनयोगेन विना ध्यानेन यत्फलम् ।**
**तत्फलं लभते सद्यो विद्यायाः सुकृपा भवेत् ॥ ३ ॥**
**या विद्या भुवनेशानी त्रैलोक्यपरिपूजिता ।**
**सा देवी कुण्डली माता त्रैलोक्यं पाति सर्वदा ॥ ४ ॥**

यदि महाविद्या की कृपा हो जावे तो यजन के बिना अथवा ध्यान के बिना ही वह सारा फल शीघ्र प्राप्त हो जाता है । त्रैलोक्य में सबसे परिपूजित जो भुवनेश्वरी महाविद्या हैं, वही कुण्डलिनी माता हैं जो सर्वदा त्रिलोक की रक्षा करती हैं ॥ ३-४ ॥

**तस्या नाम सहस्राणि अष्टोत्तरशतानि च ।**
**श्रवणात्पठनान्मन्त्री महाभक्तो भवेदिह ॥ ५ ॥**
**ऐहिके स भवेन्नाथ जीवन्मुक्तो महाबली ॥ ६ ॥**

उस कुण्डली के ११०८ नामों के पठन से अथवा सुनने से मन्त्रवेत्ता महाभक्त हो जाता है और हे जगन्नाथ ! वह इसी लोक में महाबली एवं जीवन्मुक्त हो जाता है ॥ ५-६ ॥

**अस्य श्रीमन्महाकुण्डलीसाष्टोत्तरसहस्रनामस्तोत्रस्य ब्रह्मर्षिर्जगतीच्छन्दो भगवती श्रीमन्महाकुण्डलीदेवता सर्वयोगसमृद्धिसिद्ध्यर्थे विनियोगः ॥**

इस स्तोत्र के ब्रह्मा ऋषि, जगती छन्द तथा भगवती श्रीमन्महाकुण्डली देवता हैं । सर्वयोग समृद्धि के लिए यह विनियुक्त है । फिर साधक हाथ में जल लेकर 'अस्य श्री' से

---

१. सकलम् इति—ग० । २. विधानात् सिद्धिक्षयकम् इति—ग० ।
३. तावप्रेम रसेणैव इति—क० ।

आरम्भ कर '... ... सिद्ध्यर्थे जपे विनियोगः' पर्यन्त वाक्य पढ़कर उस जल को पृथ्वी पर गिरा देवे ॥ ५-६ ॥

कुलेश्वरी कुलानन्दा कुलीना कुलकुण्डली ।
श्रीमन्महाकुण्डली च कुलकन्या कुलप्रिया ॥ ७ ॥
कुलक्षेत्रस्थिता कौली [1]कुलीनार्थप्रकाशिनी ।
कुलाख्या कुलमार्गस्था कुलशास्त्रार्थपातिनी ॥ ८ ॥
कुलज्ञा कुलयोग्या च कुलपुष्पप्रकाशिनी ।
कुलीना [2] च कुलाध्यक्षा कुलचन्दनलेपिता ॥ ९ ॥
कुलरूपा [3] कुलोद्भूता कुलकुण्डलिवासिनी ।
कुलाभिन्ना कुलोत्पन्ना कुलाचारविनोदिनी ॥ १० ॥
कुलवृक्षसमुद्भूता कुलमाला कुलप्रभा ।
कुलज्ञा कुलमध्यस्था कुलकङ्कणशोभिता ॥ ११ ॥

**सहस्रनाम प्रारम्भ**—१. कुलेश्वरी, कुलानन्दा, कुलीना, कुलकुण्डली, श्रीमन्महाकुण्डली, कुलकन्या, कुलप्रिया, कुलक्षेत्रस्थिता, कौली, कुलीनार्थप्रकाशिनी (१०), कुलाख्या, कुलमार्गस्था, कुलशास्त्रार्थपातिनी, कुलज्ञा, कुलयोग्या, कुलपुष्पप्रकाशिनी, कुलीना, कुलाध्यक्षा, कुलचन्दनलेपिता, कुलरूपा, कुलोद्भूता, कुलकुण्डलिवासिनी, कुलाभिन्ना, कुलोत्पन्ना, कुलाचारविनोदिनी, कुलवृक्ष-समुद्भूता, कुलमाला, कुलप्रभा, कुलज्ञा, कुलमध्यस्था, कुलकङ्कणशोभिता ॥ ७-११ ॥

कुलोत्तरा कौलपूजा कुलालापा कुलक्रिया ।
कुलभेदा कुलप्राणा कुलदेवी कुलस्तुतिः ॥ १२ ॥
कौलिका कालिका काल्या कलिभिन्ना [4]कलाकला ।
कलिकल्मषहन्त्री च कलिदोषविनाशिनी ॥ १३ ॥
कङ्काली केवलानन्दा कालज्ञा कालधारिणी ।
कौतुकी कौमुदी केका काका काकलयान्तरा [5] ॥ १४ ॥
कोमलाङ्गी करालास्या कन्दपूज्या [6] च कोमला ।
कैशोरी काकपुच्छस्था कम्बलासनवासिनी ॥ १५ ॥
कैकेयीपूजिता कोला कोलपुत्री कपिध्वजा ।
कमला कमलाक्षी च कम्बलाश्वतरप्रिया ॥ १६ ॥

---

१. कुलीनार्थं प्रकाशयति, तच्छीला । २. सुकुलीना इति—ग० ।
३. कुलगर्भासना कुल्ला कुलच्छात्रा कुलात्मजा । कुलीना नागललिता कुण्डली कुलपण्डिता ॥
कुलद्रव्यप्रिया कौला कलिकन्या कुलान्तरा । कुलकाली कुलामोदा कुलशब्दोत्सवाकुला ॥
—इति क० पु० अधि० पाठः ।
४. कावला इति—ग० । ५. कालाकालल यान्तिका इति—ग० ।
६. कञ्जपूज्या (?) इति—क० ।

कुलोत्तरा, कौलपूजा, कुलालापा, कुलक्रिया, कुलभेदा, कुलप्राणा, कुलदेवी, कुलस्तुति, कौलिका, कालिका, काल्या, कलिभिन्ना, कलाकला, कलिकल्मषहन्त्री, कलिदोष-विनाशिनी, कङ्काली, केवलानन्दा, कालज्ञा (५०), कालधारिणी, कौतुकी, कौमुदी, केका, काका, काकलयान्तरा, कोमलाङ्गी, करालास्या, कन्दपूज्या, कोमला, कैशोरी, काकपुच्छस्था, कम्बलासनवासिनी, कैकेयीपूजिता, कोला, कोलपुत्री, कपिध्वजा, कमला, कमलाक्षी, कम्बलाश्वतरप्रिया ॥ १२-१६ ॥

कलिकाभङ्गदोषस्था कालज्ञा कालकुण्डली ।
काव्यदा कविता वाणी कालसन्दर्भभेदिनी[१] ॥ १७ ॥
कुमारी करुणाकारा कुरुसैन्यविनाशिनी ।
कान्ता कुलगता कामा कामिनी कामनाशिनी ॥ १८ ॥
कामोद्भवा कामकन्या[२] केवला कालघातिनी ।
कैलासशिखरारूढा कैलासपतिसेविता ॥ १९ ॥
कैलासनाथनमिता केयूरहारमण्डिता ।
कन्दर्पा कठिनानन्दा कुलगा[३] कीचकृत्यहा ॥ २० ॥

कलिकाभङ्गदोषस्था (७०), कालज्ञा, कालकुण्डली, काव्यदा, कविता वाणी, काल-सन्दर्भभेदिनी, कुमारी, करुणाकारा, कुरुसैन्यविनाशिनी, कान्ता (८०), कुलगता, कामा, कामिनी, कामनाशिनी, कामोद्भवा, कामकन्या, केवला, कालघातिनी, कैलासशिखरारूढा, कैलासपतिसेविता (९०), कैलासनाथनमिता, केयूरहारमण्डिता, कन्दर्पा, कठिनानन्दा, कुलगा कीचकृत्यहा ॥ १७-२० ॥

कमलास्या कठोरा च कीटरूपा कटिस्थिता ।
कन्देश्वरी कन्दरूपा कोलिका कन्दवासिनी ॥ २१ ॥
कूटस्था[४] कूटभक्षा च कालकूटविनाशिनी ।
कामाख्या कमला काम्या कामराजतनूद्भवा ॥ २२ ॥
कामरूपधरा कम्रा कमनीया कविप्रिया[५] ।
कञ्जानना कञ्जहस्ता कञ्जपत्रायतेक्षणा ॥ २३ ॥
काकिनी कामरूपस्था कामरूपप्रकाशिनी ।
कोलाविध्वंसिनी कङ्का कलङ्कार्ककलङ्किनी ॥ २४ ॥

---

१. कालस्य सन्दर्भः, तं भिनत्ति तच्छीला, सुप्यजाताविति णिनिप्रत्ययः कर्तरि ।
२. कुल्या इति—ग० । ३. कुचगापहा इति—ग० ।
४. कटकस्था कामबीजा कृच्छ्राकृच्छ्रगुणोदया ।
कृच्छ्रानन्दा कृच्छ्रपूज्या कृच्छ्ररक्षिका ॥
कारणाङ्गी कृच्छ्रवर्णा कीलिता कोकिलस्वरा ।
काञ्चीपीठस्थिता काञ्ची कामरूपनिवासिनी ॥ —इति क० पु० अः पाठः ।
५. काल इति—ग० ।

कमलास्या, कठोरा कीटरूपा, कटिस्थिता, (१००) कन्देश्वरी, कन्दरूपा, कोलिका, कन्दवासिनी, कूटस्था, कूटभक्षा, कालकूटविनाशिनी, कामाख्या, कमला, काम्या, कामराजतनूद्भवा, कामरूपधरा, कर्मा, कमनीया, कविप्रिया, कञ्जानना, कञ्जहस्ता, कञ्जपत्रायतेक्षणा, काकिनी, कामरूपस्था, कामरूपप्रकाशिनी, कोलाविध्वंसिनी, कङ्का, कलङ्कार्ककलङ्किनी ॥ २१-२४ ॥

**महाकुलनदी कर्णा कर्णकाण्डविमोहिनी ।**
**काण्डस्था काण्डकरुणा कर्मकस्था कुटुम्बिनी ॥ २५ ॥**
**कमलाभा भवा[1] कल्ला करुणा करुणामयी ।**
**करुणेशी[2] कराकर्त्री कर्तृहस्ता कलोदया[3] ॥ २६ ॥**
**कारुण्यसागरोद्भूता कारुण्यसिन्धुवासिनी ।**
**कार्त्तिकेशी कार्त्तिकस्था कार्त्तिकप्राणपालनी ॥ २७ ॥**
**करुणानिधिपूज्या च करणीया क्रिया कला ।**
**कल्पस्था कल्पनिलया कल्पातीता च कल्पिता ॥ २८ ॥**

महाकुलनदी, कर्णा कर्णकाण्डविमोहिनी, काण्डस्था, काण्डकरुणा, कर्मकस्था, कुटुम्बिनी, कमलाभा, भवा, कल्ला, करुणा, करुणामयी, करुणेशी, करा, कर्त्री, कर्तृहस्ता, कलोदया (२४०), कारुण्यसागरोद्भूता, कारुण्यसिन्धुवासिनी, कार्तिकेशी, कार्तिकस्था, कार्तिकाप्राणपालनी, करुणानिधिपूज्या, करणीया, क्रिया, कला, कल्पस्था, कल्पनिलया, कल्पातीता, कल्पिता ॥ २५-२८ ॥

**कुलया कुलविज्ञाना कर्षिणी कालरात्रिका ।**
**कैवल्यदा कोकरस्था कलमञ्जीररञ्जनी ॥ २९ ॥**
**कलयन्ती कालजिह्वा किङ्करासनकारिणी ।**
**कुमुदा कुशलानन्दा कौशल्याकाशवासिनी ॥ ३० ॥**
**कसापहासहन्त्री च कैवल्यगुणसम्भवा ।**
**एकाकिनी अर्करूपा कुवला कर्कटस्थिता ॥ ३१ ॥**
**कर्कोटका कोष्ठरूपा कूटवह्निकरस्थिता ।**
**कूजन्ती मधुरध्वानं कामयन्ती सुलक्षणम् ॥ ३२ ॥**

कुलया, कुलविज्ञाना, कर्षिणी, कालरात्रिका, कैवल्यदा, कोकरस्था, कलमञ्जीररञ्जनी, कलयन्ती, कालजिह्वा, किङ्करासनकारिणी, कुमुदा, कुशलानन्दा, कौशल्याकाशवासिनी, कसापहासहन्त्री, कैवल्यगुणसंभवा, एकाकिनी, अर्करूपा, कुवला, कर्कटस्थिता, कर्कोटका, कोष्ठरूपा, कूटवह्निकरस्थिता, मधुरध्वानं, कूजन्ती, सुलक्षणं कामयन्ती ॥ २९-३२ ॥

---

१. कल्पा इति—ग० ।
२. करणेशी इति—ग० ।
३. कलोदरा इति—ग० । कल उदरे यस्या इति व्यधिकरणबहुव्रीहिः । पद्मनाभ इतिवत् । कालोदया इति पाठे कलेनोदयो यस्या इति विग्रहः कार्यः ।

केतकी कुसुमानन्दा केतकीपुण्यमण्डिता ।
कर्पूरपूररुचिरा कर्पूरभक्षणप्रिया ॥ ३३ ॥
कपालपात्रहस्ता च कपालचन्द्रधारिणी ।
कामधेनुस्वरूपा च कामधेनुः क्रियान्विता ॥ ३४ ॥
कश्यपी काश्यपा कुन्ती केशान्ता केशमोहिनी ।
कालकर्त्री कूपकर्त्री कुलपा कामचारिणी ॥ ३५ ॥
कुङ्कुमाभा[1] कज्जलस्था कमिता कोपघातिनी ।
केलिस्था केलिकलिता कोपना कर्पटस्थिता[2] ॥ ३६ ॥

केतकी कुसुमानन्दा, केतकीपुण्यमण्डिता, कर्पूरपूररुचिरा, कर्पूरभक्षणप्रिया, कपालपात्रहस्ता, कपालचन्द्रधारिणी, कामधेनुस्वरूपा, कामधेनुक्रियान्विता, कश्यपी, काश्यपा, कुन्ती, केशान्ता, केशमोहिनी, कालकर्त्री, कूपकर्त्री, कुलपा, कामचारिणी, कुङ्कुमाभा, कज्जलस्था, कमिता, कोपघातिनी, केलिस्था, केलिकलिता, कोपना, कर्पटस्थिता ॥ ३३-३६ ॥

कलातीता कालविद्या कालात्मपुरुषोद्भवा ।
कष्टस्था[3] कष्टकुष्ठस्था[4] कुष्ठहा कष्टहा[5] कुशा ॥ ३७ ॥
कालिका स्फुटकर्त्री च काम्बोजा कामला कुला ।
कुशलाख्या काककुष्ठा[6] कर्मस्था कूर्ममध्यगा[7] ॥ ३८ ॥
कुण्डलाकारचक्रस्था कुण्डगोलोद्भवा कफा ।
कपित्थाग्रवसाकाशा कपित्थरोधकारिणी ॥ ३९ ॥
काहोड़ी काहड़ा काड़ा कङ्कला भाषकारिणी ।
कनका कनकाभा च कनकाद्रिनिवासिनी ॥ ४० ॥

कलातीता, कालविद्या, कालात्मपुरुषोद्भवा, कष्टस्था, कष्टकुष्ठस्था, कुष्ठहा, कष्टहा, कुशा, कालिका, स्फुटकर्त्री, काम्बोजा, कामला, कुला, कुशलाख्या, काककुष्ठा, कर्मस्था, कूर्ममध्यगा, कुण्डलाकारचक्रस्था, कुण्डगोलोद्भवा, कफा, कपित्थाग्रवसा, काशा, कपित्थरोधकारिणी, काहोड़ी, काहड़ा, काड़ा कङ्कला, भाषकारिणी, कनका कनकाभा, कनकाद्रिनिवासिनी ॥ ३७-४० ॥

कार्पासयज्ञसूत्रस्था [8] कूटब्रह्मार्थसाधिनी ।
कलञ्जभक्षिणी क्रूरा क्रोधपुञ्जा कपिस्थिता ॥ ४१ ॥

---

१. कज्जत्रामा इति—ग० । २. कर्कट इति—ग० ।
३. कष्टहा इति—ग । कष्टं जिहीते हापयति इति विजन्तोऽयम् ।
४. कष्टिकुष्ठस्था इति—ग० ।
५. कुष्ठहा इति—ग० । कुष्ठ जिहीते इति पूर्ववदेव विजन्तः । कष्टहा इति पाठेऽपि तादृशो विग्रहः कार्यः ।
६. काककम्भा इति—ग० । ७. कुम्भ इति—ग० ।
८. कषञ्जा कर्पटी कार्पासवासिनी इति क० पु० अ० पत्रः ।

कपाली साधनरता कनिष्ठाकाशवासिनी ।
कुञ्जरेशी कुञ्जरस्था कुञ्जरा कुञ्जरागतिः[१] ॥ ४२ ॥
कुञ्जस्था कुञ्जरमणी कुञ्जमन्दिरवासिनी ।
कुपिता कोपशून्या च कोपाकोपविवर्जिता ॥ ४३ ॥
कपिञ्जलस्था कापिञ्जा कपिञ्जलतरूद्भवा ।
कुन्तीप्रेमकथाविष्टा[२] कुन्तीमानसपूजिता ॥ ४४ ॥

कार्पासयज्ञसूत्रस्था, कूटब्रह्मार्थसाधिनी, कलञ्जभक्षिणी, क्रूरा, क्रोधपुञ्जा, कपिस्थिता, कपाली, साधनरता, कनिष्ठा, काशवासिनी, कुञ्जरेशी, कुञ्जरस्था, कुञ्जरा, कुञ्जरागति, कुञ्जस्था, कुञ्जरमणी, कुञ्जमन्दिरवासिनी, कुपिता, कोपशून्या, कोपा, कोपविवर्जिता, कपिञ्जलस्था, कापिञ्जा, कपिञ्जलतरूद्भवा, कुन्तीप्रेमकथाविष्टा, कुन्तीमानसपूजिता ॥ ४१-४४ ॥

कुन्तला कुन्तहस्ता च कुलकुन्तललोहिनी ।
कान्ताङ्घ्रिसेविका[३] कान्तकुशला कोशलावती ॥ ४५ ॥
केशिहन्त्री[४] ककुत्स्था च ककुत्स्थवनवासिनी ।
कैलासशिखरानन्दा[५] कैलासगिरिपूजिता[६] ॥ ४६ ॥
कीलालनिर्मलाकारा(?) कीलालमुग्धकारिणी[७] ।
कुतुना कुट्टही कुट्ठा कूटना[८] मोदकारिणी ॥ ४७ ॥
क्रौङ्कारी[९] क्रौङ्करी काशी कुहुशब्दस्था किरातिनी ।
कूजन्ती सर्ववचनं कारयन्ती कृताकृतम् ॥ ४८ ॥

कुन्तला, कुन्तहस्ता, कुलकुन्तलमोहिनी, कान्ताङ्घ्रिसेविका, कान्तकुशला, कोशलावती, केशिहन्त्री, ककुत्स्था, ककुत्स्थवनवासिनी, कैलासशिखरानन्दा, कैलासगिरिपूजिता, कीलाल-निर्मलाकारा, कीलालमुग्धकारिणी, कुतुना, कुट्टही, कुट्ठा, कूटना, मोदकारिणी, क्रौकारी, क्रौकरी, काशी कुहुशब्दस्था, किरातिनी, सर्ववचन, कूजन्ती, कृताकृत कारयन्ती ॥ ४५-४८ ॥

कृपानिधिस्वरूपा च कृपासागरवासिनी ।
केवलानन्दनिरता केवलानन्दकारिणी ॥ ४९ ॥
कृमिला कृमिदोषघ्नी कृपा कपटकुट्टिता ।
कृशाङ्गी क्रमभङ्गस्था किङ्करस्था कटस्थिता ॥ ५० ॥

---

१. कुञ्जरागतिकामिनी इति—ग० ।
२. सेकिका इति—ग० ।
३. केलि इति—ग० ।
४. स्निग्ध इति—ग० ।
५. कैलासशिखरे आनन्दो यस्या इति विग्रहे बहुव्रीहिः ।
६. कैलासगिरिणा पूजिता इति तृतीयातत्पुरुषः ।
७. कूट्वा इति—ग० ।
८. कोंकारी कौंकरी काशी केशवस्था इति—ग० ।
९. कूजन्ती इति—ग० ।

कामरूपा कान्तरता कामरूपस्य सिद्धिदा ।
कामरूपपीठदेवी कामरूपाङ्कुजा कुजा[१] ॥ ५१ ॥
कामरूपा कामविद्या कामरूपादिकालिका ।
कामरूपकला काम्या कामरूपकुलेश्वरी ॥ ५२ ॥

कृपानिधिस्वरूपा, कृपासागरवासिनी, केवलानन्दनिरता, केवलानन्दकारिणी, कृमिला, कृमिदोषघ्नीकृपा, कपटकुट्टिता, कृशाङ्गी, क्रमभङ्गस्था, किङ्करस्था, कटिस्थिता, कामरूपा, कान्तरता, कामरूपस्य सिद्धिदा, कामरूपपीठदेवी, कामरूपाङ्कुजा, कुजा, कामरूपा, कामविद्या, कामरूपा, आदिकालिका, कामरूपकला, काम्या, कामरूप, कुलेश्वरी ॥ ४९-५२ ॥

कामरूपजनानन्दा कामरूपकुशाग्रधीः ।
कामरूपकराकाशा कामरूपतरुस्थिता ॥ ५३ ॥
कामात्मजा कामकला कामरूपविहारिणी ।
कामशास्त्रार्थमध्यस्था कामरूपक्रियाकला ॥ ५४ ॥
कामरूपमहाकाली कामरूपयशोमयी ।
कामरूपपरमानन्दा कामरूपादिकामिनी ॥ ५५ ॥
कूलमूला कामरूपपद्ममध्यनिवासिनी ।
कृताञ्जलिप्रिया कृत्या कृत्यादेवीस्थिता कटा ॥ ५६ ॥

कामरूपजनानन्दा, कामरूपकुशाग्रधी, कामरूपकराकाशा, कामरूपतरुस्थिता, कामात्मजा, कामकला, कामरूपविहारिणी, कामशास्त्रार्थमध्यस्था, कामरूपक्रिया, कला, कामरूपमहाकाली, कामरूपयशोमयी, कामरूपपरमानन्दा, कामरूपादिकामिनी, कूलमूला कामरूपपद्ममध्यनिवासिनी, कृताञ्जलिप्रिया, कृत्या, कृत्यादेवीस्थिता कटा ॥ ५३-५६ ॥

कटका काटका कोटिकटिघण्टविनोदिनी[२]।
कटिस्थूलतरा[३] काष्ठा कात्यायनसुसिद्धिदा[४]॥ ५७ ॥
कात्यायनी काचलस्था कामचन्द्रानना कथा ।
काश्मीरदेशनिरता काश्मीरी कृषिकर्मजा[६]॥ ५८ ॥
कृषिकर्मस्थिता कौर्मा कूर्मपृष्ठनिवासिनी ।
कालघण्टा नादरता कलमञ्जीरमोहिनी ॥ ५९ ॥
कलयन्ती शत्रुवर्गान् क्रोधयन्ती गुणागुणम् ।
कामयन्ती सर्वकामं काशयन्ती जगत्त्रयम् ॥ ६० ॥

---

१. कजाकुजा इति—ग० । २. कीटा कोटिमुण्ड इति—ग० ।
३. स्थलकरा इति—ग० ।
४. कात्यायनप्रोक्ता सुसिद्धिः इति मध्यमपदलोपिसमासः । तां ददाति इति आतोऽनुपसर्गे कइति कप्रत्ययः कर्तरि, स्त्रीत्वविषये टाप् ।
५. तथा इति—ग० । ६. मर्मजा इति—ग० ।

कटका, काटका, कोटि कटिघण्टविनोदिनी, कटिस्थूलतरा, काष्ठा, कात्यायनसुसिद्धिदा, कात्यायनी, काचलस्था, कामचन्द्रानना, कथा, काश्मीरदेशनिरता, काश्मीरी, कृषिकर्मजा, कृषिकर्मस्थिता, कौर्मा, कूर्मपृष्ठनिवासिनी, कालघण्टा, नादरता, कलमञ्जीरमोहिनी, शत्रुवर्गान् कलयन्ती, गुणागुणं क्रोधयन्ती, सर्वकामं कामयन्ती, जगत्त्रय काशयन्ती ॥ ५७-६० ॥

**कौलकन्या कालकन्या कौलकालकुलेश्वरी ।**
**कौलमन्दिरसंस्था च कुलधर्मविडम्बिनी ॥ ६१ ॥**
**कुलधर्मरताकारा कुलधर्मविनाशिनी ।**
**कुलधर्मपण्डिता च कुलधर्मसमृद्धिदा ॥ ६२ ॥**
**कौलभोगमोक्षदा च कौलभोगेन्द्रयोगिनी ।**
**कौलकर्मा नवकुला श्वेतचम्पकमालिनी[1] ॥ ६३ ॥**
**कुलपुष्पमाल्याकान्ता[2] कुलपुष्पभवोद्भवा ।**
**कौलकोलाहलकरा कौलकर्मप्रिया परा[3] ॥ ६४ ॥**

कौलकन्या, कालकन्या, कौलकालकुलेश्वरी, कौलमन्दिरसंस्था, कुलधर्मविडम्बिनी, कुलधर्मरताकारा, कुलधर्मविनाशिनी, कुलधर्मपण्डिता, कुलधर्मसमृद्धिदा, कौलभोगमोक्षदा, कौलभोगेन्द्रयोगिनी, कौलकर्मा, नवकुला, श्वेतचम्पकमालिनी, कुलपुष्पमाल्याक्रान्ता, कुलपुष्पभवोद्भवा, कौलकोलाहलकरा, कौलकर्मप्रिया, परा ॥ ६१-६४ ॥

**काशीस्थिता काशकन्या काशी चक्षु:प्रिया कुथा ।**
**काष्ठासनप्रिया काका काकपक्षकपालिका ॥ ६५ ॥**
**कपालरसभोज्या च कपालनवमालिनी ।**
**कपालस्था च कापाली कपालसिद्धिदायिनी ॥ ६६ ॥**
**कपाला कुलकर्त्री च कपालशिखरस्थिता[4] ।**
**कथना कृपणश्रीदा[5] कृपी कृपणसेविता[6] ॥ ६७ ॥**
**कर्महन्त्री कर्मगता कर्माकर्मविवर्जिता ।**
**कर्मसिद्धिरता कामी कर्मज्ञाननिवासिनी ॥ ६८ ॥**
**कर्मधर्मसुशीला च कर्मधर्मवशङ्करी ।**
**कनकाब्जसुनिर्माणमहासिंहासनस्थिता ॥ ६९ ॥**
**कनकग्रन्थिमाल्याढ्या[7] कनकग्रन्थिभेदिनी ।**
**कनकोद्भवकन्या च कनकाम्भोजवासिनी ॥ ७० ॥**

---

१. कौलकुद्दालवदना श्वेतचम्पकवासिनी इति—क० ।
२. कान्तकुन्तला कुलभवोद्भवा इति—ग० । ३. क्रिया इति—ग० ।
४. कपालस्था इति—ग० ।—युक्तं न प्रतिभाति ।
५. लिखन इति—ग० । लिखने या श्री:, तां ददाति इति विग्रह: ।
६. कृपणै: सेविता इति तृतीयातत्पुरुष: । ७. मालाढ्या इति—ग० ।

काशीस्थिता, काशकन्या, काशी, चक्षुप्रिया, कुथा, काष्ठासनप्रिया, काका, काकपक्षकपालिका, कपालरसभोज्या, कपालनवमालिनी, कपालस्था, कापाली, कपालसिद्धिदायिनी, कपाला, कुलकर्त्री, कपालशिखरस्थिता, कथना, कृपणश्रीदा, कृपी कृपणसेविता, कर्महन्त्री, कर्मगता, कर्माकर्मविवर्जिता, कर्मसिद्धिरता, कामी, कर्मज्ञाननिवासिनी, कर्मधर्मसुशीला, कर्मधर्मवशङ्करी, कनकाब्जसुनिर्माण महासिंहासनस्थिता, कनकग्रन्थिमाल्याद्या, कनकग्रन्थिभेदिनी, कनकोद्भवकन्या, कनकाम्भोजवासिनी ॥ ६५-७० ॥

**कालकूटादिकूटस्था किटिशब्दान्तरस्थिता ।**
**कङ्कपक्षिनादमुखा[१] कामधेनूद्भवा कला ॥ ७१ ॥**
**कङ्कणाभा धरा कर्द्दा कर्द्दमा कर्द्दमस्थिता ।**
**कर्द्दमस्थजलाच्छन्ना[२] कर्द्दमस्थजनप्रिया ॥ ७२ ॥**
**कमठस्था कार्मुकस्था[३] कम्रस्था कंसनाशिनी[४] ।**
**कंसप्रिया कंसहन्त्री कंसाज्ञानकरालिनी ॥ ७३ ॥**
**काञ्चनाभा[५] काञ्चनदा कामदा[६] क्रमदा कदा ।**
**कान्तभिन्ना कान्तचिन्ता कमलासनवासिनी ॥ ७४ ॥**

कालकूटादिकूटस्था, किटिशब्दान्तरस्थिता, कङ्कपक्षिनादमुखा, कामधेनुद्भवा, कला, कङ्कणाभा, धरा, कर्द्दा, कर्दमा, कर्दमस्थिता, कर्दमस्थजलाच्छन्ना, कर्दमस्थजनप्रिया, कमठस्था, कार्मुकस्था, कम्रस्था, कंसनाशिनी, कंसप्रिया, कंसहन्त्री, कंसाज्ञानकरालिनी, काञ्चनाभा, काञ्चनदा, कामदा, क्रमदा, कदा, कान्तभिन्ना, कान्तचिन्ता, कमलासनवासिनी ॥ ७१-७४ ॥

**कमलासनसिद्धिस्था कमलासनदेवता ।**
**कुत्सिता कुत्सितरता[७] कुत्सा शापविवर्जिता[८] ॥ ७५ ॥**
**कुपुत्ररक्षिका कुल्ला[९] कुपुत्रमानसापहा ।**
**कुजरक्षकरी कौजी कुब्जाख्या[१०] कुब्जविग्रहा ॥ ७६ ॥**
**कुनखी कूपदीक्षुस्था कुकरी कुधनी कुदा ।**
**कुप्रिया कोकिलानन्दा कोकिला कामदायिनी ॥ ७७ ॥**
**कुकामिना कुबुद्धिस्था कूर्पवाहन[११]मोहिनी ।**
**कुलका[१२] कुललोकस्था कुशासनसुसिद्धिदा ॥ ७८ ॥**

कमलासनसिद्धिस्था, कमलासनदेवता, कुत्सिता, कुत्सितरता, कुत्सा, शापविवर्जिता, कुपुत्ररक्षिका, कुल्ला, कुपुत्रमानसापहा, कुजरक्षकरी, कौजी, कुब्जाख्या, कुब्जविग्रहा, कुनखी,

---

१. पक्ष इति—ग० । २. जल इति—ग० ।
३. कामठस्था । ४. वाशिनी ।
५. कंचिलाभा कंचिनदा इति—ग० । ६. मदा इति—ग० ।
७. तरा इति—ग० । ८. शाप इति—ग०
९. कुल्वा इति—ग० । १०. कुब्जा इति आख्या अभिधानं यस्या इत्यर्थः ।
११. वासन इति—ग० । १२. कुश्लोका इति—ग० ।

कूपदीक्षुस्था, कुकरी, कुधनी, कुदा, कुप्रिया, कोकिलानन्दा, कोकिला, कामदायिनी, कुकामिना, कुबुद्धिस्था, कूर्पवाहनमोहिनी, कुलका, कुललाकस्था, कुशासन सुसिद्धिदा ॥ ७५-७८ ॥

**कौशिकी देवता कस्या[१] कन्नादनादसुप्रिया ।**
**कुसौष्ठवा कुमित्रस्था कुमित्रशत्रुघातिनी ॥ ७९ ॥**
**कुज्ञाननिकरा कुस्था कुजिस्था कर्जदायिनी ।**
**ककर्जा[२] कर्ज्जकरिणी कर्जवद्धविमोहिनी ॥ ८० ॥**
**कर्जशोधनकर्त्री च कालास्त्रधारिणी सदा ।**
**कुगतिः कालसुगतिः कलिबुद्धिविनाशिनी ॥ ८१ ॥**
**कलिकालफलोत्पन्ना कलिपावनकारिणी ।**
**कलिपापहरा काली कलिसिद्धिसुसूक्ष्मदा[३] ॥ ८२ ॥**

कौशिकीदेवता, कस्या, कन्नादनादसुप्रिया, कुसौष्ठवा, कुमित्रस्था, कुमित्रशत्रुघातिनी, कुज्ञाननिकरा, कुस्था, कुजिस्था, कर्जदायिनी, ककर्जा, कर्ज्जकरिणी, कर्जवद्धविमोहिनी, कर्जशोधनकर्त्री, कालास्त्रधारिणी, कुगति, कालसुगति, कलिबुद्धिविनाशिनी, कलिकालफलोत्पन्ना, कलिपावनकारिणी, कलिपापहरा, काली, कलिसिद्धिसुसूक्ष्मदा ॥ ७९-८२ ॥

**कालिदासवाक्यगता कालिदाससुसिद्धिदा ।**
**कलिशिक्षा कालशिक्षा कन्दशिक्षापरायणा ॥ ८३ ॥**
**कमनीयभावरता कमनीयसुभक्तिदा ।**
**करकाजनरूपा च कक्षावादकरा करा ॥ ८४ ॥**
**कञ्चुवर्णा काकवर्णा क्रोष्टुरूपा कषामला[४] ।**
**क्रोष्टूनादरता कीता कातरा कातरप्रिया ॥ ८५ ॥**
**कातरस्था कातराज्ञा[५] कातरानन्दकारिणी[६] ।**
**काशमर्दतरूद्भूता काशमर्दविभक्षिणी ॥ ८६ ॥**

कालिदासवाक्यगता, कालिदाससुसिद्धिदा, कलिशिक्षा, कालशिक्षा, कन्दशिक्षापरायणा कमनीयभावरता, कमनीयसुभक्तिदा, करकाजनरूपा, कक्षावादकरा, करा, कञ्चुवर्णा, काकवर्णा, क्रोष्टरूपा, कषामला, क्रोष्टनादरता, कीता, कातरा, कातरप्रिया, कातरस्था, कातराज्ञा, कातरानन्दकारिणी, काशमर्दतरूद्भूता, काशमर्दविभक्षिणी ॥ ८३-८६ ॥

**कष्टहानिः कष्टदात्री कष्टलोकविरक्तिदा ।**
**कायागता[७] कायसिद्धिः कायानन्दप्रकाशिनी ॥ ८७ ॥**

---

१. कन्याकनादवद्भा सुप्रिया इति—ग० । २. सुकज्जा इति—ग० ।
३. सुमोक्षदा इति—ग० । ४. कषायणा इति—ग० ।
५. कारतज्ञा इति—ग० ।
६. कातराणामानन्दः, तं करोति तच्छीला, णिनिप्रत्ययः कर्तरि बोध्यः । ततः स्त्रीत्वविषये ङीप् । ७. कायगीता इति—ग० ।

कायगन्धहरा कुम्भा कायकुम्भा[१] कठोरिणी ।
कठोरतरुसंस्था च कठोरलोकनाशिनी ॥ ८८ ॥
कुमार्गस्थापिता कुप्रा कार्पासतरुसम्भवा ।
कार्पासवृक्षसूत्रस्था कुवर्गस्था करोत्तरा[२] ॥ ८९ ॥
कर्णाटकर्णसम्भूता[३] कार्णाटी[४] कर्णपूजिता ।
कर्णास्त्ररक्षिका कर्णा कर्णहा कर्णकुण्डला ॥ ९० ॥

कष्टहानि, कष्टदात्री, कष्टलोकविरक्तिदा, कायागता, कायसिद्धि कायानन्दप्रकाशिनी, कायगन्धहरा, कुम्भा, कायकुम्भा, कठोरिणी, कठोरतरुसंस्था, कठोरलोकनाशिनी, कुमार्ग स्थापिता, कुप्रा, कार्पासतरुसंभवा, कार्पासवृक्षसूत्रस्था, कुवर्गस्था, करोत्तरा, कर्णाटकर्णसंभूता, कार्णाटी, कर्णपूजिता, कर्णास्त्ररक्षिका, कर्णा, कर्णहा, कर्णकुण्डला ॥ ८७-९० ॥

कुन्तलादेशनमिता[५] कुटुम्बा कुम्भकारिका ।
कर्णासरासना[६] कृष्टा[७] कृष्णहस्ताम्बुजार्जिता ॥ ९१ ॥
कृष्णाङ्गी कृष्णदेहस्था कुदेशस्था कुमङ्गला ।
क्रूरकर्मस्थिता कोरा किरात[८]कुलकामिनी ॥ ९२ ॥
कालवारिप्रिया[९] कामा [१०]काव्यवाक्यप्रिया क्रुधा ।
कज्जलता[११] कौमुदी च कुज्योत्स्ना कलनप्रिया ॥ ९३ ॥
कलना सर्वभूतानां कपित्थवनवासिनी[१२] ।
कटुनिम्बस्थिता काख्या कवर्गाख्या कवर्गिका ॥ ९४ ॥

कुन्तलादेशनमिता, कुटुम्बा, कुम्भकारिका, कर्णासरासना, कृष्टा, कृष्णहस्ताम्बुजार्जिता, कृष्णाङ्गी, कृष्णदेहस्था, कुदेशस्था, कुमङ्गला, क्रूरकर्मस्थिता, कोरा किरातकुलकामिनी, कालवारिप्रिया, कामा, काव्यवाक्यप्रिया, क्रुधा, कज्जलता, कौमुदा, कुज्योत्सना, कलनप्रिया, सर्वभूतानां कलना, कपित्थवनवासिनी, कटुनिम्बस्थिता, काख्या, कवर्गाख्या, कवर्गिका ॥ ९१-९४ ॥

किरातच्छेदिनी कार्या कार्याकार्यविवर्जिता ।
कात्यायनादिकल्पस्था कात्यायनसुखोदया ॥ ९५ ॥
कुक्षेत्रस्था कुलाविघ्ना करणादिप्रवेशिनी ।

---

१. कारकुम्भा इति—ग० ।
२. करोत्सवा इति—ग० ।
३. कर्णाटी इति—ग० ।
४. काण्डाटी इति—ग० ।
५. कर्णाट इति—ग० ।
६. कर्णासवसना इति—ग० ।
७. कृष्णा इति—ग० ।
८. कनकामिनी इति—ग० ।
९. शत्रि इति—ग० ।
१०. कारवाक्कपिवाक्प्रिया इति—क० ।
११. कज्जला वर्ण—कौमुदी कुज्योत्स्नाया कलाप्रिया इति—ग० ।
१२. कपित्थानां वने वसति, तच्छीला, णिनिः कर्तरि ।

काङ्काली किङ्कला काला[1] किलिता सर्वकामिनी ॥ ९६ ॥
कीलितापेक्षिता कूटा कूटकुङ्कुमचर्चिता[2] ।
कुङ्कुमागन्धनिलया [3]कुटुम्बभवनस्थिता ॥ ९७ ॥
कुकृपा [4] करणानन्दा कवितारसमोहिनी ।
काव्यशास्त्रानन्दरता काव्यपूज्या[5] कवीश्वरी ॥ ९८ ॥

किरातच्छेदिनीकार्या, कार्याकार्यविवर्जिता, कात्यायनादिकल्पस्था, कात्यायनसुखोदया, कुक्षेत्रस्था, कुलविघ्ना, करणादिप्रवेशिनी, काङ्काली, किङ्कला, काला, किलिता, सर्वकामिनी, कीलितापेक्षिता, कूटा, कूटकुकुंमचर्चिता, कुंकुमागन्धनिलया, कुटुम्बभवनस्थिता, कुकृपा, करणानन्दा, कवितारसमोहिनी, काव्यशास्त्रानन्दरता, काव्यपूज्या, कवीश्वरी ॥ ९५-९८ ॥

कटकादिहस्तिरथहयदुन्दुभिशब्दिनी[6] ।
कितवा क्रूरधूर्तस्था केकाशब्दनिवासिनी ॥ ९९ ॥
कें केवलाम्बिता केता केतकीपुष्पमोहिनी ।
कैं कैवल्यगुणोद्वास्या कैवल्यधनदायिनी ॥ १०० ॥
करी धनीन्द्रजननी[7] काक्षताक्षकलङ्किनी[8] ।
कुडुवान्ता[9] कान्तिशान्ता कांक्षा पारमहंस्यगा ॥ १०१ ॥
कर्त्री चित्ता कान्तवित्ता कृषणा कृषिभोजिनी[10] ।
कुङ्कुमाशक्तहृदया केयूरहारमालिनी[11] ॥ १०२ ॥

कटकादिहस्तिरथहयदुन्दुभिशब्दिनी, कितवा, क्रूरधूर्तस्था, केकाशब्दनिवासिनी, के केवलाम्बिता, केता केतकीपुष्पमोहिनी, कै कैवल्यगुणोद्वास्या, कैवल्यधनदायिनी, करी, धनीन्द्रजननी, काक्षताक्षकलङ्किनी, कुडुवान्ता, कान्तिशान्ता, कांक्षापारमहंस्यगा, कर्त्री, चित्ता, कान्तवित्ता, कृषणा, कृषिभोजिनी, कुङ्कुमाशक्तहृदया, केयूरहारमालिनी ॥ ९९-१०२ ॥

कीश्वरी केशवा कुम्भा[12] कैशोरजनपूजिता[13] ।
कलिकामध्यनिरता कोकिलस्वरगामिनी ॥ १०३ ॥
कुरदेहहरा कुम्बा कुडुम्बा कुरभेदिनी ।
कुण्डलीश्वरसंवादा कुण्डलीश्वरमध्यगा ॥ १०४ ॥

---

१. कला काला इति—ग० ।
२. चर्चिता इति—ग० ।
३. भरणस्थिता इति—ग० ।
४. कुंकृपा कारणानन्दा इति—ग० ।
५. करीन्वी (?) इति—ग० ।
६. यूयहयदुर्लभ इति—ग० ।
७. षनि इति—क० ।
८. कसराख्या इति—ग० ।
९. कुडुवान्ता कादि इति —ग० ।
१०. कर्षणं कृषिः, तां भुनक्ति पालयति या सा कृषिभोजिनी, ताच्छील्ये णिनिः कर्तरि ।
११. केयूरहारेण मलते शोभते तच्छीला इत्यर्थः ।
१२. वान्धस्था इति—ग० ।
१३. गण्डिता इति—ग० ।

कालसूक्ष्मा कालयज्ञा[१] कालहारकरी[२] कहा ।
कहलस्था कलहस्था[३] कलहा कलहाङ्करी ॥ १०५ ॥
कुरङ्गी[४] श्रीकुरङ्गस्था कोरङ्गी कुण्डलापहा ।
कुकलङ्की[५] कृष्णबुद्धिः कृष्णा ध्याननिवासिनी ॥ १०६ ॥

कीश्वरी, केशवा, कुम्भा, कैशोरजनपूजिता, कलिकामध्यनिरता, कोकिलस्वरगामिनी, कुरुदेहहरा, कुम्बा, कुडुम्बा, कुरुभेदिनी, कुण्डलीश्वर संवादा, कुण्डलीश्वरमध्यगा, कालसूक्ष्मा, कालयज्ञा, कालहारकरी, कहा, कहलस्था, कलहस्था, कलहा, कलहाङ्करी, कुरङ्गी, श्रीकुरङ्गस्था, कोरङ्गी, कुण्डलापहा, कुकलङ्की, कृष्णबुद्धि, कृष्णाध्याननिवासिनी ॥ १०३-१०६ ॥

कुतवा[६] काष्ठवलता कृतार्थकरणी कुसी ।
कलनकस्था[७] कस्वरस्था कलिका दोषभङ्गजा ॥ १०७ ॥
कुसुमाकारकमला कुसुमस्रग्विभूषणा ।
किञ्जल्का कैतवार्कशा कमनीयजलोदया ॥ १०८ ॥
ककारकूटसर्वाङ्गी ककाराम्बरमालिनी ।
कालभेदकरा काटा कर्पवासा ककुत्स्थला ॥ १०९ ॥
कुवासा कबरी कर्वा कूसवी कुरुपालनी ।
कुरुपृष्ठा कुरुश्रेष्ठा कुरूणां ज्ञाननाशिनी ॥ ११० ॥

कुतवा, काष्ठवलता, कृतार्थकरणी, कुसी, कलनकस्था, कस्वरस्था, कलिका दोषभङ्गजा, कुसुमाकारकमला, कुसुमस्रग्विभूषणा, किञ्जल्का, कैतवार्कशा, कमनीयजलोदया, ककारकूटसर्वांगी, ककाराम्बरमालिनी, कालभेदकरा, काटा, कर्पवासा, ककुत्स्थला, कुवासा, कबरी, कर्वा, कूसवी, कुरुपालनी, कुरुपृष्ठा, कुरुश्रेष्ठा, कुरूणां ज्ञाननाशिनी ॥ १०७-११० ॥

कुतूहलरता कान्ता कुव्याप्ता कष्टबन्धना ।
कषायणतरुस्था[८] च कषायणरसोद्भवा[९] ॥ १११ ॥
कतिविद्या[१०] कुष्ठदात्री कुष्ठिशोकविसर्जनी[११] ।
काष्ठासनगता[१२] कार्याश्रया का[१३]श्रयकौलिका ॥ ११२ ॥
कालिका[१४] कालिसन्त्रस्ता कौलिकध्यानवासिनी ।
क्लृप्तस्था क्लृप्तजननी[१५]क्लृप्तच्छन्ना कलिध्वजा ॥ ११३ ॥

---

१. काश इति—ग० ।
२. कल इति—ग० ।
३. कलहहा कमहा कविकोकिला इति—ग० ।
४. कुरङ्गेशी इति—ग० ।
५. कुल—लक्ष्मीः—ग० ।
६. कुतरा कातरमता इति —ग० ।
७. कलाकस्था कासुरस्था कलिकाभङ्गदोषजा इति—ग० ।
८. कषायणतरौ तिष्ठति इत्यर्थः ।
९. कषायणरसे उद्भवो यस्या इत्यर्थः ।
१०. कवि—ग० ।
११. कुष्ठशोकविमर्जिनी—ग० ।
१२. काष्ठा—ग० ।
१३. श्रयाका—ग० ।
१४. कलसाकलसमसना—ग० ।
१५. क्लृप्तच्छिन्ना—ग० ।

केशवा केशवानन्दा केश्यादिदानवापहा ।
केशवाङ्गजकन्या च [1]केशवाङ्गजमोहिनी ॥ ११४ ॥
किशोरार्चनयोग्या [2] च किशोरदेवदेवता ।
कान्तश्रीकरणी कुत्या [3] कपटा [4] प्रियघातिनी ॥ ११५ ॥

कुतूहलरता, कान्ता, कुव्याप्ता, कष्टबन्धना, कषायणतरुस्था, कषायणरसोद्भवा, कतिविद्या, कुष्ठदात्री, कुष्ठिशोकविसर्जिनी, काष्ठासनगता, कार्याश्रया, काश्रया, कौलिका, कालिका, कालिसन्त्रस्ता, कौलिकध्यानवासिनी, क्लृप्तस्था, क्लृप्तजननी, क्लृप्तछन्ना, कलिध्वजा, केशवा, केशवानन्दा, केश्यादिदानवापहा, केशवाङ्गजकन्या, केशवाङ्गजमोहिनी, किशोरार्चनयोग्या, किशोरदेवदेवता, कान्तश्रीकरणी, कुत्या, कपटाप्रियघातिनी ॥ १११-११५ ॥

कुकामजनिता कौञ्चा कौञ्चस्था [5] कौञ्चवासिनी ।
कूपस्था [6] कूपबुद्धिस्था कूपमाला मनोरमा ॥ ११६ ॥
कूपपुष्पाश्रया [7] कान्तिः क्रमदाक्रमदाक्रमा ।
कुविक्रमा कुक्रमस्था कुण्डलीकुण्डदेवता ॥ ११७ ॥
कौण्डिल्यनगरोद्भूता कौण्डिल्यगोत्रपूजिता ।
कपिराजस्थिता [8] कापी कपिबुद्धिबलोदया [9] ॥ ११८ ॥
कपिध्यानपरा [10] मुख्या कुव्यवस्था कुसाक्षिदा ।
कुमध्यस्था कुकल्पा च कुलपङ्क्तिप्रकाशिनी ॥ ११९ ॥
कुलभ्रमरदेहस्था कुलभ्रमरनादिनी ।
कुलासङ्गा कुलाक्षी [11] च कुलमत्ता कुलानिला ॥ १२० ॥

कुकामजनिता, कौञ्चा, कौञ्चस्था, कौञ्चवासिनी, कूपस्था, कूपबुद्धिस्था, कूपमाला, मनोरमा, कूपपुष्पाश्रया, कान्ति, क्रमदा, अक्रमदा, क्रमा, कुविक्रमा, कुक्रमस्था, कुण्डली, कुण्डदेवता, कौण्डिल्यनगरोद्भूता, कौण्डिल्यगोत्रपूजिता, कपिराजस्थिता, कापी, कपिबुद्धिबलोदया, कपिध्यानपरा, मुख्या, कुव्यवस्था, कुसाक्षिदा, कुमध्यस्था, कुकल्पा,

---

१. केशवाङ्ग—ग० ।
२. केशवार्च्चन—योग्याच्च केशवाच्च न देवता—ग० ।
३. कुल्या—ग० । ४. रूपाट—गव ।
५. कोचा कोचस्था कोचवासिनी—ग० ।
६. कुपयस्था कुबुद्धिस्था कुचुमाला—ग० । ७. कुल—ग० ।
८. कापि—ग० ।—कपीनां राजा, कपिराजः, तत्र स्थिता ।
९. विनोदिनी—ग०—कपिबुद्धिबलाभ्यामुदयो यस्याः । अथवा कपिबुद्धिबलयोरुदयो-यया सा इत्यर्थः ।
१०. कापिध्यान पारमाख्या—ग० ।
११. कौलासंगा च कुलमत्ता कुलासिला—ग० ।

कुलपंक्तिप्रकाशिनी, कुलभ्रमरदेहस्था, कुलभ्रमरनादिनी, कुलासङ्गा, कुलाक्षी, कुलमत्ता, कुलानिला ॥ ११६-१२० ॥

**कलिचिन्हा कालचिन्हा कण्ठचिन्हा[1] कवीन्द्रजा ।**
**करीन्द्रा कमलेशश्रीः [2] कोटिकन्दर्पदर्पहा ॥ १२१ ॥**
**कोटितेजोमयी कोट्या कोटीरपद्ममालिनी ।**
**कोटीरमोहिनी कोटिः कोटिकोटिविधूद्भवा ॥ १२२ ॥**
**कोटिसूर्यसमानास्या कोटिकालानलोपमा ।**
**कोटीरहारललिता[3] कोटिपर्वतधारिणी ॥ १२३ ॥**
**कुचयुग्मधरा देवी कुचकामप्रकाशिनी ।**
**कुचानन्दा कुचाच्छन्ना कुचकाठिन्यकारिणी ॥ १२४ ॥**
**कुचयुग्ममोहनस्था कुचमायातुरा कुचा ।**
**कुचयौवनसम्मोहा कुचमर्दनसौख्यदा ॥ १२५ ॥**

कलिचिन्हा, कालचिन्हा, कण्ठचिन्हा, कवीन्द्रजा, करीन्द्रा, कमलेशश्रीः कोटिकन्दर्पदर्पहा, कोटितेजोमयी, कोट्या, कोटीरपद्ममालिनी, कोटीरमोहिनी, कोटि, कोटि-कोटिविधूद्भवा, कोटिसूर्यसमानास्या, कोटिकालानलोपमा, कोटीरहारललिता, कोटि-पर्वतधारिणी, कुचयुग्मधरादेवी, कुचकामप्रकाशिनी, कुचानन्दा, कुचाच्छन्ना, कुचकाठिन्यकारिणी, कुचयुग्ममोहनस्था, कुचमायातुरा, कुचा, कुचयौवनसम्मोहा, कुचमर्दनसौख्यदा ॥ १२१-१२५ ॥

**काचस्था काचदेहा च काचपूरनिवासिनी ।**
**काचग्रस्था काचवर्णा कीचकप्राणनाशिनी ॥ १२६ ॥**
**कमला लोचनप्रेमा कोमलाक्षी[4] मनुप्रिया ।**
**कमलाक्षी कमलजा कमलास्या करालजा ॥ १२७ ॥**
**कमलाङ्घ्रिद्वया काम्या कराख्या करमालिनी ।**
**करपद्मधरा कन्दा कन्दबुद्धिप्रदायिनी ॥ १२८ ॥**

काचस्था, काचदेहा, काचपूरनिवासिनी, काचग्रस्था, काचवर्णा, कीचकप्राण-नाशिनी, कमलालोचनप्रेमा, कोमलाक्षी, मनुप्रिया, कमलाक्षी, कमलजा, कमलास्या, करालजा, कमलाङ्घ्रिद्वया, काम्या, कराख्या, करमालिनी, करपद्मधरा, कन्दा, कन्दबुद्धि-प्रदायिनी ॥ १२६-१२८ ॥

**कमलोद्भवपुत्री च कमला पुत्रकामिनी ।**
**किरन्ती किरणाच्छन्ना किरणप्राणवासिनी[5] ॥ १२९ ॥**

---

१. कण्ठचिन्हा—ग० । २. कमलाकश्रीः—क० ।
३. नमिता—ग० । ४. कामलाक्षी—ग० ।
५. किरणप्राणेषु वसति तच्छीला इति विग्रहः ।

काव्यप्रदा काव्यचित्ता काव्यसारप्रकाशिनी[1] ।
कलाम्बा[2] कल्पजननी कल्पभेदासनस्थिता ॥ १३० ॥
कालेच्छा कालसारस्था कालमारणघातिनी ।
किरणक्रमदीपस्था कर्मस्था क्रमदीपिका ॥ १३१ ॥
काललक्ष्मीः कालचण्डा कुलचण्डेश्वरप्रिया ।
काकिनीशक्तिदेहस्था कितवा किन्तकारिणी ॥ १३२ ॥
करञ्चा कञ्चुका क्रौञ्चा काकचञ्चुपुटस्थिता ।
काकाख्या काकशब्दस्था कालाग्निदहनार्थिका ॥ १३३ ॥
कुचक्षनिलया कुत्रा कुपुत्रा क्रतुरक्षिका ।
कनकप्रतिभाकारा करबन्धाकृतिस्थिता ॥ १३४ ॥

कमलोद्भवपुत्री, कमला, पुत्रकामिनी, किरन्ती, किरणाच्छन्ना, किरणप्राणवासिनी, काव्यप्रदा, काव्यचित्ता, काव्यसारप्रकाशिनी, कलाम्बा, कल्पजननी, कल्पभेदासनस्थिता कालेच्छा, कालसारस्था, कालमारणघातिनी, किरणक्रमदीपस्था, कर्मस्था, क्रमदीपिका, काललक्ष्मी, कालचण्डा, कुलचण्डेश्वरप्रिया, काकिनीशक्तिदेहस्था, कितवा, किन्तकारिणी, करञ्चा, कञ्चुका, क्रौञ्चा, काकचञ्चुपुटस्थिता, काकाख्या, काकशब्दस्था, कालाग्निदहनार्थिका, कुचक्षनिलया, कुत्रा, कुपुत्रा, क्रतुरक्षिका, कनकप्रतिभाकारा, करबन्धाकृतिस्थिता ॥ १२९-१३४ ॥

कृतिरूपा कृतिप्राणा कृतिक्रोध[3]निवारिणी ।
कुक्षिरक्षाकरा[4] कुक्षा कुक्षिब्रह्माण्डधारिणी ॥ १३५ ॥
कुक्षिदेवस्थिता कुक्षिः क्रियादक्षा क्रियातुरा ।
क्रियानिष्ठा क्रियानन्दा क्रतुकर्मा क्रियाप्रिया ॥ १३६ ॥
कुशलासवसंशक्ता कुशारिप्राणवल्लभा ।
कुशारिवृक्षमदिरा काशीराजवशोद्यमा[5] ॥ १३७ ॥
काशीराजगृहस्था च कर्णभ्रातृगृहस्थिता[6] ।
कर्णाभरणभूषाढ्या कण्ठभूषा[7] च कण्ठिका ॥ १३८ ॥
कण्ठस्थानगता कण्ठा कण्ठपद्मनिवासिनी ।
कण्ठप्रकाशकरिणी कण्ठमाणिक्यमालिनी[8] ॥ १३९ ॥
कण्ठपद्मसिद्धिकरी कण्ठाकाशनिवासिनी ।
कण्ठपद्मसाकिनीस्था कण्ठषोडशपत्रिका ॥ १४० ॥

---

१. भाव—ग० । २. कल्पा—ग० ।
३. चक्र—ग० । ४. कृति—क० ।
५. वधोद्यमा—ग० । ६. कर्तृ—ग० ।
७. भूया—ग० ।
८. कण्ठमाणिक्येन मलते मालयति तच्छीला इति विग्रहे णिनिः।

**कृष्णाजिनधरा विद्या कृष्णाजिनसुवाससी ।**
**कुतकस्था कुखेलस्था कुण्डवालङ्कृताकृता[१] ॥ १४१ ॥**
**कलगीता कालघजा कलभङ्गपरायणा ।**
**कालीचन्द्रा कला काव्या कुचस्था[२] कुचलप्रदा ॥ १४२ ॥**
**कुचौरघातिनी कच्छा कच्छादस्था[३] कजातना ।**
**कञ्जाछदमुखी[४] कञ्जा कञ्जतुण्डा कजीवली[५] ॥ १४३ ॥**
**कामराभार्सुरवाद्यस्था[६] कियद्दुहुंकारनादिनी[७] ।**
**कणादयज्ञसूत्रस्था[८] कीलालयज्ञसञ्ज्ञका[९] ॥ १४४ ॥**

कृतिरूपा, कृतिप्राणा, कृति, क्रोधनिवारिणी, कुक्षिरक्षाकरा, कुक्षा, कुक्षिब्रह्माण्डधारिणी, कुक्षिदेवस्थिता, कुक्षि, क्रियादक्षा, क्रियातुरा, क्रियानिष्ठा, क्रियानन्दा, क्रतुकर्मा, क्रियाप्रिया, कुशलासवसंशक्ता, कुशारिप्राणवल्लभा, कुशारिवृक्षमदिरा, काशीराजवशोद्यमा, काशीराजगृहस्था, कर्णभ्रातृगृहस्थिता, कर्णाभरणभूषाढ्या, कण्ठभूषा, कण्ठिका, कण्ठस्थानगता, कण्ठा, कण्ठपद्मनिवासिनी, कण्ठप्रकाशकरिणी, कण्ठमाणिक्यमालिनी, कण्ठपद्मसिद्धिकरी, कण्ठाकाशनिवासिनी, कण्ठपद्मसाकिनीस्था, कण्ठषोडशपत्रिका, कृष्णाजिनधरा, विद्या, कृष्णाजिनसुवाससी, कुतकस्था, कुखेलस्था, कुण्डवालंकृता, कृता, कलगीता कालघजा, कलभङ्गपरायणा, कालीचन्द्रा, कला, काव्या, कुचस्था, कुचलप्रदा, कुचौरघातिनी, कच्छा, कच्छादस्था, कजातना, कञ्जाछदमुखी, कञ्जा कञ्जतुण्डा, कजीवली, कामराभार्सुरवाद्यस्था, कियदहुंकारनादिनी, कणादयज्ञसूत्रस्था, कीलालयज्ञसंज्ञका ॥ १३५-१४४ ॥

**कटुहासा[१०] कपाटस्था कटधूमनिवासिनी ।**
**कटिनादघोरतरा कुट्टला पाटलिप्रिया ॥ १४५ ॥**
**कामचाराब्जनेत्रा[११] च कामचोद्गारसंक्रमा ।**
**काष्ठपर्वतसंदाहा कुष्ठाकुष्ठ[१२]निवारिणी ॥ १४६ ॥**
**कहोडमन्त्रसिद्धस्था[१३] काहला डिण्डिमप्रिया ।**
**कुलडिण्डिमवाद्यस्था कामडामरसिद्धिदा[१४] ॥ १४७ ॥**
**कुलामरवध्यस्था[१५] कुलकेकानिनादिनी ।**
**कोजागरढोलनादा कास्यवीररणस्थिता ॥ १४८ ॥**

---

१. कु गुण—ग० ।
२. कुचेलस्था कुचेलता—ग० ।
३. कषूदस्था—ग० ।
४. कञ्जावृत—ग० ।
५. कजीवनी—ग० ।
६. कामराजीव—ग० ।
७. प्रिय—ग० ।
८. कणायज्ञ—ग० ।
९. कीलालान्दसञ्ज्ञका इति—ग० ।
१०. कटिहासा—ग० ।
११. कमठा कजनेत्राय कामठद्वार—ग० ।
१२. कष्ट इति—ग० ।
१३. सिद्धिस्था कहनाडी स्त्रियः प्रियाः—ग० ।
१४. कामडामरेषु सिद्धिं ददाति या सा इति विग्रहे कर्तरि कप्रत्ययः ।
१५. कुलतामरमध्यस्था कुलढक्का—ग० ।

कटुहासा, कपाटस्था, कटधूमनिवासिनी, कटिनादघोरतरा, कुट्टला, पाटलिप्रिया, कामचाराब्जनेत्रा, कामचोद्गारसंक्रमा, काष्ठपर्वतसंदाहा, कुष्ठा, कुष्ठनिवारिणी, कहोडमन्त्र-सिद्धिस्था, काहला, डिण्डिमप्रिया, कुलडिण्डिमवाद्यस्था, कामडामरसिद्धिदा, कुलामरवध्यस्था, कुलकेकानिनादिनी, कोजागरढोलनादा, कास्यवीररणस्थिता ॥ १४५-१४८ ॥

कालादिकरणच्छिद्रा करुणानिधिवत्सला ।
क्रतुश्रीदा कृतार्थश्री: कालतारा कुलोत्तरा ॥ १४९ ॥
कथापूज्या कथानन्दा कथना कथनप्रिया ।
कार्थचिन्ता कार्थविद्या काममिथ्यापवादिनी ॥ १५० ॥
कदम्बपुष्पसङ्काशा कदम्बपुष्पमालिनी ।
कादम्बरी पानतुष्टा कायदम्भा कदोद्यमा ॥ १५१ ॥
कुङ्कुलेपत्रमध्यस्था[१] कुलाधारा धरप्रिया ।
कुलदेवशरीरार्धा कुलधामा कलाधरा ॥ १५२ ॥
कामरागा[२] भूषणाढ्या कामिनीरगुणप्रिया ।
कुलीना नागहस्ता च कुलीननागवाहिनी ॥ १५३ ॥
कामपूरस्थिता कोपा कपाली [३]बकुलोद्भवा ।
कारागारजनापाल्या[४] कारागारप्रपालिनी ॥ १५४ ॥
क्रियाशक्ति:[५] कालपङ्क्ति: कार्णपङ्क्ति: कफोदया ।
कामफुल्लारविन्दस्था कामरूपफलाफला ॥ १५५ ॥

कालादिकरणच्छिद्रा, करुणानिधिवत्सला, क्रतुश्रीदा, कृतार्थश्री, कालतारा, कुलोत्तरा, कथापूज्या, कथानन्दा, कथना, कथनप्रिया, कार्थचिन्ता, कार्थविद्या, काममिथ्यापवादिनी, कदम्बपुष्पसङ्काशा, कदम्बपुष्पमालिनी, कादम्बरी, पानतुष्टा, कायदम्भा, कदोद्यमा, कुङ्कुलेपत्रमध्यस्था, कुलाधारा, धरप्रिया, कुलदेवशरीरार्धा, कुलधामा, कलाधरा, कामरागा, भूषणाढ्या, कामिनीरगुणप्रिया, कुलीना, नागहस्ता, कुलीननागवाहिनी, कामपूरस्थिता, कोपा, कपाली, बकुलोद्भवा, कारागारजनापाल्या, कारागारप्रपालिनी, क्रियाशक्ति:, कालपंक्ति, कार्णपंक्ति, कफोदया, कामफुल्लारविन्दस्था, कामरूपफलाफला ॥ १४९-१५५ ॥

कायफला कायफेणा कान्ता नाडीफलीश्वरा ।
कमफेरुगता गौरी कायवाणी[६] कुवीरगा[७] ॥ १५६ ॥
कबरी[८]मणिबन्धस्था कावेरीतीर्थसङ्गमा ।
कामभीतिहरा [९]कान्ता [१०]कामवाकुभ्रमातुरा ॥ १५७ ॥

---

१. कुज्ञान—ग० ।
२. नाग—ग० ।
३. बन्दनोद्भवा—ग० ।
४. कोरगा कजलापान ग० ।
५. क्रियापङ्क्ति: कर्णपङ्क्ति कफोदय:—ग० ।
६. कामवाणी—ग० ।
७. कुत्सिता वीरा:, तान् गच्छति इति विग्रहे कुवीरगा ।
८. करवी—ग० ।
९. कान्दा—ग० ।
१०. कावाच—ग० ।

कविभावहरा भामा कमनीयभयापहा [१] ।
कामगर्भदेवमाता कामकल्पलतामरा ॥ १५८ ॥
कमठप्रियमांसादा कमठा मर्कटप्रिया [२] ।
किमाकारा किमाधारा कुम्भकारमनस्थिता ॥ १५९ ॥

कायफला, कायफेणा, कान्ता, नाडीफलीश्वरा, कमफेरूगता, गौरी, कायवाणी:, कुवीरगा, कबरीमणिबन्धस्था, कावेरीतीर्थसङ्गमा, कामभीतिहराकान्ता, कामवाकुभ्रमातुरा, कविभावहरा, भामा, कमनीयभयापहा, कामगर्भदेवमाता, कामकल्पलतामरा, कमठप्रियमांसादा कमठा, मर्कटप्रिया, किमाकारा, किमाधारा, कुम्भकारमनस्थिता ॥ १५९ ॥

काम्ययज्ञस्थिता चण्डा काम्ययज्ञोपवीतिका ।
कामयागसिद्धिकरी काममैथुनयामिनी ॥ १६० ॥
कामाख्या यमलाशस्था [३] कालयामा कुयोगिनी ।
कुरुयागहतायोग्या कुरुमांसविभक्षिणी ॥ १६१ ॥
कुरुरक्तप्रियाकारी किङ्करप्रियकारिणी ।
कर्त्रीश्वरी कारणात्मा कविभक्षा कविप्रिया ॥ १६२ ॥
कविशत्रुप्रष्ठलग्ना कैलासोपवनस्थिता ।
कलित्रिधा त्रिसिद्धिस्था कलित्रिदिनसिद्धिदा ॥ १६३ ॥

काम्ययज्ञस्थिता, चण्डा, कामयज्ञोपवीतिका, कामयागसिद्धिकरी, काममैथुनयामिनी, कामाख्या, यमलाशस्था, कालयामा, कुयोगिनी, कुरुयागहतायोग्या, कुरुमांसविभक्षिणी, कुरुरक्तप्रियाकारी किङ्करप्रियकारिणी, कर्त्रीश्वरी, कारणात्मा, कविभक्षा, कविप्रिया, कविशत्रुप्रष्ठलग्ना, कैलासोपवनस्थिता, कलित्रिधा, त्रिसिद्धिस्था, कलित्रिदिनसिद्धिदा ॥ १६०-१६३ ॥

कलङ्करहिता काली कलिकल्मषकामदा [४] ।
कुलपुष्परङ्ग [५] सूत्रमणिग्रन्थिसुशोभना ॥ १६४ ॥
कम्बोजवङ्गदेशस्था कुलवासुकिरक्षिका ।
कुलशास्त्रक्रिया शान्तिः कुलशान्तिः कुलेश्वरी ॥ १६५ ॥
कुशलप्रतिभा काशी कुलषट्चक्रभेदिनी ।
कुलषट्पद्ममध्यस्था [६] कुलषट्पद्मदीपिनी [७] ॥ १६६ ॥
कृष्णमार्जारकोलस्था कृष्णमार्जारषष्ठिका ।
कुलमार्जारकुपिता कुलमार्जारषोडशी ॥ १६७ ॥
कालान्तकवलोत्पन्ना कपिलान्तकघातिनी ।

---

१. कामनीय—ग० ।
२. कामठ—ग० ।
३. यमना—ग० ।
४. काबदा—ग० ।
५. कावङ्गस्तुक—ग० ।
६. कुलषट्पद्मेषु मध्यस्था इत्यर्थः ।
७. कुलषट्पद्मनि दीपयति तच्छीला इत्यर्थः ।

**कलहासा[1] कालहश्री कलहार्था कलामला ॥ १६८ ॥**

कलङ्करहिता काली कलिकल्मषकामदा कुलपुष्परङ्ग सूत्रमणिग्रन्थिसुशोभना, कम्बोजवङ्ग-देशस्था, कुलवासुकिरक्षिका, कुलशास्त्रक्रिया, शान्ति, कुलशान्ति, कुलेश्वरी, कुशलप्रतिभा, काशी कुलषट्चक्रभेदिनी, कुलषट्पद्ममध्यस्था, कुलषट्पद्मदीपिनी, कृष्णमार्जार कोलस्था, कृष्णमार्जीरषष्ठिका, कुलमार्जीर कुपिता, कुलमार्जीरषोडशी, कालान्तकवलोत्पन्ना, कपिलान्तक-घातिनी, कलहासा, कालहश्री, कलहार्था, कलामला ॥ १६४-१६८ ॥

**कक्षपपक्षरक्षा[2] च कुक्षेत्रपक्षसंक्षया ।**
**काक्षरक्षासाक्षिणी[3] च महामोक्षप्रतिष्ठिता ॥ १६९ ॥**
**अर्ककोटिशतच्छाया आन्वीक्षिकिकरार्चिता ।**
**कावेरीतीरभूमिस्था [4]आग्नेयार्कास्त्रधारिणी ॥ १७० ॥**

कक्षपपक्षरक्षा, कुक्षेत्रपक्षसंक्षया, काक्षरक्षासाक्षिणी, महामोक्षप्रतिष्ठिता, अर्ककोटि-शतच्छाया, आन्वीक्षिकिकरार्चिता, कावेरीतीरभूमिस्था, आग्नेयार्कास्त्रधारिणी ॥ १६९-१७० ॥

**इं किं श्रीं कामकमला पातु कैलासरक्षिणी ।**
**मम श्रीं ईं बीजरूपा पातु काली शिरस्थलम् ॥ १७१ ॥**

**कवच**—ईं किं श्रीं कामकमला कैलासरक्षिणी ( महालक्ष्मी ) ( श्री पार्वती ) मेरी रक्षा करें । श्रीं ईं बीजरूपा काली हमारे शिर:स्थल की रक्षा करें ॥ १७१ ॥

**उरुस्थलाब्जं सकलं तमोल्का पातु कालिका[5] ।**
**ऊडुम्बन्यर्करमणी[6] उष्ट्रोग्रा कुलमातृका ॥ १७२ ॥**
**कृतापेक्षा कृतिमती[7] कुङ्कारी किंलिपिस्थिता ।**
**कुंदीर्घस्वरा क्लृप्ता च कें कैलासकरार्चिका ॥ १७३ ॥**
**कैशोरी कैं करी कैं कें बीजाख्या नेत्रयुग्मकम् ।**

तमोल्का, कालिका मेरे हृदयस्थलरूप कमल की रक्षा करें । ऊडुम्बनी, अर्करमणी, उष्ट्रोग्रा, कुलमातृका, कृतापेक्षा, कृतिमती, कुंकारी, किं, लिपिस्थिता, कुंदीर्घस्वरा, क्लृप्ता, कें कैलास करार्चिका, कैंकरी कैं कें बीज वाली कैशोरी मेरे दोनों नेत्रों की रक्षा करें ॥ १७२-१७४ ॥

**कोमा मतङ्गयजिता कौशल्यादि [8]कुमारिका ॥ १७४ ॥**
**पातु मे कर्णयुग्मन्तु क्रैं क्रैं जीवकरालिनी ।**
**गण्डयुग्मं सदा पातु कुण्डली अङ्कवासिनी[9] ॥ १७५ ॥**

कोमा, मतङ्गयजिता, कौशल्यादि, कुमारिका और क्रौं क्रौं जीवकरालिनी मेरे दोनों कानों की रक्षा करें तथा अङ्कवासिनी कुण्डलिनी मेरे दोनों गण्डस्थलों की रक्षा करें ॥ १७५ ॥

---

१. कलहंसा कलहश्री: कलहार्या—ग० । २. कक्षा—ग० ।
३. कोक्षराक्षा—ग० । ४. स्तोक—ग० ।
५. बालिका—ग० । ६. ऊडूमूलार्कमणी उद्धार्ग्रा कुलमातृका—ग० ।
७. सति—ग० । ८. क्षयाविका—ग० । ९. स्वङ्क—क ।

अर्ककोटिशताभासा[1] अक्षराक्षरमालिनी[2] ।
आशुतोषकरी हस्ता कुलदेवी निरञ्जना ॥ १७६ ॥

करोड़ों सूर्य के समान भासित होने वाली, अक्षराक्षरमालिनी, आशुतोषकरी, कुलदेवी निरञ्जना मेरे हाथों की रक्षा करें ॥ १७६ ॥

पातु मे कुलपुष्पाढ्या पृष्ठदेशं सुकृत्तमा[3] ।
कुमारी कामनापूर्णा पार्श्वदेशं सदावतु ॥ १७७ ॥
देवी कामाख्यका देवी पातु प्रत्यङ्गिरा कटिम् ।
कटिस्थदेवता पातु लिङ्गमूलं सदा मम ॥ १७८ ॥

सुकृत्तमा और कुलपुष्पाढ्या मेरे पृष्ठदेश की रक्षा करें । कामनापूर्ण करने वाली कुमारी मेरे पार्श्वदेश की सदैव रक्षा करें । कामाख्यका देवी और प्रत्यङ्गिरा देवी कटिभाग की रक्षा करें तथा कटिस्थ देवता मेरे लिङ्गमूल की सदा रक्षा करें ॥ १७७-१७८ ॥

गुह्यदेशं काकिनी मे लिङ्गाधः कुलसिंहिका ।
कुलनागेश्वरी पातु नितम्बदेशमुत्तमम् ॥ १७९ ॥
कङ्कालमालिनी देवी मे पातु चारुमूलकम्[4] ।
जंघायुग्मं सदा पातु कीर्तिः चक्रापहारिणी ॥ १८० ॥

काकिनी मेरे गुह्यदेश की तथा कुलसिंहिका मेरे लिङ्ग के अधोभाग की रक्षा करें । कुलनागेश्वरी मेरे उत्तम नितम्बदेश की रक्षा करें । कङ्काल मालिनी देवी मेरे चारुमूल की रक्षा करें । चक्रापहारिणी कीर्ति देवी मेरे दोनों जाँघो की रक्षा करें ॥ १७९-१८० ॥

पादयुग्मं पाकसंस्था पाकशासनरक्षिका ।
कुलालचक्रभ्रमरा पातु पादाङ्गुलीर्मम ॥ १८१ ॥
नखाग्राणि दशविधा तथा हस्तद्वयस्य च ।
विंशरूपा कालनाक्षा सर्वदा परिरक्षतु ॥ १८२ ॥

पाकशासनरक्षिका और पाकसंस्था मेरे दोनों पैरों की तथा कुलालचक्रभ्रमरा मेरे पादांगुली की रक्षा करें । दशविद्या मेरे नखाग्रभागों की तथा विंशरूपा कालनाक्षा मेरे दोनों हाथों की सदैव रक्षा करें ॥ १८१-१८२ ॥

कुलच्छत्राधाररूपा कुलमण्डलगोपिता ।
कुलकुण्डलिनी माता कुलपण्डितमण्डिता ॥ १८३ ॥
काकाननी[5] काकतुण्डी काकायुः प्रखरार्कजा ।
काकज्वरा काकजिह्वा काकाजिज्ञा[6]सनस्थिता ॥ १८४ ॥

---

१. अर्ककोटिशतेनाभासते इति विग्रहः । २. अक्षराक्षरैर्मालयति इति विग्रहः ।
३. मृकत्तमा (?) । ४. युग्मकम्—क० ।
५. काकानना—क० । ६. कपिक्रोधा—ग० ।

कपिध्वजा कपिक्रोशा कपिबाला[1] हिकस्वरा[2] ।
कालकाञ्ची विंशतिस्था सदा विंशनखाग्रहम् ॥ १८५ ॥

कुलच्छत्रा, आधाररूपा, कुलमण्डलगोपिता, कुलकुण्डलिनी माता, कुलपण्डित-मण्डिता, काकाननी, काकतुण्डी, काकायुः, प्रखरार्कजा, काकज्वरा, काकजिह्वा, काकजिघ्ना, आसनस्थिता, कपिध्वजा, कपिक्रोशा, कपिबाला, अहिकस्वरा, कालकाञ्ची तथा विशतिस्था, सर्वदा बीस नखग्रहों की रक्षा करें ॥ १८३-१८५ ॥

पातु देवी कालरूपा कलिकालफलालया ।
वाते वा पर्वते वापि शून्यागारे चतुष्पथे ॥ १८६ ॥
कुलेन्द्रसमयाचारा कुलाचारजनप्रिया[3] ।
कुलपर्वतसंस्था च कुलकैलासवासिनी[4] ॥ १८७ ॥
महादावानले पातु कुमार्गे कुत्सितग्रहे ।
राज्ञोऽप्रिये राजवश्ये महाशत्रुविनाशने ॥ १८८ ॥

कलिकाल में फलों को देने वाली कालरूपा देवी आँधी, पर्वत, निर्जन स्थान तथा चतुष्पथ में हमारी रक्षा करें । कुलेन्द्र समयाचारा, कुलाचारजनप्रिया, कुलपर्वतसंस्था, कुलकैलासवासिनी, महादावानल में कुमार्ग में बुरे ग्रहों की दशा में, राजा के अप्रिय में और राजा की परवशता में तथा महाशत्रु के विनाश कार्य में मेरी रक्षा करें ॥ १८६-१८८ ॥

कलिकालमहालक्ष्मीः क्रियालक्ष्मीः कुलाम्बरा ।
कलीन्द्रकीलिता कीला कीलालस्वर्गवासिनी ॥ १८९ ॥
दशदिक्षु सदा पातु इन्द्रादिदशलोकपा ।
नवच्छिन्ने सदा पातु सूर्यादिकनवग्रहा ॥ १९० ॥

कलिकाल महालक्ष्मी क्रियालक्ष्मी, कुलाम्बरा, कालीन्द्रकीलिता, कीला कीलालस्वर्ग वासिनी तथा इन्द्रादि दश लोकपाल दशों दिशाओं में हमारी रक्षा करें । नवच्छिन्न में सूर्यादिक नव ग्रह सर्वदा रक्षा करें ॥ १८९-१९० ॥

पातु मां कुलमांसाढ्या कुलपद्मनिवासिनी ।
कुलद्रव्यप्रिया मध्या[5] षोडशी भुवनेश्वरी ॥ १९१ ॥
विद्यावादे विवादे च मत्तकाले महाभये ।
दुर्भिक्षादिभये चैव व्याधिसङ्करपीडिते ॥ १९२ ॥
कालीकुल्ला कपाली च कामाख्या कामचारिणी ।
सदा मां कुलसंसर्गे पातु कौले सुसङ्गता ॥ १९३ ॥
सर्वत्र सर्वदेशे च कुलरूपा सदावतु ।

---

१. वाना—ग । २. कपि—ग० ।
३. कुलाचारजनाः प्रिया यस्याः सा इत्यर्थः । ४. कुले कैलासे च वसति तच्छीला ।
५. कलेः कालः कलिकालस्तत्र लक्ष्मीः ।

कुलमांसाढ्या, कुलपद्मनिवासिनी, कुलद्रव्य प्रिया, मध्या षोडशी भुवनेश्वरी मेरी रक्षा करें। विद्या के बाद ( शास्त्रार्थ ) में विवाद में उन्मत्त से पाला पड़ने पर महामय उपस्थित होने पर दुर्भिक्षादि भय के काल में तथा अनेक व्याधियों के साकर्य से पीडित होने पर कालीकुल्ला, कपाली, कामाख्या, कामचारिणी मेरी रक्षा करें। कुल ( कुण्डलिनी ) के संसर्ग में कौल ( शाक्तों ) में सुसङ्गता मेरी रक्षा करें। सर्वत्र सभी देशों में कुलरूपा हमारी रक्षा करें ॥ १९१-१९४ ॥

**इत्येतत् कथितं नाथ मातुः प्रसादहेतुना ॥ १९४ ॥**
**अष्टोत्तरशतं नाम सहस्रं कुण्डलीप्रियम्।**
**कुलकुण्डलिनीदेव्याः सर्वमन्त्रसुसिद्धये ॥ १९५ ॥**

हे नाथ ! मैने श्री माता की कृपा से कुण्डली प्रिय ११०८ नामों को कहा है। कुलकुण्डलिनी के ये नाम सभी मन्त्रों की सिद्धि देने के लिए है ॥ १९४-१९५ ॥

**सर्वदेवमनूनाञ्च चैतन्याय सुसिद्धये।**
**अणिमाद्यष्टसिद्ध्यर्थं साधकानां हिताय च ॥ १९६ ॥**

सभी देवों के मन्त्रों को चैतन्य करने के लिए, सम्यक् सिद्धि प्रदान करने के लिए, अणिमादि अष्टसिद्धि के लिए तथा साधकों का हित करने के लिए इन्हें हमने कहा है ॥ १९६ ॥

**ब्राह्मणाय प्रदातव्यं कुलद्रव्यपराय[1] च।**
**अकुलीनेऽब्राह्मणे च न देयः कुण्डलीस्तवः।**
**प्रवृत्ते कुण्डलीचक्रे सर्वे वर्णा द्विजातयः ॥ १९७ ॥**

ये ११०८ नाम ब्राह्मण को अथवा कुलद्रव्य में निष्ठा रखने वालों को ही देना चाहिए। जो कुलमार्ग में निष्ठा न रखता हो तथा ब्राह्मण योनि में जन्म लेने वाला न हो, उसे यह कुण्डलीस्तव कदापि प्रदान नहीं करना चाहिए। कुण्डली चक्र के प्रवृत्त होने पर सभी वर्ण द्विजाति हैं ॥ १९७ ॥

**निवृत्ते भैरवीचक्रे सर्वे वर्णाः पृथक्-पृथक्।**
**कुलीनाय प्रदातव्यं साधकाय विशेषतः ॥ १९८ ॥**
**दानादेव हि सिद्धिः स्यान्ममाज्ञाबलहेतुना।**
**मम क्रियायां यस्तिष्ठेत्स मे पुत्रो न संशयः ॥ १९९ ॥**

भैरवी चक्र के निवृत्त हो जाने पर सभी वर्ण अलग अलग हैं। यह कुण्डली स्तव विशेष कर कुलीन साधक को ही देना चाहिए। मेरी आज्ञा के प्रताप से इस स्तोत्र के देने मात्र से भी सिद्धि हो जाती है। जो मेरी अर्चना पूजा में निरन्तर लगा रहे वह मेरा पुत्र है, इसमें संशय नहीं ॥ १९८-१९९ ॥

**स आयाति[2] मम पदं जीवन्मुक्तः स[3] वासवः।**
**आसवेन समांसेन कुलवह्नौ महानिशि ॥ २०० ॥**

---

१. कुलद्रव्यं कुलरूपं धनम्, तत् परं प्रधानं यस्य तस्मै इत्यर्थः।
२. समामाति—ग०। ३. स मानवः—ग०।

**नाम प्रत्येकमुच्चार्य[1] जुहुयात् कायसिद्धये ।**
**पञ्चाचाररतो भूत्वा ऊद्‌ध्वरिता भवेद्यति:[2] ॥ २०१ ॥**

मेरी क्रिया में संलग्न साधक मेरा पद प्राप्त करता है । वह जीवन्मुक्त है और समस्त वसुओं का पति है । मांसयुक्त आसव से अर्द्धरात्रि में साधक कामनासिद्धि के लिए मेरे प्रत्येक नाम का उच्चारण कर आहुति प्रदान करें और पञ्चाचार में सर्वदा निरत रहे तो वह ऊर्ध्वरिता सन्यासी हो जाता है ॥ २००-२०१ ॥

**संवत्सरान्मम स्थाने आयाति नात्र संशय: ।**
**ऐहिके कायसिद्धि: स्यात् दैहिके सर्वसिद्धिद: ॥ २०२ ॥**

वह एक संवत्सर के भीतर मेरा स्थान प्राप्त कर लेता है इसमें संशय नहीं । इस लोक में उसे कामसिद्धि हो जाती है । दैहिक सिद्धि होने पर वह स्वयं सभी सिद्धियाँ प्रदान करता है ॥ २०२ ॥

**वशी भूत्वा त्रिमार्गस्था: स्वर्गभूतलवासिन: ।**
**अस्य भृत्या: प्रभवन्ति इन्द्रादिलोकपालका: ॥ २०३ ॥**
**स एव योगी परमो यस्यार्थेऽयं[3] सुनिश्चल: ।**
**स एव खेचरो भक्तो नारदादिशुकोपम: ॥ २०४ ॥**

स्वर्ग एवं भूतल में रहने वाले तीनों वर्ण उसके वशवर्ती होकर भृत्य बन जाते हैं और इसी के प्रभाव से इन्द्र आदि लोकपालों का भी जन्म होता है । जो इस स्तव के अर्थ में सुनिश्चल है, वही सर्वोत्कृष्ट योगी है । वही आकाशगामी मेरा भक्त है तथा नारदादि शुकदेव के समान मेरा भक्त है ॥ २०३-२०४ ॥

**यो लोक: प्रजपत्येवं[4] स शिवो न च मानुष: ।**
**स समाधिगतो नित्यो ध्यानस्थो योगिवल्लभ: ॥ २०५ ॥**

जो इस अष्टोत्तरसहस्र नाम वाले स्तव का पाठ करता है वह मनुष्य नहीं साक्षात् शिव है । वही समाधि में लीन रहने वाला ध्यान परायण योगिवल्लभ है ॥ २०५ ॥

**चतुर्व्यूहगतो देव: सहसा नात्र संशय: ।**
**य: प्रधारयते भक्त्या कण्ठे वा मस्तके भुजे ॥ २०६ ॥**
**स भवेत् कालिकापुत्रो विद्यानाथ: स्वयंभुवि ।**
**धनेश: पुत्रवान् योगी यतीश: सर्वगो भवेत् ॥ २०७ ॥**
**वामा वामकरे धृत्त्वा सर्वसिद्धीश्वरो[5] भवेत् ॥ २०८ ॥**

वह चतुर्व्यूह में सहसा पहुँचने वाला देवता है इसमें संशय नहीं है । जो साधक इस सहस्रनामस्तव को भक्ति पूर्वक गले में, मस्तक में या भुजा में धारण करता है वह कालिका

---

१. प्रत्यक्—क० । २. यदि—ग० । ३. यस्यार्थेऽहं सुनिश्चला—क० ।
४. प्रजिहोत्येवम्—ग० । ५. सर्वासां सिद्धीनामीश्वर: इति तात्पर्यम् ।

का पुत्र बन जाता है । स्वयं विद्या का अधिपति, धनाधिपति, पुत्रावान् योगी यतीश तथा सर्वज्ञ बन जाता है । स्त्री अपने बायें हाथ में धारण करने से सभी सिद्धियों की ईश्वरी बन जाती है ॥ २०६-२०८ ॥

**यदि पठति मनुष्यो मानुषी वा महत्या**
**सकलधनजनेशी पुत्रिणी जीववत्सा ।**
**कुलपतिरिह लोके स्वर्गमोक्षैकहेतुः**
**स भवति भवनाथो योगिनीवल्लभेशः[1] ॥ २०९ ॥**

यदि महामहिमेश्वरी भगवती के इस स्तोत्र का मनुष्य पाठ करे अथवा मानुषी स्त्री पाठ करे तो वह सब प्रकार से धनजन की ईश्वरी, पुत्रिणी तथा जीवितपुत्र की माता बनी रहती है, मनुष्य इस लोक में अपने कुल का प्रधान, स्वर्ग के मुक्ति का अधिकारी, योगिनियों का प्रिय तथा संसार का ईश्वर बन जाता है ॥ २०९ ॥

**पठति य इह नित्यं भक्तिभावेन[2] मर्त्यो**
**हरणमपि करोति प्राणविप्राणयोगः ।**
**स्तवनपठनपुण्यं कोटिजन्माघनाशं**
**कथितुमपि[3] न शक्तोऽहं महामांसभक्षा ॥ २१० ॥**

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे महाकुलकुण्डलिनी अष्टोत्तरसहस्रनामस्तवकवचं नाम षट्त्रिंशत्तमः पटलः[4] ॥ ३६ ॥**



जो मनुष्य भक्तिपूर्वक इस लोक में अष्टोत्तरसहस्र नाम स्तव का पाठ करता है, अथवा प्राणवायु एवं अपान वायु से युक्त रहकर इस स्तोत्र को पढ़ने का पुण्य करता है, उसके करोड़ों जन्म के पाप नष्ट हो जाते हैं । मैं तो महामांस ( मनुष्य का मांस ) भक्षण करने वाली हूँ, फिर किस प्रकार इस स्तोत्र के पाठ का पुण्य कह सकती हूँ ॥ २१० ॥

**॥ श्रीरुद्रयामल के उत्तरतन्त्र के महातन्त्रोद्दीपन में सिद्धमन्त्र के प्रकरण में षट्चक्रप्रकाश में भैरवीभैरव संवाद में महाकुण्डलिनी अष्टोत्तरसहस्र-नामस्तव तथा कवच नामक छत्तीसवें पटल की डा० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ ३६ ॥**



---

१. योगिनीनां वल्लभः, स चासौ ईशश्चेति विग्रहः । २. योगः—ग० ।
३. सर्वे चौरादिका विकल्पितणिजन्ता इति पक्षे इदं रूपम् ।
४. अत्रेदं धेयम् । ग० पुस्तके पञ्चत्रिंशत् पटलानन्तरं षट्त्रिंशदिति भ्रान्त्या लिखितम् । एतेन ग० पुस्तके षट्त्रिंशदिति सप्तत्रिंशदिति पटलद्वयस्याभावो लक्ष्यते।

# अथ सप्तत्रिंशः पटलः

आनन्दभैरव उवाच

श्रुतञ्च परमं ज्ञानं धर्माधर्मविवेचनम् ।
सर्ववेदान्तसारं च सारात्सारं परात्परम् ॥ १ ॥

**श्री आनन्दभैरव ने कहा**—हे भैरवी ! धर्म एवं अधर्म का विवेचन करने वाला समस्त सारों का तत्त्व, सभी वेदान्तों का सारभूत उत्कृष्ट ज्ञान हमने सुना ॥ १ ॥

कुण्डलीस्तवनं श्रुत्वा पूर्णोऽहं जगदीश्वरि ।
ईदानीं श्रोतुमिच्छामि स्वाधिष्ठानं प्रकाशकम् ॥ २ ॥
यदि मे सुकृपादृष्टिरानन्दघनसञ्चये ।
वद श्रीकुण्डलीयोगं स्वाधिष्ठानविभेदनम् ॥ ३ ॥
येन क्रमेण भेदं स्यात्तत्प्रकारं विनिर्णय ।

हे जगदीश्वरि ! कुण्डलीस्तवन सुनकर मैं पूर्णकाम हो गया । हे आनन्दघन सञ्चये ! यदि आप मुझ पर कृपादृष्टि रखती हैं तो अब स्वाधिष्ठान चक्र को प्रकाशित करने वाले उस ज्ञान को कहिए, जिससे कुण्डलिनी का योग होने पर स्वाधिष्ठान चक्र का भेदन हो जाता है । अतः हे भैरवी! जिस प्रकार स्वाधिष्ठान चक्र का भेदन होता है उसप्रकार को निर्णयपूर्वक कहिए ॥ २-४ ॥

आनन्दभैरवी उवाच

महाकाल महावीर आनन्दसागरप्रिय[१] ॥ ४ ॥
योग्योऽसि योगमार्गाणामत[२] एव प्रकथ्यते ।
येन क्रमेण चक्रस्य भेदः स्यादमरो भवेत् ॥ ५ ॥
अमरो जितचित्तारिः क्रोधजित् प्रबलो बली[३] ।
धर्माधर्मज्ञानवांश्च[४] योगी भवति सज्जनः ॥ ६ ॥

**श्री आनन्दभैरवी ने कहा**—हे महाकाल ! हे महावीर ! हे आनन्द सागर प्रिय ! आप योग मार्गों के योग्य हैं, इसलिए जिस प्रकार स्वाधिष्ठान चक्र का भेदन हो जाता है उसे कह रही हूँ ॥ ४-५ ॥

स्वाधिष्ठान चक्र के भेदन से साधक अमर हो जाता है, चित्त में रहने वाले काम

---

१. आश्रय—ग० । २. वर्गाणाम् —क० ।
३. पावनो वशी—क० । ४. ज्ञानरतो—क० ।

क्रोधादि शत्रुओं पर विजय प्राप्त होती है । क्रोध को जीत कर साधक प्रबल एवं बलवान् हो जाता है, धर्म और अर्धम का ज्ञाता तथा सज्जन योगी हो जाता है ॥ ५-६ ॥

**परकालदर्शी[1] विज्ञः स्यात् क्रतुश्रद्धापरायणः ।**
**अहङ्कारविहीनो[2] यः स योगी भवति ध्रुवम् ॥ ७ ॥**
**महावीरसुसङ्गिनी च सङ्गदोषविवर्जितः ।**
**महात्मापरमं ब्रह्मज्ञानी भवति योगिराट् ॥ ८ ॥**

वह वर्तमान के अतिरिक्त भूत भविष्यत्काल का ज्ञाता, प्राज्ञ क्रतुश्रद्धापरायण हो जाता है । जो अहङ्कार से विहीन है, वह निश्चय ही योगी बन जाता है । महावीरों का सुन्दर साथ करने वाला तथा अन्य के सङ्ग दोष से विवर्जित रहता है । स्वाधिष्ठान का भेदन करने वाला साधक महात्मा परम ब्रह्मज्ञानी तथा योगीराज बन जाता है ॥ ७-८ ॥

**विख्यातः सर्वदेशे च किन्तु स्वाश्रयवर्जितः ।**
**बालको विक्रमी धन्वी धनुर्बाणधरोऽव्ययः ॥ ९ ॥**
**स भवेत् योगमार्गेशो विवेकी पापवर्जितः[3] ।**
**अविद्याग्रन्थिनिश्चेष्टो विवेकधर्मचातकः ॥ १० ॥**

सभी स्थानों में वह अपनी कीर्ति से विख्यात हो जाता है, उसे स्वयं किसी के आश्रय की आवश्यकता नहीं रहती । चाहे बालक हो, चाहे पुरुषार्थी हो, चाहे धनुर्धारी हो अथवा धनुषबाण धारण करने वाला हो, चाहे विकारहीन हो, स्वाधिष्ठान का भेदक जैसा कैसा भी साधक योगमार्ग का ईश्वर, विवेकी, पापविवर्जित हो जाता है, अविद्या ग्रन्थि के भेदन से वह किसी कार्य में आसक्त नहीं होता तथा विवेक एवं धर्म का चातक बन जाता है ॥ ९-१० ॥

**चतुरो विषमज्ञानवर्जितो यज्ञकृत् शुचिः ।**
**स भवेद् योगिनीपुत्रो योगानामधिपो भवेत् ॥ ११ ॥**
**यदि योगस्थितो मन्त्री वायवीशक्तिनिर्भरः ।**
**स एव योगी षण्मासादिति मे तन्त्रनिर्णयः ॥ १२ ॥**

वह चतुर बन जाता है, विषमज्ञान से वर्जित, यज्ञकर्ता तथा शुचि बन जाता है, योगिनियों का पुत्र बन कर सभी योगों का अधिपति हो जाता है । यदि योगाभ्यास करने वाला मन्त्रवेत्ता साधक वायवी शक्ति पर निर्भर रह कर इसका पाठ करे, तो वह ६ महीने के भीतर ही योगी बन जाता है, ऐसा हमारे तन्त्रशास्त्र में निर्णय है ॥ ११-१२ ॥

**यो मे तन्त्राणि जानाति सदर्थज्ञानजानि च ।**
**स एव चतुरो योगी मम भक्तो न संशयः ॥ १३ ॥**

जो उत्तम अर्थ वाले ज्ञान से उत्पन्न हुए मेरे तन्त्रों को जानता है, वही चतुर योगी है मेरा भक्त है, इसमें संशय नहीं ॥ १३ ॥

---

१. परं कालं पश्यति तच्छीलः परकालदर्शी ।
२. अहंकारेण विहीन इति तृतीयातत्पुरुषः ।
३. पाक—ग० ।

यदि वायुपानरतो मन्त्री भवति साधकः ॥ १४ ॥
अथ स्वाधिष्ठानं कुलवरगतं षड्दलगतं
प्रभाकारं विष्णोरतिशयपदं कामनिलयम् ।
महायोगेन्द्राणां मनसि निलयं[१] चारुकिरणं
शरच्चन्द्रज्योत्स्नायुतमतिधनं भव्यविषयम् ॥ १५ ॥

यदि मन्त्रज्ञ साधक वायुपान में निरत रहने वाला तथा यह स्वाधिष्ठान चक्र शक्ति के मार्ग में रहने वाला, ६ पद्म दलों से युक्त है, प्रभा के आकार वाला, विष्णु का अतिशय पद तथा काम का स्थान है, तो यह महायोगेन्द्रों के मन में रहने वाला तथा मनोहर किरणों वाला है, शरत्कालीन चन्द्रिका से युक्त, अत्यन्त घना तथा भव्य विषयों वाला है ॥ १४-१५ ॥

सदाभावक्षेत्रे[२] सकलसुधियो वेद ... ...
यदामापक्षेमे सकलसुधियो वेदपथगाः
विचारं[३] कुर्वन्ति क्षितिगतरताः[४] श्रीप्रभृतयः
महाविष्णोः पीताम्बर नरपते[५] श्यामलतनोः ।
(प्रकाशस्यान्तःपटस्थ नटवरस्यातिनिलयम्)
विटच्छायामध्ये[६] निवसति यथा गोकुलकुले[७] ॥ १६ ॥
हरिध्यानं कुर्यान्निरवधिमहानन्दरसिकः
स एवात्मा साक्षादिह नववरः[८] षोडशयुवा ।
महासर्पारिस्थं[९] स्थितिकरणगं[१०] नागगमनं
मुखं [११]वंशीनादध्वनिगुणधरं भावयति कः ॥ १७ ॥

अनन्त आनन्द समुद्र के महारसिक को निरवधि (निरन्तर) विष्णु का ध्यान करना चाहिए । वह विष्णु सबकी साक्षात् आत्मा है, नवीन पीताम्बर धारण करने वाले तथा षोडशवर्षीय युवा हैं । गरुड़ के ऊपर स्थित रहने वाले, सृष्टि की स्थिति करने वाले तथा मत्त नाग पर गमन करने वाले हैं । मुख में वंशीनाद ध्वनि रूप गुण धारण करने वाले हैं, ऐसे विष्णु का ध्यान ब्रह्मदेव करते हैं ॥ १६-१७ ॥

**विमर्श**—सोलहवाँ श्लोक अस्पष्ट है ।

स एवात्मा नित्यो यतिरिह दले[१२] कोमलकुले[१३]

---

१. निचयम्—ग० ।
२. सदा भावक्षेत्रे—ग० ।
३. ये कुवक्ति—ग० ।
४. व्रता—ग० ।
५. नवगतः—ग० ।
६. विटपच्छायामध्ये इति युक्तः पाठो मन्तव्यः ।
७. गवां कुलं गोकुलम्, पुनश्च तस्य कुलम् ।
८. नयः—ग० ।
९. सर्पाविस्थम्—ग० ।
१०. करणगण—ग० ।
११. शीलादध्वनि गुणधरं भावयति कः इति —ग० ।
१२. क्षणे—ग० ।
१३. दले—ग० ।

कुलागारे सारे सरसिजयुते षड्दलवरे ।
सुरानन्दश्रीदं दिवि दमनकर्त्तारममदं [१]
सुधाकान्तं कृष्णं परमपुरुषं भावयति कः ॥ १८ ॥

वही आत्मा है, जिनका ध्यान यति लोग अपने आप कुलागार के सारभूत ६ पत्ते वाले कमल पर करते हैं । उन देवताओं को आनन्द तथा श्री देने वाले स्वर्गलोक में दमन करने वाले, स्वयं मदरहित, सुधा के कान्त, परमपुरुष श्रीकृष्ण का ध्यान ब्रह्मदेव करते हैं ॥ १८ ॥

महाविद्यासिद्धं कुलपतिमनोमान्ययजितं [२]
मुकुन्दं श्रीकृष्णं रसदलगतं स्वागमगतं [३] ।
मुरारिं पापारिं नवयुवतिहृत्पद्मसुगतं
हृषीकेशं विष्णुं विषयकरणं भावयति कः ॥ १९ ॥

महाविद्या की उपासना में सिद्ध, शाक्त सम्प्रदाय के स्वामियों के मन से मान्य होने के कारण पूजित, मुकुन्द श्रीकृष्ण, ६ पत्ते वाले कमल पर रहने वाले, अपने आगमों में विद्यमान्, मुरनामक असुर के अरि, पापारि, नवयुवतियों के हृदय कमल पर विराजित, विषयों के कारणभूत, हृषीकेश, विष्णु का ब्रह्मदेव ध्यान करते हैं ॥ १९ ॥

स योगेन्द्रो [४] ज्ञानी जयति सुकृतौ कौतुकवतां
रमेशं श्रीकृष्णं रसविषहरं मानसचरम् ।
सरस्वत्या युक्तं कुलरसमयं मुक्तिजडितं
भजेच्चैतन्यान्तं सुरगुरुवरं [५] मोक्षमयते [६] ॥ २० ॥

कुतूहल करने वालों में अत्यन्त पारङ्गत योगेन्द्र ज्ञानी भगवान् श्रीकृष्ण सर्वोत्कृष्टता को प्राप्त करें । जो रमेश, श्रीकृष्ण, पारद के विष को हरण करने वाले, योगियों के मन में सञ्चरण करने वाले, सरस्वती से युक्त, शक्ति स्वरूप रसमय, मुक्ति से जड़े हुए, चेतना वाले और देवताओं में सर्वश्रेष्ठ है, उन भगवान् का मैं भजन करता हूँ, जिनके भजन से मनुष्य मोक्ष प्राप्त करते है ॥ २० ॥

यतीन्द्रः सश्रीकः प्रचयति निजं भाव्यविषयं
पुराणं योगीन्द्रं हरिमखिलपं कामनिलयम् ।
महासूक्ष्मं [७] द्वारं कुलवधुरतं वामकिरणं
विशालाक्षं कृष्णं निजरसकुले कान्तममरम् [८] ॥ २१ ॥

---

१. दवन—ग० ।
२. रति मनो —ग० ।
३. दल—ग० ।
४. योगेभ्यो—क० ।
५. तरुकरम् ।
६. मोक्षमतये—ग० ।—मोक्षे या मतिस्तस्यै इत्यर्थः । मोक्षमयते इति पाठे तु मोक्षम् अयते इति पदच्छेदः ।
७. महासूक्ष्मोदारम्— ग० ।
८. कान्तमरतम्—ग० ।

श्रीसम्पन्न यतीन्द्र जिनकी कृपा से अपने भावी विषय को पूर्ण करना चाहते हैं ऐसे पुराणपुरुष, योगीन्द्र, समस्त विश्व का पालन करने वाले, काम के एकमात्र स्थान, महासूक्ष्म, जीवों के प्रवेश निर्गम के द्वार, कुल वधुओं में प्रेम करने वाले, सुन्दर प्रकाश वाले, अपने सरस कुल में कान्त और अमर हरि श्रीकृष्ण का मैं भजन करता हूँ ॥ २१ ॥

**कृपासाक्षीज्ञानं गुणगदितदेहं दाहरहितं**
**महाशौलं[१] सत्यं कुवलयकरिं हन्ति मरणम् ।**
**अघावीशं श्रीशं शशिमुखिकराम्भोजयजितं**
**तमात्मानं कृष्णं निजकुलदले योऽपि भजति[२]॥ २२ ॥**

जो कृपा के साक्षी हैं, ज्ञानस्वरूप हैं, जिनका देह गुणमय है, जो ईर्ष्यादि दाह से रहित हैं, महान् शूल एवं सत्य स्वरूप हैं, कुवलय नामक अरि को मार डालने वाले हैं, अघावीश ( पतिः एवं घावः सथाथोञण् न धावः यस्य स अघावस्तस्येशः ) अनाथों के ईश्वर, श्री के ईश्वर, चन्द्रमुखि गोपाङ्गनाओं के कर कमलों से पूजित, उन आत्मस्वरूप श्रीकृष्ण की अपने कुलदल में जो कोई योगी भजन करता है, वह मोक्ष प्राप्त करता है ॥ २२ ॥

**महाशब्दोत्पन्नं प्रकृतिविकृतिं कारणकृतिं**
**कृपासिन्धुं कृष्णं कुलवधुशतामोदमिलितम् ।**
**जगन्नाथं स्तौति क्षितिपतिवशायोपकरणं[३]**
**विराटं ब्रह्माण्डं करणगमहाविष्णुमरणम्[४] ॥ २३ ॥**

महाशब्द से उत्पन्न होने वाले, प्रकृति के विकृति, कारण और कार्य स्वरूप, कृपासिन्धु श्रीकृष्ण, सैकड़ो कुल वधुओं के प्रमोद में मिले हुए, समस्त क्षितिपतियों के वश के लिए उपकरणभूत, विराट् एवं ब्रह्माण्ड स्वरूप, कारण में रहने वाले तथा द्रुतगति वाले महाविष्णु जगन्नाथ की जो स्तुति करता है वह मोक्ष प्राप्त करता है ॥ २३ ॥

**विनोदं व्याकर्तुं[५] त्रिभुवनपतिः श्रीपतिरहो**
**प्रचण्डे संसारे उदयति[६] सदाभावसदने ।**
**महामेघश्यामस्त्रिफल[७]करुणासागरकुले**
**अमूल्ये सञ्चारे[८] विषयरसनासञ्चय विषम् ॥ २४ ॥**

अहो ! संसारी मनुष्यों के विषय में संलग्न रसना के संचय में विषरूप विनोद को विशेष रूप से विकसित करने के लिए त्रिभुवनपति, महामेघ के समान श्यामवर्ण वाले, श्रीपति अपने भक्तों के भावसदन में एवं अमूल्य सञ्चरणशील इस संसार के धर्म, अर्थ, काम रूप तीनों फलों वाले, करुणासागर वाले कुल में अवतार लेते हैं ॥ २४ ॥

---

१. कैतम्—ग० ।
२. भवति—ग० ।
३. करणात्—ग० ।
४. करणप—ग० ।
५. व्यावर्त्य—ग० ।
६. तदयति—ग० ।
७. पथ—ग० ।
८. संसारे—ग० ।

स कृष्णः श्री विष्णुः प्रकृतिगदया हन्ति सततं[१]
अतः[२] कृष्णो ध्येयः सुरनरगणैः पञ्चसुमुखैः[३]।
कुलाम्भोजे षट्के मनरसदले ध्यानफलितः
किराती राकिण्या नयन कमलापानमधुरम् ॥ २५ ॥

वे श्रीकृष्ण श्रीविष्णु होकर अपनी प्रकृतिरूपी गदा से सर्वदा सबको मारते हैं, अतः देवताओं, मनुष्यों एवं पञ्चमुख वाले सदाशिव के द्वारा एकमात्र श्रीकृष्ण ही ध्यान करने योग्य हैं । जो स्वाधिष्ठान चक्र के ६ पत्तों वाले कमल पर ध्यान करने से फल प्रदान करते हैं और जो किराती ( गोया ) राकिणी के नयन रूपी कमल के पान से माधुर्य भाव को प्राप्त हो रहे हैं ॥ २५ ॥

धराधारं पूर्णं गगननिलयं कालपुरुषं
मनोगम्यं रम्यं नव नयनलावण्यरसिकम् ।
सदा ध्यायेत् कृष्णं कुरुगणरिपुं यः कुलपतिः
निरालम्बः श्यामः प्रकृतियमुनातीरतरुगः[४] ॥ २६ ॥

इस धरा के आधार पूर्ण, शून्य में निवास करने वाले, कालपुरुष, मनोगम्य, परम रमणीय, नवीन नेत्रों के लावण्य के रसिक कुरुगणों के शत्रु श्रीकृष्ण का कुलपति को ( शाक्त सम्प्रदाय का श्रेष्ठ उपासक ) सदैव ध्यान करना चाहिए । जो निरालम्ब श्यामवर्ण वाले हैं प्रकृतिस्वरूप एवं यमुना तट के वृक्षों पर बैठे हुए हैं ॥ २६ ॥

कुलीना गोपीभिः परिमिलितपार्श्वस्थलसुखः
प्रधानः क्षेत्रज्ञः [५]क्षितिपतिकराम्भोजयजितः ।
प्रकाशात्मा नाथः प्रचयकरुणो ध्येय इरया[६]
मनोधर्मं च्छत्रं त्रिविधगुणगानाश्रितकरम् ॥ २७ ॥

कुलीन गोपियों के साथ सम्मिलित हो कर जो उनके पार्श्व स्थल का सुख प्राप्त करने वाले हैं, प्रधान है, क्षेत्रज्ञ हैं, राजाओं के कर कमलों से पूजित हैं, प्रकाशात्मा और सबके स्वामी हैं, करुणा से परिपूर्ण हैं, ईडा के द्वारा ध्यान करने योग्य हैं, मन के धाम ( त्रिताप ) से बचाने वाला जिनका छाता है तथा त्रिविधगुणगान करने वाली वंशी में जिनका हाथ लगा हुआ है ॥ २७ ॥

त्रिकाण्डस्थं[७] खण्डोद्भववनरसं प्राणरसिकं
यदा स्तौति प्रातः समयमफले चारुवरदम् ।

---

१. मरण—ग० । २. अथो—ग० ।
३. समुखैः ग० ।—पञ्चसुमुखैरिति पाठे तु पञ्च सुमुखानि येषां तैरिति विग्रहः कार्यः ।
४. तरुपः—ग० । ५. जनितः—ग० ।
६. हरयः—ग० । ७. त्रिकामस्यं स्वर्णोद्भव—ग० ।

महामोक्षक्षेत्रं कुलवधुयुतं कृष्णपरमं
गुणेशं राधेशं[1] रजनिविधुनितं[2] वेदनिलयम् ॥ २८ ॥

वेद के त्रिकाण्ड में रहने वाले ( खण्डोद्भव वनरसा ?) प्राणों से प्रिय राधा के रसिक, सुन्दर वरदान देने वाले, महामोक्ष के क्षेत्र, कुल बधुओं से संयुक्त, परम ब्रह्मस्वरूप, गुणों के ईश्वर, राधा के स्वामी, रात्रि के चन्द्रमा स्वरूप वेद में निवास करने वाले श्रीकृष्ण का प्रातः काल में बिना फल की आकांक्षा किए जो लोग स्तुति करते हैं ॥ २८ ॥

क्रियादक्षं सूक्ष्मं समयगुणयो[3]गाङ्कजडितं
त्रिकोणस्थं गङ्गाजलगलितसारं तारकतनुम् ।
महाकालानन्दं[4] गगनघनवर्णं सजलकं
प्रभावारं भावं[5] तरुणनववपुः श्रीधरमलम्[6] ॥ २९ ॥

क्रिया में दक्ष, सूक्ष्म, समयगुण योगाङ्कजडितं त्रिकोणस्थ, गङ्गाजल में जिनका तत्त्व गलित हो कर मिल गया है, ऐसे तारक शरीर वाले, महाकाल सदाशिव के आनन्द स्वरूप, आकाश एवं बादल के समान कान्ति वाले, प्रभा के समूह, युवावस्था के उमङ्ग युक्त नवीन शरीरधारी श्रीधर के भजन से बढ़कर अन्य कुछ भी नहीं है ॥ २९ ॥

वनोत्फुलाम्भोजा[7] मनविरचना भालकलया
महाशोभारूपं कुलपुरुषगं व्याश्रयति[8] यः ।
स योगी संसारे भवति रसनायोगनिरतः
मनो यो व्याधाय प्रचुरफलदं कृष्णमखिलम् ॥ ३० ॥

वन में फूले हुए कमल के पुष्पों से रचना वाले, मस्तक की कला से महाशोभा सम्पन्न कुल पुरुषों में निवास करने वाले, प्रचुर फल देने वाले, सर्वस्वरूप श्रीकृष्ण में मन स्थापित कर जो उनका आश्रय ग्रहण कर लेता है ॥ ३० ॥

महाज्ञानोत्साहं गतिगुणवहिः प्राणनिचयं
जगत्तारं ब्रह्म निरवधिमहायोगकिरणम्[9] ।
यदा लोकस्तौति प्रतिदिनमिहानन्दघटितं
विकारं सर्वेषां ग्रहणनिलनं भास्करविधोः ॥ ३१ ॥
महाराहुग्रासं शतशतमहापुण्यनिकरं[10] ।

---

१. व्याधेशम्—ग० ।
२. ब्रजनिधियुगम्—ग० ।—ब्रजन्ति गावो यस्मिन् स ब्रजः, तस्य निधिः, तत्र युगम्, युगलम् ।
३. योगयाग—ग० ।
४. तारम्—ग० ।
५. कहाकालेनानन्दो यस्य तम् ।
६. श्रीधरमणम्—ग० ।
७. वलोत्फुल्लाम्भोजमल विवचनाभान—ग० ।
८. व्याग्रयतिजे—ग० ।
९. घोर—ग० ।
१०. शतस्य शतं तत्संख्याकानि महापुण्यानि तेषां निकरम् ।

कुलानन्दं विष्णुं शशिशतघटारामकिरणम्[1] ।
मनोगम्यं सूक्ष्मं त्रिगुणजडितं भावयति कः ॥ ३२ ॥

महान् ज्ञान के उत्साह से सम्पन्न, मनुष्यों के गति और गुण से परे, प्राणों के समूह सब का प्राण होने से जगत् को तारने के लिए परब्रह्मस्वरूप, जिनके महायोग के किरण की कोई सीमा नहीं है ऐसे आनन्द की घटना से घटित, सभी में विकार स्वरूप, सूर्य और चन्द्रमा में ग्रहण स्वरूप श्रीकृष्ण की जब सारा जगत् स्तुति करता है । महाराहु को अपना ग्रास बनाने वाले, सैकड़ों सैकड़ों चन्द्र समूहों के समान सुखदायक किरणों वाले, कुलानन्द, विष्णु जो मन से भी अगम्य एवं सूक्ष्म अनेक पुण्यों के समुदाय स्वरूप हैं, तीन गुणों से समन्वित हैं ऐसे श्रीकृष्ण का ध्यान ब्रह्मदेव करते हैं ॥ ३१-३२ ॥

कृष्णभक्तिं मुदा कृष्णं ध्यात्वा कृत्वा यतिर्भवेत् ।
श्रीकृष्णचरणाम्भोजे तस्य भक्तिर्न संशयः ॥ ३३ ॥
कृष्णब्रह्म कृष्णब्रह्मा च त्रिध्यानपरायणः ।
स कृष्णस्तं जनं नीत्वा ददाति अपि शङ्कर ॥ ३४ ॥
विना कृष्णपदाम्भोजं स्वाधिष्ठानं कुतो [2]जयम् ।
कृष्णध्यानान्महापद्मभेदं प्राप्नोति शङ्कर ॥ ३५ ॥

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने षट्चक्रप्रकाशे भैरवीभैरवसंवादे स्वाधिष्ठानश्रीकृष्णराकिणीसाधनं नाम सप्तत्रिंशत्तमः पटलः ॥ ३७ ॥**



जो साधक प्रसन्नतापूर्वक श्रीकृष्ण में भक्ति करता है एवं प्रसन्नता से उनका ध्यान करता है, वह यति बन जाता है और श्रीकृष्ण के चरण कमलों में उसकी भक्ति हो जाती हैं इसमें संशय नहीं । श्रीकृष्ण ही ब्रह्म हैं । श्रीकृष्ण ही सृष्टिकर्ता ब्रह्मा हैं ऐसा विचार कर जो तीनों काल में उनके ध्यान में परायण रहता है, हे शङ्कर ! ऐसे अपने भक्त को वे श्रीकृष्ण अपनाकर अपना सब कुछ दे देते हैं । बिना कृष्णपदाम्भोज की सेवा किए भला साधक किस प्रकार स्वाधिष्ठान चक्र पर विजय प्राप्त कर सकता है, हे शङ्कर ! कृष्ण के ध्यान से ही स्वाधिष्ठान नामक महापद्म का साधक भेद कर लेता है ॥ ३३-३५ ॥

**॥ श्री रुद्रयामल के उत्तरतन्त्र के महातन्त्रोद्दीपन में षट्चक्र प्रकाश में भैरवीभैरव संवाद में स्वाधिष्ठान चक्र पर श्रीकृष्ण राकिणी साधन नामक सैंतीसवें पटल की डा० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ ३७ ॥**



---

१. घाम—ग० ।　　२. यजेत्—ग० ।

# अथाष्टात्रिंशः पटलः

आनन्दभैरवी उवाच

शृणु नाथ प्रवक्ष्यामि श्रीकृष्णसाधनोत्तमम् ।
येन क्रमेण भक्तिः स्यात्कालजालवशो भवेत् ॥ १ ॥
मम पादाम्बुजे भक्तिर्भवत्येव न संशयः ।
भक्तिमान् यः साधकेन्द्रो महाविष्णुं भजेद्यदि ॥ २ ॥
शिवतुल्यो भवेन्नाथ मम भक्तो महीतले ॥ ३ ॥

**आनन्दभैरवी ने कहा**—हे नाथ! अब श्रीकृष्ण के साधनों में सर्वोत्तम साधन कहती हूँ जिसे क्रम से करने में श्रीकृष्ण में भक्ति होती है तथा कालसमूह वशवर्ती हो जाते हैं ॥ १ ॥

ऐसा करने से मेरे चरण कमलों में भक्ति होती है, इसमें संशय नहीं । यदि विष्णु में भक्ति रखते हुए साधकेन्द्र विष्णु का भजन करे, तो हे नाथ ! मेरा भक्त हो जाने पर वह साधक इस पृथ्वीतल में शिव तुल्य हो जाता है ॥ २-३ ॥

श्रीकृष्णं जगदीश्वरं त्रिजगतामानन्दमोक्षात्मकं
सम्पूर्णं त्रिगुणावृतं गुणधरं सत्त्वाधिदैवं परम् ।
लिङ्गाधः स्थितिराज्यपालपुरुषं पञ्चाननस्थायिनं
श्रीविष्णुं शुभदं जनो यदि भजेल्लोकः सशक्तिं सुखी[1] ॥ ४ ॥

त्रिलोकी मात्र को आनन्द एवं मोक्ष प्रदान करने वाले, पूर्ण स्वरूप, सत्त्वादि तीन गुणों से आवृत, अतएव गुणों को धारण करने वाले, सत्त्व के अधिदेवता, परब्रह्मस्वरूप, लिङ्ग के अधोभाग में स्थिति वाले, स्वाधिष्ठान ( चक्र रूप ) राज्य का पालन करने वाले, पाँच मुख से स्थित, कल्याण प्रदान करने वाले, महापुरुष, शक्ति सहित विष्णु का यदि भक्त भजन करे तो वह महासुखी हो जाता है ॥ ४ ॥

आदौ कामं त्रिसर्गं कुलवधुनियुतं कामबीजं त्रिसर्गं
श्रीकृष्णं वारयुग्मं प्रणययुगलकं चन्द्रिकाकाशयुक्तम् ।
ब्रह्मद्वन्द्वं भजामि प्रकृति पुरुषिकां काकिनीं तत्परे च
भूयो भूयो भजामि श्रवणगलयनं वह्निजायाविलग्नम् ॥ ५ ॥

प्रथम त्रिसर्ग युक्त काम, कुलवधू से संयुक्त कामबीज एवं त्रिसर्गस्वरूप राधा के सहित प्रणयी युगल, चन्द्रिका से व्याप्त आकाश में निवास करने वाले, काकिनी रूप प्रकृति रूपी

---

१. सुधीः—ग० ।

स्त्री से संयुक्त, ब्रह्मद्वन्द्व श्रवण ( उ ) में मिला हुआ गलयनम् ( इ ) अर्थात् सन्धि करने से विं उससे विशेष रूप से लगी हुई वह्निजाया ( स्वाहा ) अर्थात् विं 'स्वाहा' इस मन्त्र का बारम्बार जप करता हूँ ॥ ५ ॥

**एतन्मन्त्रं जपित्वा प्रणवमिति नमोऽन्तं तथाद्ये मिलित्वा**
**भूयो भूयो नमोऽन्तं[1] त्रिभुवनसहितं क्षोभयेत्तत् क्षणेन ।**
**राजश्रीस्तस्य शीर्षे निरवधि वसुधा मन्दिरे संस्थिरा[2] स्यात्**
**कालच्छेदं प्रकृत्य प्रवसति सुमुखी ब्रह्मदण्डे च काले ॥ ६ ॥**

उक्त मन्त्र के आदि में प्रणव ( ॐ ) जिसके अन्त में 'नमः' पद हो, अर्थात् 'ॐ नमो विं स्वाहा' फिर इसके बाद 'नमः' अर्थात् 'ॐ नमो विं स्वाहा नमः' इस मन्त्र का बारम्बार जप करने वाला साधक क्षण भर में समस्त त्रिलोकी को क्षुब्ध कर देता है । उसके शिर पर सदैव राज्यश्री सवार रहती है और निरवधि वसुधा उसके मन्दिर में स्थिर रूप से निवास करती है । किं बहुना सुमुखी भगवती महालक्ष्मी, ब्रह्मा के निर्धारित आयु के अनुसार एक दण्ड पर्यन्त काल तक काल की मर्यादा लाँघ कर उसके घर में निवास करती हैं ॥ ६ ॥

**ततः प्राणे दैवनाथ मम सन्तोषवर्द्धन[3] ।**
**इदानीं नरसिंहस्य मन्त्रं शृणु महाप्रभो ॥ ७ ॥**
**कान्तबीजं समुद्धृत्य युगलं युगलं स्मृतम् ।**
**महानृसिंहमन्त्रेण पूजयामि नमो नमः ॥ ८ ॥**
**स्वाधिष्ठाने महापद्मे मनोनिष्पापहेतुना ।**
**मनो विधाय यो योगी जपेन्मन्त्रं पुनः पुनः ॥ ९ ॥**

हे देव ! हे नाथ ! हे प्राणों में संतोष बढ़ाने वाले महाप्रभो ! इसके बाद नरसिंह के मन्त्र को सुनिए । कान्त बीज ( क्ष्रौं ) को दो दो बार उच्चारण कर, फिर 'महानृसिंहमन्त्रेण पूजयामि नमो नमः' ऐसा कह कर साधक योगी अपने मन को निष्पाप करने के लिए स्वाधिष्ठान नामक महापद्म में मन को स्थापित कर बारम्बार जप करे ॥ ७-९ ॥

**एतन्मन्त्रजपेनापि सिद्धो भवति साधकः ।**
**एतन्मन्त्रप्रभावेण भावसिद्धिं क्षणाल्लभेत् ॥ १० ॥**
**साधको यदि भूमिस्थः साधयेत्तु हरेर्मनुम् ।**
**रेणुसंख्या[4] क्रमेणैव सिद्धिं प्राप्नोति वीर्यतः[5] ॥ ११ ॥**

इस मन्त्र के जप से भी वह सिद्ध हो जाता है । बहुत कहने से क्या ? इस मन्त्र के प्रभाव से क्षणमात्र में उसे अपने भाव में सिद्धि प्राप्त हो जाती है । साधक यदि पृथ्वी पर

---

१. मनस्थ—ग० ।
२. संशिवा—ग० ।—सम्यक् शिवं कल्याणं यस्याः सा इति बहुव्रीहिः ।
३. सन्तोषं वर्धयति इति, ण्यन्ताद् बृधुधातोः बाहुलकात् कर्तरि ल्युट्प्रत्ययः ।
४. एवमेव—ग० । ५. धैर्यतः—ग० ।

खड़ा हो कर नरसिंह मन्त्र को सिद्ध कर लेवे तो पृथ्वी में जितने रेणुओं की संख्या है, उतने काल तक अपने पराक्रम से सिद्धि प्राप्त कर लेता है ॥ १०-११ ॥

अथ वक्ष्ये महादेव सर्ववर्णसुसारकम् ।
वर्णमालास्वसंशक्तो जप्त्वा सिद्धिमवाप्नुयात् ॥ १२ ॥
सिद्धिमन्त्रं प्रार्थयते यदि मर्त्यो निराश्रयः ।
निर्जने संस्थिरो[1] भूत्वा एकाकी दीपवर्जितः[2] ॥ १३ ॥
निःशङ्कं प्रजपेन्मन्त्रं स्वाधिष्ठानाब्जसङ्गते[3] ।
वशीकृतं जगत्सर्वं येन तत्क्रममाशृणु ॥ १४ ॥

अब, हे महादेव ! सभी वर्णों के सुन्दर सार वाले मन्त्र को कहता हूँ । वर्णमाला में संसक्त रह कर साधक उसका जप कर सिद्धि प्राप्त कर लेता है । मनुष्य यदि मन्त्र की सिद्धि चाहता है तो वह किसी का आश्रय ग्रहण न करे । किसी निर्जन स्थान में स्थिर हो कर एकाकी निवास करे, दीप का भी प्रकाश वर्जित करे । ऐसे स्थान में स्वाधिष्ठान चक्र में मन को लगाकर निःशङ्कभाव से मन्त्र का जप करे । इस मन्त्र के जप से वह सारे जगत् को वश में कर लेता है । हे महादेव ! अब उसका क्रम सुनिए ॥ १२-१४ ॥

प्रणवं पूर्वमुच्चार्य नान्तबीजं तथोद्गरेत् ।
वह्निबीजसमालग्नमधोदन्तस्वरान्वितम् ॥ १५ ॥
नादबिन्दुसमायुक्तं[4] पुनर्वारद्वयं वदेत् ।
नरसिंहाय[5] शब्दान्ते पुनर्वारत्रयं वदेत् ॥ १६ ॥

प्रथम प्रणव ( ॐ ) का उच्चारण करे फिर वह्नि बीज 'रं' जो अधोदन्तस्वर ( ओ ) एवं नाद बिन्दु ( अनुस्वार ) से संयुक्त हो अर्थात् ( रौं ) । ऐसा नान्तबीज क्ष् इस प्रकार ( क्ष्रौं ) को दो बार उच्चारण करे । फिर 'नरसिंहाय' इस शब्द के अन्त में 'क्ष्रौं' इसी मन्त्र को तीन बार पढ़े ॥ १५-१६ ॥

देवीबीजं शक्तिबीजं स्वाहान्तं मनुमुद्गरेत् ।
एतन्मन्त्रप्रयोगेण कुण्डलीवशमानयेत् ॥ १७ ॥
स्वाधिष्ठाने स्थिरीभावं प्राप्नोति साधकाग्रणीः ।
सर्वेषां प्राणगो भूत्वा प्रबलोऽसौ महीतले ॥ १८ ॥
शीतं रौद्रं समं तस्य पापापापं जयाजयम् ।
धर्माधर्मः सदा ज्ञानं नित्यज्ञानं समाप्नुयात् ॥ १९ ॥

फिर देवी बीज 'ऐं ह्रीं क्लीं' फिर शक्ति बीज क्लीं' जो स्वाहान्त हो, इस प्रकार क्ष्रौं क्ष्रौं नरसिंहाय क्ष्रौं क्ष्रौं क्ष्रौं ऐं ह्रीं क्लीं क्लीं स्वाहा' इस मन्त्र का उच्चारण करे । साधक इस

---

१. सुस्थिरो—ग० । २. दिग इति—ग० ।
३. सद्धशात्—ग० ।
४. नादश्च बिन्दुश्च नादबिन्दू, ताभ्यां समायुक्तम् । द्वन्द्वगर्भस्तृतीयातत्पुरुषः ।
५. नवसिंह—ग० ।

नृसिंहमन्त्र के जप से कुण्डलिनी को अपने वश में करे । इससे वह साधकाग्रणी स्वाधिष्ठान चक्र में स्थिरता का भाव प्राप्त कर लेता है और सभी के प्राण में गमन करते हुए महीतल में प्रबल हो जाता है । ऐसें साधक के लिए शीत गर्मी, पाप, अपाप, जय, पराजय, धर्म और अधर्म सभी बराबर हैं, वह सदैव ज्ञानवान् रह कर नित्यज्ञान प्राप्त कर लेता है ॥ १७-१९ ॥

पुनः श्रीकृष्णमन्त्राश्च सर्वदेवनिषेवकाः ।
यज्ज्ञात्वा देवताः सर्वा सर्वदिङ्मुखपालकाः ॥ २० ॥
तत्प्रयोगं महादेव शृणु सिद्धेश्च लक्षणम् ।
विना कृष्णाश्रयेणापि ब्रह्मा तुष्टो न कुत्रचित् ॥ २१ ॥
न तुष्टा कुण्डली देवी पशुभावं विना प्रभो ।
पशुभावे ज्ञानसिद्धिर्वीरभावे हि मोक्षभाक् ॥ २२ ॥

इसके अतिरिक्त श्रीकृष्ण के मन्त्र का सभी देवता सेवन करते हैं, जिसे जान कर सभी देवता दिक्पाल हो गए हैं । हे महादेव ! अब उन श्रीकृष्ण के मन्त्रों का प्रयोग सुनिए और सिद्ध हो जाने पर उसके लक्षणों को भी सुनिए । बिना श्रीकृष्ण का आश्रय लिए ब्रह्मदेव भी कभी संतुष्ट हुए नहीं दिखाई पड़े । हे प्रभो ! पशुभाव के बिना कुण्डलिनी देवी भी कभी संतुष्ट नहीं दिखाई पड़ी है । पशुभाव के आश्रय से ज्ञानसिद्धि प्राप्त होती है और वीरभाव में साधक मोक्ष का अधिकारी बनता है ॥ २०-२२ ॥

दिव्यभावे समाधिस्थो जीवन्मुक्तः स उच्यते ।
कान्तबीजं समुद्धृत्य शक्रवामस्वरान्वितम् ॥ २३ ॥
नादबिन्दुसमाक्रान्तं कृष्णसम्बोधनं पदम् ।
पुनः पूर्वमनुं युक्त्वा त्र्यक्षरात्मा महामनुः ॥ २४ ॥
एतन्मन्त्रजपं कृत्वा योगी भवति योगिराट् ।
योगोऽयं परमाह्लादकारकोऽनन्तरूपकः ॥ २५ ॥

दिव्यभाव में जब साधक समाधिस्थ हो जाता है तब जीवन्मुक्त कहा जाता है । कान्त बीज ( क् ) का उच्चारण कर वामस्वर ( ई ) से संयुक्त शक्र ( र् ) जो नाद बिन्दु अनुस्वार से संयुक्त हो इस प्रकार 'क्लीं' यही कृष्ण का बीज मन्त्र है । फिर तीन अक्षरों वाले महामनु क्लीं का पहले कहे गए महामन्त्र से युक्त कर अर्थात् ( क्लीं क्ष्रौं ) जप करने से वह योगिराज बन जाता है । यह योग परमाह्लाद करने वाला है तथा अनन्त रूप वाला है ॥ २३-२५ ॥

बहुभिः किं कथनीयं यः करोति फलं लभेत् ।
ध्यायेत् श्रीगोपिकानाथं राकिणीमण्डलेश्वरम् ॥ २६ ॥
जगतां सत्त्वनिलयं श्रीकृष्णं गोकुलेश्वरम् ।
स्वाधिष्ठानस्थितं श्यामं यजेद् भुजचतुष्टयम् ॥ २७ ॥
शङ्खचक्रगदापद्म — महाशोभामनोरमम् ।
सर्वविद्यागतं काम्यं श्रीगोविन्दं सुशीतलम् ॥ २८ ॥

बहुत कहने से क्या फल ? जो करता है उसे उसका फल मिलता है । जप करने के समय राकिणीमण्डल के ईश्वर श्रीगोपिकानाथ का ध्यान करना चाहिए । जो जगन्मात्र के सत्त्व

के निलय हैं, गोकुलेश्वर श्रीकृष्ण हैं, स्वाधिष्ठान चक्र में स्थित रहने वाले हैं, श्याम वर्ण और चारभुजा वाले हैं उनका पूजन करना चाहिए। शंख, चक्र गदा, पद्म धारण करने से जो महाशोभा से अत्यन्त मनोरम हैं, सभी विद्याओं को जानने वाले हैं, सबके काम्य हैं, श्रीगोविन्द हैं और सुशीतल हैं उन श्रीकृष्ण का भजन करे ॥ २६-२८ ॥

**महामोहहरं नाथं वनमालाविभूषितम् ।**
**कोटिकन्याकराम्भोजजयितं सर्वसङ्गतम्[१] ॥ २९ ॥**
**किरीटिनं महावीरं बालेन्दुं चूडयान्वितम् ।**
**गुञ्जामाला शोभिताङ्गं श्रीनाथं परमेश्वरम् ॥ ३० ॥**
**पीताम्बरं मन्दहास्यं षट्पद्मदलमध्यगम् ।**
**कामिनीप्राणनिलयं वसुदेवसुतं हरिम् ॥ ३१ ॥**

जो महामोह को हरण करने वाले हैं सबके नाथ हैं, वनमाला से विभूषित अङ्ग वाले हैं करोड़ों कन्याओं के कर कमलों से यजन किए जाते हैं, सब में व्याप्त हैं उन श्रीकृष्ण का पूजन करे। किरीट धारण करने वाले हैं, महावीर हैं, अपनी चूड़ा में बालेन्द्र धारण किए हुए हैं। गुञ्जा की माला से शोभित अङ्गो वाले श्री नाथ हैं, परमेश्वर हैं ऐसे श्रीकृष्ण का पूजन करे। पीताम्बर धारण किए हुए, मन्द मन्द मुस्कुराते हुए, ६ पत्ते वाले कमल ( षट्चक्र ) के मध्य में रहने वाले कामिनियों के प्राणभूत वसुदेव पुत्र श्रीहरि का ध्यान करे ॥ २९-३१ ॥

**एवं ध्यात्वा षड्दले च सदा वक्षःस्थकौस्तुभम् ।**
**राजराजेश्वरं शौरिं भाव्यं श्रीवत्सलाञ्छनम् ॥ ३२ ॥**
**स्वाधिष्ठानगतं ध्यायेन्मुरारिसिद्धिगो नर: ।**
**एवं ध्यात्वा पुरा ब्रह्मा नारायणगुणोदय: ॥ ३३ ॥**
**मन: कल्पितद्रव्यैश्च पूजयेत्परमेश्वरम् ।**
**षड्दले च महापद्मे संध्यायेत् हरिमायजेत् ॥ ३४ ॥**

इस प्रकार षट्दल में श्रीकृष्ण का ध्यान कर वक्षः स्थल पर सर्वदा कौस्तुभ धारण करने वाले राजराजेश्वर शूरवंश में उत्पन्न, श्रीवत्स के चिन्ह से सुशोभित, स्वाधिष्ठान चक्र पर विराजमान श्रीकृष्ण का सिद्धि चाहने वाला साधक ध्यान करे। इस प्रकार ध्यान करने के कारण ब्रह्मा नारायण के गुणों से युक्त हो गए। फिर मानसिक कल्पित द्रव्यों से षड्दल महापद्म पर परमेश्वर श्रीकृष्ण का ध्यान करते हुए इस प्रकार यजन करे ॥ ३२-३४ ॥

**षोडशोपचारयुक्तैर्मानसक्षेत्रसम्भवै: ।**
**मन: कल्पितपीठे च स्थापयित्वा हरिं गुरुम् ॥ ३५ ॥**
**योगेश्वरं कृष्णमीशं राधिकाराकिणीश्वरम् ।**
**एकान्तचित्ते चारोप्य कृष्णं पीठे प्रपूजयेत् ॥ ३६ ॥**
**तत्र दलाष्टकं पद्मं तत्र षट्कोणकर्णिकम् ।**

१. जितं सर्वज्ञ—ग० ।—कोटिसंख्याका: कन्या:, तासां करा हस्ता अम्भोजमिव, तेन जयितम् । जय: सञ्जातो यस्य तत् । इतच्प्रत्यय: ।

वेदद्वारोपशोभञ्च संनिर्म्माय मनोहरम् ॥ ३७ ॥
पुनः पुनर्यदा[1] ध्यायेत् षड्दलेषु दलेष्टकम् ।
पञ्चोपचारैर्दशकैः श्रीविष्णुं परिपूजयेत् ॥ ३८ ॥

साधक मानस क्षेत्र में उत्पन्न किए गए षोडशोपचार युक्त द्रव्यों से मन में पीठ की कल्पना कर सर्वश्रेष्ठ भगवान् श्रीकृष्ण को स्थापित करें । योगेश्वर ईश्वर राधिकारूप राकिणी के प्राणवल्लभ श्रीकृष्ण को एकान्त चित्त रूपी पीठ पर स्थापित कर पूजन करे, वहाँ पर आठ दलों वाला पद्म उसके भीतर छः कोणों वाली कर्णिकायें निर्माण करे, फिर चार द्वारों से उसे मनोहर रूप में सुसज्जित करें, फिर उस षड्दल पर प्रत्येक दलों पर बारम्बार श्री विष्णु का ध्यान करे और पाँच उपचारों से अथवा दशोपचारों से उन विष्णु का पूजन करे ॥ ३५-३८ ॥

गन्धादयो नैवेद्यान्ता पूजापञ्चोपचारिका ।
आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ॥ ३९ ॥
मधुपर्काचमनस्नान–[2]वसनाभरणानि च ।
सुगन्धिसुमनो धूपदीपनैवेद्यवन्दनम् ॥ ४० ॥
प्रयोजयेदर्चनायामुपचारांस्तु षोडश ।
विष्णोराराधने[3] कुर्यात् सर्वत्र विधिरेष यः ॥ ४१ ॥

गन्ध से लेकर नैवेद्यपर्यन्त पूजन पञ्चोपचार पूजन कहा गया है । अथवा १. आसन, २. स्वागत, ३. पाद्य, ४. अर्घ्य, ५. आचमनीय, ६. मधुपर्क, ७. आचमन, ८. स्नान, ९. वस्त्र, १०. आभरण, ११. सुगन्धित चन्दन, १२. पुष्प, १३. धूप, १४. दीप, १५. नैवेद्य एवं १६. प्रणाम—इन षोडश उपचारों का अर्चन में उपयोग करना चाहिए । विष्णु की आराधना में सर्वत्र यही विधि कही गई है ॥ ३९-४१ ॥

विधिः स्यात् कृष्णविश्वेश समुद्भूतस्य सत्पतेः ।
दशोपचारकथनं श्रूयतां वल्लभ प्रभो ॥ ४२ ॥
पाद्यमर्घ्यं तथाचामं मधुपर्काचमनं तथा ।
गन्धादयो नैवेद्यान्ता उपचारा दशक्रमात् ॥ ४३ ॥
विष्णुं सम्पूज्य धीमान्[4] हविष्याशीर्जितेन्द्रियः ।
सर्वदा परमानन्दः कालिकावशसेवकः ॥ ४४ ॥
सर्वज्ञानधरो वीरो विवेकी सर्वदर्शकः ।
संभावयेत् स्वाधिष्ठाने निरन्तरं महाशुचिः ॥ ४५ ॥
बालकक्रियया व्याप्तो भावज्ञानी निरामयः ।
स भवेत् कालिकापुत्रो यः कृष्णभावतत्परः ॥ ४६ ॥

हे प्राणवल्लभ ! हे प्रभो ! कृष्णविश्वेश सत्पति के पूजन में और भी विधियाँ हैं उनमें

---

१. मुदा—ग० ।
२. मधुपर्कश्च आचमनं च स्नानं च वसनं च आभरणं चेति इतरेतरयोगद्वन्द्वः ।
३. सर्वाज्ञया—ग० ।
४. शुद्धः स्यात्—ग० ।

दशोपचार से पूजन कहती हूँ, उसे सुनिये—१. पाद्य, २. अर्घ्य, ३. आचमनीय, ४. मधुपर्क, ५. आचमन, ६. गन्ध, ७. पुष्प, ८. धूप, ९. दीप और अन्त में १०. नैवेद्य—ये दश उपचार कहे गए हैं। इस प्रकार पूजन कर हविष्य का भोजन करने वाला, जितेन्द्रिय, सर्वदा, परम, आनन्द में निमग्न कालिका के वश में रह कर उनकी सेवा करने वाला सर्वज्ञानी वीर, विवेकी, सर्वद्रष्टा, महाशुचि साधक स्वाधिष्ठान चक्र में निरन्तर ध्यान लगावे। बालक के समान आचरण करने वाला, श्रीकृष्ण भाव का ज्ञान रखने वाला, स्वस्थ चित्त वाला साधक इस प्रकार श्रीकृष्ण का ध्यान करता हुआ कालिका पुत्र बन जाता है ॥ ४३-४६ ॥

कृष्णं सञ्चिन्तयेन्मूलकमलोद्‌र्ध्वे कुलात्मकम् ।
स भवेत्कालिकापुत्रोऽष्टाङ्गसिद्धिगुणान्वितः ॥ ४७ ॥
मानसैः पूजनं कृत्वा शङ्खस्थापनमाचरेत् ।
यत्कृत्वा मानसं योगं न कुर्याद्‌बहिरर्चनम् ॥ ४८ ॥
मूलमन्त्रदेवतायाः साधने दैवतं यजेत् ।
देवस्य दक्षिणस्थांश्च पूर्वोपास्यसुसंस्थितान् ॥ ४९ ॥
पूजयेद् गन्ध[1]पुष्पाद्यैस्तुल्यमन्त्रेण मन्त्रवित् ।
ततः श्रीकृष्णपादाब्जं ध्यानं कुर्यान्मनोलयम् ॥ ५० ॥

इस प्रकार मूलाधार कमल के ऊपर स्वाधिष्ठान चक्र में कुल देवता श्रीकृष्ण का ध्यान करने वाला साधक अष्टाङ्ग योग की सिद्धि के गुणों से युक्त होकर कालिका देवी का पुत्र बन जाता है। उपर्युक्त विधि से मानसोपचार पूजन कर भगवान् के सामने शंख स्थापित करना चाहिए। साधक को चाहिए कि मानसोपचार से पूजन करने के पश्चात् बाह्य अर्चन न करे। मूलमन्त्र के देवता के साधन में देव के दक्षिण भाग में सम्यग् रूप से अवस्थित अन्य देवताओं का भी यजन पहले करे। मन्त्रवेत्ता साधक जिस मन्त्र से इष्ट देवता का यजन करे उसी मन्त्र से गन्ध पुष्पादि उपचारों द्वारा उन-उन देवताओं का भी यजन करें, फिर श्रीकृष्ण के चरण कमलों का ध्यान कर उसी में अपना मन लय कर देवे ॥ ४७-५० ॥

एवं क्रमेण तत्पद्मे स्थिरो भवति योगिराट् ।
यः करोति शुद्धभावं महामोहहरं हरिम् ॥ ५१ ॥
स्थापयित्वा च षट्पद्मे महामोक्षमवाप्नुयात् ।
यः प्रधानगुणज्ञश्च स मे शास्त्रार्थमाश्रयेत् ॥ ५२ ॥
इहकाले शत्रुलोके निवसत्येव योगिराट् ।
पादाम्भोजे मनो दद्यान्मखकिञ्जल्कचित्रिते ॥ ५३ ॥
जङ्घायुगे चारुरामकदलीकाण्डमण्डिते[2]।
ऊरुद्वये मत्तगजकरदण्डसमप्रभे[3]॥ ५४ ॥

---

१. गन्धश्च पुष्पं च गन्धपुष्पे, ते आद्ये येषां तैः ।

२. चारुरामं च तत्कदलीकाण्डं च तेन मण्डिते ।

३. मत्तश्चासौ गजश्च मत्तगजस्तस्य करदण्डस्तेन समा प्रभा यस्य तस्मिन्, इति बहुव्रीहिः।

ऐसा करने से स्वाधिष्ठान चक्र के पद्म में योगिराज स्थिर हो जाता है । जो साधक शुद्धभाव वाले महामोह का हरण करने वाले श्री विष्णु को उस षट्पद्म के ऊपर स्थापित कर ध्यान करता है वह महामोक्ष प्राप्त कर लेता है, जो इस प्रकार प्रधान इष्ट के देवता के गुण का ज्ञान कर लेता है वही हमारे शास्त्र के अर्थ का आश्रय प्राप्त करता है । ऐसा योगिराज इस काल में संसार में सुखपूर्वक निवास करता है । अतः श्रीकृष्ण के यज्ञरूप केशर से चित्रित पद कमलों का ध्यान इस प्रकार करे । उनके अत्यन्त मनोहर केले के खम्भे के समान दोनों जांघों का ध्यान करे और मदमत्त हाथी के कर दण्ड के समान शोभा वाले दोनों ऊरुओं का ध्यान करे ॥ ५१-५४ ॥

गङ्गावर्तगभीरे तु नाभौ शुद्धविलेऽमले ।
उदरे वक्षसि तथा हरौ श्रीवत्सकौस्तुभे ॥ ५५ ॥
पूर्णचन्द्रायुतपक्षे ललाटे चारुकुण्डले ।
शङ्खचक्रगदाम्भोजे दोर्दण्डोपरिमण्डिते [1] ॥ ५६ ॥
सहस्रादित्यसङ्काशे [2] सकिरीटकुलद्वयम् ।
स्थानेष्वेषु यजेन्मन्त्री विशुद्धः शुद्धचेतसा ॥ ५७ ॥
मनो निवेश्य कृष्णे वै तन्मयो भवति ध्रुवम् ।
यावन्मनोलयं याति कृष्णे स्वात्मनि चिन्मये [3] ॥ ५८ ॥

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवभैरवीसंवादे श्रीकृष्णस्वाधिष्ठानप्रवेशो नाम अष्टात्रिंशत्तमः पटलः ॥ ३८ ॥**



गङ्गा के आवर्त ( भँवर ) के समान गम्भीर शुद्ध बिल वाले, अत्यन्त स्वच्छ उनके नाभि भाग का ध्यान करे । इसी प्रकार श्रीवत्स और कौस्तुभ से युक्त उनके वक्षः स्थल का एवं उदर का ध्यान करे । हजारों चन्द्रमण्डल के समान मुख से युक्त उनके केशपक्ष में, चारुकुण्डल से संयुक्त ललाट में, शंख, चक्र गदा और पद्ममण्डित उनके हाथों का ध्यान करे । सहस्रों आदित्य के समान देदीप्यमान, उनके दोनों किरीटों में—इस प्रकार इन इन स्थानों में मन्त्रज्ञ विशुद्ध साधक अपने शुद्ध चित्त से श्रीकृष्ण का ध्यान करे । श्रीकृष्ण में मन लगाने से साधक निश्चित रूप से उनमें तन्मय हो जाता है । अतः चिदानन्द एवं आत्मस्वरूप श्रीकृष्ण में जब तक मन का लय न हो जावे, तब तक उन श्रीकृष्ण का ध्यान करे ॥ ५६-५८ ॥

**॥ श्री रुद्रयामल के उत्तरतन्त्र में महातन्त्रोद्दीपन में सिद्धमन्त्रप्रकरण में षट्चक्रप्रकाश में भैरवभैरवी संवाद में श्रीकृष्णयुक्त स्वाधिष्ठान चक्र में प्रवेश नामक अड़तीसवें पटल की डा० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ ३८ ॥**



---

१. दोषः बाहोः दण्डस्तेन परिमण्डिते । २. सहस्रमादित्यास्तैः संकाशे सदृशे ।
३. चिदेव चिन्मयं तस्मिन् ।

# अथैकोनचत्वारिंशः पटलः

आनन्दभैरवी उवाच

अथ नाथ प्रवक्ष्येऽहं संसारसाधनोत्तमम् ।
येन साधनमात्रेण योगी भवति तत्क्षणात् ॥ १ ॥
अनायासेन सिद्धिः स्याद् यद्यन्मनसि वर्त्तते ।
त्रैलोक्यं मोहयेत्क्षिप्रं त्रैलोक्यं वशमानयेत् ॥ २ ॥

**श्री आनन्दभैरवी ने कहा**—हे नाथ ! अब संसार के सभी साधनों में उत्तम साधन कहती हूँ, जिसके साधन कर लेने मात्र से साधक तत्क्षण योगी हो जाता है । साधक के मन में जो जो कामनायें होती हैं, इस साधन से उनकी अनायास सिद्धि हो जाती है । ऐसा साधक शीघ्र ही त्रिलोकी को मोहित कर लेता है और उसे अपने वश में कर लेता है ॥ १-२ ॥

रामेण[1] सहितं नित्यं जगतां साक्षिणं वरम् ।
जामदग्न्यकराम्भोजसेवितं सर्वसेवितम् ॥ ३ ॥
अनन्तसत्त्वनिलयं वासुकी[2] सङ्गमाकुलम् ।
अष्टहस्ताग्रसुश्रीदं[3] नानालङ्कारशोभितम् ॥ ४ ॥
स्वाधिष्ठानगतं ध्यात्वा शीतलो जायते वशी ।
तत्स्तोत्रं शृणु मे नाथ यत्पाठात् सिद्धिमाप्नुयात् ॥ ५ ॥

**श्रीकृष्णध्यान**—बलराम के साथ निवास करने वाले जगन्मात्र के सर्वश्रेष्ठ द्रष्टा, परशुराम के करकमलों से सेवित, किं बहुना सभी से सेवित, अनन्त सत्व ( बल ) के निलय, वासुकी नाग के साथ से आकुल, आठ हाथों वाले, सुन्दर लक्ष्मी प्रदान करने वाले, अनेक प्रकार के अलङ्कारों से शोभित स्वाधिष्ठान चक्र में निवास करने वाले श्रीकृष्ण का ध्यान कर साधक जितेन्द्रिय एवं शान्त हो जाता है । हे नाथ ! अब उनके स्तोत्र को सुनिये, जिसके पाठ करने से साधक को सिद्धि प्राप्त हो जाती है ॥ ३-५ ॥

**श्रीकृष्णस्तोत्रम्**

ब्रह्मादयः सुराधीशा मुनयः क्रतुरक्षकाः ।

---

१. स्वाधिष्ठानगतं विष्णुं संसारसारप्रदं हरिम् ।
य: स्तौति प्रत्यहं भक्त्या स्वाधिष्ठानाक्षरस्थिरम् ॥
वादिलानावर्णयुतं हिमांशुं परिशोभितम् ॥ क० ।

२. संकुलेक्षणम्—ग० ।

३. अष्टहस्तो ग्रहम्—ग० ।

एतत् स्तोत्रं पुरा कृत्वा जीवन्मुक्तो महीतले ॥ ६ ॥
अतः श्रीकालिकानाथ स्तोत्रं शृणु महत्फलम् ॥ ७ ॥

ब्रह्मादि देवगण, मुनिगण तथा यज्ञरक्षक, इस स्तोत्र का पाठकर इस पृथ्वी पर ही जीवन्मुक्त हो गए। इसलिए हे श्रीकालिकानाथ ! उस महान् फल देने वाले स्तोत्र को सुनिए ॥ ६-७ ॥

**श्रीविष्णोरद्भुतकर्मणो ब्रह्मर्षिस्त्रिष्टुप्छन्दः श्रीविष्णुः श्रीकृष्णः श्रीनारायणो देवता सर्वस्तोत्रसारकवचमन्त्रसिद्ध्यर्थे विनियोगः ॥**

अद्भुतकर्मा श्रीविष्णु के इस स्तोत्र के ब्रह्मा ऋषि हैं और त्रिष्टुप् छन्द है। श्रीविष्णु, श्रीकृष्ण और श्रीनारायण देवता हैं। सर्वस्तोत्र सार कवच मन्त्र की सिद्धि के लिए इसका विनियोग करता हूँ।

श्री कृष्णं जगतामधीशमनघं[1] ध्यानात्सिद्धिप्रदं
गोविन्दं [2]भवसिन्धुपारकरणं सन्तारणं कारणम् ।
श्री विष्णुं वनमालिनं नरहरिं नारायणं गोकुलं
योगेन्द्रं नरनाथमादिपुरुषं वृन्दावने भावयेत् ॥ ८ ॥

समस्त जगत् के अधीश्वर ध्यान से सिद्धि प्रदान करने वाले गोविन्द, संसाररूप समुद्र से पार लगाने वाले, सब को तारने वाले, सब के कारणभूत, श्रीविष्णु के स्वरूप वनमालाधारी नृसिंह, नारायण, गोकुल, योगेन्द्र, नरनाथ एवं आदिपुरुष श्रीकृष्ण का वृन्दावन में ध्यान करना चाहिए ॥ ८ ॥

मोक्षश्रीसहितं कृतान्तविकृतं[3] धर्मार्णवं सुन्दरं
श्रीरामं[4] बलरामभावविमलं नित्याकुलं सत्कुलम् ।
श्रीश्यामं [5]कनकादिहार[6]विलसत्लम्बोदरं श्रीधरं
तं वन्दे हरिमीश्वरं [7]गुणवतीमायाश्रयं स्वाश्रयम् ॥ ९ ॥

मोक्ष श्री के साथ रहने वाले कृतान्त को विकृत करने वाले, धर्म के समुद्र, परमसुन्दर, श्री में रमण करने वाले, बलराम के भाव में विमल, नित्य, आकुल, सत्कुलीन, सुवर्णादि के हार धारण करने से जिनका लम्बा उदर शोभित हो रहा है, ऐसे श्रीधर, गुणवती माया के आश्रय एवं स्व में आश्रय वाले ईश्वर हरि की मैं वन्दना करता हूँ ॥ ९ ॥

वैकुण्ठेशमशेषदोषरहितं सायुज्यमोक्षात्मकं
नानारत्नविनिर्मिता मम पूजा राजेन्द्रचूडामणिम् ।
शोभामण्डलमण्डितं सुरतरुच्छायाकरं योगिनं
विद्यागोपसुतावृतं[8] गुणमयं वाक्सिद्धये भावयेत् ॥ १० ॥

---

१. अविद्यमाना अघा यस्मिन्, तम् । २. भव एव सिन्धुः, तस्य पारकरणम् ।
३. विकृतिम्—ग० । ४. श्रीबालम्—ग० ।
५. ककुरादि—ग० । ६. विगलत्—ग० ।
७. गुणवताम्—क० । ८. रतम्—क० ।

वैकुण्ठ के ईश्वर, सम्पूर्ण दोषों से रहित, सायुज्यमोक्ष के साक्षात् स्वरूप, राजेन्द्र चूड़ामणि, शोभामण्डल से मण्डित, कल्पवृक्ष के समान छाया करने वाले, योगी, महाविद्या एवं गोपसुतों से घिरे हुए, गुणमय, श्रीकृष्ण नाना रत्नों से विरचित मेरी पूजा ग्रहण करें। भक्त जनों को इस प्रकार के श्रीकृष्ण का ध्यान वाक्सिद्धि के लिए करना चाहिए ॥ १० ॥

**स्वाधिष्ठाननिकेतनं परजनं विद्याधनं मायिनं**
**श्रीनाथं कुलयोगिनं त्रिभुवनोल्लासैकबीजं प्रभुम् ।**
**संसारोत्सवभावलाभनिरतं[१] सर्वादिदेशं सुखं**
**वन्देऽहं वरसर्पशत्रुसफले[२] पृष्ठे स्थिरानन्ददम्[३] ॥ ११ ॥**

स्वाधिष्ठान चक्र में निवास करने वाले, पुरुषोत्तम, विद्यारूप धन वाले, माया से युक्त, श्रीनाथ, कुलयोगी, समस्त त्रिभुवन के एकमात्र आनन्द के बीजरूप, प्रभु, संसाररूप उत्सव के भाव लाभ में संलग्न, समस्त प्रदेशों में विद्यमान, सुखरूप, श्रेष्ठ गरुड की पीठ पर आसीन और स्थिर आनन्द देने वाले बलराम एवं श्रीकृष्ण की मैं वन्दना करता हूँ ॥ ११ ॥

**भावाष्टं[४] भवभावयोगजडितं जाड्यापहं[५]भास्वरं**
**नित्यं शुद्धगुणं [६]गभीरधिषणामोदैकहेतुं [७]पतिम् ।**
**कीर्तिक्षेमकरं महाभयहरं[८] कामाधिदैवं शिवं**
**तत्तत्षड्दलमध्यगेहरुचिरानन्दैकदेशास्पदम् ॥ १२ ॥**

आठ प्रकार के भावों से संयुक्त, संसारी भाव ( चेष्टा ) रूप योग से जड़ीभूत, मूर्खता को दूर करने वाले, महातेजस्वी, नित्य शुद्धगुणस्वरूप, गम्भीरबुद्धि से आनन्द के एकमात्र साधन, सबके स्वामी, भक्त जनों को कीर्ति प्रदान करने वाले और उनका कल्याण करने वाले तथा उनके भय को हरण करने वाले, काम के अधिदेवता, शिव स्वरूप स्वाधिष्ठान के उन-उन षड्दलों के गेह पर रुचिर आनन्द के एक देश के आस्पद, श्रीकृष्ण का ध्यान करना चाहिए ॥ १२ ॥

**वन्दे श्रीपतिमच्युतं नरहरिं दैत्यारिशिक्ष्याकुलं[९]**
**गन्धर्वप्रभृतेः सुगायनरतं वंशीधरं भावदम् ।**
**रत्नानामधिपं गतिस्थमचलं गोवर्धनाधारणं**
**विश्वामित्रतपोधनादि मुनिभिः संसेवितं तैजसम्[१०] ॥ १३ ॥**

श्री के पति, कभी च्युत न होने वाले, नृसिंह, दैत्यों के अरि, देवतागणों के शिक्षण में व्यग्रचित्त, गन्धर्व प्रभृति के सुन्दर गायन में रत, वंशी धारण करने वाले एवं भाव ( सत्ता ),

---

१. नाम—क० । २. सकले—ग० । ३. नन्दनम्—ग० ।
४. भावान्तम्—ग० । ५. भासुरम्—ग० ।
६. गभीराया धिषणाया य आमोदः स एवैको हेतुर्यस्य तम् ।
७. परम्—ग० । ८. भवहरम्—ग० ।
९. मिक्ष्वाकुगम्—ग० । १०. तेजसम्—ग० ।

चेष्टा प्रदान करने वाले, रत्नों के अधिप, गति में रहने वाले, अचलस्वरूप, गोवर्धन धारण करने वाले, विश्वामित्रादि तपोधनादि मुनियों से सुसेवित, तैजस स्वरूप श्रीकृष्ण की मैं वन्दना करता हूँ ॥ १३ ॥

**वन्दे गोविन्दपादाम्बुजमजमजितं[१] राजितं भक्तिमार्गे**
**सत्त्वोत्पन्नं[२] प्रभुत्वं परगणनमितं चारुमञ्जीरहारम् ।**
**हंसाकारं [३]धवलगरुडानन्दपृष्ठे निमग्नं[४]**
**बन्धूकारक्तसारान्वितचरणतलं [५]सर्वदाशान्तरालम् ॥ १४ ॥**

अज, किसी के द्वारा न जीते जाने वाले, भक्ति मार्ग में विराजित, सत्त्वोपपन्नता एवं प्रभुत्व से परिपूर्ण, अपने शत्रुओं के द्वारा प्रणमित, अत्यन्त सुन्दर मञ्जीर एवं हार धारण करने वाले, हंस के आकार वाले, श्वेत वर्ण वाले गरुड़ के आनन्द देने वाले पृष्ठ पर बैठे हुए, बन्धूक पुष्प के समान रक्त वर्ण से संयुक्त चरण तल वाले, अपना सब कुछ देने वाले, आशा के अन्तराल में रहने वाले ऐसे गोविन्द के चरण कमलों की मैं वन्दना करता हूँ ॥ १४ ॥

**राकिण्या: प्रेमसिद्धं नववयसिगतं [६]गीतवाद्यादिरागं**
**रागोत्पन्नं [७]सुफलगुणदं गोकुलानन्दचन्द्रम् ।**
**वाणी-लक्ष्मी-प्रियं तं त्रिभुवनसुजनाह्लादकर्तारमाद्यं**
**वन्दे सिद्धान्तसारं गतिनतिरहितं[८] सारसङ्केतिताप्तम् ॥ १५ ॥**

राकिणी के प्रेम से सिद्ध होने वाले, युवावस्था सम्पन्न, गीतवाद्यादि में राग रखने वाले, राग से उत्पन्न होने वाले, सुन्दर फलों वाले गुणों को देने वाले, गोकुल के आनन्द चन्द्र, वाणी एवं लक्ष्मी के प्रिय, त्रिभुवन में रहने वाले, सज्जनों में आह्लाद करने वाले, आद्य सिद्धान्तों के सारभूत, गति नति से रहित, तत्त्वों के सङ्केत द्वारा जिन्हें आप्त बताया है ऐसे उन श्रीकृष्ण की मैं वन्दना करता हूँ ॥ १५ ॥

**कामं कामात्मकं तं विधुगतशिरसं कृष्णसम्बोधनान्तं**
**बीजं कामं पुनस्तत् [९]पुरुषसुरतरुं भावयित्वा भजेऽहम् ।**
**श्रीकृष्णं कृष्णकृष्णं निरवधिसुखदं[१०]सुप्रकाशं प्रसन्नं**
**स्वाधिष्ठानाख्यपद्मे[११]मनसि गतो भवे सिद्धिस्थलस्थम् ॥ १६ ॥**

काम, काम के स्वरूप, सर्वत्र व्याप्त, कृष्ण शब्द से संबोधित किए जाने वाले, काम बीज स्वरूप, फिर तत्स्वरूप, पुरुषों के रूप में कल्पवृक्ष उन श्रीकृष्ण का ध्यान कर मैं भजन

---

१. मजयमजितम्—ग० । २. मल्लोत्पन्नम्—ग० । ३. बलधर—ग० ।
४. निलग्नम्—क० । ५. ज्ञानवालम्—ग० ।
६. वाणम्—ग० । ७. सुसकल—ग० । ८. स्तम् इति—ग० ।
९. पुरुष: सुरतरुरिव कल्पवृक्ष इव । उपमितमिति समास: ।
१०. निरवधि यत्सुखं तद् ददाति इति कप्रत्ययान्त: ।
११. मनसि गतभवेसिद्धि सिद्धस्थलस्थम्—ग० ।

करता हूँ । जो श्रीकृष्ण हैं, कृष्ण वर्ण वाले हैं, पापों को विनष्ट करने वाले हैं, जिसकी कोई अवधि नही हैं ऐसे सुख देने वाले हैं, सुन्दर प्रकाश वाले एवं प्रसन्न हैं, स्वाधिष्ठान नामक पद्म में, मन में रह कर जो इसी संसार में सिद्धि स्थल में निवास करते हैं ॥ १६ ॥

**आकाशे चारुपद्मे [१]रसभयवलगं रक्तवर्णं प्रकाण्डं**
**आत्मारामं नरेन्द्रं सकलरतिकरं कंसहन्तारमादिम् ।**
**आद्यन्तस्थानहीनं [२]विधिहरगमनं सेन्द्रनीलामलाभं**
**भावोत्साहं[३] त्रिसर्गस्थितिपरममरं भावये भावसिद्ध्यै ॥ १७ ॥**

अत्यन्त मनोहर स्वाधिष्ठान चक्र रूप कमल के आकाश में ब भ म य र ल इन ६ पत्तों पर रक्तवर्ण के प्रकाण्ड ( मूल से शाखापर्यन्त ) भाग से युक्त, आत्मा में रमण करने वाले, मनुष्यों में इन्द्र, सबसे प्रेम करने वाले, कंस के काल, आदि पुरुष, आद्यन्तस्थान से हीन, ब्रह्मा और सदाशिव से प्राप्त किए जाने योग्य, इन्द्रनील के समान स्वच्छ आभा वाले, भावना से उत्साह प्रदान करने वाले, सृष्टि, स्थिति एवं संहार करने वाले परब्रह्म देवाधिदेव श्रीकृष्ण का मैं भावसिद्धि के लिए ध्यान करता हूँ ॥ १७ ॥

**सर्वेषां ज्ञानदानं रसदलकमले सर्वदा त्वं करोषि**
**आत्मानन्दं[४] [५]सुधादिप्रियधनगुणिनामेकयोगप्रधानम् ।**
**मायापूर्णः प्रचयनवरसः प्रीतिदेशः[६] प्रभेकः**
**श्रीराजाख्यः[७] प्रपूर्णः मयि धनरहिते दृष्टिपातं भवादौ ॥ १८ ॥**

हे प्रभो ! आप ६ पत्तों वाले अधिष्ठान चक्र के कमलों पर निवास करते हुए सबको ज्ञान दान करने वाले हो । सुधादि प्रियधन वाले गुणियों के एक योग प्रधानभूत आत्मानन्द हो । माया से परिपूर्ण हो, नवों रसों के राशि हो, सब के प्रीति के स्थान ( प्रभेग ? एवं प्रभेक ? ) हो और श्रीराज नाम से प्रसिद्ध हो । किं बहुना, सब प्रकार से परिपूर्ण हो । अतः इस संसार में मुझ निर्धन पर दृष्टिपात कीजिए ॥ १८ ॥

**काली श्री[८]कुण्डलिन्याः परगृहनिरतं[९] [१०]भावकब्रह्मरूपं ।**
**मुक्तिच्छत्रं [११]पुरेशं निजधनसुखं भार्यया क्रीडयन्तम् ।**
**सभाक्षेत्रं[१२] नेत्रं नयमानमयमत्पुरसंस्थाभिषेकम् ॥ १९ ॥**

काली श्री कुण्डलिनी रूप के श्रेष्ठ गृह में निवास करने वाले, सब को उत्पन्न करने

---

१. वमममरुणसम्—क० । २. वहगहनम्—ग० ।
३. वर्ग—ग० । ४. प्रेमानन्दम्—ग० ।
५. गुणधनिनाम्—क० । ६. प्रातिदेशः प्रभेगः—ग० ।
७. श्रीवधक्षेमहीने मयि धनरहिते दृष्टिपात्रं तवादौ—ग० ।
८. श्रीकण्ठनिल्याः—ग० । ९. परगृहनिगतम्—ग० ।
१०. तारक—ग० । ११. पुरवशनिधनम्—ग० ।
१२. सभाक्षेत्रे त्रिनेत्रं वरमणि मयशतपूरसंज्ञात्रियेकम्—क० ।

वाले, परब्रह्मस्वरूप, मुक्तिरूप छत्र वाले, शरीर रूपी पुर के ईश ( परमात्मस्वरूप ) निर्धन जनों को सुख देने वाले, अपनी भार्या के साथ क्रीड़ा करते हुए ल य व श अक्षरों वाले संसत्प्रदेश में दूर से ही अभिषिक्त उन तारक ब्रह्म का मैं ध्यान करता हूँ ॥ १९ ॥

ध्यात्वाऽहं प्रणमामि सूक्ष्मकमले[१] लोकाधिपं व्याधिपं
वैकुण्ठं कृष्णमीडे कुरुभवविभवक्षेमहन्तारमन्तम् ।
शान्तानां ज्ञानगम्यं स्वनयनकमले पालयन्तं त्रिमार्गं
वज्रारिं पूतनारिं [२]द्वयवकनरकध्वान्तसंहारसूरम् ॥ २० ॥

सूक्ष्म कमल पर लोकों के अधिप, व्याधि से संरक्षण करने वाले, वैकुण्ठ धाम वाले, श्रीकृष्ण का ध्यान कर मैं उन्हें प्रणाम करता हूँ और उनसे प्रार्थना करता हूँ, जो कौरवों के विभव एवं क्षेम के विनाशकर्ता एवं मृत्युस्वरूप हैं, शान्त पुरुषों के अपने नेत्र कमलों में ज्ञान द्वारा गम्य हैं, सृष्टि, स्थिति एवं संहार रूप तीनों भागों का पालन करने वाले हैं, वज्र के अरि एवं पूतना के शत्रु हैं, बकासुर एवं नरकासुर इन दोनों के पापसंहार करने में शूर हैं ॥ २० ॥

मान्यं लोकेषु सर्वेष्वतिशयमनसं केवलं निर्मलञ्च
ओङ्कारं कारणाख्यं सुगतिमतिमतां मातृकामन्त्रसिद्धम् ।
सिद्धानामादिसिद्धं सुररिपुशमनं कालरूपं रिपूणां
मूलोर्ध्वे षड्दलान्ते मनसि सुविमले पूरयित्वा मुकुन्दम् ॥ २१ ॥
नित्यं सम्भावयेऽहं[३] निजतनुसमता सिद्धये पूजयामि ।
त्वं साक्षादखिलेश्वरः प्रियकरः श्रीलोकहस्तार्चितः ।
क्षोणीशः प्रलयात्मकः प्रतिगुणी ज्ञानी त्वमेको महान् ॥ २२ ॥

सभी लोक में मान्य ( आदरणीय ) श्रेष्ठ मन वाले एकमात्र ( अकेले ) स्वच्छ ॐकार स्वरूप, कारण नाम से कहे जाने वाले, सुन्दर गति वाले, बुद्धिमानों के आराध्य, मातृका मन्त्र से सिद्ध, सभी सिद्धों में आदि सिद्ध, देवताओं के शत्रु राक्षसों का शमन करने वाले, सर्वथा निष्पाप, शत्रुओं के लिए कालस्वरूप, मूलाधार चक्र के ऊपर स्वाधिष्ठान चक्र में ६ पत्ते वाले कमल के अन्त में अत्यन्त स्वच्छ मन में भगवान् मुकुन्द को स्थापित कर मैं उनका नित्य ध्यान करता हूँ और अपने शरीर में समदृष्टि प्राप्त करने के लिए उन श्रीकृष्ण का पूजन करता हूँ । हे भगवान् ! आप साक्षात् अखिलेश्वर हो, सबका प्रिय करने वाले हो, श्री सम्पन्न लोगों द्वारा अर्चित हो, इस पृथ्वी के ईश्वर हो, प्रलयकर्ता हो समस्त गुणियों के प्रतिनिधि हो । किं बहुना, आप मात्र एक हो और महान् हो ॥ २१-२२ ॥

यद्येवं मम पामरस्य कलुषं श्रीधर्महीनान्दितं
कृत्वा पादतले यदीह नियतं व्यारक्ष[४] रक्षात्मगम् ।

---

१. हरण ........ न्तारमन्तम् ।
२. द्वयवकनरकयोः वकासुरनरकासुरयोर्यद् ध्वान्तमज्ञानं तस्य संहारे सूरम् ।
३. रम्भावयेऽहं निजतनुसमसिद्धये—ग० ।
४. व्यावक्ष रक्षात्मक—ग० ।

राधा[1]कृष्णपदामलाम्बुजतलं [2]चैतन्यमुक्त्याकुलं
सर्वत्रादिगमागमं त्रिगमनं निर्वाणमोक्षाश्रयम् ॥ २३ ॥

यदि ऐसा है तो मुझ जैसे पामर के श्री धर्म से हीन, कालुष्य (पाप) को अपने पैरों से दबाकर इस लोक में मेरी रक्षा कीजिए। क्योकि मैं रक्षा के योग्य हूँ। आप श्रीराधाकृष्ण के पैर के तलवे स्वच्छ कमल के समान कोमल एवं रक्तवर्ण वाले हैं, चैतन्यपूर्ण है, मुक्ति के लिए आकुल है सर्वत्र आदि में रहने वाले आगम है। तीनों लोकों में गमनशील है निर्वाण और मोक्ष का आश्रय है ॥ २३ ॥

बालं वैरिविनाशनं सुखमयं कैवल्यमोक्षास्पदं
दैवं देवगणार्चितं रसदले चारोपयामि प्रभो।
निर्द्दिष्टं भुवनाश्रयं [3]यतिपतिं निर्वाणमोक्षस्थितं
निर्वाणादिकमोदने प्रचपलं श्रीचञ्चलासङ्कुलम् ॥ २४ ॥

हे प्रभो ! मैं बालक रूप आपको, शत्रुनिहन्ता एवं सुख स्वरूप को, कैवल्यमोक्ष के आस्वाद को तथा देवीगणों से अर्चित आप देव को षड्दल वाले पद्म पर आरोपित करता हूँ। आप निश्चित रूप से रहने वाले हैं, इन भुवनों के आश्रय हैं, यतियों के पति हैं, निर्वाण मोक्ष में स्थित हैं, निर्वाणादिक सुख प्रदान करने में प्रकृष्ट रूप से चपल हैं और श्री के चञ्चलता से परिपूर्ण है ॥ २४ ॥

वन्देऽहं परमेश्वरं सकलदैत्यानां बलप्राणहं।
हंसारूढनिरक्षणं क्षणगतं वाणीपतिं भूपतिम्।
वाञ्छाकल्पलतापतिं कुलपतिं विद्यापतिं गोपतिम् ॥ २५ ॥

मैं उन समस्त दैत्य समूहों के बल और प्राण का हरण करने वाले, हंस पर आरूढ़, निःशेष रूप से रक्षा करने वाले, उत्साहसम्पन्न, वाणी के पति भूपति (श्रीकृष्ण) की वन्दना करता हूँ, जो वाञ्छा पूर्ण करने वाली कल्पलता के स्वामी हैं, कुलो (शाक्तों) के पति हैं और महाविद्याओं के पति एवं इन्द्रियों के पति हैं ॥ २५ ॥

श्री[4]विद्यापतिमादिदेवपुरुषं[5] विश्वेश्वरप्रेमगं[6]।
श्री[7]कुम्भोद्भवकालसत्वनिकरं त्वां[8] भास्करं भावये।
सिद्धानाम[9]भिचिन्हयोगनिरतं रक्ष त्वमादौ हि माम् ॥ २६ ॥

आप श्रीविद्या के पति, आदिदेव एवं शरीर रूपी पुर में निवास करने के कारण पुरुष हैं, श्री विश्वेश्वर के प्रेम से गम्य हैं, श्री कुम्भोद्भव (अगस्त्य) स्वरूप हैं। काल में सत्त्व

---

१. पदासन—ग०। २. सूक्त्या—ग०। ३. यदुपति—ग०।
४. श्रीविद्या सम्प्रदायसिद्धा एव फलदा भवति तस्याः पतिम्।
५. वपुषम्—ग०। ६. विश्वेश्वरस्य प्रेमाणं गच्छति। गमेर्डः।
७. गङ्गोद्भव—ग०। ८. तमम्—ग०।
९. मति—ग०।

के निकर समूह हैं अतः भास्कर स्वरूप आप का ध्यान करता हूँ। यतः आप सिद्धों में विशेष चिह्नयोग (?) में निरत हैं, अतः सर्वप्रथम आप मेरी रक्षा कीजिये ॥ २६ ॥

**प्रभो निःसङ्केतं गुणमणिमतं श्रेयसि मतं ।**
**मतामन्तः[१] सुस्थं विगलितमहाप्रेमसुरसम् ।**
**मुदा वन्दे[२] कृष्णं हरकरतलाम्भोजयजितम् ॥ २७ ॥**

हे प्रभो ! आप सङ्केत रहित हैं, गुणमणियों के मान्य हैं, कल्याण करने वाले हैं, माननीयों के सिद्धान्त हैं, सुन्दर वस्तुओं में निवास करने वाले हैं और महाप्रेम करने पर सुन्दर रसों का क्षरण करने वाले हैं। ऐसे सदाशिव के कराम्भोजों से लालित आप श्रीकृष्ण की मैं वन्दना करता हूँ ॥ २७ ॥

**प्रभापुञ्जं [३]रामाश्रयपदमदं कामकुशलं**
**महामन्त्रच्छायां रजनिमिलितं ध्वान्तजडितम् ।**
**त्रिकोणस्थं कुस्थं कुगतिसुगतिं कारणगतिं**
**प्रलीनं[४] संस्थानं जगति जगतां धर्ममुदयम् ॥ २८ ॥**
**रमेशं वाणीशं विधिगतपदं शम्भुनिगतं**
**त्रिकालं योगानां नयनकमलं शब्दनिरतम् ।**
**कुलानन्दं गोपीजनहृदयगं [५]गोपियजितं**
**विधानं त्वामिन्द्रं [६]गुरुतरमुपेन्द्रं हरिरिपुम् ॥ २९ ॥**
**मुदा त्वां वन्देऽहं चपलं[७] तां मे नवहवे ।**
**कुलालापश्रद्धामय [८]मखिलसिद्धिप्रदमनम् ।**
**मलातीतं[९] नीतं सुरनरसतां[१०] शास्त्रभवनम् ॥ ३० ॥**

प्रभा के पुञ्ज, परशुराम के आश्रय वाले पद से गर्वीले, काम कला में कुशल महामन्त्र की छाया वाले, रजनी से मिले हुए, ध्वान्त ( कृष्णता ) से जडित, त्रिकोण में स्थित, क वर्ग वर्ण में स्थित रखने वाले कुगति, सुगति, कारणगति, प्रलीन तथा जगत् के उदीयमान धर्मरूप, रमेश, वाणीश और समस्त विधानों में अपना स्थान रखने वाले सदाशिव में निःशेषरूप से ( निवास करने वाले ) तीनों काल में योगों में तथा नेत्रकमल शब्द में संलग्न, कुल ( शाक्त सम्प्रदाय ) के आनन्दभूत, गोपीजनों के हृदय में रहने वाले, गोपियों द्वारा अर्चित, सबका

---

१. मतास्तस्थम्— ग० ।
२. मुदानन्दे—ग० ।
३. सारा इति—ग० ।
४. प्राणिनां संस्थम्—ग० ।
५. हृदयरागं गोपभाजेतम्—ग० ।
६. सुरेन्द्रं सुररिपुम्—ग० ।
७. त्वमपि चपलम्—ग० ।
८. कुलाना—ग० ।—कुलालस्यापश्रद्धा तन्मयम् । अथवा कुलस्यालापे या श्रद्धा, तन्मयम् ।
९. मनातीतम्—ग० ।
१०. सुराश्च नराश्च सन्तश्चेति इतरेतरयोगद्वन्द्वः ।

विधान ( रचना ) करने वाले आप, इन्द्र को सबसे श्रेष्ठ उपेन्द्र हरि ( यम अथवा सर्प कालियनाग ) के शत्रु और अत्यन्त चपल ऐसे आप परमात्मा श्रीकृष्ण को मैं प्रणाम करता हूँ । कुल के अनुरूप आलाप करने वाले, श्रद्धामय, सब प्रकार की सिद्धि प्रदान करने वाले, सबसे नमस्करणीय, पाप रहित, देवता, मनुष्य और सज्जनों के मनोनीत, शास्त्र के भवनरूप आप श्रीकृष्ण को मैं प्रणाम करता हूँ ॥ २८-३० ॥

**विनोदं नारीणां हृदयरसिकं शोकरहितम् ।**
**विराजं यज्ञानां [१]हितमतिगुणं यामि शरणम् ॥ ३१ ॥**

भक्तों के विनोद स्वरूप एवं स्त्रियों के हृदय के रसिक, शोक से रहित, विराट् रूप धारण करने वाले, यज्ञों के हितकारी और अत्यन्त गुणज्ञ आप भक्तवत्सल भगवान् श्रीकृष्ण की मैं शरण में जाता हूँ ॥ ३१ ॥

**एतत्सम्बन्धमात्री[२] मम[३] कुलशिरसि स्थायिनं[४] पातु नित्यं**
**गोपीनां प्राणनाथः प्रतिदिनमनिशं भालदेशं प्रपायात् ।**
**भालाधोदेशसंस्थं समवतु सहसा राजराजेश्वरेशः**
**( गोपान्वन्वो सुरेशः ? )**
**स्थित्यन्तेशस्त्रिनेत्रं[५] सुखमखिलभवः [६]कण्ठच्छत्राभिसंस्थम् ॥ ३२ ॥**

उपर्युक्त संबन्ध की मात्रा वाले मेरे कुल ( कौलिक शाक्त सम्प्रदाय ) वाले, ध्यानस्थ रहने वालों की आप नित्य रक्षा करें । गोपियों के प्राणनाथ आप प्रतिदिन एवं निरन्तर मेरे भालदेश की रक्षा करें । राजराजेश्वर आप मेरे मस्तक के नीचे रहने वाले प्रदेश स्थित तत्त्वों की रक्षा करें । गोपजनों का अनुसरण करने वाले आप सुरेश, मेरी स्थिति, अन्त, शास्त्र और नेत्रों की रक्षा करें । अखिलमय आप मेरे सुख की तथा कण्ठ के छत्र भूत मस्तक में रहने वालों की रक्षा करें ॥ ३२ ॥

**पृष्ठस्थं पातु शौरिः प्रतिदिनममरो लिङ्गबाह्यं कटिस्थं**
**शम्भुप्रेमाभिलाषी मम तु कुलपदं गुह्यदेशं प्रपायात् ।**
**आनन्दोद्रेककारी सकलतनुगतं पातु नित्यं मुरारिः[७]**
**दैत्यारिश्चोरुमूलं[८] नृहरिरवतु मे जङ्घया पादपद्मम् ॥ ३३ ॥**

शौरि कृष्ण मेरे पृष्ठ ( अग्रभाग ) में रहने वाले तत्त्वों की रक्षा करें एवं अमर प्रतिदिन

---

१. सति—ग० । २. मानी—ग० ।
३. मय—ग० ।
४. स्थायिनपते (?)—ग० ।
५. स्थित्यन्ते शस्त्रिनेत्रम्—ग० ।—अत्र पाठस्त्रुटितः ।
६. भवः कण्ठकृत्वाभिसंस्यम्—ग० ।
७. सुरारिः—क० ।—मुरारिरिति पाठे मुरस्य मुरनामकस्य दैत्यस्यारिरित्यर्थः ।
८. दैत्यानामरिः श्रीकृष्णः परमात्मा इत्यर्थः ।

मेरे लिङ्ग से बाहर कटि में रहने वाले तत्त्व की रक्षा करें । शम्भु के प्रेम की अभिलाषा रखने वाले आप मेरे कुल, पद और गुह्य प्रदेश की रक्षा करें । आनन्द के उद्रेक को करने वाले मुरारि मेरे समस्त शरीर में रहने वाले तत्त्वों की नित्य रक्षा करें ॥ ३३ ॥

**एतत्स्तोत्रं पठेद्विद्वान् नियतो भक्तिमान् शुचिः ।**
**स्थिरो भवति मासेन षड्दले सर्वसिद्धिभाक् ॥ ३४ ॥**

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवभैरवीसंवादे श्रीकृष्णस्तवनकवचं नामैकोनचत्वारिंशत्तमः पटलः ॥ ३९ ॥**



विद्वान् साधक नियमपूर्वक तथा भक्तिपूर्वक पवित्र होकर इस स्तोत्र का पाठ करें तो वे एक मास में षड्दल वाले स्वाधिष्ठान चक्र में स्थिर हो जाते हैं और समस्त सिद्धियों के भाजन बन जाते हैं ॥ ३४ ॥

**॥ श्रीरुद्रयामल के उत्तरतन्त्र के महातन्त्रोद्दीपन में सिद्धमन्त्रप्रकरण में षट्चक्र प्रकाश में भैरवीभैरवसंवाद में श्रीकृष्ण की स्तुति एवं कवच नामक उन्तालीसवें पटल की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ ३९ ॥**



# अथ चत्वारिंश: पटल:

आनन्दभैरवी उवाच

अथ नाथ प्रवक्ष्यामि शृणुष्वावहितो मम ।
येन क्रमेण लोकानां योगकार्यं दृढं भवेत् ॥ १ ॥
सर्वत्र भावग्रस्त: स: सिद्धो भवति भैरव ।
यो भवेद्भैरवो देवो भुवने सर्वगो हि स: ॥ २ ॥

**श्री आनन्दभैरवी ने कहा**—हे मेरे नाथ ! अब मैं जिस क्रम से लोगों का योग कार्य दृढ़ होता है, उसे कहती हूँ, सावधान हो कर सुनिए ॥ १ ॥

हे भैरव ! जो साधक भैरव देव हो जाता है वह इस त्रिभुवन में सर्वज्ञ हो जाता है, सर्वत्र भैरव के भाव से ग्रस्त रहता है और वही सिद्ध भी कहा जाता है ॥ २ ॥

क्रियादक्षो महावीरो वीरवल्लभभावक: ।
भावयित्वा वर्णमालां मध्ये जप्त्वा दिवानिशम् ॥ ३ ॥
हविष्याशी प्राणवायुरतो वेदान्तपारग: ।
सिद्धान्तवेत्ता सर्वेषां शास्त्राणां निर्णयप्रिय: ॥ ४ ॥
गाथाज्ञानी परानन्दो विवेकी [1]भावतत्पर: ।
भाववेत्ता रहस्यार्थज्ञानी कोविदवेदवित् ॥ ५ ॥
वाक्यसिद्धिज्ञानपर: सत्यवादी दृढासन: ।
भावयेत् षड्गतं वर्णं ध्यानं कुर्यात् पृथक् पृथक् ॥ ६ ॥

वही समस्त क्रिया में दक्ष, महावीर और वीरवल्लभ भावक तथा ( ध्यानी ) होता है, जो वर्णमाला का ध्यान कर मध्य में जप करता है । साधक हविष्यान्न का भोजन करे, प्राणवायु ( प्राणायाम ) में निरत रहे । उसे वेदान्त का पारगामी विद्वान्, सिद्धान्तवेत्ता, सभी शास्त्रों का निर्णय करने वाला, गाथा का ज्ञान रखने वाला, परब्रह्म के आनन्द वाला, विवेकी, भावतत्पर, भाववेत्ता, रहस्यार्थ का ज्ञानी, कोविद, वेदवेत्ता, वाक्‌सिद्धि का ज्ञान रखने वाला, सत्यवादी और दृढ़ासन का अभ्यासी होना चाहिए । ऐसा साधक स्वाधिष्ठान चक्र के ६ पत्रों पर रहने वाले छः वर्णों को पृथक्-पृथक् ध्यान करे ॥ ३-६ ॥

षट्पद्मस्थो भावयेद्वै षड्वर्णं ध्यानपूर्वकम् ।
वादिलान्ताक्षरं [2] ध्यायेन्महाविद्यानिषेवक: ॥ ७ ॥

---

१. सभवेत्पर:—ग० ।    २. वादिनान्त—ग० ।

महाविद्या की उपासना करने वाला षट्वर्ण वाले स्वाधिष्ठान पद्म पर स्थित हो कर ब भ म य र और ल वर्णों की ध्यानपूर्वक भावना करे ॥ ७ ॥

**बकारं[1] सौन्दर्यं स्वकिरणमयं भाव्यमतुलं**
**मुकुन्दश्रीभक्तिप्रियरमणकं[2] पूर्वदलगम् ।**
**विशिष्टज्ञानान्तं [3]सुखरनतं कोटिकिरणं**
**विभाव्य श्रीलक्ष्मीं गमयति झटित् कालपुरुषम् ॥ ८ ॥**

**१. बकार का ध्यान**—पूर्व दिशा के दल पर स्थित बकार वर्ण सुन्दरता से युक्त है अपने किरणों वाला, भाव्य ( भव्यता से युक्त ) एवं असीम है । मुकुन्द भगवान् की श्रीभक्ति का प्रिय रमण करने वाला मन्त्रज्ञ है, विशिष्ट ज्ञान का अन्त है । सुख देने वाला एवं विनम्र है और करोड़ों किरणों से युक्त है इस प्रकार के बकार का ध्यान कर साधक श्रीलक्ष्मी प्राप्त करता है और शीघ्र कालपुरुष को नष्ट कर देता है ॥ ८ ॥

**द्विवर्णं[4] श्रीनाथं सुखयति भकारं रसदले**
**त्रिकोणापार्श्वस्थां[5] चपलशकलं शम्भुनिलयम् ।**
**महारक्ताकारं तरुणविगतं [6]भीममकुलं**
**कुलागारस्थानं [7]कुलरमणीरक्तायुतमिति ॥ ९ ॥**

**२. भकार का ध्यान**—षड्दल पर स्थित भकार दो वर्ण वाले श्री महालक्ष्मी ( गौर वर्ण ) एवं उनके नाथ विष्णु ( श्याम वर्ण ) को सुख प्रदान करता है । ये त्रिकोणा ( भगवती ) के पार्श्व में स्थित रहने वाला चपल ( त्वरा ) का खण्ड है, शम्भु का गृह है, उसका आकार महारक्त है तारुण्य से रहित, भीम एवं अकुल है । कुलागार का स्थान एवं कुलरमणी महाशक्ति के रक्त से युक्त है ॥ ९ ॥

**यदा ध्यायेत् ज्ञानी निरवधि मुदा शोकविषहं**
**त्रिलोकानां स्थानं भुवनशरणं [8]प्रातविसुखी ।**
**महामोक्षद्वारे भवति स महान् सर्वजडितो**
**विलासी सर्वेषां नवनववधूनां प्रियपतिः ॥ १० ॥**

जिस समय ज्ञानी प्रसन्नतापूर्वक शोक रूपी विष को दूर करने वाले, असीम भकार का ध्यान करता है तो वह तीनों लोकों के स्थान सभी भुवनों को शरण देने वाले ( परमात्मा ) को प्राप्त कर विशेष रूप से सुखी हो जाता है । महामोक्ष के द्वार पर वह सब से महान् हो जाता है, सब में मिला हुआ हो जाता है, विलासी एवं सभी प्रकार के नवीन से नवीन तरुणी जनों का प्रियपति बन जाता है ॥ १० ॥

---

१. विकारम्—ग० ।
२. मणयकम्—ग० ।
३. सुष्ठु खरः धेनुकासुरः नतो येन तम् । अथवा सुखं रान्ति ददाति ये ते सुखराः, ते नताः प्रणता यस्मिन् ।
४. द्विरण्ड—ग० ।
५. त्रिकोणं पार्श्वं स्यात् चपलशतकम्—ग० ।
६. भीमकुतम्—ग० ।
७. रमणि वज्रायुतमिति—ग० ।
८. प्राभवि—ग० ।

महाकालस्थानं स जयति सकारं यदि [1]भजे
दरीणां व्याहस्ता रुधिरकिरणं कोट्यरुणकम् ।
महाकालस्थानं (.....) शरणं प्रागपि सुखी
त्रिकोणां[2] दक्षाङ्गे निगमनयनो योगयजितः ॥ ११ ॥

**३. मकार का ध्यान**—यदि साधक, रुधिर ( लाल ) किरणों वाले, करोड़ों अरुण ( सूर्यसारथि ) के समान मकार का ध्यान करता है तो वह महाकाल के स्थान को भी जीत लेता है, अपने समस्त शत्रुओं को हस्तरहित ( परतन्त्र ) बना देता है, वह सर्वप्रथम महाकाल का स्थान जीतता है और सुखी हो जाता है एवं त्रिकोणा ( भगवती ) के दाहिने अङ्ग में निवास करता है । अन्ततः निगम ( वेद ) का नेत्र एवं योगियों से पूजित हो जाता है ॥ ११ ॥

विनोदी सौख्यानां सुरतरुसमानो भुवि दिवि
यकारं यो ध्यायेदमरपदवीव्याधिरहितः ।
महावाणीनाथं प्रणयजडितं त्वक् सुरतरुं
मुकुन्दानन्दान्तः[3] पवनमिलितं कामकरणम् ॥ १२ ॥

**४. यकार का ध्यान**—महावाणी के नाथ, प्रेम से जड़ीभूत त्वक् एवं कल्पवृक्ष के समान मुकुन्द के आनन्द का अन्तरूप, पवन से मिश्रित, काम उत्पन्न करने वाले यकार का जो साधक ध्यान करता है वह सभी सौख्यों से विनोद ( सुख ) करने वाला, पृथ्वी और आकाश में कल्पवृक्ष के समान अमर पदवी वाला बनकर सभी प्रकार के व्याधि से रहित हो जाता है ॥ १२ ॥

तदा लोकोऽकामी भवति नितरां काकपवनी
महाग्नेः संस्थानं परजलधरं[4] सूर्यशतकम् ।
यदानन्दैर्ध्यायेत्[5] परमधनदं यज्ञसुधया
सुधापानज्ञानी हवनकरणं काम्यफलदम् ।
प्रियं [6]तद्द्वेरत्याः कमलगभुजङ्गेश्वरनुतं[7]
त्रिकोणा[8]पृष्ठस्थं विधिहरिहरस्य [9]प्रियमिति ॥ १३ ॥

**५. रकार का ध्यान**—साधक के लिए यह सारा लोक उस समय अकामी ( कामना से रहित ) हो जाता है तथा कौवे के चञ्चु के समान निर्मित अपने अधरोष्ठ से पवन पी कर संतुष्ट हो जाता है जब वह महाग्नि के संस्थानभूत उत्कृष्ट जल धारण करने वाले सैकड़ों सूर्य के समान तेजस्वी, यज्ञसुधा से बहुत धन प्रदान करने वाले, हवन करने से काम्य फल देने

---

१. मकारं यदि भजेदरीणां व्याहन्ता रुधिरधिकरणं कोट्यकरुणम्—ग० ।
२. त्रिकोणादंकांके निगमनोयोग—ग० ।
३. नन्दान्तम्—ग० ।—मुकुन्दानन्दान्तः इति पाठो युक्तः । तत्र आनन्दस्यान्तो यस्मिन्नसौ आनन्दान्तः । मुकुन्देन सह कर्मधारयः ।
४. जननिधनम्—ग० ।—पर उत्कृष्टो यो जलधरस्तम् ।
५. यदानन्दे—ग० ।
६. तं द्रावत्थाः—क० ।
७. नृतम्—ग० ।
८. भ्रष्टस्थम्—ग० ।
९. श्रेयमिति—ग० ।

वाले अग्नि ( रं ) का आनन्द से ध्यान करता है, तभी वह सुधापान का ज्ञानी ( देवता ) बन जाता है । रति का प्रिय हो जाता है । कमलेश्वर एवं भुजङ्गेश्वर से प्रणत हो जाता है, त्रिकोणा ( भगवती ) के पीठ पर स्थिति प्राप्त करता है । किं बहुना विधि, हरि और हर का प्रिय हो जाता है ॥ १३ ॥

**विधानं वह्नीनां कुल[1] विमलबीजं सकरुणं**
**असृङ्[2] मायाखण्डं खगगणमनोरञ्जनवरम् ।**
**यदि ध्यायेदेको विभवविविधं याति सहसा**
**महेन्द्रः स्थानाङ्कं कमलसुखदं कृष्णनिलयम् ॥ १४ ॥**

सृष्टि का विधान करने वाला गार्हपत्यादि समस्त अग्नियों के कुल का विमल बीज ( रं ) का स्वरूप, करुणा से युक्त असृङ् ( रक्त रूप से प्रवाहित होने वाले ) माया के खण्ड तथा हविर्दान से देवताओं को प्रसन्न करने वाले, महेन्द्र का स्थान प्राप्त कराने वाले, ( हृत् ) कमल को सुख देने वाले, कृष्ण के निवास का स्थानभूत अग्नि ( रं ) का जो अकेले ध्यान करता है वह सहसा नाना प्रकार के विभवों को प्राप्त करता है ॥ १४ ॥

**प्रियं सिद्धक्षेत्रं यदि सुखमयं भावयति यः**
**लकारं[3] चन्द्रस्थं विधुशतकरं बिन्दुनिलयम् ।**
**विशालाक्षी राधा मधुरवचनालापकलितं**
**रमामोदे[4] पत्रे तरणकरणं सापहरणम् ॥ १५ ॥**
**सुवामे[5] राकिण्या नवरसमयं मोहहरणं ।**
**विभाव्य श्रीनाथं भजति स नरो ध्याननिपुणो ।**
**महामोक्षं प्राप्य प्रथम[6] रजसं सङ्गमयति ॥ १६ ॥**

**६. लकार का ध्यान**—चन्द्रमा में रहने वाले, चन्द्रमा के समान किरणों वाले, बिन्दु के निवास स्थान, विशालाक्षी राधा के मधुर वचनालाप से अलंकृत, रमा को आनन्द देने वाले, कमल पत्र पर तैरने वाले तथा ताप का हरण करने वाले लकार का जो साधक विभावन करता है वह सबका प्रिय, सिद्ध क्षेत्र और सुखमय हो जाता है । राकिणी के सुन्दर वाम भाग में विराजमान नवो रसों के स्वरूप, मोह का हरण करने वाले श्री नाथ का ध्यान कर जो मनुष्य ध्यान में निपुणता प्राप्त करता है वह महामोक्ष पदवी प्राप्त कर अपने पूर्वजन्म के रजोगुणों को नष्ट कर देता है ॥ १५-१६ ॥

**ततो ध्येया महाविद्या राकिणीशक्तिरुत्तमा ।**
**श्रीविष्णुसहिता नित्यं योगैर्भोगविवर्जितः[7] ॥ १७ ॥**
**अकलङ्की कुलानन्दो मन्दहास्यावृतो महान् ।**
**स योगी परमं राज्यं प्राप्नोति नात्र संशयः ॥ १८ ॥**

---

१. कमल—ग० । २. रवाया—ग० । ३. नकारम्—ग० ।
४. मोदे तपनकरणम्—ग० । ५. रामे—ग० । ६. वयसि—ग० ।
७. भोगैर्विवर्जितः, सर्वभोगरहित इत्यर्थः ।

यावन्मूलाधारयोगं तावद् यमादिकं प्रभो ।
यमनियमासने काले योगं[1] पञ्चामरान्वितम् ॥ १९ ॥

छः वर्णों एवं श्री नाथ का ध्यान करने के उपरान्त भोगों को त्याग कर योग के द्वारा श्रीविष्णु सहित उत्तमा महाविद्या राकिणी का साधक को ध्यान करना चाहिए । ऐसा करने वाला साधक कलङ्करहित, निर्दोष, कुल के लिए आनन्दभूत, मन्दहास्य से युक्त महान् बन जाता है ऐसा योगी परम राज्य ( पूर्णानन्द ) प्राप्त कर लेता हैं, इसमें संशय नही । हे प्रभो ! जब तक मूलाधार से साधक का सम्बन्ध है तब तक यम, नियम आसनादि योग विधेय है, इतना ही नहीं यम, नियम एवं आसनकाल में पञ्चामरायोग का भी सेवन करना चाहिए ॥ १७-१९ ॥

तावत्कुर्यान्महादेव यावत्तत् सिद्धिमाप्नुयात् ।
यदि पञ्चामरा सिद्धिस्तदा [2]मायादिसिद्धिभाक् ॥ २० ॥
पञ्चासवा सिद्धिकाले प्राणादिवायुपञ्चमम् ।
धृत्वा धृत्वा पुनर्धृत्वा कुम्भयेदनिशं शनैः ॥ २१ ॥
शरीरे निर्मले याते वायुनिर्मलता भवेत् ।
सर्वरूपी महावायुर्निर्मलात्मानमात्मनि ॥ २२ ॥
सिद्धिं ददाति योगेश यदि स्वकार्यमाश्रयेत् ॥ २३ ॥

॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धिमन्त्रप्रकरणे आनन्दभैरवी-भैरवसंवादे षड्दलवर्णप्रकाशो नाम चत्वारिंशत्तमः पटलः ॥ ४० ॥



हे महादेव ! उक्त सभी क्रियायें तब तक करनी चाहिए, जब तक सिद्धि प्राप्त न हो जाय । यदि पञ्चामरा की सिद्धि हो गई तो साधक मायादि सिद्धि का भाजन बन जाता है । जब तक पञ्चामरा की सिद्धि न हो, तब तक पाँचों प्राणवायुओं को बारम्बार धारण करते हुए धीरे धीरे निरन्तर कुम्भक करता रहे । शरीर के निर्मल हो जाने पर वायु निर्मल हो जाता है, क्योंकि महावायु सर्वरूपी है । हे योगेश ! यदि साधक अपने कार्य में लगा रहे तो वह अपनी आत्मा के निर्मल हो जाने पर सिद्धि प्रदान करता है ॥ २१-२३ ॥

**॥ श्रीरुद्रयामल के उत्तरतन्त्र के महातन्त्रोद्दीपन में सिद्धिमन्त्र प्रकरण में आनन्दभैरवी-भैरव संवाद में अधिष्ठान चक्र के षड्दलों के वर्ण प्रकाश नामक चालीसवें पटल की डा० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ ४० ॥**



---

१. जप पञ्चासवान्वितम्—ग० ।
२. यमा—क० । माया आदिर्यस्याः, तां सिद्धि भजतीति, मायादिसिद्धिभाक् । भजधातुरत्र क्विबन्तः ।

# अथैकचत्वारिंशः पटलः

आनन्दभैरवी उवाच[1]

कृतान्तसंहारविहारभोगं
रसाप्लुतश्रीकर शङ्कर प्रभो ।
तवाज्ञयाऽहं कथयामि सिद्धये
मयागमानन्दवशाद्धि तन्त्रम् ॥ १ ॥

**श्री आनन्दभैरवी ने कहा**—हे रस में डूबे हुए श्री देने वाले प्रभो शङ्कर ! मैं आपकी आज्ञा से भक्तजनों की सिद्धि हेतु तथा मय के आगमशास्त्र के आनन्द से वशीभूत होकर कृतान्त का संहार कर विहार और भोग वाले तन्त्र को कहती हूँ ॥ १ ॥

प्रेमाभिलाषी [2]सुजनो मुनीन्द्रो
जानाति तन्त्रार्थमनन्तसाधनम् ।
महाप्रभाते चरणाब्जभक्तो
गोविन्द[3]शम्भोर्यदि भक्तिभाजनः ॥ २ ॥
षड्चक्रभेदार्थविशेषसाधनं
जानाति यो वा स जनोऽतिदुर्लभः ।
स एव संसारनिषेधसाधनं
सदा विहायाचल भक्तिमाप्नुयात् ॥ ३ ॥

प्रेम की अभिलाषा वाला सज्जन मुनीन्द्र यदि प्रातःकाल गोविन्द अथवा सदाशिव के चरण कमलों में भक्ति रखता हो तो वह अनन्त साधन सम्पन्न तन्त्र के अर्थों को जानने वाला होता है । षट्चक्रों के भेदन के लिए विशेष साधनों को जानने वाला ऐसा साधक विशेष दुर्लभ है । क्योंकि वही संसार के निषेध का साधन जानने से संसार का परित्याग कर भगवान् में अचल भक्ति प्राप्त करता है ॥ २-३ ॥

आनन्दभैरव उवाच

यदि वा कथिता कान्ते षड्दलप्रक्रिया शुभा ।
राकिण्या मिलनं देव्याः कुण्डलिन्याः पराक्रमम् ॥ ४ ॥

---

१. ॐ नमो भगवत्यानन्दभैरव्युवाच—ग० । २. सुनिन्दो—ग० ।
३. भावो—क० । गोविन्दो भगवान् श्रीकृष्णस्तेन सहितस्य शम्भोः ।

सार्द्धं श्रीविष्णुना कालरूपिणा बहुरूपिणा ।
शुद्धनिर्मलतत्त्वेन परिवारगणैः सह ॥ ५ ॥
न तद्धि कथितं सर्वं श्रीकृष्णस्य [१]पराक्रमम् ।
स्तवनं देवराकिण्या सहितं कृष्णसाधनम्[२] ॥ ६ ॥

**श्रीआनन्दभैरव ने कहा**—हे कान्ते ! यद्यपि आपने सर्वकल्याणकारी षट्चक्रदल की प्रक्रिया कह दी, तथापि कालरूपधारी एवं अनेक रूपधारी शुद्ध निर्मल तत्त्व वाले परिवार सहित श्री विष्णु के साथ राकिणी देवी का सम्मिलन, कुण्डलिनी का पराक्रम और श्रीकृष्ण का पराक्रम, यह सब आपने नहीं कहा । इतना ही नहीं, आपने कृष्ण के सिद्धि के साधन भूत देवी राकिणी का स्तोत्र भी नहीं कहा ॥ ४-६ ॥

मङ्गलं परमं ब्रह्मसाधनं [३]कुलवर्द्धनम् ।
कृष्णप्रकाशस्तवनं राकिणीशक्तिसंयुतम् ॥ ७ ॥
कथयस्व महाकालि यदि स्नेहोऽस्ति मां प्रति ।
अत्यन्तगुह्यं कथनं सहस्र[४]नाममङ्गलम् ॥ ८ ॥
अष्टोत्तरं महाविष्णो राकिण्या सहितं प्रिये ।
इदानीं राकिणीस्तोत्रं वद भामिनी कामदे ॥ ९ ॥

अतः हे महाकालि ! यदि मुझमें आपका स्नेह हो तो परम कल्याणकारी ब्रह्मा के साधनभूत, कुल को बढ़ाने वाले, राकिणी शक्ति से संयुक्त एवं कृष्णतत्त्व का प्रकाश करने वाले उस स्तोत्र को कहिए । हे प्रिये ! राकिणी के सहित महाविष्णु का परम मङ्गलदायी अष्टोत्तर सहस्र (११०८) नाम कहिए । किन्तु, हे भामिनि ! हे कामदे ! इस समय सर्वप्रथम राकिणी स्तोत्र का आख्यान कीजिए ॥ ७-९ ॥

आनन्दभैरवी उवाच

योगेन्द्र परमानन्दसिन्धो श्रीचन्द्रशेखर ।
शृणुष्व राकिणीस्तोत्रं परमानन्दवर्धनम् ॥ १० ॥
सर्वत्र सुखदं प्रोक्तं सिद्धानामपि साधनम् ।
एतत् स्तवनपाठेन योगी योगेन्द्रभाक्[६] भवेत् ॥ ११ ॥

**श्री आनन्दभैरवी ने कहा**—हे योगन्द्र! हे परमानन्द सिन्धो ! हे श्रीचन्द्रशेखर ! इस समय परमानन्द को बढ़ाने वाले राकिणी स्तोत्र को सुनिए । यह स्तोत्र सभी काल में सुख देने वाला कहा गया है, और यह सिद्ध लोगों का साधन है । इस स्तोत्र के पाठ से योगी योगेन्द्र एवं दृढ़ बन जाता है ॥ १०-११ ॥

---

१. प्रकाशम्—ग० ।
२. कृष्णस्य साधनं यस्मिन् तन्त्रादौ ।
३. ज्ञान—ग० ।
४. साम—ग० ।
५. सिद्धश्री—ग० ।
६. योगेन्द्रदृढो—ग० ।

वैष्णवीसाधने यस्तु पञ्चाचारं करोति वा ।
सर्वेषां साधनोत्कृष्टं[1] जातिभ्रष्टोऽपि नो भवेत् ॥ १२ ॥
समता शत्रुमित्रेषु कर्माकर्मसु तत्त्ववित् ।
यदि वा [2]वैष्णवे नाथ समभावः प्रजायते ॥ १३ ॥

**पञ्चाचार की महिमा**—वैष्णवी के साधन में जो वैष्णव पञ्चाचार का आचरण करता है, वह इस सर्व साधनोत्कृष्ट स्तोत्र का पाठ करे तो वह जाति भ्रष्ट ( पतित ) नहीं होता । हे नाथ ! यदि विष्णु में भक्ति कर वैष्णव हुए भक्त में समभाव आ जावे तो उसे शत्रु और मित्र में समता प्राप्त होती है और वह कर्म एवं अकर्म का तत्त्ववेत्ता बन जाता है ॥ १२-१३ ॥

पञ्चाचारक्रमेणैव सिद्धो भवति नान्यथा ।
राधादिगोपिकाभिश्च गोपवृन्दैः समन्ततः ॥ १४ ॥
पञ्चाचारं मुदा कृत्वा सर्वेषां परिपालनम् ।
चकार कमलानाथोऽतः पञ्चाचारमाश्रयेत् ॥ १५ ॥

कोई भी साधक पञ्चाचार क्रम से सिद्ध होता है, अन्यथा नहीं । राधादि गोपियों के साथ तथा गोपवृन्दों के साथ कमलानाथ विष्णु ने प्रसन्नतापूर्वक पञ्चाचार कर सबका पालन किया । इसलिए पञ्चाचार का आश्रय साधक को अवश्य ग्रहण करना चाहिए ॥ १४-१५ ॥

पञ्चाचार[3]क्रमेणैव चैतन्या कुण्डली भवेत् ।
कृष्णचैतन्यहेतोश्च राकिण्याश्च तथा प्रभो ॥ १६ ॥
चैतन्याय षड्दलस्थदेव चैतन्यहेतुना ।
कुण्डलीवधुराकिण्याः स्तोत्रं शृणु कुलार्णव ॥ १७ ॥

हे कुलार्णव ! क्योंकि पञ्चाचार का क्रम करने से कुण्डलिनी जागृत हो जाती है । हे प्रभो ! कृष्ण के चैतन्य के लिए तथा राकिणी को चैतन्य करने के लिए, किं बहुना, षड्दलस्थ देवताओं के चैतन्य के लिए कुण्डली के रूप में स्त्रीभावापन्न राकिणी देवी के स्तोत्र को सुनिए ॥ १६-१७ ॥

### राकिणीराधिकास्तवम्

आन्दोलिता रसनिधौ कुलचञ्चला या
मायामयो[4] सकलदुःखविनाशवीरा[5] ।
वीरासना[6] स्थितिगता सुलभा मुनीनां
भव्या प्रपातु भविका कुलराकिणी माम् ॥ १८ ॥

**राकिणीस्तोत्र**—रस समुद्र में झूलती हुई, मूलाधार में चञ्चल रहने वाली जो

---

१. कृष्णम्—ग० ।—साधनेषु उत्कृष्टं साधनोत्कृष्टम् ।
२. वैष्णवं नाथा—ग० ।
३. पञ्चसंख्याका आचारा इति पञ्चाचाराः, तत्क्रमेणैव । पञ्चाराशब्दस्यार्थः साम्प्रदायिकः ।
४. मही—ग० । ५. बीघा—ग० । ६. विलासनस्थितिगता—ग० ।

मायामयी हैं, भक्तों के समस्त दुःख का विनाश करने के लिए जो एकमात्र समर्थ हैं, जो वीरासन से विराजमान अपनी स्थिति में रहने वाली, मुनियों के लिए सर्वदा सुलभ, सबसे मनोहर, सबका कल्याण करने वाली कुलराकिणी ( विष्णु की शक्ति ) मेरी रक्षा करें ॥ १८ ॥

**आनन्दसिन्धु जडिताखिलसारपाना[1]**
**बाला कुलीननमिता दलषट्कुलस्था ।**
**काली[2]कलामलगुणा धनिनां धनस्था**
**कृष्णेश्वरी समुदयं कुरु राकिणी मे ॥ १९ ॥**

आनन्द सिन्धु में सराबोर रहने वाली, अखिल सारों को पी जाने वाली, बाला, कुलीन जनों से नमन की जाने वाली, षड्दल कमल चक्र पर निवास करने वाली, काली कलास्वरूपा, शुभ्रगुणों से संयुक्त, धनियों के धन में निवास करने वाली, कृष्णेश्वरी श्री राकिणी देवी मेरा अभ्युदय करें ॥ १९ ॥

**या राकिणी त्रिजगतामुदयाय चेष्टा**
**संज्ञामयी कुलवती [3]कुलवल्लभस्था ।**
**विश्वेश्वरी स्मरहरप्रियकर्मनिष्ठा**
**कृष्णप्रिया मम सुखं परिपातु देवी ॥ २० ॥**

जो राकिणी तीनों लोकों के अभ्युदय के लिए चेष्टा स्वरूपा हैं, सबमें चेतना का संचार करने वाली हैं, जो कुलवती एवं कुल ( शाक्त सम्प्रदाय ) को अत्यन्त प्रिय हैं, जो विश्व की ईश्वरी हैं, सदाशिव को प्रिय एवं उनके कर्म में निष्ठा रखने वाली हैं ऐसी श्रीकृष्णप्रिया राकिणी देवी सुखपूर्वक मेरी रक्षा करें ॥ २० ॥

**षड्वर्गनाथकरपद्मनिषेविता या**
**राधेश्वरी प्रियकरी सुरसुन्दरी सा ।**
**माता कुलेशजननी जगतां मनुस्था**
**विद्या परा रिपुहरावत मे शरीरम् ॥ २१ ॥**

समस्त ऐश्वर्य, यश, ज्ञान एवं वैराग्यादि षड्वर्गों के स्वामी श्रीकृष्ण के कर कमलों द्वारा जो सेवित हैं ऐसी राधा, ईश्वरी, सबका प्रिय करने वाली, सुरसुन्दरी, वही माता कुलेश जननी सब के मन में निवास करने वाली, परा विद्या, शत्रुओं का संहार करने वाली राकिणी मेरे शरीर की रक्षा करें ॥ २१ ॥

**गोविन्दरामरमणी नवमालिनी या**
**राज्येश्वरी[4] स्मरहरा[5] नवकामिनी वा[6] ।**

---

१. पारा—ग० । २. कमलामलगुणाधनस्था—ग० ।
३. कुलवली—ग० । ४. वाक्येश्वरी—ग० ।—राज्यस्येश्वरी शासिका ।
५. हरति या सा हरा पचाद्यचि स्त्रियां टाप्, स्मरस्य कामदेवस्य हरा, स्मरहरा ।
६. या—ग० ।

मे षड्दलाश्रितसुर[1] परिपातु नित्यं
श्रीकुण्डली सुविमला कुलराकिणी सा ॥ २२ ॥

गोविन्द को रमण कराने के कारण उनकी रमणी, नवीन माला धारण करने वाली राजेश्वरी, कामदेव का विनाश करने वाली अथवा युवावस्था सम्पन्न श्री कुण्डलिनी, सुविमला, कुल राकिणी देवी मेरे षड्दल कमल चक्र पर रहने वाले सभी देवताओं की सदैव रक्षा करें ॥ २२ ॥

श्रीसुन्दरी कुलपरा कुलवृन्दवन्द्या
सन्ध्याविधि[2]प्रभवतामतिकामतीर्था ।
श्रीदायिनी[3] कुलगणामलभावदात्री
नित्यं प्रपातु विषयं कुलषड्दलानाम् ॥ २३ ॥

श्री सुन्दरी कुल में रहने वाली शाक्त सम्प्रदाय के समूहों से वन्दना किए जाने योग्य, संध्या विधि के आचरण करने वालों के लिए उनकी कामना पूर्ण करने वाली, श्रीदायिनी, कुलगणों (शाक्त उपासकों) में स्वच्छभाव प्रदान करने वाली राकिणी देवी मूलाधार के षड्दलों के समस्त विषयों की नित्य रक्षा करें ॥ २३ ॥

चैतन्यदाननिरतां[4] त्रिगुणाभिरामां
श्यामां नितम्बधृतसुन्दररत्नघण्टाम् ।
नीलाचलस्थितकरां वरदानहस्तां
श्रीकृष्णवाम[5]कमलोपरि पूजयामि ॥ २४ ॥

सब में चैतन्य प्रदान करने के लिए निरत, त्रिगुण, (सत्त्व, रज एवं तम) से अभिराम, श्यामा, नितम्बस्थल पर सुन्दर रत्नघण्टा धारण किए हुए, नील पर्वत पर हाथ रखे हुए वरदान देने के लिए उत्सुक हाथों वाली, श्रीकृष्ण की वामा जो कमल के समान कमनीय हैं, मैं उनका पूजन करता हूँ ॥ २४ ॥

तां राकिणीं त्रिरमणीं [6]समलापहन्त्रीं
सर्वस्थिता[7] गगनमातरमम्बुजस्थाम् ।
पद्मासनां श्रुतिभुजां गुरुजामनन्तां
शान्तां षडम्बुजदलोपरि पूजयामि ॥ २५ ॥

तीनों लोकों में रमण करने वाली, समस्त मलों को प्रक्षालन करने वाली, सब में स्थित आकाश की भी माता, कमल के ऊपर निवास करने वाली, पद्मासन से बैठी हुई श्रुति को

---

१. पतिपातु—ग० । २. न.....ग० ।
३. श्रीदामिनी—ग० ।
४. दाम—ग० ।—चैतन्यस्य प्रकाशस्य (ज्ञानस्य) दाने निरताम् ।
५. रामकमलोपरि—ग० । ६. रमना—ग० ।
७. सर्वाश्रितां त्रिजगतां जनमम्बुजस्थाम्—ग० ।

अन्तःकरण में स्थापित करने वाली उन अनन्ता, शान्ता राकिणी की मैं षट्कमल दल पर पूजन करता हूँ ॥ २५ ॥

शान्तिं कृपाकपटकोपरि नाशमुक्तिं
शिवां परमवैष्णवपूजिताङ्घ्रिम् ।
राधां[१] सुधां वरमयीं जगतां गुणस्थां
धर्मार्णवां रसदले परिपूजयामि ॥ २६ ॥

शान्तिस्वरूप कृपा में कपट करने वाले का विनाश कर उसे मुक्त करने वाली शिवा, परम वैष्णवों द्वारा पूजित चरणों वाली, राधा, सुधा, वरमयी, जगत्स्वरूपा, गुणों में रहने वाली, धर्म के समुद्र वाली श्री राकिणी की मैं षट्दल कमल पर सब प्रकार से पूजा करता हूँ ॥ २६ ॥

कर्त्तीकरां[२] सकरुणां रमणीं त्रिसर्गां
तां राकिणीमतिदयाममलार्थचिन्ताम् ।
भ्रान्तिं भ्रमागमवरां स्मृतिमादिपूज्यां
भार्यां हरेरतिसुखां परिपूजयामि ॥ २७ ॥

हाथ में कैंची लिए हुए, करुणायुक्त, तीनों लोकों की सृष्टि करने वाली, स्त्रीस्वरूपा, अत्यन्त दया वाली, स्वच्छ अर्थ के चिन्तन में लगी हुई, भ्रान्ति स्वरूपा, आगम ग्रन्थों द्वारा सर्वश्रेष्ठ कही जाने वाली, स्मृति स्वरूपा, सर्वप्रथम पूज्य, विष्णु की भार्या और अत्यन्त सुख स्वरूपा उन राकिणी देवी का मैं पूजन करता हूँ ॥ २७ ॥

या कातरं निरवधिप्रणय[३]स्ववस्था
वागीश्वरी भगवती [४]यतिकोटिनम्रा ।
ताम्राकृति[५]प्रकृति[६]चेतसि रक्तवर्णा
मायामयी सुरकलावति पातु मेऽङ्गम् ॥ २८ ॥

जो कातर जनों को अपने असीम प्रेम से अपना लेती हैं, ऐसी यतियों से करोड़ों बार प्रणाम की जाने वाली, ताम्र के समान आकृति वाली, प्रकृति, चित्त में राग रखने वाली मायामयी, सुरकलास्वरूपा, वागीश्वरी भगवती राकिणी मेरे अङ्गों की रक्षा करें ॥ २८ ॥

कल्पद्रुमाशयलता फलरूपिणी या
भर्गस्थिता पुरुषकोटिमुनिस्तुवन्ती ।
सा मे कुलेश्वररसं हरिहस्तपूज्या
क्षान्तिः सदा मम धनं परिपातु राधा ॥ २९ ॥

---

१. राधासुताम्—ग० ।
२. कर्त्रीकरामिति पाठो युक्तः । कर्त्री मायाशक्तिमपि या करोति सम्पादयति सा । अच्प्रत्ययान्तः करशब्दः ।
३. प्रत्रयासुवस्था—ग० । ४. नति—ग० ।
५. ताम्राकिणी—ग० । ६. तेजसि—ग० ।

कल्पद्रुम के समान लता वाली जो भगवती फलरूपिणी हैं, सूर्य में निवास करने वाली हैं, करोड़ों पुरुषों तथा मुनियों से संस्तुत, भगवान् विष्णु के हाथों से पूजी गई वह भगवती मुझे कुल ( मूलाधार ) के ईश्वर ( स्वयंभूलिङ्ग ) में रस ( प्रेम ) प्रदान करें ॥ २९ ॥

**क्षेमङ्करी वरकरी सुकरी हरिस्था**
**या सौकरी भवकरी त्रिपुरा महेशी ।**
**वायुस्थिता लयमयी स्थितिमार्गसङ्गा**
**भङ्गप्रिया सकलका परिपातु राधा ॥ ३० ॥**

क्षमा स्वरूपा, सबका कल्याण करने वाली, वरदायिनी, शुभ करने वाली, सिंहवाहिनी, सबको सुलभ करने वाली, संसार में जन्म देने वाली, त्रिपुरा, महेशी, वायुस्थिता, लयमयी, स्थितिमार्ग की सङ्गिनी ऐसी राधा रानी मेरे धन की रक्षा करें और भङ्गप्रिया सकलका राधा मेरी रक्षा करें ॥ ३० ॥

**गङ्गा निर्मलभावदा ममशिरोदेशं सदा रक्षतु**
**श्रीराधा कुलराकिणी मम कपालोर्ध्व महावाक्प्रिया ।**
**मन्त्रस्था जयदा मुदा कुमुदिनी भालं भ्रुवोरन्तरं**
**विद्या वाग्भवकुण्डलीफलवलाबाला[१] च नेत्रत्रयम् ॥ ३१ ॥**

निर्मल भावना प्रदान करने वाली गङ्गा मेरे शिरः प्रदेश की रक्षा करें । कुल में रहने वाली राकिणी महावाक् प्रिया श्रीराधा हमारे कपाल के ऊर्ध्व भाग की रक्षा करें । मन्त्र में स्थित रहने वाली, जयदायिनी, कुमुदिनी प्रेमपूर्वक मेरे भाल तथा भ्रू के मध्य भाग की रक्षा करें । वाग्भवकुण्डलिनी फलवला बाला विद्या मेरे तीन नेत्रों की रक्षा करें ॥ ३१ ॥

**गण्ड[२] चण्डसरस्वती श्रुतिकुलं [३]कैलासशैलस्थिता**
**मेधा टं घटवासिनी शशीमुखी[४] सूक्ष्मातिसूक्ष्माशया[५] ।**
**जिह्वाग्रं चिबुकं [६]रदावधिवहा कण्ठं गलं स्कन्धगं**
**स्कन्देशी दशनप्रभामलमति – वैकुण्ठधामेश्वरी[७] ॥ ३२ ॥**

चण्ड सरस्वती गण्डस्थल की, कैलास पर्वत पर रहने वाली देवी दोनों कानों की, टं शब्दगत घटवासिनी, शशिमुखी, सूक्ष्मातिसूक्ष्माशया मेरी मेधा की, रदावधिवहा देवी मेरे जिह्वाग्र एवं चिबुक प्रदेश की, कण्ठ गला एवं स्कन्ध की स्कन्देशी और मेरे दशनप्रभा की अमलमति वाली वैकुण्ठ धामेश्वरी देवी रक्षा करें ॥ ३२ ॥

**नानावर्णविलासिनी [८]मृदुरसं शम्भोर्भवानी शिवा**
**पृष्ठं [९]कर्मसु पृष्ठगा गतिकरी [१०]नित्योल्बणी भास्वती ।**

---

१. नीला—क० । २. चण्डम्—ग० । ३. कौल—ग० ।—कैलासशैले स्थिता।
४. शशिनश्चन्द्रस्य मुखमिव मुखं यस्याः। ५. सूक्ष्मातिसूक्ष्म आशयो यस्याः सा ।
६. वदानाधिमहा—ग० । ७. बोधेश्वरी—क० । ८. तदुरसम्—कं० ।
९. कर्म सुपृष्ठा—ग० । १०. नित्यो नृणाम्—ग० ।

पार्श्वं[1] मे कुलमालिनी मम कटिं लिङ्गं नितम्बाम्बरं
कामाख्या धनदायिनी सकरुणा पादद्वयं पातु सा[2] ॥ ३३ ॥

नाना वर्ण विलासिनी देवी मेरे हृदय स्थल की, शम्भु पत्नी भवानी शिवा मेरे पृष्ठ की, पृष्ठगा कर्म की, गतिकरी नित्योल्बणी भास्वती देवी मेरे पार्श्वभाग की, कुलमालिनी मेरे दोनों कटियों, लिङ्ग, नितम्ब और वस्त्र की तथा वही कामाख्या धनदायिनी राकिणी भगवती करुणापूर्वक मेरे दोनों पैरों की रक्षा करें ॥ ३३ ॥

मातृक्रोधनिवारिणी मम शिवं षट्पत्रशोभाकरं
पातु श्रीचरुवासिनी कुलतरुं गौरी परानन्ददा ।
चैतन्यस्थलवासिनी मम गता गोविन्द[3]मातृप्रिया
चैतन्यं सततं प्रपातु धरणी धात्री वरक्षेत्रगा ॥ ३४ ॥

माता के क्रोध का निवारण करने वाली, मेरे षट्पत्र की शोभा बढ़ाने वाले शिव की श्रीचरुवासिनी गौरी जो परब्रह्म को भी आनन्द प्रदान करती हैं, चैतन्य स्थल में निवास करती हैं, गोविन्द के माता के समान प्रिय हैं और हमारे में निवास करती हैं, वे हमारे कुलतरु ( शाक्त रूपी वृक्ष ) की रक्षा करें । वरक्षेत्रगा धात्री धरणी ( पृथ्वी ) देवी मेरे चैतन्य की नित्य रक्षा करें ॥ ३४ ॥

धन्या[4] पिङ्गललोचनाम्बुजमुखी चैतन्यकर्मप्रिया
सर्वत्र[5] प्रियमाकरोतु नियतं शक्तिः क्षमाकर्तृका ।
कीर्तिस्था मम कीर्तिचक्रनिलयं लाक्षारुणा बल्वरी
नीचा[6] चक्रनिवासिनी मम जया जीवं मुदा पातु माम् ॥ ३५ ॥

धन्या पीतवर्ण के नेत्रों वाली, चन्द्रमुखी, चैतन्यकर्म प्रिया, क्षमा करने वाली, शक्ति स्वरूपा भगवती राकिणी सर्वत्र नियत रूप से मेरा प्रिय करें । कीर्ति में निवास करने वाली देवी, मेरे कीर्ति एवं चक्र निलय की और लाक्षा के समान अरुण वर्ण वाली, बल्वरी ?, नीचा ? चक्र निवासिनी जया देवी मेरे जीव की प्रसन्नता पूर्वक रक्षा करें ॥ ३५ ॥

एतत्स्तोत्रं पठेन्नित्यं प्राणवायुवराशुभे[7] ।
षट्चक्रभेदसमये सदा पाठ्यं सुयोगिभिः ॥ ३६ ॥
कुलविन्याससमये कुलचक्रप्रवेशने[8] ।
अवश्यं प्रपठेद्विद्वान् राकिणीराधिकास्तवम् ॥ ३७ ॥

प्राण वायु के अशुभ काल में इस स्तोत्र का नित्य पाठ करे तथा षट्चक्र के भेदन

---

१. सर्वम्—ग० ।
२. पातु मा—ग० ।
३. सुप्त—ग० ।
४. मध्या—ग० ।
५. माक .... शक्तिः खश्चिपाठः ।
६. नीला—ग० ।
७. प्राणवायुवरेण आशुभे इति तृतीयातत्पुरुषः ।
८. कुलचक्रस्य प्रवेशनं यस्मिन्, तत्रेत्यर्थः ।

काल में अच्छे योगियों को इस स्तोत्र का सदा पाठ करना चाहिए । कुल विन्यास काल में और कुलचक्र के प्रवेश काल में विद्वान् साधक अवश्य ही राकिणी राधिका स्तव का पाठ करे ॥ ३६-३७ ॥

**त्रिसन्ध्यं चेदमाकुर्यात् पठित्वा च पुनः पुनः ।**
**ध्यात्वा भावपरो भूत्वा मुच्यते भवबन्धनात् ॥ ३८ ॥**
**अचलां भक्तिमाप्नोति विश्वामित्रो यथा वशी ।**
**पठनात् पामरो याति ब्रह्मलोकं कुलाधिप ॥ ३९ ॥**

**राकिणीराधिका स्तव की फलश्रुति**—तीनों सन्ध्या में बारम्बार पाठ करे और पाठ करके पुनः पुनः भाव में तन्मय होकर राकिणी का ध्यान करे तो साधक भव बन्धन से शीघ्र मुक्त हो जाता है । इस स्तोत्र के पाठ से कर्ता अचल भक्ति प्राप्त कर लेता है जिस प्रकार जितेन्द्रिय विश्वामित्र ने भक्ति प्राप्त की थी । हे कुलाधिप ! बहुत कहने से क्या ? इसके पाठ से पामर भी ब्रह्मलोक प्राप्त कर लेता है ॥ ३८-३९ ॥

**एतत्पठनमात्रेण शीतलो गुणवान् भवेत् ।**
**अप्रकाश्यमिदं स्तोत्रं सर्वान्तकविनाशनम् ॥ ४० ॥**
**समभावं समाकृत्य जीवन्मुक्तो भवेद्वशी ।**
**पञ्चाचाररतो भूत्वा साधयेद् यदि साधनम् ॥ ४१ ॥**

इसके पाठ मात्र से साधक शान्त स्वभाव एवं गुणवान् बन जाता है । यह स्तोत्र किसी से प्रकाशित नहीं करना चाहिए । यह सभी प्रकार के काल का विनाशक है । यदि साधक पञ्चाचार में निरत होकर इस साधन को सिद्ध कर ले और ( प्राणिजात पर ) समभाव से व्यवहार करे तो वह जितेन्द्रिय एवं जीवन्मुक्त बन जाता है ॥ ४०-४१ ॥

**कुण्डलीयोगकाले च कुलाचारं न वर्जयेत् ।**
**कुलाचारवर्जनेन महाहानिः प्रजायते ॥ ४२ ॥**
**ब्राह्मणः क्षत्रियो वापि वैश्यो वा शूद्र एव च ।**
**समभावं सदा कृत्वा कुलाचारं समाश्रयेत् ॥ ४३ ॥**

कुण्डलिनी से युक्त हो जाने पर कुलाचार को छोड़ नहीं देना चाहिए, क्योंकि कुलाचार के वर्जन से महान् हानि की संभावना है । ब्राह्मण हो, चाहे क्षत्रिय हो, चाहे वैश्य हो, चाहे शूद्र हो ( समस्त चराचर जगत् में ) समभाव का व्यवहार करते हुए कुलाचार का आश्रय अवश्य ग्रहण करना चाहिए ॥ ४२-४३ ॥

**कुण्डली पृथिवी देवी राकिणी स्वारिदेवता[१] ।**
**तद्गेहगामिनी[२] देवी राधिका[३] राज्यकामिनी ॥ ४४ ॥**

---

१. मेदया—ग० । २. तद्देह—ग० ।
३. पाद्य—ग० ।

अस्याः साधनकाले च [1]समयाचारमाश्रयेत् ।
समभावे महामोक्ष इति तन्त्रार्थनिर्णयः ॥ ४५ ॥
समभावार्थकथनं त्यक्त्वा योगी भवेत्कृती ॥ ४६ ॥

॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धिमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे स्वाधिष्ठानराकिणी-स्तोत्रं नामैकचत्वारिंशत्तमः पटलः ॥ ४१ ॥



कुण्डली पृथ्वी देवी हैं, राकिणी उनकी प्रत्यधि देवता हैं और राज्यकामिनी राधिका देवी श्रीकृष्ण की गृहस्वामिनी हैं । इस स्तोत्र के साधनकाल में साधक समयाचार का पालन करे । जब समभाव आ जाय तो महा मोक्ष की प्राप्ति हो जाती है, ऐसा तन्त्रों के द्वारा अर्थ का निर्णय किया गया है । समभाव का अर्थ कथन ( किसी से न कहे ) उसे त्याग देवे तो योगी कृतार्थ हो जाता है ॥ ४४-४६ ॥

**॥ श्री रुद्रयामल में उत्तरतन्त्र में महातन्त्रोद्दीपन में सिद्धिमन्त्र के प्रकरण में षट्चक्र प्रकाश में भैरवी भैरव संवाद में स्वाधिष्ठान स्थित राकिणी स्तोत्र की इक्तालिसवें पटल की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ ४१ ॥**



---

१. सयये आचारः, अथवा समयस्य संकेतस्य आचारः ।

# अथ द्विचत्वारिंशः पटलः

आनन्दभैरवी उवाच

**कथयामि महाकाल[1] परमाद्भुतसाधनम् ।**
**कुण्डलीरूपिणी देवी राकिण्याः कुलवल्लभ ॥ १ ॥**

**श्री आनन्दभैरवी ने कहा**—हे महाकाल ! हे कुलवल्लभ ! अब कुण्डलीरूपिणी राकिणी देवी के परमाद्भुत साधन को कहती हूँ ॥ १ ॥

**मानसं द्रव्यमानीय चाथवा बाह्यद्रव्यकम् ।**
**अनष्टहृष्टचित्तश्च[2] पूजयेत् सावधानतः ॥ २ ॥**
**भक्त्या जपेन्मूलमन्त्रं मानसं सर्वमेव च ।**
**पूजयित्वा ततो जप्त्वा होमं कुर्यात्[3] परामृतैः ॥ ३ ॥**

मानसिक द्रव्यों को अथवा बाह्य जगत् के द्रव्यों को एकत्रित कर उससे विश्वास और हर्षपूर्ण चित्त हो कर साधक सावधानी से राकिणी देवी का साधन करे । फिर भक्तिभाव पूर्ण हो कर सभी प्रकार से मूल मन्त्र का मानस जप करे, इस प्रकार प्रथम पूजन करे फिर जप करे । तदनन्तर परामृत से होम करे ॥ २-३ ॥

**समासैः पक्वनैवेद्यैः सुगन्धिकुसुमैस्तथा ।**
**स्वयम्भूकुसुमैर्नित्यमर्घ्यं कृत्वा निवेदयेत् ॥ ४ ॥**
**सुमुखं पूजयेन्नित्यं मधुमांसेन शंकर ।**
**हुत्वा[4] हुत्वा पुनर्हुत्वा प्राणवाय्वग्निसंगमैः ॥ ५ ॥**

उस महीने में उत्पन्न होने वाले पके पके फलों के नैवेद्य से, सुगन्धित फूलों एवं कोश स्वयंभू कुसुमों से नित्य अर्घ्य निवेदन करना चाहिए । हे शङ्कर ! मधु और मांस द्वारा सुमुख ( श्री गणेश ) का पूजन करे । फिर प्राणवायु और अग्नि के संयोग से बारम्बार हवन करे ॥ ४-५ ॥

**भ्रामयित्वा मनो बाह्ये[5] स्थापयित्वा पुनः पुनः ।**
**पुनरागम्यगमनं कारयित्वा [6]सुमङ्गलम् ॥ ६ ॥**

---

१. महाकालि—ग० ।
२. अनन्त—ग० ।
३. सावधारय—क० ।
४. एवं श्रुत्वा—ग० ।
५. राज्ये—ग० ।
६. सुमेलनम्—ग० ।

वाचयित्त्वा सुवाणीभिर्याचयित्त्वा सवापिकम् ।
तर्पणं चाभिषेकञ्च केवलासवमिश्रितैः ॥ ७ ॥

मन को बाह्य जगत् में भ्रमण कराते हुए बारम्बार उसी में स्थापन करे । इस प्रकार गतागत करा कर सुन्दर वाणी से सुमङ्गल पाठ कर उनसे आशीर्वाद प्राप्त करे । फिर केवल आसव (पुष्परस) मिश्रित मांस, मुद्रादि तथा मत्स्यों से संयुक्त पिष्टक सहित सार द्रव्यों से तर्पण एवं अभिषेक करे ॥ ६-७ ॥

मांसैर्मुद्रादिभिर्मत्स्यैः सारद्रव्यैः सपिष्टकैः ।
घृतादिसुफलैर्वापि यद् यदायाति कौलिके ॥ ८ ॥
अचलां[1] भक्तिमाप्नोति विश्वामित्रो यथा वशी ।
तत्तद्द्रव्यैः साधकेन्द्रो नित्यं सन्तर्प्य संजपेत् ॥ ९ ॥

घृतादि से अथवा सुन्दर फलों से जैसा कि कौलिक सम्प्रदाय का विधान है, उससे भी तर्पण एवं अभिषेक करे । ऐसा करने से वशी साधक विश्वामित्र के समान अचल भक्ति प्राप्त कर लेता है । अतः साधकेन्द्र तत्तत् द्रव्यों से नित्य संतर्पण कर मूलमन्त्र का जप करे ॥ ८-९ ॥

**ॐ महाकाल कृष्णेन्द्र नीलमणिनिभ राकिणी-वल्लभ कुण्डली महावीर राकिणी कैवल्य-मोक्षदात्र्यै नमः ॥ क्रां कौं क्रं क्रं क्लीं श्रीं रां रीं रूं रें रैं रों रौं रं रः स्वाहा ॥ परमवैष्णवो महाभैरवी महाविष्णुः कुलदेवता परजननिष्फल पुरुषोत्तम वासुदेव हृषीकेशकेशव नारायण दामोदर पंचचूड चतुर्भुजशङ्खचक्रगदाधर राकिणी सूक्ष्मा कुलकुण्डली राधिका बाह्यदेवता श्री श्रीविद्याचैतन्यानन्दमयी विश्वव्यापिका जगन्मोहिनी मूलात् प्रगच्छन्ती[2] षडाधारभेदिनी[3]षड्दलाकार[4]प्रकाशिनी मनोभवा मांस[5]मांसरुधिरादिशरीरपरिवारादिकं[6] पालय पालय गोपय गोपय स्थापय स्थापय[7] शत्रून् घातय घातय ॐ हौं हौं स्थौं[8] ह्सौं हसकल ह्रीं सकल ह्रीं श्रीं जुहोमि नमो नमः स्वाहा ॥**

एतन्मन्त्रं पाठित्वा च तर्पणञ्च समाचरेत् ।
तर्पणान्ते चाभिषेकं सदा कुर्याच्च तान्त्रिकः[9] ॥ १० ॥
मूलान्ते चाभिषिञ्चामि नमः स्वाहा पदं ततः ।
ततो हि प्रणमेद्भक्त्या अष्टाङ्गनतिभिः[10] प्रभो ॥ ११ ॥

---

१. ग० पु० नास्ति ।—चलतीति चला, चलतेः पचाद्यजन्ताट्टाप् । न चला, अचला स्थिरेत्यर्थः ।
२. प्रगरवृत्ति—ग० ।
३. मेदिनीम्—ग० ।
४. यददनाकार—ग० ।
५. मां मां मांसरुधिरादि—ग० ।
६. परिधारादिकम्—क० ।
७. स्थापय—क० ।
८. स्थौं स्थौं हं सकल हं—क०
९. तान्त्रिकात्—ग० ।
१०. अष्टौ अङ्गानि यासु नतिसु, ताभिरित्यर्थः ।

'ॐ महाकाल कृष्णेन्द्र ... ... ... श्रीं जुहोमि नमः स्वाहा' पर्यन्त मन्त्र को पढ़कर तर्पण करना चाहिए । तर्पण के उपरान्त फिर तान्त्रिक साधक अभिषेक करे । उपर्युक्त मूलमन्त्र ( महाकाल कृष्णेन्द्र ... ... नमः स्वाहा ) के अन्त में 'अभिषिंचामि नमः स्वाहा' इतना और उच्चारण कर तर्पण करे । फिर हे प्रभो ! अपने अष्टाङ्गों का नमन करते हुए इष्टदेव को प्रणाम करे ॥ १०-११ ॥

**सहस्रनाम्ना स्तवनमष्टोत्तरसमन्वितम् ।**
**अर्धाङ्ग[१] राकिणीयुक्तं राकिणीकेशवस्तवम् ॥ १२ ॥**

तदनन्तर अर्द्धाङ्ग राकिणी से संयुक्त केशव के एक हजार आठ नामों से जिसका नाम 'राकिणी केशव स्तोत्र' है उस स्तोत्र का पाठ करे ॥ १२ ॥

**शृणु तं सकलं नाथ यत्र श्रद्धा सदा तव ।**
**श्रवणार्थं बहूक्तं[२] तत् कृपया ते वदाम्यहम् ॥ १३ ॥**
**एतत् श्रवणमात्रेण सर्वपापक्षयो भवेत् ।**
**राकिणीसङ्गमं[३] नाथ स्तवनं नाम पावनम् ॥ १४ ॥**
**ये पठन्ति श्रद्धया[४] चाश्रद्धया वा पुनः पुनः ।**
**तस्य सर्वः पापराशिः क्षयं याति क्षणादिह[५] ॥ १५ ॥**

हे नाथ ! उन सभी नामों के श्रवण कीजिए, जिसमें आपकी श्रद्धा है । इसके पहले भी आप ने उन नामों को सुनने के लिए कई बार कहा भी था, अब मैं कृपा कर उन नामों को कह रही हूँ । इस अष्टोत्तर सहस्र नाम के सुनने मात्र से सभी पापों का क्षय हो जाता है । हे नाथ ! यह राकिणी सङ्गम नामक स्तोत्र अत्यन्त पवित्र है । जो लोग श्रद्धा से अथवा अश्रद्धा से इस स्तोत्र का बारम्बार पाठ करते हैं उनकी समस्त पापराशि क्षण मात्र में यहीं पर नष्ट हो जाती है ॥ १३-१५ ॥

**काले काले महावीरो भवत्येव हि योगिराट् ।**
**संसारोत्तारणे युक्तो महाबलपराक्रमः ॥ १६ ॥**

तत्तत्समय प्राप्त होने पर पाठकर्ता साधक महावीर योगिराज बन जाता है । वह इस संसार से लोगों को पार उतारने में समर्थ महाबल और पराक्रम से युक्त हो जाता है ॥ १६ ॥

**अस्य श्रीमहदानन्द[६] कुलमङ्गल[७]कालसुन्दर-कृष्णमुकुन्दनारायणराकिणीकुल-कुण्डलिनीमिलन-सर्वसाधननिष्फलाय परमोक्षाय[८] नित्यसुखाय योगसिद्धयेऽष्टोत्तर-**

---

१. अभाङ्गम्—ग० ।
२. यदुक्तम्—ग० ।
३. मङ्गलम्—ग० ।
४. श्रियाचार—ग० ।
५. कुत्रा—ग० ।
६. श्रीमदानन्द—ग०, महतामानन्दो महदानन्दः, श्रिया सहित इति मध्यमपदलोपिसमासः
७. काल काल—ग० ।—कालश्चासौ सुन्दरश्च । अथवा कालस्यापि कालः ।
८. परमोक्षाय—ग० ।

सहस्रनामस्तोत्रस्य गणेश-कुलगणाधिपतिः ऋषिर्बृहतीच्छन्दः[1] श्रीमत्कृष्ण[2]महाकाल-पुरुषोत्तम-कुलकुण्डलिनी[3]राधाराकिणीदेवता षड्दलाधारादिप्रकाश षट्पद्मसिद्ध्यर्थे जपे विनियोगः ।

**स्तोत्र का विनियोग**—इस अष्टोत्तर सहस्रनाम स्तोत्र के गणेश कुल गणाधिपति ऋषि हैं, बृहतीच्छन्द है, श्रीमत्कृष्ण महाकाल पुरुषोत्तम सहित कुल कुण्डलिनी राधा राकिणी देवता हैं। श्री महदानन्द कुल मङ्गल कालसुन्दर कृष्ण मुकुन्द नारायण एवं राकिणी कुल कुण्डलिनी मिलन रूप सर्वसाधन के सम्पूर्ण फल प्राप्ति के लिए, परम मोक्ष के लिए, नित्य सुख के लिए, योगसिद्धि के लिए, षड्दलाधारादि प्रकाश एवं षट् पद्म की सिद्धि के लिए इसके पाठ में विनियुक्त करता हूँ ॥

अष्टोत्तरसहस्रनामारम्भः

ॐ श्रीकृष्णो महामाया यादवो देवराकिणी ।
गोविन्दो विश्वजननी महाविष्णुर्महेश्वरी ॥ १७ ॥
मुकुन्दो मालती माला विमला विमलाकृतिः ।
रमानाथो महादेवी महायोगी प्रभावती ॥ १८ ॥
वैकुण्ठो देवजननी दहनो दहनप्रिया ।
दैत्यारिर्दैत्यमथिनी मुनीशो मौनभाविता ॥ १९ ॥
नारायणो जयकला[4] करुणो करुणामयी ।
हृषीकेशः कौशिकी[5] च केशवः केशिघातिनी ॥ २० ॥
किशोरापि[6] कैशोरी महाकाली महाकला ।
महायज्ञो यज्ञहर्त्री दक्षेशो दक्षकन्यका ॥ २१ ॥

**अष्टोत्तर सहस्रनामारम्भ**—ॐ श्रीकृष्ण, महामाया, यादव, देवराकिणी, गोविन्द, विश्वजननी, महाविष्णु, महेश्वरी, मुकुन्द, मालतीमाला, विमला, विमलाकृति, रमानाथ, महादेवी, महायोगी, प्रभावती वैकुण्ठ, देवजननी, दहन, दहनप्रिया, दैत्यारि दैत्यमथिनी मुनीश, मौनभाविता, नारायण, जयकला, करुण, करुणामयी, हृषीकेश, कौशिकी, केशव, केशघातिनी, किशोर, कैशोरी, महाकाल, महाकला, महायज्ञ, यज्ञहर्त्री, दक्षेश, दक्षकन्यका ॥ १७-२१ ॥

महाबली महाबाला[7] बालको देवबालिका ।
चक्रधारी चक्रकरा चक्राङ्गः[8] चक्रमर्दिका ॥ २२ ॥
अमरो युवती भीमो भया[9] देवो दिविस्थिता ।
श्रीकरो वेशदा[10] वैद्यो गुणा योगी कुलस्थिता ॥ २३ ॥

---

१. वृतीच्छन्दः इति—ग० । २. महांश्चासौ कालश्च, स च पुरुषेषूत्तमः ।
३. कुलानां कुलेषु वा कुण्डलिनी । ४. ज्वलाच्छन्त्रा—ग० ।
५. कैषिकी च—क० । ६. किशोरश्चापि—ग० ।
७. महाबालो—ग० । ८. चक्रकृच्चक्रमर्दिका—ग० ।
९. भीकोऽमया—ग० । १०. देवे सदा—ग० ।

समयज्ञो मानसज्ञा क्रियाविज्ञः क्रियान्विता ।
अक्षरो वनमाला च कालरूपी कुलाक्षरा ॥ २४ ॥
विशालाक्षो दीर्घनेत्रा जयदो जयवाहना ।
शान्तः शान्तिकरी श्यामो विमलश्याम विग्रहा ॥ २५ ॥
कमलेशो महालक्ष्मी सत्यः साध्वी शिशुः प्रभा ।
विद्युताकारवदनो[1] विद्युत्पुञ्जनभोदया[2] ॥ २६ ॥
राधेश्वरो[3] राकिणी च कुलदेवः कुलामरा ।
दक्षिणो दक्षिणी श्रीदा क्रियादक्षो महालया ॥ २७ ॥
वशिष्ठगमनो[4] विद्या विद्येशो वाक्सरस्वती ।
अतीन्द्रियो योगमाता रणेशी रणपण्डिता ॥ २८ ॥
कृतान्तको बालकृष्णा कमनीयः सुकामना ।
अनन्तो अनन्तगुणदा वाणीनाथो विलक्षणा ॥ २९ ॥
गोपालो गोपवनिता गोगोप कुलात्मजा ।
मौनी[5] मौनकरोल्लासा मानवो मानवात्मजा ॥ ३० ॥

महाबली, महाबाला, बालक, देवबालिका, चक्रधारी, चक्रकरा, चक्राङ्ग, चक्रमर्दिका, अमर, युवती, भीम, भया, देव, दिविस्थिता, श्रीकर, वेशदा, वैद्य, गुणा, योगी, कुलस्थिता, समयज्ञ, मानसज्ञा, क्रियाविज्ञ, क्रियान्विता, अक्षर, वनमाला, कालरूपी, कुलाक्षरा, विशालाक्ष, दीर्घनेत्रा, जयद, जयवाहना, शान्त, शान्तिकरी, श्याम, विमलश्यामविग्रहा, कमलेश, महालक्ष्मी, सत्य, साध्वी, शिशु, प्रभा, विद्युताकारवदन, विद्युत्पुञ्जनभोदया, राधेश्वर, राकिणी, कुलदेव, कुलामरा, दक्षिण, दक्षिणी, श्रीदा, क्रियादक्ष, महालया, वशिष्ठ-गमन, विद्या, विद्येश, वाक्, सरस्वती, अतीन्द्रिय, योगमाता, रणेश, रणपण्डिता, कृतान्तक, बालकृष्णा, कमनीय, सुकामना, अनन्त, अनन्तगुणदा, वाणीनाथ, विलक्षणा, गोपाल, गोपवनिता, गोगोप, कुलात्मजा, मानी मौनकरोल्लासा मानव मानवात्मजा ॥ २२-३० ॥

सर्वाच्छिन्नो[6] मोहिनी च मायी माया शरीरजा ।
अक्षुण्णो[7] वज्रदेहस्था गरुडस्थो हि गारुडी ॥ ३१ ॥
सत्यप्रिया रुक्मिणी च सत्यप्राणोऽमृतापहा[8] ।
सत्यकर्मा[9] सत्यभामा सत्यरूपी त्रिसत्यदा ॥ ३२ ॥
शशीशो[10] विधुवदना कृष्णवर्णो विशालधीः ।

---

१. विद्युदाकारं वदनं महातेजस्वि प्रकाशशीलं यस्याः सा ।
२. निभोदरा—ग० ।—विद्युतां पुञ्जेन निभ उदयो यस्याः सा ।
३. धरेश्वरो—ग० । ४. विशिष्ट—ग० । ५. मान—ग० ।
६. सर्ववृन्दो—ग० । ७. रज । ८. अमृतापहा—ग० ।
९. सत्यभ्रमो वाणसत्यो कालसत्योऽमृताऽध्यहा । क० अधि० पाठः ।
१०. शीश—ग० ।—शशिन ईशः शशीशः ।

त्रिविक्रमो विक्रमस्था स्थितिमार्गः स्थितिप्रिया ॥ ३३ ॥
श्रीमाधवो माधवी च मधुहा मधुसूदनी ।
वैकुण्ठनाथो विकला विवेकस्थो विवेकिनी ॥ ३४ ॥
विवादस्थो विवादेशी कुम्भकः कुम्भकारिका ।
सुधापानः सुधारूपा सुवेशो[१] देवमोहिनी ॥ ३५ ॥

सर्वाच्छिन्न, मोहिनी, मायी, माया, शरीरजा, अक्षुण्ण, वज्रदेहस्था, गरुडस्थ, गारुडी, सत्यप्रिय, रुक्मिणी, सत्यप्राण, अमृतापहा, सत्यकर्मा, सत्यभामा, सत्यरूपी, त्रिसत्यदा, शशीश, विधुवदना, कृष्णवर्ण, विशालधी, त्रिविक्रम, विक्रमस्था, स्थितिमार्ग, स्थितिप्रिया श्रीमाधव, माधवी, मधुहा, मधुसूदनी, वैकुण्ठनाथ, विकला, विवेकस्थ, विवेकिनी, विवादस्थ, विवादेशी, कुम्भक, कुम्भकारिका, सुधापान, सुधारूपा, सुवेश, देवमोहिनी ॥ ३१-३५ ॥

प्रक्रियाधारको धन्या धन्यार्थो धन्यविग्रहा ।
धरणीशो महानन्ता सानन्तो[२] नन्दनप्रिया[३] ॥ ३६ ॥
प्रियो[४] विप्रियहरा च विप्रपूज्यो द्विजप्रिया ।
कान्तो विधुमुखी वेद्यो विद्या वागीश्वरोऽरुणा ॥ ३७ ॥
अकामी कामरहिता कम्रो विलचरप्रिया ।
पुण्डरीको[५] विकुण्डस्था वैकुण्ठो बालभाविनी ॥ ३८ ॥
पद्मनेत्र पद्ममाला[६] पद्महस्तोऽम्बुजानना ।
पद्मनाभिः पद्मनेत्रा पद्मस्थः पद्मवाहना ॥ ३९ ॥
वासुदेवो बृहद्गर्भा[७] महामानी महाञ्जना ।
कारुण्यो[८] बालगर्भा च आकाशस्थो विभाण्डजा ॥ ४० ॥

प्रक्रियाधारक, धन्या, धन्यार्थ, धन्यविग्रहा, धरणीश, महानन्ता, सानन्त, नन्दनप्रिया, प्रिय, विप्रियहरा, विप्रपूज्य, द्विजप्रिया, कान्त, विधुमुखी, वेद्य, विद्या, वागीश्वर, अरुणा, अकाम, कामरहिता, कम्र, विलचरप्रिया, पुण्डरीक, विकुण्डस्था, वैकुण्ठ, बालभाविनी, पद्मनेत्र, पद्ममाला, पद्महस्त, अम्बुजानना, पद्मनाभि, पद्मनेत्रा, पद्मस्थ, पद्मवाहना, वासुदेव, बृहद्गर्भा, महामानी, महाञ्जना, कारुण्य, बालगर्भा, आकाशस्थ, विभाण्डजा ॥ ३६-४० ॥

---

१. सुर्धशो—ग० ।—शोभनवेशयुत इति सुवेशः, पीताम्बरादिरूपः ।
२. सानन्दा—ग० ।—अनन्तेन सहितः, बलरामयुत इत्यर्थः, 'सानन्त' इति पाठे ।
३. नन्दनस्य आनन्ददायकस्य भगवतः श्रीकृष्णस्य प्रिया इत्यर्थः ।
४. अप्रिये—ग० ।
५. वाहनस्थो वाहनाढ्या सिद्धेशः सिद्धिदायिनी । सिद्धिमात्रो विलोका च चञ्चलो विषयापहा ॥ स्मशानवासिनी नाथो यमभूमिनिवासिनी । यमस्थो यामलस्था च यवनो भवनाश्रया ॥ —क० पु० अ० पाठः ।
६. पद्ममात्रा—ग० ।
७. बृहद्भानुः—ग० ।
८. कारुण्यगर्भा करणा काशाख्यो विभार्जिता ।

तेजोराशिस्तैजसी च भयाच्छन्नो भयप्रदा ।
उपेन्द्रो वर्णजालस्था स्वतन्त्रस्थो विमानगा ॥ ४१ ॥
नगेन्द्रस्थो नागिनी च नगेशो नागनन्दिनी[1] ।
सार्वभौमो महाकाली[2] नगेन्द्रः नन्दिनीसुता[3] ॥ ४२ ॥
कामदेवाश्रयो माया मित्रस्थो मित्रवासना ।
मानभङ्गकरो रावा[4] वारणारिप्रियः प्रिया ॥ ४३ ॥
रिपुहा राकिणी माता सुमित्रो मित्ररक्षिका ।
कालान्त कलहा देवी पीतवासाम्बरप्रिया[5] ॥ ४४ ॥
पापहर्ता पापहन्त्री निष्पापः पापनाशिनी ।
परानन्दप्रियो[6] मीना मीनरूपी मलापहा ॥ ४५ ॥

तेजोराशि, तैजसी, भयाच्छन्न, भयप्रदा, उपेन्द्र, वर्णजालस्था, स्वतन्त्रस्थ, विमानगा, नगेन्द्रस्थ, नागिनी, नगेश, नागनन्दिनी, सार्वभौम, महाकाली, नगेन्द्रनन्दिनीसुता, कामदेवाश्रय, माया, मित्रस्थ, मित्रवासना, मानभङ्गकर, रावा, वारणारिप्रिय, प्रिया, रिपुहा, राकिणी, माता सुमित्रा, मित्ररक्षिका, कालान्त, कलहा, देवा, पीतवास, अम्बरप्रिया, पापहर्ता, पापहन्त्री, निष्पाप, पापनाशिनी, परानन्दप्रिय, मीना, मीनरूपी, मलापहा ॥ ४१-४५ ॥

इन्द्रनीलमणिश्यामो महेन्द्रो नीलरूपिणी ।
नीलकण्ठप्रियो दुर्गा दुर्गादुर्गतिनाशिनी ॥ ४६ ॥
त्रिकोणमन्दिरश्रीदो विमाया मन्दिरस्थिता ।
मकरन्दरसोल्लासो मकरन्दरसप्रिया ॥ ४७ ॥
दारुणारिनिहन्ता[7] च दारुणारिविनाशिनी ।
कलिकालकुलाचारः कलिकालफलावहा[8] ॥ ४८ ॥
कालक्षेत्रस्थितो रौद्री व्रतस्थो व्रतधारिणी ।
विशालाक्षो विशालास्या चमत्कारो करोद्यमा ॥ ४९ ॥
लकारस्थो[9] लाकिनी च लाङ्गली लोलयान्विता ।
नाकस्थो नाकपदका नाकाक्षो[10] नाकरक्षका ॥ ५० ॥

इन्द्रनीलमणिश्याम, महेन्द्रनीलरूपिणी, नीलकण्ठप्रिय, दुर्गा, दुर्गादुर्गतिनाशिनी, त्रिकोण-

---

१. नानान्दिनी—ग० । २. सार्वभौमोऽमला—ग० ।
३. शुभा—ग० । ४. रारी—क० ।
५. पीतवासस्याम्बरं पीतवासाम्बरं, तत् प्रियं यस्याः सा । करणाद्यजन्तो वासशब्दः।
६. परमानन्दजा—ग० । ७. दारुणाधि—ग० ।
८. कालि काल पुत्रार्थो च काली कालपुत्रावहा—ग० ।
९. नकारस्यो नाकिनी च लाङ्कीशो कान्यान्विता—क० ।
१०. नाकरक्षा भूरक्षका—क० ।

मन्दिरश्रीद, विमाया, मन्दिरस्थिता, मकरन्दरसोल्लास, मकरन्दरसप्रिया, दारुणारिनिहन्ता, दारुणारिविनाशिनी, कलिकालकुलाचार, कलिकालफलावहा, कालक्षेत्रस्थित, रौद्री, व्रतस्थ, व्रतधारिणी, विशालाक्ष, विशालास्या, चमत्कारकरोद्यमा, लकारस्थ, लाकिनी, लाङ्गली, लोलयान्विता, नाकस्थ, नाकपदका, नाकाक्ष, नाकरक्षका ॥ ४६-५० ॥

कामगो[१] नामसम्बन्धा सामवेदविशोधिका ।
सामवेदः सामसन्ध्या सामगो[२] मांसभक्षिणी ॥ ५१ ॥
सर्वभक्षो रात्रभक्षा रेतस्थो रेतपालिनी ।
रात्रिकारी महारात्रिः कालरात्रो महानिशा ॥ ५२ ॥
नानादोषहरो मात्रा मारहन्ता सुरापहा[३] ।
चन्दनाङ्गी नन्दपुत्री नन्दपालः विलोपिनी ॥ ५३ ॥
मुद्राकारी महामुद्रा मुद्रितो मुद्रिता रतिः ।
शाक्तो लाक्षा वेदलाक्षी लोपामुद्रा नरोत्तमा[४] ॥ ५४ ॥
महाज्ञानधरोऽज्ञानी[५] नीरा मानहरोऽमरा ।
सत्कीर्तिस्थो महाकीर्तिः कुलाख्यो कुलकीर्तिता[६] ॥ ५५ ॥

कामग, नामसम्बन्धा, सामवेदविशोधिका, सामवेद, सामसन्ध्या, सामग, मांसभक्षिणी, सर्वभक्ष, रात्रभक्षा, रेतस्थ, रेतपालिनी, रात्रिकारी, महारात्रि, कालरात्र, महानिशा, नानादोषहर, मात्रा, मारहन्ता, सुरापहा, चन्दनाङ्ग, नन्दपुत्री, नन्दपाल, विलोपिनी, मुद्राकारी, महामुद्रा, मुद्रित, मुद्रिता, रति, शाक्त, लाक्षा, वेदलाक्ष, लोपामुद्रा, नरोत्तमा, महाज्ञानधर, अज्ञानी, नीरा, मानहर, अमरा, सत्कीर्तिस्थ, महाकीर्ति, कुलाख्य, कुलकीर्तिता ॥ ५१-५५ ॥

आशावासी वासना सा कुलवेत्ता सुगोपिता ।
अश्वत्थवृक्षनिलयो वृक्षसारनिवासिनी ॥ ५६ ॥
नित्यवृक्षो नित्यलता क्लृप्तः क्लृप्तपदस्थितः ।
कल्पवृक्षो कल्पलता सुकालः कालभक्षिका ॥ ५७ ॥
सर्वालङ्कारभूषाढ्यो सर्वालङ्कारभूषिता ।
अकलङ्की निराहारा दुर्निरीक्ष्यो निरापदा ॥ ५८ ॥
कामकर्ता[७] कामकान्ता कामरूपी महाजवा ।
जयन्तो याजयन्ती च जयाख्य जयदायिनी ॥ ५९ ॥
त्रिजीवनो जीवमाता कुशलाख्यो[८] विसुन्दरा ।
केशधारी केशिनी च कामजो कामजाड्यदा ॥ ६० ॥

---

१. नामगो—ग० । २. विशेषिका—ग० ।
३. स्मरापहा—ग० ।—स्मरं कामदेवमपहतवान्—स्मरापहा ।
४. नरोहरा—ग० ।—नर उत्तमो यस्याः । अगस्त्यमहर्षेर्धर्मभार्या लोपामुद्रा ( राजपुत्री ) ।
५. महाज्ञानहरो वाणी बाण सानहरोऽमरा—क० ।
६. कीर्तिका—क० । ७. कामकर्त्री—ग० । ८. कुशालाख्यो—ग० ।

आशावासी, वासना, कुलवेत्ता, सुगोपिता, अश्वत्थवृक्षनिलय, वृक्षसारनिवासिनी, नित्यवृक्ष, नित्यलता, क्लृप्त, क्लृप्तपदस्थित, कल्पवृक्ष, कल्पलता, सुकाल, कालभक्षिका, सर्वालङ्कारभूषाढ्य, सर्वालङ्कारभूषिता, अकलङ्की, निराहारा, दुर्निरीक्ष्य, निरापदा, कामकर्ता, कामकान्ता, कामरूपी, महाजवा, जयन्त, याजयन्ती, जयाख्य, जयदायिनी, त्रिजीवन, जीवमाता, कुशलाख्य, विसुन्दरा, केशधारी, केशिनी, कामज, कामजाड्यदा ॥ ५६-६० ॥

किङ्करस्थो विकारस्था मानसंज्ञो[1] मनीषिणी ।
मिथ्याहरो महामिथ्या मिथ्यासर्गो निराकृति ॥ ६१ ॥
नागयज्ञोपवीतश्च [2] नागमालाविभूषिता [3] ।
नागाख्यो नागकुलपा नायको नायिका वधूः ॥ ६२ ॥
नायकक्षेमदो नारी नरो नारायणप्रिया ।
किरातवर्णो रासज्ञी तारको गुणतारिका ॥ ६३ ॥
शङ्कराख्योऽम्बुजाकारा[4] कृपणः कृपणावती ।
देशगो देशसन्तोषा दर्शो दर्शनिवासिनी ॥ ६४ ॥
दर्शनज्ञो दर्शनस्था दृग् दृदिक्षा सुरोऽसुराः ।
सुरपालो देवरक्षा त्रिरक्षो रक्षदेवता ॥ ६५ ॥

किङ्करस्थ, विकारस्था, मानसंज्ञ, मनीषिणी, मिथ्याहर, महामिथ्या, मिथ्यासर्ग, निराकृति, नागयज्ञोपवीत, नागमालाविभूषिता, नागाख्य, नागकुलपा, नायक, नायिकावधू, नायकक्षेमद, नारी, नर, नारायणप्रिया, किरातवर्ण, रासज्ञी, तारक, गुणतारिका, शङ्कराख्य, अम्बुजाकारा, कृपण, कृपणावती, देशग, देशसन्तोषा, दर्श, दर्शनिवासिनी, दर्शनज्ञ, दर्शनस्था, दृग्, दिदृक्षा, सुर, असुरा, सुरपाल, देवरक्षा, त्रिरक्ष, रक्षदेवता ॥ ६१-६५ ॥

श्रीरामसेवी[5] सुखदा सुखदो व्यासवासिनी[6] ।
वृन्दावनस्थो वृन्दा च वृन्दावन्यो महत्तनू[7] ॥ ६६ ॥
ब्रह्मरूपी त्रितारी[8] च तारकाक्षो[9] हि तारिणी ।
तन्त्रर्थज्ञः[10] तन्त्रविद्या सुतन्त्रज्ञः सुतन्त्रिका ॥ ६७ ॥

---

१. मनसाज्ञो—ग० ।
२. नागयज्ञोपवीति च—ग० ।—नाग एव यज्ञोपवीतो यस्य सः । अथवा कर्मधारये सति मत्वर्थीय इनिप्रत्ययः ।
३. नागस्य माला, नागमाला अथवा नागानां मालासमूहस्तेन विभूषिता । आद्यसमासे मालाशब्दो माल्यार्थे बोध्यः ।
४. शङ्कराख्यो रुजाक्रूराः—ग० ।
५. श्रीवासो वारसुखदो—क० ।
६. व्यापकवासिनी—क० ।—व्यासेन विविधप्रक्षेपेण वसति, तच्छीला ।
७. बृहत्तनु—ग० ।—महतां तनुर्ययोस्ते महत्तनू इति ।
८. वितारी—क० ।
९. तारकाख्यो—ग० ।—तारकेऽक्षिणी यस्य सः ।
१०. तन्त्रज्ञस्तन्द्रविद्या—ग० ।—तन्त्रस्यार्थ भावं जानाति इति विग्रहः ।

तृप्त:[1] सुतृप्ता लोकानां तर्पणस्थो विलासिनी ।
मयूरा मन्दिररतो मथुरा मन्दिरेऽमला ॥ ६८ ॥
मन्दिरो मन्दिरादेवी निर्मायी मायसंहरा ।
श्रीवत्सहृदयो वत्सा वत्सलो भक्तवत्सला ॥ ६९ ॥
भक्तप्रियो भक्तगम्या भक्तो भक्ति: प्रभु: प्रभा ।
जरो जरा वरो रावा हविर्हेमा क्षम: क्षिति ॥ ७० ॥

श्रीरामसेवी, सुखदा, सुखद, व्यासवासिनी, वृन्दावनस्थ, वृन्दा, वृन्दावन्य, महत्तनू, ब्रह्मरूपी, त्रितारी, तारकाक्ष, तारिणी, तन्त्रार्थज्ञ, तन्त्रविद्या, सुतन्त्रज्ञ, सुतन्त्रिका, तृप्त, सुतृप्ता लोकानां, तर्पणस्थ, विलासिनी, मयूरा, मन्दिररत, मथुरा, मन्दिर, अमला, मन्दिर, मन्दिरा, देवी, निर्मायी, मायसंहरा, श्रीवत्सहृदय, वत्सा, वत्सल, भक्तवत्सला, भक्तप्रिय, भक्तगम्या, भक्त, भक्ति, प्रभु, प्रभा, जर, जरा, वर, रावा, हवि, हेमा, क्षम, क्षिति ॥ ६६-७० ॥

क्षोणीपो विजयोल्लासा विजयोजयरूपिणी ।
जयदाता[2] दातृजाया[3] बलिपो बलिपालिका ॥ ७१ ॥
कृष्णमार्जाररूपी च कृष्णमार्जाररूपिणी ।
घोटकस्थो हयस्था च गजगो गजवाहना ॥ ७२ ॥
गजेश्वरो गजाधारा गजो गर्जनतत्परा ।
गयासुरो गयादेवी गजदर्पो[4] गजार्पिता ॥ ७३ ॥
कामनाफलसिद्ध्यर्थी कामनाफलसिद्धिदा ।
धर्मदाता धर्मविद्या मोक्षदो[5] मोक्षदायिनी ॥ ७४ ॥
मोक्षाश्रयो मोक्षकर्त्री नन्दगोपाल ईश्वरी ।
श्रीपति: श्रीमहाकाली किरणो[6] वायुरूपिणी ॥ ७५ ॥

क्षोणीप, विजया, उल्लास, विजय, जयरूपिणी, जयदाता, दातृजाया, बलिप, बलिपालिका, कृष्णमार्जाररूपी, कृष्णमार्जाररूपिणी, घोटकस्थ, हयस्था, गजग, गजवाहना गजेश्वर, गजाधारा, गज, गर्जनतत्परा, गयासुर, गयादेवी, गजदर्प, गजार्पिता कामनाफल-सिद्ध्यर्थी, कामनाफलसिद्धिदा, धर्मदाता, धर्मविद्या, मोक्षद, मोक्षदायिनी, मोक्षाश्रय, मोक्षकर्त्री, नन्दगोपाल, ईश्वरी, श्रीपति, श्रीमहाकाली, करिशाव, वायुरूपिणी ॥ ७१-७५ ॥

वाय्वाहारी वायुनिष्ठा वायुबीजयशस्विनी ।
जेता[7] जयन्ती यागस्थो यागविद्या शिव: शिवा[8] ॥ ७६ ॥

---

१. तृप्ता सुतृप्त:—ग० ।
२. जयदात्री—ग० ।—ददातीति दाता, जयस्य दाता—षष्ठीतत्पुरुष: ।
३. दातृजयो—ग० । ४. गयदर्पो गयार्पिता—ग० ।—गजस्येव दर्पो यस्य स: ।
५. धर्मदो—ग० । ६. करिशाव:—सं मुद्रित ।—करिणो हस्तिन: शाव इवेति विग्रह: ।
७. जेत्रा—ग० ।—जयति इति जेता, स्त्रियां तु जेत्री इति स्यात् ।
८. शिशिराचलदेशस्थ: शिशिराचलरक्षिका ।

वासवो वासवस्थी च वासाख्यो धनविग्रहा[१] ।
आखण्डलो विखण्डा च खण्डस्थो[२] खण्डखञ्जनी ॥ ७७ ॥
खड्गहस्तो बाणहस्ता बाणगो बाणवाहना[३] ।
सिद्धान्तज्ञो ध्वान्तहन्त्री[४] धनस्थो धान्यवर्द्धिनी ॥ ७८ ॥
लोकानुरागो रागस्था स्थितः स्थापकभावना ।
स्थानभ्रष्टोऽपदस्था च शरच्चन्द्रनिभानना ॥ ७९ ॥
चन्द्रोदयश्चन्द्रवर्णा चारुचन्द्रो रुचिस्थिता ।
रुचिकारी रुचिप्रीता रचनो रचनासना ॥ ८० ॥

वायुवाहारी, वायुनिष्ठा, वायुबीजयशस्विनी, जेता जयन्ती, यागस्थ, यागविद्या, शिव, शिवा, वासव, वासवस्थी, वासाख्य, धनविग्रहा, आखण्डल, विखण्डा, खण्डस्थ, खण्ड-खञ्जनी, खड्गहस्त, बाणहस्ता, बाणग, बाणवाहना, सिद्धान्तज्ञ, ध्वान्तहन्त्री, धनस्थ, धान्य-वर्द्धिनी, लोकानुराग, रागस्था, स्थित, स्थापकभावना, स्थानभ्रष्ट, अपदस्था, शरच्चन्द्रनिभानना, चन्द्रोदय, चन्द्रवर्णा, चारुचन्द्र, रुचिस्थिता, रुचिकारी, रुचिप्रीता, रचन, रचनासना ॥ ७६-८० ॥

राजराजो राजकन्या भुवनो भुवनाश्रया ।
सर्वज्ञः सर्वतोभद्रा वाचालो[५] लयधातिनी ॥ ८१ ॥
लिङ्गरूपधरो लिङ्गा कलिङ्गः कालकेशरी[६] ।
केवलानन्दरूपाख्यो निर्वाणमोक्षदायिनी ॥ ८२ ॥
महामेघगाढ़ो महानन्दरूपा
महामेघजालो[७] महाघोररूपा ।
महामेघमालः सदाकारपाला
महामेघमालामलालोलकाली ॥ ८३ ॥
वियद्व्यापको व्यापिका सर्वदेहे
महाशूरवीरो महाधर्मवीरा ।
महाकालरूपी महाचण्डरूपा
विवेकी मदैकी कुलेशः कुलेशी ॥ ८४ ॥

---

सामवेदान्ततर्कश्च सामवेदफलोदया ॥
श्यामचन्द्रो बारमुख्या वारुणो वारुणिप्रिया ।
वरुणो वरुणानन्दा वरुणाख्यो व्रतान्तरा ।।—क० पु० अ० पाठः।

१. वंशनिग्रहा—ग० । २. खण्डस्योऽखण्डखञ्जनी—ग० ।
३. वाह—ग० । ४. धनदात्री—ग० ।
५. वाचाला लयघातिनी—ग० ।—वातीति वाः वायुः, तं चालयति इति वाचालः, गन्धप्रसारकः । अन्यथा कुत्सितवाग्वान् इत्यर्थः ।
६. कालकेश्वरी—ग० ।—कालाः केसरा इति कर्मधारयस्तत इनिर्मत्वर्थीयः ।
७. महामेघगाढमनानन्दरूपो महामना घोररूपा महामेघमाला...... ग० ।

सुमार्गी सुगीता शुचिस्वो विनिता[1]
महार्को[2] वितर्का सुतर्कोऽवितर्का ।
कृतीन्द्रो महेन्द्री भगो भाग्यचन्द्रा
चतुर्थो महार्था नग: कीर्तिचन्द्रा[3] ॥ ८५ ॥

राजराज, राजकन्या, भुवन, भुवनाश्रया, सर्वज्ञ, सर्वतोभद्रा, वाचाल, लयघातिनी, लिङ्गरूपधर, लिङ्गा, कलिङ्ग, कालकेशरी, केवलानन्दरूपाख्य, निर्वाणमोक्षदायिन्नी, महा-मेघगाढ़, महानन्दरूपा, महामेघजाल, महाघोररूपा, महामेघमाल, सदाकारपाला, महामेघमाला, अमला, लोलकाली, वियद्व्यापक, सर्वदेहे, व्यापिका, महाशूरवीर, महाधर्मवीरा, महाकाल-रूपी, महाचण्डरूपा, विवेकी, मदैकी, कुलेश, कुलेशी, सुमार्गी, सुगीता, शुचिस्वी, विनिता, महार्क, वितर्का, सुतर्क, अवितर्का, कृतीन्द्र, महेन्द्री, भग भाग्यचन्द्रा, चतुर्थ, महार्था, नग, कीर्तिचन्द्रा ॥ ८१-८५ ॥

विशिष्टो महेष्टिर्मनस्वी सुतुष्टि-
र्महाषड्दलस्थो महासुप्रकाशा ।
गलच्चन्द्रधारामृतस्निग्धदेहो
गलत्कोटिसूर्यप्रकाशाभिलाषा ॥ ८६ ॥
महाचण्डवेगो महाकुण्डवेगी
महारुण्डखण्डो महामुण्डखण्डा ।
कुलालभ्रमच्चक्रसार: प्रकारा
कुलालो मलाका[4] रचक्रप्रसारी ॥ ८७ ॥
कुलालक्रियावान् महाघोरखण्ड:
कुलालक्रमेण[5] भ्रमज्ञानखण्डा ।
प्रतिष्ठ: प्रतिष्ठा प्रतीक्ष: प्रतीक्षा
महाख्यो महाख्या सुकालोऽतिदीक्षा ॥ ८८ ॥
महापञ्चमाचारतुष्ट: प्रचेष्टा[6]
महापञ्चमा प्रेमहा कान्तचेष्टा ।
महामत्तवेशो महामङ्गलेशी
सुरेश: क्षपेशी वरो[7] दीर्घवेशा ॥ ८९ ॥

---

१. विनता—ग० ।
२. महर्को—ग० ।—महॉश्चासौ अर्कश्चेति महार्क:, तत्सदृश इत्यर्थ: ।
३. नगाकीर्तिचन्द्रा—ग० ।—कीर्तौ चन्द्रो यस्यां सा ।
४. मलाकार—ग० ।—मलाकारं चक्रं तस्य प्रकार इव प्रकार: सोऽस्यास्तीति; मत्वर्थीय इनिप्रत्यय: । अथवा षष्ठीतत्पुरुषे सति पुंयोगे ङीष् गौरादेराकृतिगणाद्वा ङीष् ।
५. क्रमान्—ग० ।
६. प्रवेष्टो—ग० ।
७. क्षपेशा—ग० । क्षपाया रात्रे: ईशी क्षपेशी, तस्या वर: ।

चरो बाह्यनिष्ठा[१] चरश्चारुवर्णा
कुलाद्योऽकुलाद्या यतिर्यागवाद्या ।
कुलोकापहन्ता महामानहन्त्री
महाविष्णुयोगी महाविष्णुयोगा ॥ ९० ॥

विशिष्ट, महेष्टि, मनस्वी, सुतुष्टि, महाषड्दलस्थ, महासुप्रकाशा, गलच्चन्द्रधारामृतस्निग्धदेह, गलत्कोटिसूर्यप्रकाशाभिलाषा, महाचण्डवेग, महाकुण्डवेगी, महारुण्डखण्ड, महामुण्डखण्डा, कुलालभ्रमच्चक्रसार प्रकारा, कुलाल, मलाका, रचक्रप्रसारी, कुलालक्रियावान्, महाघोरखण्ड, कुलालक्रमेणभ्रमज्ञानखण्डा, प्रतिष्ठ प्रतिष्ठा, प्रतीक्ष, प्रतीक्षा, महाख्य, महाख्या, सुकाल, अतिदीक्षा, महापञ्चमाचारतुष्ट, प्रचेष्टा, महापञ्चमा, प्रेमहा, कान्तचेष्टा, महामत्तवेश, महामङ्गलेशी, सुरेश, क्षपेशी, वर दीर्घवेशा, चर, बाह्यनिष्ठा अचर, चारुवर्णा, कुलाद्य, अकुलाद्या, यति, यागविद्या, कुलोकापहन्ता, महामानहन्त्री, महाविष्णुयोगी, महाविष्णुयोगा ॥ ८६-९० ॥

क्षितिक्षोभहन्ता क्षितिक्षुब्धबाधा[२]
महार्घो महार्घा धनी राज्यकार्या ।
महारात्रि[३] सान्द्रान्धकारप्रकाशो
महारात्रि[४] सान्द्रान्धकारप्रवेशा ॥ ९१ ॥
महाभीमगम्भीरशब्दप्रशब्दो
महाभीमगम्भीरशब्दापशब्दा[५] ।
कुला[६] ज्ञानदात्री यमो[७] यामयात्रा
वशी सूक्ष्मवेशाश्वगो नाममात्रा[८] ॥ ९२ ॥
हिरण्याक्षहन्ता[९] महाशत्रुहन्त्री
विनाशप्रियो बाणनाशप्रिया च ।
महाडाकिनीशो[१०] महाराकिणीशो
महाडाकिनी सा महाराकिणी सा ॥ ९३ ॥
मुकुन्दो महेन्द्रो महाभद्रचन्द्रा
क्षितित्यागकर्ता महायोगकर्त्री ।

---

१. वाक्य—ग० ।
२. सुण्णहन्ता महार्यी महार्या धनी चार्य—ग० ।
३. शास्त्र—ग० ।—महारात्रिसम्बन्धी यः सान्द्रोऽन्धकारस्तत्र प्रवेशो यस्याः ।
४. शास्त्र—ग० ।
५. नृशब्दा—ग० ।—महाभीमौ गम्भीरौ शब्दापशब्दौ यस्यां सा ।
६. गुणी—ग० । ७. मयो—ग० ।
८. खगो नागमात्रा—ग० ।—मीयन्ते आभिस्ता मात्राः, नाम्नो मात्रा यस्यां सा।
९. हिरणाख्य—क० ।—हिरण्य इत्याख्या यस्य स हिरण्याख्यस्तस्य हन्ता ।
१०. महाकाडि—ग० ।—महाडाकिन्या ईशो महाडाकिनीशः ।

हितो मारहन्त्री महेशेश इन्द्रा
गतिक्षोभभावो महाभावपुञ्जा[1] ॥ ९४ ॥
शशीनां समूहो विधोः कोटिशक्तिः[2]
कदम्बाश्रितो वारमुख्या सतीनां ।
महोल्लासदाता महाकालमाता
स्वयं सर्वपुत्रः स्वयं लोकपुत्री ॥ ९५ ॥

क्षितिक्षोभहन्ता, क्षितिक्षुब्धबाधा, महार्घ, महार्घा, धनी, राज्यकार्या, महारात्रिसान्द्रान्धकार-प्रकाश, महारात्रिसान्द्रान्धकारप्रवेशा, महाभीमगम्भीरशब्दप्रशब्द, महाभीमगम्भीरशब्दापशब्दा, कुला, ज्ञानदात्री, यम, यामयात्रा, वशी, सूक्ष्मवेश, अश्वग, नाममात्रा, हिरण्याक्षहन्ता, महाशत्रुहन्त्री, विनाशप्रिय, बाणनाशप्रिया, महाडाकिनीश, महाराकिणीश, महाडाकिनी, महाराकिणी, मुकुन्द, महेन्द्र, महाभद्रचन्द्रा, क्षितित्यागकर्ता, महायोगकर्त्री, हित, मारहन्त्री, महेशेश, इन्द्रा, गतिक्षोभभाव, महाभावपुञ्जा, शशीनां, समूह, विद्यो कोटिशक्ति, कदम्बाश्रित, सतीनां, वारमुख्या, महोल्लासदाता, महाकालमाता, स्वयं सर्वपुत्र, स्वयं लोकपुत्री ॥ ९१-९५ ॥

महापापहन्ता महाभावभर्त्री[3]
हरिः कार्तिकी कार्तिको देवसेना ।
जयाप्तो विलिप्ता कुलाप्तो गणाप्ता
सुवीर्यो[4] सभाषा क्षितीशोऽभियाता[5] ॥ ९६ ॥
भवान् भावलक्ष्मीः प्रियः प्रेमसूक्ष्मा
जनेशो धनेशी कृपो मानभङ्गा ।
कठोरोत्कटानां महाबुद्धिदाता
कृतिस्था गुणज्ञो गुणानन्दविज्ञा ॥ ९७ ॥
महाकालपूज्यो[6] महाकालपूज्या[7]
खगाख्यो नगाख्या खरः खड्गहस्ता ।
अथर्वोऽथर्वान्दोलितस्थः[8] महार्था
खगक्षोभनाशा[9] हविः कूटहाला ॥ ९८ ॥

---

१. पहोभावप्रज्ञा—ग० । २. राख्यः—ग० ।
३. हार्थो—ग० ।—महान्तो ये भावास्तेषां भर्त्री भरणशीला ।
४. सुधीर्व्या—ग० ।—शोभनं वीर्यं पराक्रमो यस्य सः ।
५. क्षितिशोऽतिया—ग० ।—क्षितेरीशः, सोऽभियाताऽभिगन्ता।
६. काल—ग० ।—महाकालेन पूज्यः, अथवा महाकालः पूज्यो यस्य ।
७. कान्त—ग० ।—महाकालेन पूज्या, महाकालः पूज्यो यस्याः सा ।
८. खगोग्रखर्वा—ग० ।
९. मग—ग० ।—खगस्य गरुडस्य क्षोभस्तं नाशयति या सा । कर्मणि अण्प्रत्ययः । अजादित्वाट्टाप् ।

महापद्म मालाधृतो गाणपत्या
गणस्थो गभीरा गुरुः[1] ज्ञानगम्या ।
घटप्राणदाता घनाकाररूपा
भयार्थोङबीजाङवारीङकर्ता[2] ॥ ९९ ॥
भवो भावमाता नरो यामध्याता
चलान्तोऽचलाख्या चयोऽञ्जालिका च ।
छलज्ञश्छलाढ्या[3] छकारश्छकारा
जयो जीवनस्था जलेशो जलेशा[4] ॥ १०० ॥

महापापहन्ता, महाभावभर्त्री, हरि कार्तिकी, कार्तिक, देवसेना जयाप्त, विलिप्ता, कुलाप्त, गणाप्ता, सुवीर्य, सभाषा, क्षितीश, अभियाताभवान्, भावलक्ष्मी, प्रिय, प्रेमसूक्ष्मा, जनेश, धनेशी, कृप, मानभङ्गा, कठोर, उत्कटानां, महाबुद्धिदाता, कृतिस्था, गुणज्ञ, गुणानन्दविज्ञा, महाकालपूज्य, महाकालपूज्या, खगाख्य, नगाख्या खर, खड्गहस्ता, अथर्व, अथर्वान्दोलितस्थ, महार्था, खगक्षोभनाशा, हवि, कूटहाला, महापद्ममालाधृत, गाणपत्य, गणस्थ, गभीरा, गुरुज्ञानगम्या, घटप्राणदाता, धनाकाररूपा, भयार्थ, ङबीजा, ङवारी, ङकर्ता, भव, भावमाता, नर, यामध्याता, चलान्त, अचलाख्या, चय अञ्जालिका, छलज्ञ, छलाख्या, छकार, छकारा, जय, जीवनस्था, जलेश, जलेशा ॥ ९६-१०० ॥

जपञ्जापकारी[5] जगज्जीवनीशा
जगत्प्राणनाथो[6] जगद्ध्लादकारी ।
झरो झर्झरीशा[7] झनत्कारशब्दो[8]
झनञ्झञ्जनानादझङ्काररावा ॥ १०१ ॥
अचैतन्यकारी अकैवल्यनारी
हनोल्लासधारी टनत्टङ्कहस्ता[9] ।
ठरेशो[10] पविष्टश्ठकारादिकोटी[11]
डरो डाकिनीशो डरेशो[12] डमारा ॥ १०२ ॥

---

१. पुरु—ग० । २. कर्णा—ग० ।
३. छलज्ञो छलाज्ञा—क० ।
४. जनेशो जनेशा—क० ।—जलस्येशा जलेशा, क्षीरसागरे ईशित्वं भजते ।
५. जगज्जापकारी—क० ।—जगतो जापः, तं करोति या सा, अथवा तं करोति तच्छीला, कर्तरि णिनिप्रत्ययः ।
६. दुप्राणनाथो—क० ।
७. झर्झरीगा—ग० ।—झर्झरीं गच्छति या सा गमेर्डः । अथवा झर्झर्या ईशा ।
८. नन्द्रा—क० । ९. टमत्—ग० ।
१०. ठकेशो—क० । ११. कूट—क० ।
१२. डामरा डाकिनी षोडसारा—ग० ।

ढमेशो हि ढक्का वरस्थानबीजो
णवर्णा तमालतनु:[1] स्थाननिष्ठा ।
थकारार्णमानस्थनिस्थोऽसंख्या
दयावान्[2] दयार्द्रा धनेशो धनाढ्या ॥ १०३ ॥
नवीनो नगेभागतीर्णाङ्गहारो
नगेशी पर: पारणी[3] सादिपाला ।
फलात्मा[4] फला फाल्गुनी फेणनाश:
फलाभूषणाढ्या वशी वासरम्या[5] ॥ १०४ ॥
भगात्मा भवस्त्री[6] महाबीजमानो
महाबीजमाला मुकुन्द: सुसूक्ष्मा ।
यतिस्था यशस्था रतानन्दकर्ता
रतिर्लाकिनीशो लयार्थ[7] प्रचण्डा ॥ १०५ ॥

जपज्जापकारी, जगज्जीवनी, ईश, ज़गत्प्राणनाथ, जगद्ध्लादकारी, झर, झर्झरीशा, झनत्कारशब्द, झनंझंनानादझङ्काररावा, अचैतन्यकारी, अकैवल्यनारी, हनोल्लासधारी, टनत्ट-बङ्गहस्ता, ठरेशोपविष्ट, ठकारादिकोटी, डर, डाकिनीश, डरेश, डमारा, ढमेश, ढक्का, वरस्थानबीज, णवर्णा, तमालतनु, स्थाननिष्ठा, थकारार्णमानस्थनिस्थ, असंख्या, दयावान्, दयार्द्रा, धनेश, धनाढ्या, नवीन, नगेभागतीर्णाङ्गहारा, नगेशी, पर, पारणी, सादिपाला, फलात्मा, फला, फाल्गुनी, फेणनाश, फलाभूषणाढ्या, वशी, वासरम्या, भगात्मा, भवस्त्री, महाबीजमान, महाबीजमाला, मुकुन्द, सुसूक्ष्मा, यतिस्था, यशस्था, रतानन्दकर्ता, रति, लाकिनीश, लयार्थ, प्रचण्डा ॥ १०१-१०५ ॥

प्रवालाङ्गधारी[8] प्रवालाङ्गमाला
हलोहालहेलापद: पादताला[9]।
वशीन्द्र: प्रकाशो वरस्थानवासा
शिव: श्रीधराङ्ग:[10] शलाका शिला च ॥ १०६ ॥

---

१. तमालस्तनस्थान—ग० ।—तमालस्येव तनुर्यस्य स इति ।
२. माल: स्वान्ति स्थान संस्था दयावान् दाया—ग० ।
३. पारसी—ग० ।
४. फलाम्राफलदोऽङ्गुली—क० ।—फलानि आत्मा यस्य स: ।
५. व्यासवस्या—क० ।—वासेन रम्या, वासो रम्यो यस्या: ।
६. भवश्रीमहाबीजमाता—क० ।—भवस्य शिवस्य स्त्री । महाबीजस्य माता इत्यर्थो द्वितीये पाठे । ७. नयार्थ—ग० । ८. प्रवालाब्धि—ग० ।
९. पत्रपाल—ग० ।—पादे तालो यस्या: सा । अथवा पादो गमनशील: तालो ध्वनिर्यस्या: सा ।
१०. शिश्रीधराड़ा—ग० ।—श्रीधरस्याङ्गमिवाङ्गं यस्य स: ।

षडाधारवासी[१] षडाधारविद्या
षडाम्भोजसंस्थः षडब्जोपविष्टा ।
सदा साधरोग्रोपविष्टाऽपरागी
सुसूक्तापयस्था पलाश्रयस्थिता ॥ १०७ ॥
हरस्थोग्रकर्मा हरानन्दधारा लघुस्थो[२]
लिपिस्था क्षयीक्षुब्धक[३] संख्या ।
अनन्तो[४] निर्वाणाहरवकारबीजा
उरस्थोऽप्युरुस्था उरा ऊर्ध्वरूपा[५] ॥ १०८ ॥
ऋचस्थो हि ऋगालसो[६] दीर्घलृस्था
त्वमेको हि चैंबीजगुर्वी गुणस्था ।
सदौङ्कारवर्णा [७]ह्सौंकारबीजा
असङ्कारचन्द्रो[८] ह्युसः कारवीरा ॥ १०९ ॥
हरीन्द्रो हरीशा हरिः कृष्णरूपा
शिवो वेदभाषा च शौरिः प्रसङ्गा[९] ।
गणाध्यक्षरूपी परानन्दभक्षा[१०]
परेशो गणेशी रसो वासपूज्या ॥ ११० ॥

प्रवालाङ्गधारी, प्रवालाङ्गमाला, हल, हालहेलापद, पादताला, वशीन्द्र, प्रकाश, वरस्थानवासा, शिव, श्रीधराङ्ग, शलाका, शिला, षडाधारवासी, षडाधारविद्या, षडाम्भोजसंस्थ, षडाब्जोपविष्टा, सदा साधरोगोवविष्टा, अपरागी, सुसूक्ता, पयस्था, पला, आश्रयस्थिता, हरस्थोग्रकर्मा, हरानन्दधारा, लघुस्थ, लिपिस्था, क्षयी, क्षुब्धक, संख्या, अनन्त, निर्वाण-हराकारबीजा, उरस्थ, ऊरुस्था, उरा, ऊर्ध्वरूपा, ऋचस्थ, ऋग्, अलस, दीर्घलृस्था, एक, चैबीजगुर्वी, गुणस्था, सदौङ्कारवर्णा, ह्सौङ्कारबीजा, असङ्कारचन्द्र, ह्युसःकारवीरा, हरीन्द्र, हरीशा, हरि, कृष्णरूपा, शिव, वेदभाषा, शौरि, प्रसङ्गा, गणाध्यक्षरूपी, परानन्दभक्षा, परेश, गणेशी, रस, वासपूज्या ॥ १०६-११० ॥

---

१. राशी—ग० ।—षडाधारे वसति तच्छीलः ।
२. लयस्थो—ग० ।
३. कु ल संख्यां—ग० ।
४. अनर्णो निरर्णा इरा नाथ ईशा—क० ।—नास्ति अन्तो यस्य सः ।
५. ऊद्धर्वपाशा—ग० ।—ऊर्ध्वं रूपं यस्याः सा, सत्त्वरूपा इत्यर्थः ।
६. गोदीर्घ—ग० ।—ऋक्षु अलसः, ऋगालसः ।
७. लों—ग० ।
८. असंकार—ग० ।—असङ्कारश्चन्द्रो यस्य स इत्यर्थः ।
९. प्रसन्ना—ख० ।—प्रकृष्टः सङ्गो यस्याः सा ।
१०. परानन्दहार्या—ख० ।—परानन्दो भक्षो यस्याः सा ।

चकोरि कुलप्राणबुद्धिस्थितिस्था[१]
स्वयं कामधेनुस्वरूपी[२] विरूपा ।
श्रीहिरण्यप्रभ: श्रीहिरण्यप्रभाङ्गी
प्रभातार्कवर्णो – ऽरुणाकारणाङ्गी[३] ॥ १११ ॥
विभा कोटिधारा धराधार कोषा
रणीशो [४]प्रत्यादिकूटोऽधरो .. धारणा शौरिरार्या ।
महायज्ञसंस्थो महायज्ञनिष्ठा
सदाकर्मसङ्ग: सदामङ्गरङ्गा ॥ ११२ ॥
किरातीपति राकिणी कालपुत्री[५]
शिलाकोट[६]निर्माणदोहा विशाला[७] ।
कलार्ककलस्थो[८] कलाकिङ्किणीस्था
किशोर: किशोरी कुरुक्षेत्रकन्या ॥ ११३ ॥
महालाङ्गलिश्री बलोद्धामकृष्ण:[९]
कुलालादिविद्याऽभयो भावशून्या[१०] ।
महालाकिनी काकिनी शाकिनीशो
महासुप्रकाशा परो हाकिनीशा ॥ ११४ ॥
कुरुक्षेत्रवासी कुरुप्रेममूर्ति[११]
र्महाभूतिभोगी महायोगिनी च ।
कुलाङ्गारकारो कुलाङ्गीशकन्या
तृतीयस्तृतीयाऽद्वितीयोऽद्वितीया ॥ ११५ ॥

चकोरि, कुलप्राणबुद्धिस्थितिस्था, स्वयंकामधेनुस्वरूपी, विरूपा, श्रीहिरण्यप्रभ, श्रीहिरण्यप्रभाङ्गी, प्रभातार्कवर्ण, अरुणाकारणाङ्गी, विभा, कोटिधारा, धराधार, कोषा, रणीश, प्रत्यादिकूट, अधर, धारणा, शौरि, आर्या, महायज्ञसंस्थ, महायज्ञनिष्ठा, सदाकर्मसङ्ग,

---

१. म्लय—ग० । चकोरी गणस्थ: स्वबुद्धि—ख० ।
२. कामरूप:—क० ।—कामधेनुस्वरूपी—कामधेनो: स्वरूपमस्ति यस्य स: । षष्ठीतत्पुरुषे सति इनि: ।
३. कारकाङ्गी—ख० ।
४. धरासौधसंस्था धरा धारणेश: क्षमासौख्यसद्मा—ख० । प्रभाषादि कूटोधरो ....... धारगा गौ विरार्या—ग० ।
५. कोल—ख०, ग० ।
६. देहे—ग० ।
७. शिलाकोट इत्यारभ्य किङ्किणीस्थेत्यन्तं ख० पु० नास्ति ।
८. कंकन—ग० ।
९. राम—ख० । बनोद्धाम—ग० ।—बलस्योद्धाम यस्मिन् स बलोद्धामा, स चासौ कृष्णश्च ।
१०. मानोभावपूर्णा—ख० ग० ।
११. हर्त्री—ख०, भर्ता—ग० ।—कुरुषु य: प्रेमा, नस्मिन् मूर्तिर्यस्य स: ।

सदाभङ्गरङ्गा किरातीपति, राकिणी, कालपुत्री, शिलाकोटिनिर्माणदेहा, विशाला, कलाकङ्कलस्थ, कलाङ्किकिणीस्था, किशोर, किशोरी, कुरुक्षेत्रकन्या महालाङ्गलिश्री, बलोद्धामकृष्ण, कुलालादिविद्या, अभय, भावशून्या, महालाकिनी, काकिनी, शकिनीश, महासुप्रकाशा, परहाकिनीशा, कुरुक्षेत्रवासी, कुरुप्रेममूर्ति, महाभूतिभोगी, महायोगिनी, कुलाङ्गारकारी, कुलाङ्गीशकन्या, तृतीय, तृतीया, अद्वितीय, अद्वितीया ॥ १११-११५ ॥

**महाकन्दवासी महानन्दकाशी[१]**
**पुरग्रामवासी महापीठदेशा ।**
**जगन्नाथ वक्षः स्थलस्थो वरेण्या-**
**च्युतानन्दकर्ता[२] रसानन्दकर्त्री ॥ ११६ ॥**
**जगद्दीपकलो[३] जगद्दीपकाली**
**महाकामरूपी महाकामपीठा ।**
**महाकामपीठस्थिरो भूतशुद्धि[४]-**
**र्महाभूतशुद्धिः महाभूतसिद्धिः ॥ ११७ ॥**
**प्रभान्तः प्रवीणा गुरुस्थो गिरिस्था**
**गलद्धारधारी महाभक्तवेषा ।**
**क्षणक्षुन्निवृत्ति[५]र्निवृत्तान्तरात्मा**
**सदन्तर्गतस्था[६] लयस्थानगामी ॥ ११८ ॥**
**लयानन्दकाम्या[७] विसर्गाप्तवर्गो**
**विशालाक्षमार्गा[८] कुलार्णः कुलार्णा ।**
**मनस्था[९] मनःश्रीः भयानन्ददाता सदा**
**लाणगीता गजज्ञानदाता[१०] महामेरुपाया[११] ॥ ११९ ॥**
**तरोर्मूलवासी तरज्ञोपदर्शा[१२] सुरेशः**
**समेशः[१३] सुरेशा सुखी खड्गनिष्ठा[१४] ।**

---

१. वासी—ग० ।—महानन्दं काशयति या, सा । वासा—ख० ।
२. शिवानन्दकर्त्ता शिवानन्दकर्त्ती—ख० । वृलनन्द कती—ग० ।
३. काशो जगद्दीनी सा—ख०, ग० । जगद् दीपयति असौ जगद्दीपः, तेन कालः ।
४. भूति—क० ।
५. क्षणः सुण्णवृत्तिः—क० ।—क्षणेन क्षुंन्निवृत्तिः क्षुधाशान्तिर्यस्याः ।
६. सदान्तर्गतस्था—क० ।—सतां सज्जनानामन्तर्गतस्था ।
७. काम्यो—ख० ।—लयेनानन्दो लयानन्दः, सः काम्यो यस्य ।
८. सर्गा ख०, । सर्गो—ग० ।—विशालोऽक्षो यस्य, तादृशो मार्गो यस्याः ।
९. नवस्थानलक्ष्मीः—ग० ।—मनसि तिष्ठति या सा मनस्था । वा विसर्गलोपः ।
१०. सद इति ख०, सज—ग० ।
११. गाथा—ग० ।
१२. तरुस्थापदेशा तरुण्यापदेश—ग० ।
१३. सुरेश :—ग० ।
१४. नीशा—ख०, नीसा—ग० ।—खड्गे निष्ठा यस्याः सा ।

भयत्राणकर्ता भयज्ञानहन्त्री[1]
जनानां मखस्थो मखानन्दभङ्गा ॥ १२० ॥

महाकन्दवासी, महानन्दकाशी, पुरग्रामवासी, महापीठदेशा, जगन्नाथवक्षःस्थलस्थ, वरेण्या, अच्युतानन्दकर्ता, रसानन्दकर्त्री, जगद्दीपकाल, जगद्दीपकाली, महाकामरूपी, महाकामपीठा, महाकामपीठस्थिर, भूतशुद्धि, महाभूतशुद्धि, महाभूतसिद्धि, प्रभान्त, प्रवीणा, गुरुस्थ, गिरिस्था, गलद्धारधारी, महाभक्तवेषा, क्षणक्षुन्निवृत्ति, निवृत्तान्तरात्मा, सदन्तर्गतस्था, लयस्थानगामी, लयानन्दकाम्या, विसर्गाप्तवर्ग, विशालाक्षमार्गा, कुलार्ण, कुलार्णा, मनःस्था, मनःश्री, सदाभयानन्ददाता, लाणगीता, गजज्ञानदाता, महामेरुपाया, तरोर्मूलवासी, तरङ्गोपदर्शा, सुरेश, समेश, सुरेशा, सुखी, खड्गनिष्ठा, भयत्राणकर्ता, जनानां भयज्ञानहन्त्री, मखस्थ, मखानन्दभङ्गा ॥ ११६-१२० ॥

महासत्पथस्थो महासत्पथज्ञा
महाबिन्दुमानो महाबिन्दुमाना ।
खगेन्द्रोपविष्टो विसर्गान्तरस्था
विसर्गप्रविष्टो महाबिन्दुनादा ॥ १२१ ॥
सुधानन्दभक्तो[2] विधानन्दमुक्तिः[3]
शिवानन्दसुस्थो[4] विनानन्दधात्री ।
महावाहनाह्लादकारी[5] सुवाहा
सुरानन्दकारा[6] गिरानन्दकारी ॥ १२२ ॥
हयानन्दकान्तिः[7] मतङ्गस्थदेवो
मतङ्गाधिदेवी महामत्तरूपः ।
तदेको महाचक्रपाणिः प्रचण्डा-
खिलापस्थलस्थोऽ[8]विहम्नीशपत्नी[9] ॥ १२३ ॥
शिखानन्दकर्ता शिखासारवासी[10]
सुशाकम्भरी क्रोष्टरी[11] वेदवेदीसुगन्धा ।

---

१. कर्त्री भयज्ञानदानी—ग० ।—भयं च ज्ञानं च, तयोर्हन्त्री । ज्ञानमत्र प्रत्यासत्त्या भयजन्यमेव ।
२. विधा—ग० ।
३. संस्थः संस्था—ग० ।
४. शिवा—ग० ।
५. महावाहना—ग० ।—महान्ति वाहनानि तैः आह्लादं करोति या सा ।
६. सुवाहा—ग० ।
७. हृदानना—ख० ।—हयेन ( वाहनेनं ) गमनेनानन्दः, तेन कान्तिर्यस्याः ।
८. खलाप—क० ।—कलापस्थले तिष्ठति यः सः ।
९. हरि हन्त्री सपत्नी—क० ।
१०. देशवासा काशवासी—ग० ।—शिखासारे वसति योऽसौ, णिनिप्रत्ययः कर्तरि।
११. सुशाकम्भरी सुसाकम्मरी—ग० ।

युगो योगकन्या दवो दीर्घकन्या शरण्य: शरण्या
मुनिज्ञानगम्या[१] सुधन्य: सुधन्या ॥ १२४ ॥
शशी वेदजन्या[२] यमी यामवामा
ह्यकामो ह्यकामा सदा ग्रामकामा।
धृतीश:[३] धृतीशा सदा हाटकस्थाऽ-
यनेशोऽयनेशी[४] भकारो[५] भगीरा ॥ १२५ ॥

महासत्पथस्थ, महासत्पथज्ञा, महाबिन्दुमान, महाबिन्दुमाना, खगेन्द्रोपविष्ट, विसर्गान्तरस्था, विसर्गप्रविष्ट, महाबिन्दुनादा, सुधानन्दभक्त, विद्यानन्दमुक्ति, शिवानन्दसुस्थ, विनानन्दधात्री, महावाहनाह्लादकारी, सुवाहा सुरानन्दकारा, गिरानन्दकारी, हयानन्दकान्ति, मतङ्गस्थदेव, मतङ्गाधिदेवी, महामत्तरूप, तदेक, महाचक्रपाणि, प्रचण्डा, खिलापस्थलस्थ, अविह्मीशपत्नी, शिखानन्दकर्ता, शिखासारवासी, सुशाकम्भरी, क्रोष्टरी, वेदवेदी, सुगन्धा, युग, योगकन्या, दव, दीर्घकन्या, शरण्य, शरण्या, मुनिज्ञानगम्या, सुधन्य, सुधन्या, शशी, वेदजन्या, यमी, यामवामा अकाम, अकामा, सदा ग्रामकामा, घृतीश, घृतीशा, सदा हाटकस्था, अयनेश अयनेशी, भकार, भगीरा ॥ १२१-१२५ ॥

चलत्खञ्जनस्थ: खलत्खेलनस्था[६]
विवाती[७] किराती खिलाङ्गोऽखिलाङ्गी ।
बृहत्खेचरस्थो बृहत्खेचरी च
महानागराजो महानागमाला ॥ १२६ ॥
हकारार्द्धसंज्ञा वृतोहारमाला
महाकालनेमिप्रहा[८] पार्वती च ।
तमिस्रा[९] तमिस्रावृतो दु:खहत्या
विपन्नो विपन्ना गुणानन्दकन्या ॥ १२७ ॥
सदा दु:खहन्ता महादु:खहन्त्री[१०]
प्रभातार्क वर्ण: प्रभातारुणश्री: ।
महापर्वतप्रेमभावोपपन्नो[११]
महादेवपत्नीशभावोपपन्ना ॥ १२८ ॥

---

१. मुनिज्ञानमान्या मुनिज्ञानमान्या—ग० ।—मुनिज्ञानेन गम्या ज्ञेया ।
२. शयी कान्तवासा सकाम: सकामा । यसी यास कसा ओत्रासा ग्रामकामा—ग० ।
३. प्रघीणा—ग० ।
४. धनेशो—ख० ।—धनानामीशो धनेश: कुबेर:।
५. इति तीग्मा—ख० ।—भं करोति योऽसौ भकार: ।
६. चलत रवाजनस्था—ख० ।
७. किरात: किराती शिताङ्ग: शिताङ्गी—ख० ।
८. महा—ख० ।
९. विपद्भङ्गकारी विपन्नाशिनी च सुखानन्ददाता महादु:खहन्त्री—ख० ।
१०. सदा—ख० ।
११. भारो—ग० ।—महापर्वतप्रेमभावेनोपपन्न इति कर्मधारयगर्भषष्ठीतत्पुरुषगर्भस्तृतीयातत्पुरुष: ।

महामोक्षनीलप्रिया भक्तिदाता
नयानन्द भक्तिप्रदा देवमाता[1] ॥ १२९ ॥

चलत्खञ्जनस्थ, खलत्खेलनस्था, विवाती, किराती, खिलाङ्ग, अखिलाङ्गी, बृहत्खेचरस्थ, बृहत्खेचरी, महानागराज, महानागमाला, हकारार्द्धसंज्ञा, वृतोहारमाला, महाकालनेमिप्रहा, पार्वती, तमिस्र, तमिस्रवृत, दुःखहत्या, विपन्न, विपन्ना, गुणानन्दकन्या, सदा दुःखहन्ता महादुःखहन्त्री, प्रभातार्कवर्ण, प्रभातारुणश्री, महापर्वत, प्रेमभावोपपन्न, महादेवपत्नी, ईशभावोपपन्ना, महामोक्षनीलप्रिया, भक्तिदाता, नयानन्द, भक्तिप्रदा, देवमाता ॥ १२६-१२९ ॥

इत्येतत्कथितं नाथ महास्तोत्रं मनोरमम् ।
सहस्रनामयोगाऽङ्ग[2]मष्टोत्तरसमन्वितमम् ॥ १३० ॥
यः पठेत् प्रातरुत्थाय शुचिर्वाशुचिमानसः ।
भक्त्या शान्तिमवाप्नोति अनायासेन योगिराट् ॥ १३१ ॥
प्रत्यहं ध्यानमाकृत्य त्रिसन्ध्यं यः पठेत् शुचिः ।
षण्मासात् परमो योगी सत्यं सत्यं सुरेश्वर ॥ १३२ ॥

हे नाथ ! इस प्रकार मैने मनोरम १००८ नामों से संयुक्त महास्तोत्र कहा । जो भक्त प्रातःकाल उठकर शुद्ध मन से अथवा अशुद्ध मन से भक्तिपूर्वक इस स्तोत्र का पाठ करता है, वह अनायास शान्ति प्राप्त कर लेता है और योगिराज बन जाता है । पवित्र होकर जो प्रतिदिन ध्यान लगाकर तीनों सन्ध्या में इस स्तोत्र का पाठ करता है, वह ६ मास के भीतर महायोगी बन जाता है, हे सुरेश्वर ! हे महादेव! यह सत्य है यह सत्य है ॥ १३०-१३२ ॥

अकालमृत्युहरणं सर्वव्याधिविनाशनम् ।
अपमृत्य्वादिहरणं वारमेकं पठेद्यदि ॥ १३३ ॥
पठित्वा ये न[3] गच्छन्ति विपत्काले महानिशि ।
अनायासेन ते यान्ति महाघोरे भयार्णवे ॥ १३४ ॥

यदि भक्त एक बार भी प्रतिदिन इस स्तोत्र का पाठ करे तो उसकी अकाल मृत्यु नहीं होती, उसके समस्त व्याधियों का नाश हो जाता है और अपमृत्यु भी दूर हो जाती है । जो लोग विपत्ति काल में इस स्तोत्र का बिना पाठ किए अर्द्धरात्रि में गमन करते हैं, वे महाघोर भय समुद्र में अकस्मात् गिर जाते हैं ॥ १३३-१३४ ॥

अकाले यः पठेन्नित्यं सुकालस्तत्क्षणाद्भवेत् ।
राजस्वहरणे चैव सुवृत्तिहरणादिके ॥ १३५ ॥
मासैकपठनादेव राजस्वं स लभेद्[4] ध्रुवम् ।
विचरन्ति महावीराः स्वर्गे मर्त्ये रसातले ॥ १३६ ॥

---

१. सर्वदाता—क० ।
२. योगाङ्गः—ग० ।
३. प्रयच्छन्ति—ग० ।
४. भवेत्—ग० ।

गणेशतुल्यवलिनो महाक्रोधशरीरिणः [१] ।
एतत्स्तोत्रप्रसादेन जीवन्मुक्तो [२] महीतले ॥ १३७ ॥

जो अकाल में इस स्तोत्र का पाठ करता है उसके लिए वह अकाल तत्क्षण सुकाल बन जाता है । जब राजा अपनी सम्पत्ति का हरण करना चाहता हो अथवा कोई अपनी वृत्ति का हरण करना चाहता हो तो एक महीने तक पाठ करने से साधक अपनी राजकीय सम्पत्ति अवश्य प्राप्त कर लेता है । ऐसे तो स्वर्ग में मृत्युलोक में तथा पाताल लोक में गणेश के तुल्य बलवान् महाक्रोधी महावीर विचरण करते हैं किन्तु इस स्तोत्र की कृपा प्राप्त करने वाला साधक उनसे निर्भय होकर इसी पृथ्वी में जीवन्मुक्त हो जाता है ॥ १३५-१३७ ॥

महानामस्तोत्रसारं धर्माधर्मनिरूपणम् [३] ।
अकस्मात् सिद्धिदं काम्यं काम्यं परमसिद्धिदम् [४] ॥ १३८ ॥
महाकुलकुण्डलिन्याः भवान्याः साधने शुभे ।
अभेद्यभेदने चैव महापातकनाशने ॥ १३९ ॥
महाघोरतरे काले [५] पठित्वा सिद्धिमाप्नुयात् ।
षट्चक्रस्तम्भनं [६] नाथ प्रत्यहं यः करोति हि ॥ १४० ॥

यह धर्माधर्म का निरूपण करने वाला महानामस्तोत्र का सर्वस्व है, अकस्मात् सिद्धि प्रदान करने वाला है, कामना प्रदान करने वाला है, परमसिद्धि भी देता है अतः सभी लोगों के लिए काम्य है । महाकुण्डलिनी भवानी के कल्याणकारी साधन में, अभेद्य भेदन में, महापातकों के नाश करने में, घोर से महाघोर काल के उपस्थित होने पर इस स्तोत्र का पाठ कर साधक सिद्धि प्राप्त कर लेता है ॥ १३८-१४० ॥

मनोगतिस्तस्य हस्ते स शिवो न तु मानुषः ।
योगाभ्यासं यः करोति न स्तवः [७] पठ्यते यदि ॥ १४१ ॥
योगभ्रष्टो भवेत् क्षिप्रं कुलाचारविलङ्घनात् ।
कुलीनाय प्रदातव्यं न [८] खल्वकुलेश्वरम् ॥ १४२ ॥

हे नाथ ! जो प्रतिदिन षट्चक्रों को स्तम्भित करने वाले इस स्तोत्र का पाठ करता है उसके हाथ में उसके मन की गति हो जाती है वह साक्षात् शिवस्वरूप है, मनुष्य नहीं । जो साधक योगाभ्यास तो करता है किन्तु इस स्तोत्र का पाठ नहीं करता, वह इस कुलाचार के

---

१. महाक्रोधा—ख० ।—महाक्रोध एव शरीरम्, तदस्ति येषां ते ।
२. जीवन्मुक्ताः—ख० ।
३. धर्माधर्मयोर्निरूपणम् । षष्ठीतत्पुरुषः, करणल्युडन्तः निरूपणशब्दः ।
४. परमां सिद्धिं ददाति । कप्रत्ययान्तः ।
५. तरा—ग० ।
६. भुवनम्—क० ।—षट्संख्याकानि चक्राणि तेषां स्तम्भनम्, षष्ठीतत्पुरुषः ।
७. स्तवं पठते—क० ।
८. स्तव एष—ख० ।

उल्लंघन से योगभ्रष्ट हो जाता है । यह स्तोत्र कुलीन को ही देना चाहिए । जो कुल ( शक्ति ) का उपासक नहीं है उसे कदापि न देवे ॥ १४०-१४२ ॥

**कुलाचारं समाकृत्य ब्राह्मणाः क्षत्रियादयः ।**
**योगिनः प्रभवन्त्येव स्तोत्रपाठात् सदामराः[१] ॥ १४३ ॥**

ब्राह्मण, क्षत्रिय आदि कुलाचार ( शक्ति सम्प्रदाय ) का अनुसरण करते हुए इस स्तोत्र के पाठ से योगी बन जाते हैं और सर्वदा अमर हो कर जीवित रहते हैं ॥ १४३ ॥

आनन्दभैरव उवाच

**वद कान्ते रहस्यं मे मया सर्वञ्च विस्मृतम् ।**
**महाविषं कालकूटं पीत्वा देवादिरक्षणात् ॥ १४४ ॥**
**कण्ठस्थाः देवताः सर्वा भस्मीभूताः सुसम्भृताः[२] ।**
**महाविषज्वालया च मम देहस्थदेवताः ॥ १४५ ॥**
**कैवल्यनिरताः[३] सर्वे प्रार्थयन्ति निरन्तरम् ।**
**षट्चक्रं[४] कथयित्वा तु सन्तोषं मे कुरु प्रभो ।**
**षट्चक्रभेदकथनममृतश्रवणादिकम् ॥ १४६ ॥**
**कथित्वा मम सन्तोषं कुरु कल्याणि वल्लभे ।**
**अमृतानन्दजलधौ[५] सुधाभिः सिक्तविग्रहम्[६] ॥ १४७ ॥**
**कृत्वा कथय शीघ्रं मे चायुषं[७] परिवर्धय ।**

**आनन्दभैरव ने कहा**—हे कान्ते ! मुझे रहस्य बताइए क्योंकि मैं देवादिकों के रक्षण के लिए कालकूट नामक महाविष का पान कर उन रहस्यों को भूल गया हूँ । इतना ही नहीं उस महाविष की ज्वाला से देह में रहने वाले तथा कण्ठ में रहने वाले सभी देवता जो ज्ञान का स्मरण कराते थे वे सब के सब भी भस्म हो गए । अब कैवल्य पद को प्राप्त करने वाले वे सभी मुझसे प्रार्थना करते हैं, कि हे प्रभो ! षट्चक्रों का वर्णन कर हमें सन्तोष प्रदान करें । अतः हे कल्याणि ! हे प्राणवल्लभे ! षट्चक्रों का भेद कह कर मेरा सन्तोष कीजिए । जिसका श्रवण अमृत के समान है । अतः हे देवि ! अमृतानन्द के समुद्र के अमृत से मेरे शरीर को सींच कर मेरे आयुष्य का परिवर्धन करने के लिए शीघ्रातिशीघ्र उसे कहिए ॥ १४४-१४८ ॥

---

१. सदा नरः—क० ।—सन्तश्च तेऽमराश्चेति कर्मधारयः ।
२. समरस्मृताः—क० ।—समरे स्मृताः, अथवा सुष्ठु सम्भृताः पोषिताः ।
३. वैकुण्ठनिरताः—क० ।
४. षट्चक्रवासी सुसूक्ष्मापथस्थापना—ग० पु० अधि० पाठः ।
५. अमृतानन्दमुदधौ—ग० ।
६. सुधाभिषिक्तं—ग० ।—सिक्तो विग्रहो देहो यस्य तम् ।
७. चायुषमिति—ग० ।

आनन्दभैरवी उवाच

निगूढार्थ महाकाल कालेश जगदीश्वर ॥ १४८ ॥
भैरवानन्दनिलय कालकूटनिषेवण [१] ।
इदानीं शृणु योगार्थं मयि संयोग[२] एव च ॥ १४९ ॥
श्रुत्वा चैतत्क्रियाकार्यं नरो योगीश्वरो भवेत् ।
ममोद्भवः खेऽमले[३] च सर्वाकारविवर्जिते ॥ १५० ॥

**श्री आनन्दभैरवी ने कहा**—हे महाकाल ! हे कालेश ! हे जगदीश्वर ! हे भैरव ! हे आनन्दनिलय ! हे कालकूट नामक विष का सेवन करने वाले ! हे महाभैरव ! अब योग के अर्थ को तथा मुझ में होने वाले सम्यक् योग को सुनिए । इसे सुनकर इसकी क्रिया करने वाला मनुष्य योगीश्वर बन जाता है क्योंकि सर्वाकार से विवर्जित निर्मल विशुद्ध आकाश में मेरा उद्भव है ॥ १४८-१५० ॥

भ्रूमध्ये सर्वदेहे च स्थापयित्वा च मां[४] नरः ।
भाव्यते चापरिच्छन्नं ब्रह्मविष्णुशिवात्मकम् ॥ १५१ ॥
मम रूपं महाकाल सत्त्वरजस्तमः प्रियम्[५] ।
केवलं रजोयोगेन[६] शरीरं नापि तिष्ठति ॥ १५२ ॥
तथा केवलयोगेन तमसा[७] नापि तिष्ठति ।
तथा केवलसत्त्वेन कुतो देही प्रतिष्ठति ।
अतस्त्रिगुणयोगेन धारयामि नवाङ्गकम् ॥ १५३ ॥

साधक मनुष्य भ्रूमध्य में अथवा सम्पूर्ण शरीर में मुझे स्थापित कर ब्रह्मा, विष्णु, शिव स्वरूपात्मक अपरिच्छिन्न रूप में मेरा ध्यान करता है । हे महाकाल ! मेरा स्वरूप सत्त्व, रज तथा तमोगुणात्मक है, क्योंकि केवल रजो गुण मात्र के संयोग से शरीर की स्थिति नहीं होती, मात्र तमोगुण के भी संयोग से शरीर स्थिति नहीं होती, फिर केवल सत्त्वगुण के संयोग से शरीर स्थिति किस प्रकार से संभव है । इसलिए मैं तीनों गुणों के संयोग से नवीन शरीर धारण करती हूँ ॥ १५१-१५३ ॥

शनैः शनैः विजेतव्याः सत्त्वरजस्तमोगुणाः ।
आदौ जित्वा रजोधर्मं[८] पश्चात्तामसमेव च ॥ १५४ ॥

---

१. कालकूटं निषेवते इति बाहुलकात् कर्तरि ल्युट्प्रत्ययः । सम्बोधने इदं रूपम् ।
२. संयोगमिति—ख० ।
३. स्वचित्ते च—ख० ।—खे गगने इत्यर्थः । अस्यैव विशेषणद्वयम् । अमले इति, सर्वाकारविवर्जिते इति च ।
४. मानवः—क० ।
५. तमोवृतमिति—ख० ।—सत्त्वरजस्तमोभिः वृत्तम् । अथवा सत्त्वरजस्तमांसि प्रियाणि यस्य तम् ।
६. राजयोगेन—क० ।
७. तमसमिति—क० ।
८. धर्म्यमिति—ग० ।—रजो धर्मो यस्य तम् ।

सर्वशेषे सत्त्वगुणं नरो योगीश्वरो भवेत् ।
गुणवान् ज्ञानवान् वाग्मी [1]सुश्रीर्धर्मी[2] जितेन्द्रियः ॥ १५५ ॥
शुद्धनिर्मलसत्वं तु गुणमाश्रित्य मोक्षभाक् ।
सदा सत्त्वगुणाच्छन्नं[3] पुरुषं काल एव च ॥ १५६ ॥
पश्यतीह न कदाचिज्जरामृत्युविवर्जितम् ।
तं जनं परमं शान्तं निर्मलं द्वैतवर्जितम् ॥ १५७ ॥
सर्वत्यागिनमात्मानं कालः सर्वत्र रक्षति ।
जले वा पर्वते वापि महारण्ये रणस्थले ॥ १५८ ॥
भूगर्त्तनिलये[4] भीते संहारे दुष्टविग्रहे ।
सन्तिष्ठति महायोगी सत्यं सत्यं कुलेश्वर ॥ १५९ ॥

साधक को धीरे धीरे सत्त्व रज तथा तमोगुण पर विजय प्राप्त करनी चाहिए, प्रथम रजोगुण के धर्म को जीते, फिर तमोगुण को जीते, फिर शेष सत्त्वगुण को जीतें, ऐसा करने से वह योगीश्वर बन जाता है । गुणवान् ज्ञानवान्, वाग्मी, लक्ष्मीवान्, धार्मिक तथा जितेन्द्रिय बन जाता है । साधक शुद्ध एवं निर्मल सत्त्वगुण के आश्रय से मोक्ष का भागी बन जाता है । जरा मृत्यु से विवर्जित हो जाता है और उसे काल भी नहीं देख पाता । किन्तु द्वैतवर्जित, निर्मल, परम शान्त सर्वत्यागी आत्मा वाले उस जन की काल भी जल में, पर्वत पर, घोर अरण्य में, युद्धभूमि में, पृथ्वी के गर्त में, भय तथा संहार के स्थान में दुष्टों के निग्रह स्थान में उसकी रक्षा करता है । हे कुलेश्वर ! वह महायोगी सदैव अविचल एवं एकरस स्थित रहता है यह सत्य है यह सत्य है ॥ १५४-१५९ ॥

महायोगं शृणु प्राणवल्लभ श्रीनिकेतन ।
योगार्थं परमं ब्रह्मयोगार्थ परन्तपः ॥ १६० ॥
ये जानन्ति महायोगं म्रियन्ते न च ते नराः ।
कृत्वा कृत्वा षड्दलस्य साधनं कृत्स्नसाधनम्[5] ॥ १६१ ॥
ततः कुर्यान्मूलपद्मे[6] कुण्डलीपरिचालनम् ।
मुहुर्मुहुश्चालनेन नरो योगीश्वरो भवेत् ॥ १६२ ॥

हे प्राणवल्लभ ! हे श्रीनिकेतन ! अब महायोग को सुनिए । योग के लिए ही परम ब्रह्म है, योग के लिए ही परम तप है । जो लोग महायोग को जानते हैं । वे कभी भी नहीं मरते । सर्वप्रथम षड्दल के एक एक पत्र का साधन करे, फिर सम्पूर्ण दलों का साधन करे । इसके बाद मूलपद्म में कुण्डली का परिचालन करना चाहिए । इस प्रकार बारम्बार कुण्डली

---

१. सुखी—ग० ।

२. धर्म—ग० ।—शोभना श्रीर्धर्मो यस्येति फलितार्थः । विग्रहस्तु—सुश्रीश्चासौ धर्मश्चेति कर्मधारयः । पुनः मत्वर्थीय इनिः।

३. गुणावृतमिति—ग० ।

४. भूर्गता—क० ।—भुवो गर्तं, तेन निलये 'भूगर्तनिलये' इति पाठेऽयं विग्रहः ।

५. कृष्ण—ग० ।

६. मलपद्म मूलपद्म—ख० ।

के परिचालन से साधक योगीश्वर बन जाता है ॥ १६०-१६२ ॥

**एकान्तनिर्मले देशे दुर्भिक्षादिविवर्जिते ।**
**वर्षमेकासने योगी योगमार्गपरो भवेत् ॥ १६३ ॥**
**पद्मासनं सदा कुर्याद् बद्धपद्मासनं[1] तथा ।**
**महापद्मासनं कृत्वा तथा चासनमञ्जनम्[2] ॥ १६४ ॥**
**तत्पश्चात्[3] स्वस्तिकाख्यञ्च बद्धस्वस्तिकमेव च ।**
**योगाभ्यासे[4] सदा कुर्यात् मन्त्रसिद्ध्यादिकर्मणि ॥ १६५ ॥**
**चक्रासनं सदा योगी योगसाधनकर्मणि[5] ।**
**बद्धचक्रासनं नाम महाचक्रासनं[6] तथा ॥ १६६ ॥**

जो देश दुर्भिक्षादि से पीड़ित न हों उस देश के किसी एकान्त निर्मल स्थान में वर्ष पर्यन्त एक आसन पर स्थित हो योगमार्ग का अभ्यास करे । सर्वदा पद्मासन करे तदनन्तर बद्धपद्मासन करे, फिर महापद्मासन कर अञ्जनासन करे । इसके बाद स्वास्तिकासन, फिर बद्धस्वस्तिकासन करे । इन सभी आसनों को योगाभ्यास में तथा मन्त्र सिद्धि आदि के कार्यों में सदैव करते रहना चाहिए । योगी योगसाधन कर्म में सर्वदा चक्रासन करे, फिर बद्ध चक्रासन करे, तदनन्तर महाचक्रासन करना चाहिए ॥ १६३-१६६ ॥

**कृत्वा पुनः प्रकर्तव्यं बद्धयोगेश्वरासनम् ।**
**योगेश्वरासनं कृत्वा महायोगेश्वरासनम् ॥ १६७ ॥**
**वीरासनं ततः कुर्यात् महावीरासनं तथा ।**
**बद्धवीरासनं कृत्वा नरो योगेश्वरो भवेत् ॥ १६८ ॥**

इतना कर लेने के पश्चात् बद्धयोगेश्वरासन, फिर योगेश्वरासन, तदनन्तर महायोगेश्वरासन करे । इसके पश्चात् वीरासन, फिर महावीरासन, तदनन्तर बद्धवीरासन करने पर साधक योगेश्वर बन जाता है ॥ १६७-१६८ ॥

**ततः कुर्यान्महाकाल बद्धकुक्कुटासनम् ।**
**महाकुक्कुटमाकृत्य केवलं कुक्कुटासनम् ॥ १६९ ॥**
**मयूरासनमेवं हि महामयूरमेव[7] च ।**
**बद्धमयूरमाकृत्य नरो योगेश्वरो भवेत् ॥ १७० ॥**

---

१. बद्धैकमासनमिति—ग० ।—बद्धमेकमासनम् ।
२. चालनभञ्जनमिति—ग० ।
३. तत्पश्यतीति—क० ।
४. महास्वस्तिकमाकृत्य त्रिगुणं वशमानयेत् ।—योगासनविधेर्निरूपणमेतत् । तत्रासनं बद्धभद्रासनं कुर्यात् क्रमेण तु ।। महाभद्रासनं कृत्वा कार्मुकासनमाश्रयेत् । बद्धकार्मुकमेवं हि महाकार्मुकमेव च ।। इति क० पु० अधिकः ।
५. त्रिशूलमिति—ख० ।—त्रयाणां शूलानां समाहारस्त्रिशूलम् ।
६. भद्रासनमिति—ख० ।—भद्रमासनमिति परिभाषिकोऽर्थो ज्ञेयः ।
७. मायारम्भेण—ग० ।

इसके बाद हे महाकाल ! बद्धकुक्कुटासन, फिर महाकुक्कुटासन, फिर केवल कुक्कुटासन करे । इसी प्रकार मयूरासन, फिर महामयूरासन तदनन्तर बद्धमयूरासन कर मनुष्य योगेश्वर बन जाता है ॥ १६९-१७० ॥

**एतत् सर्वं प्रवक्तव्यं विचार्य सुमनःप्रिय ।**
**अभिषेकप्रकरणे आसनादिप्रकाशकम् ॥ १७१ ॥**

हे सज्जनों के प्रिय महाभैरव ! ये सभी आसन भली प्रकार से जान कर तब करना चाहिए । अभिषेक के प्रकरण में मैं इन सभी आसनों को प्रकाशित करूँगी ॥ १७१ ॥

**कथितव्यं विशेषेण इदानीं शृणु षट्क्रमम् ।**
**ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥ १७२ ॥**
**ततः परशिवो[1] देवः षट्शिवाः षट्प्रकाशकाः ।**
**एतेषां षड्गुणानन्दाः शक्तयः[2] परदेवताः ॥ १७३ ॥**
**षट्चक्रभेदनरता महाविद्याधिदेवताः ।**
**एतेषां[3] स्तवनं कुर्यात् परदेवसमन्वितम् ॥ १७४ ॥**

हे सदाशिव ! अब षट्चक्रों के क्रम के विषय में सुनिए । ब्रह्मा, विष्णु रुद्र, ईश्वर सदाशिव, इसके बाद परशिव ये ६ शिव षट्चक्रों के प्रकाशक हैं । इन सभी से ६ गुना आनन्द देने वाली इनकी छः शक्तियाँ हैं जो परदेवता कही जाती हैं । ये सभी महाविद्याओं की अधिदेवता हैं और षट्चक्रों के भेदन में निरत रहने वाली हैं । इसलिए उक्त परदेवों के साथ उनकी इन शक्तियों का स्तवन करना चाहिए ॥ १७२-१७४ ॥

**एतत्प्रकारकरणे यश्च[4] प्रत्यहमादरात् ।**
**क्रियानिविष्टः सर्वत्र भावनाग्रहरूपधृक् ॥ १७५ ॥**
**स पश्यति जगन्नाथं कमलोपगतं[5] हरिम् ।**
**आदौ हरेर्दर्शनञ्च कारयेद्येन[6] कुण्डली ॥ १७६ ॥**

इस प्रकार की प्रक्रिया के प्रकार के करने में जो नित्यप्रति आदरपूर्वक क्रिया में संलग्न रहता है तथा भावना पूर्वक उनके स्वरूपों का ध्यान करता है, वह कमल के आसन पर आसीन श्री हरि का दर्शन प्राप्त करता है । अतः श्री हरि का ही दर्शन प्राप्त करने की चेष्टा करनी चाहिए, जिससे कुण्डलिनी का दर्शन हो ॥ १७५-१७६ ॥

**ततो रुद्रस्य सञ्ज्ञायां[7] लाकिन्याः शुभदर्शनम् ।**
**सर्वशः[8] क्रमशो नाथ दर्शनं प्राप्यते नरः ॥ १७७ ॥**

---

१. परशिवो शम्भो—ग० ।—परशिवः शम्भो इत्युचितः पाठः ।
२. षड्गुणानन्दशक्तयः—ग० ।—षट्संख्याकैर्गुणैर्युत आनन्दः, तस्य शक्तयः ।
३. एतासामिति—क० । ४. माथुगः—ग० ।
५. कमलोरुगत—ग० ।—कमलां महालक्ष्मीमुपगत इति तात्पर्यम् ।
६. कारयत्येव—ग० । ७. सञ्ज्ञाया—ग० । ८. सर्वासां क्रमतो नाथ—ग० ।

इसके बाद लाकिनी के साथ रुद्र का शुभ दर्शन होता है, हे नाथ ! इसी क्रम से साधक सभी शक्तियों के साथ सभी देवताओं का दर्शन प्राप्त कर लेता है ॥ १७७ ॥

**शनैः शनैर्महाकाल कैलासदर्शनं भवेत् ।**
**क्रमेण सर्वसिद्धिः स्यात् अष्टाङ्गयोगसाधनात् ॥ १७८ ॥**

हे महाकाल ! इसी प्रकार धीरे धीरे कैलास का दर्शन होता है और इस क्रम से अष्टाङ्ग योग साधन करते रहने पर समस्त सिद्धियाँ प्राप्त हो जाती हैं ॥ १७८ ॥

**अष्टाङ्गसाधने काले यद्यत् कर्म करोति हि ।**
**तत्सर्वं[1] परियत्नेन शृणु सादरपूर्वकम्[2] ।**
**तत्क्रियादिकमाकृत्य[3] शीघ्रं योगी भविष्यति[4] ॥ १७९ ॥**

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे द्विचत्वारिंशत्तमः[5] पटलः ॥ ४२ ॥**



हे महाभैरव ! अष्टाङ्ग योगसाधन काल में साधक अत्यन्त प्रयत्न से जो जो कर्म करता है, उसे आदरपूर्वक सुनिए । उस क्रिया के अनुष्ठान कर लेने पर साधक शीघ्र ही योगी बन जाता है ॥ १७९ ॥

**॥ श्री रुद्रयामल के उत्तरतन्त्र में महातन्त्रोद्दीपन के सिद्धमन्त्र प्रकरण में षट्चक्र प्रकाश में भैरवी भैरव संवाद में बयालिसवें पटल की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ ४२ ॥**



---

१. शृणु—क० ।
२. आदरेण सहितः सादरो व्यापारः, सः पूर्वः यस्मिन् कर्मणि, तद् यथा स्यात्तथा ।
३. माश्रित्य—ग० ।
४. भविष्यसि—ख० ।
५. त्रिचत्त्वारिंशत्तमः पटलः—ख० ।

# अथ त्रिचत्वारिंशः पटलः

आनन्दभैरवी उवाच

अथ कामातुराणाञ्च कामनिर्मूलहेतुना[1] ।
कथयामि महाकाल यत् कृत्वा कामिनीवशम् ॥ १ ॥

**आनन्दभैरवी ने कहा**—हे महाकाल ! अब कामातुरों के काम के निर्मूलन के लिए उपाय कहती हूँ, जिसके करने से कामिनी वश में हो जाती है ॥ १ ॥

तत्प्रकारं प्रवक्ष्यामि योगसाधनहेतुना ।
हस्तासनं[2] समाकृत्य ऊद्र्ध्वे पद्मासनं चरेत् ॥ २ ॥
शिरोमूले करद्वन्द्वं नियोज्य जपमाचरेत् ।
अल्पाल्पधारणं कुर्यात् श्वाससंख्यां समाचरेत् ॥ ३ ॥
श्वाससंख्यां तदा कुर्याद् यदा कुम्भकसुस्थिरः ।
विना श्वाससंख्यां च कुतो योगिवरो वशी ॥ ४ ॥

योग साधन में ( श्वास ) कारण होने से उसका प्रकार कहती हूँ । साधक ऊपर की ओर हस्तासन करके पद्मासन कर शिर के मूलभाग में दोनों हाथों को रखकर जप करे और थोड़ी थोड़ी देर श्वास को धारण कर श्वास की गणना करे । जब कुम्भक स्थिर रहे, तब श्वास की गणना करे । जब तक श्वास की संख्या नहीं होती तब तक साधक योगीश्वर एवं जितेन्द्रिय नहीं हो सकता ॥ २-४ ॥

विना संख्याप्रयोगेण बिना कुयोगवारणात् ।
कदाचिन्न प्रकर्तव्यं संख्याकुम्भकवर्जितः ॥ ५ ॥
अल्पाल्पकुम्भकं कुर्यात् खेचरप्रियकर्मणि ।
सर्वकाले प्रकर्तव्यं सर्वकाले सुखी भवेत् ॥ ६ ॥

साधक श्वास संख्या के प्रयोग के बिना तथा ( श्वास के ) कुयोग को दूर किए बिना योग न करे तथा कुम्भक के बिना श्वास संख्या भी न करे । खेचर रूप प्रिय कर्म में अल्प से भी अल्प कुम्भक करे । यह सर्वकाल में ( सदैव ) करना चाहिए, जिससे साधक सदा सुखी रहता है ॥ ५-६ ॥

आनन्दकल्पमाकृत्य विजयाद्यासवादिभिः ।
क्रमेण भेदनं कुर्यात् ततः साधकयोगिराट् ॥ ७ ॥

---

१. निर्माण — ग० ।  २. मुण्डासन — ग० ।

योगिनामपरिच्छिन्नं भावं विद्युत्प्रभाकरम् ।
विद्युत्कोटिसमाभासं[१] वारिधारासमाकुलम् ॥ ८ ॥

विजयादि आसवों ( = भाँग आदि ) के साथ अत्यन्त आनन्द में निमग्न होकर तदनन्तर योगिराज साधक क्रमशः षट्चक्रों का भेदन करे । बिजली के समान प्रकाश उत्पन्न करने वाला और करोड़ों बिजली के समान प्रकाश करने वाला तथा वर्षा की धारा से परिपूर्ण हुआ जैसा योगियों का भाव अपरिच्छिन्न होता है ॥ ७-८ ॥

यद्येवं [२]सुतभावज्ञा विपाकेन पतन्ति ते ।
ते यान्ति परमं स्थानं ते यान्ति कोटिराज्यपाः ॥ ९ ॥
ते भोगिनो योगिनश्च ते लोकपालकाः स्मृताः ।
ते महद्गुणसम्भोग्या म्रियन्ते न कदा कुतः ॥ १० ॥

यदि इस प्रकार के राजयोगी किसी कर्म के फल से भ्रष्ट हो जावें तो वे अत्यन्त श्रेष्ठ स्थान प्राप्त करते हैं अथवा जहाँ करोड़ों घृतपायी देव ( आज्यपा ) रहते हैं वहाँ चले जाते हैं । वही भोगी होते हैं, वही योगी होते हैं, वही लोक का पालन करते हैं, वही महान् गुणों के संभोग के योग्य होते हैं और वे कभी किसी स्थान पर नहीं मरते ॥ ९-१० ॥

ते [३]भवन्ति महाश्रेष्ठास्ते भवन्ति सुधाकराः ।
ते भेदकरणे युक्तास्ते मनुष्या न देवताः ॥ ११ ॥
ते सर्वे यान्ति सर्वत्र ते शिवास्ते च किङ्कराः ।
ते मे भक्ता महाकाल इति मे [४]स्वागमोदयम् ॥ १२ ॥

वही महाश्रेष्ठ होते हैं और वही चन्द्रमा के समान सुधा की वृष्टि करते हैं । वहीं षट्चक्रों के भेदन में समर्थ होते हैं । वे मनुष्य नहीं अपितु देवता हैं । वे सर्वत्र जाने वाले होते हैं, वही शिव होते हैं, वहीं हमारे किङ्कर तथा भक्त होते हैं, हे महाकाल ! ऐसा मेरे आगम का उद्घोष है ॥ ११-१२ ॥

ये [५]भजन्ति तव पदाऽम्भोजं भावपरायणाः ।
ते [६]ज्ञानिनो भवन्त्येव तेषां कालो वशो भवेत् ॥ १३ ॥
ये प्राणवायुसंयोगा ये प्राणपरिरक्षकाः ।
आत्महत्यां परीहाय ब्रह्मलोकं मुदान्विताः ॥ १४ ॥

---

१. समाभाषम् — ग० ।
२. यद्येव सुतभावकाः इति यद्येवं त्वं भावशून्य — क० । यद्येव सुतभावद्यो — ग० ।
३. महन्ति — ग० ।
४. बुद्धिमेधागमोदयम् — ग० । — बुद्धेर्मेधायाश्चागमस्योदयो यस्मिन् कर्मणि तत् ।
५. ये भजन्ति तव पदाम्भोजभावनतत्पराः — क० ।
ये भवन्ति पदाम्भोजे तव भावपरायणाः —ख० । —पदमम्भोजमिव, तस्मिन् पदाम्भोजे इत्यर्थः ।
६. ते भेदज्ञा प्रभवन्ति — ग० । — भेदं जानन्ति इति कप्रत्ययान्तः ।

हे महाभैरव ! जो भाव परायण हो कर आपके चरण कमल की सेवा करते हैं वे ज्ञानी हो जाते हैं और काल उनके वश में हो जाता है । जो साधक प्राणवायु से संयुक्त रहते हैं और जो प्राणवायु की रक्षा करते हैं वे अपनी मृत्यु पर विजय प्राप्त कर प्रसन्नतापूर्वक ब्रह्मलोक चले जाते हैं ॥ १३-१४ ॥

**यान्ति नाथ ध्यानपराः संसारार्थविवर्जिताः ।**
**अरण्यवासिनो ये च [१]नारण्यवासिनो नराः ॥ १५ ॥**
**एकान्तनिर्जने देशे सर्वविघ्नविवर्जिते ।**
**षट्चक्रभेदमाकृत्य ते नराः फलभागिनः ॥ १६ ॥**

हे नाथ ! जो साधक अरण्य में रहकर अथवा बिना अरण्य में निवास किए ही संसार की कामना से रहित हो कर आपका ध्यान करते हैं वे भी ब्रह्मलोक प्राप्त कर लेते हैं । सर्वथा एकान्त एवं निर्जन प्रदेश में, जहाँ किसी प्रकार के विघ्न की संभावना न हो ऐसे स्थान में, जो साधक षट्चक्र का भेदन करने में तत्पर रहते हैं, उन्हें उस साधना का फल प्राप्त होता है ॥ १५-१६ ॥

**महाकालफलं यस्तु [२]सदेच्छति सतां गतिम् ।**
**स एव योगी भ्रूमध्ये स्थित्वा सर्वत्रगो भवेत् ॥ १७ ॥**
**सर्वदेशे सदा पूज्यः सर्वेशो निर्मलोऽद्वयः ।**
**अनाद्यनन्त[३]विभवः कालात्मा[४] स भवेत् क्षणात् ॥ १८ ॥**

हे महाकाल ! जो फल चाहता है, अथवा सज्जनों की गति चाहता है वह योगी भ्रूमध्य में ध्यान कर सभी की बातें जान लेता है । ऐसा पुरुष सभी देशों में सदा पूज्य होता है, सर्वेश, निर्मल तथा अद्वय बन जाता है । उसके विभव का आदि और अन्त नहीं होता । वह क्षणमात्र में सभी कालों की बात जान लेता है ॥ १७-१८ ॥

**एतेषां साधनं शीघ्रं [५]सिद्धिविद्यासुकल्पनम् ।**
**एतद्रूपं निजं ध्यात्वा[६] भेदं कृत्वा निजस्थलम् ॥ १९ ॥**
**मूलाधारं स्वाधिष्ठानं भेदज्ञानी विभेद्य[७] च ।**
**कुर्यात् [८]परमसन्दर्भं मणिपूरे विचक्षणः ॥ २० ॥**

---

१. ये चान्यवासिनो नराः — क० ।
२. सदैवैति सतीगतिः ( विशुद्धधीः ) — ग० ।
३. न विद्यते आदिर्यस्य तद्, न अन्तो यस्य तत्। एतादृशमनादि अनन्तं विभवं यस्य सः।
४. काल आत्मा यस्य सः । अथवा कालस्यापि आत्मा ।
५. सिद्धिसन्ध्यासुकल्पनम् क० । — सिद्धीनां विद्याः, तासु कल्पनम् ।
६. ज्ञात्वा — ग० ।
७. विभिद्य — क० । — विभेद्य इति पाठे तु विपूर्वकाद् भिदेर्ण्यन्तात् क्त्वो ल्यबादेशः ।
८. नन्दार्द्धमिति गानन्दार्थ — ख० ।

कृत्वा च दर्शनं विद्वान् श्रीकृष्णचरणाम्बुजम् ।
स्वाधिष्ठानादिदेवेन्द्रं शक्तियुक्तं निरञ्जनम् ॥ २१ ॥
राकिणीराधिका व्याप्तं त्रिलोकरक्षणं परम् ।
परमाकाशनिलयं त्रैगुण्यं वारिरूपिणम् ॥ २२ ॥

इसके शीघ्र साधनों को सिद्धिविद्या में विचार कर कहा गया है, साधक अपने इस स्वरूप का ध्यान कर शरीर स्थित ( छः ) स्थलों ( षट्चक्रों ) का भेद करे । इनके भेद को जानने वाला विचक्षण मूलाधार का भेदन करे । फिर स्वाधिष्ठान चक्र का भेदन कर मणिपूर चक्र के भेदन में तत्पर हो जावे । विद्वान् साधक वहाँ पर ( मणिपूर चक्र में ) स्वाधिष्ठान आदि देवों के इन्द्र शक्ति युक्त निरञ्जन श्रीकृष्ण के चरण कमलों का दर्शन करे । वे श्रीकृष्ण त्रिलोकी की रक्षा करने वाले हैं अपनी राकिणी स्वरूपा राधा शक्ति से युक्त होकर वे सर्वत्र व्याप्त हैं । परमाकाश में उनका निवास है और वे त्रिगुणात्मक तथा जलस्वरूप हैं ॥ १९-२२ ॥

वाञ्छाकल्पतरोर्मूलवासिनं शिववैष्णवम् ।
विलोक्यानन्दहृदयोऽशङ्कः सर्वत्र दर्शकः ॥ २३ ॥
कृत्वा योगी सदाभ्यासी मणिपूरं विलोकयेत् ।
मणिपूरं महाचिन्हं सिद्धिक्षेत्रं [1]सुधामयम् ॥ २४ ॥

वे वाञ्छा प्रदान करने वाले कल्पतरु के मूल में निवास करने वाले हैं, सबके कल्याणकारी वैष्णव हैं । दर्शक ऐसे श्रीकृष्ण का दर्शन कर आनन्द से हृदय को परिपूर्ण कर लेता है और सर्वत्र निर्भय रहता है । इस प्रकार सदाभ्यास करने वाला योगी परमात्मा श्रीकृष्ण का दर्शन कर उस मणिपूर का दर्शन करे, जो सिद्धि का क्षेत्र तथा सुधामय है ॥ २३-२४ ॥

हिरण्यकोटिदानेन गोकोटिदानहेतुना ।
कोटिब्राह्मणभोज्येन यत्फलं लभते नरः ॥ २५ ॥
तत्फलं लभते ध्यात्वा मणिपूरं मनोरमम् ।
मणिपूरं महास्थानं योगिनामप्यदर्शनम् ॥ २६ ॥
सूक्ष्मातिसूक्ष्मं परमं ज्ञानिनां ज्ञानगोचरम् ।
अप्रकाश्यं महागुह्यं[2] योगयोगेन[3] लभ्यते ॥ २७ ॥

करोड़ों हिरण्य के दान से करोड़ों गोदान, करोड़ों ब्राह्मण भोजन से मनुष्य को जो फल प्राप्त होता है, वह फल मात्र मनोरम मणिपूर के ध्यान से प्राप्त हो जाता है । वस्तुतः यह मणिपूर ( ब्रह्मा का ) महास्थान है, जिसका दर्शन योगीजनों को भी दुर्लभ है । यह सूक्ष्म से भी अति सूक्ष्म है । यह केवल ज्ञानियों को ज्ञान से दिखाई पड़ता है, यह महागुप्त स्थान है और किसी के द्वारा प्रकाशित होने वाला नहीं है । मात्र योग से यह दिखाई पड़ता है ॥ २५-२७ ॥

---

१. हिरण्मय — क० ।
२. स्थान — क० ।
३. योगानां योगः सम्बन्धो यस्मिन्, स योगयोगस्तेन ।

आनन्दभैरव उवाच

योगार्थं यत्र कमले कोटिविद्युत्समप्रभे ।
कोटिकालाग्निमिलिते कोटिचन्द्रविनिर्मिते ॥ २८ ॥
कोटिसूर्यादिकिरणे मनः केन विलीयते ।
सूची[1] रन्ध्रे यथा सूत्रं तदेव फलदं सुखम् ॥ २९ ॥

**आनन्दभैरव ने कहा**—हे सुन्दरि ! करोड़ों विद्युत् के समान प्रकाश वाले, करोड़ों कालाग्नि से संयुक्त, करोड़ों चन्द्रमा से विनिर्मित, करोड़ों सूर्य के समान किरण वाले कमल में योग की सिद्धि के लिए मन का लय किस प्रकार किया जा सकता है ? सूची के छिद्र में डाला हुआ सूत्र ही ( सीने आदि का ) फल प्रदान करता है ॥ २८-२९ ॥

यन्न[2] दृष्टं श्रुतं क्वापि ज्ञानं न तत्र सुन्दरि ।
तत्र केन प्रकारेण मनोनिवेशनं भवेत् ॥ ३० ॥
यत्र न गमनं नृणां तस्य देवस्य यत्फलम् ।
तत्फलं किं न जानाति अदृष्टे गमनं कुतः ॥ ३१ ॥
कुतो राज्ञां न[3]सम्पत्तिः कुतो वा [4]स्वार्थदर्शनम् ।
कुतो वा जायते सिद्धिर्भेदने किं फलं [5]भवेत् ॥ ३२ ॥
तत्त्वं जानासि देवेशि तत्प्रकारं प्रकाशय ।

किन्तु, हे सुन्दरि ! जिसे कभी देखा नहीं गया, कभी सुना नहीं गया और जिसका कोई ज्ञान भी नहीं है, उस ( ब्रह्म ) में किस प्रकार से मन का लय किया जाय ? जहाँ मनुष्यों की कोई गति नहीं है ? उस देवता का कैसा फल है ? जब उसका कोई ज्ञान नहीं हैं, फिर ऐसे अदृश्य स्थान में किस प्रकार गमन किया जा सकता है । जहाँ राजा की सम्पत्ति काम नहीं देती वहाँ अपने स्वार्थ का क्या भरोसा है ? कैसे सिद्धि प्राप्त की जाय ? तथा षटचक्रों के भेदन में क्या फल होता है, हे देवेशि ! यह सब तत्त्व आप जानती हैं ? अतः उसकी प्राप्ति का प्रकार प्रकाशित कीजिए ॥ ३०-३३ ॥

आनन्दभैरवी उवाच

यदुक्तं तद्धि सकलं सफलं परमेश्वर ॥ ३३ ॥
तत्र[6] पूर्वं योगधर्मस्वाश्रयं[7] शृणु तत्क्रमम् ।
पूर्वस्मरणमात्रेण जीवन्मुक्तो भविष्यसि ॥ ३४ ॥

**श्री आनन्दभैरवी ने कहा**—हे परमेश्वर ! मैने जो कहा है, वह सब फल देने वाला

---

१. विद्धे तथा – ग० ।– सूच्या रन्ध्रे छिद्रे इत्यर्थः ।
२. मया दृष्टं श्रुतं नापि – ग० ।
३. राज्ञाञ्च–ग० ।– स्वार्थस्य दर्शनम् ।
४. आत्मदर्शनमिति – क० ।
५. लभेत – ख० ।
६. तब क – ग० ।
७. तत्र पूर्व ५ागधर्ममाश्रित्य – ख० ।

है । उसमें पूर्व ( कृत ) योग के धर्म का आश्रय होता है । अतः उसका क्रम सुनिए । आप अपने पूर्व स्मरण मात्र से जीवन्मुक्त हो जाएंगे ? ॥ ३३-३४ ॥

**जीव एव [१]महाभाग लोकानां मोक्षबन्धगः ।**
**स जीवो [२]वायुरूपेण महाबलपराक्रमः ॥ ३५ ॥**
**गच्छति प्रत्यहं नित्यं सर्वदा च पुनः पुनः ।**
**पुनरायाति धरणीं [३]स्वभावेन निरन्तरम् ॥ ३६ ॥**
**नानाभावप्रियः सोऽपि नानाकारनिरूपकः ।**
**नानाधर्मप्रियः [४]शुद्धोऽशुद्धवेशधरो महान् ॥ ३७ ॥**

**जीव का स्वरूप**—हे महाभाग, मनुष्यों का एकमात्र जीव ही मोक्ष तथा बन्धन प्रदान करने वाला है, जीव वायुरूप होने से महाबली तथा पराक्रम वाला है । वह प्रतिदिन, नित्य एवं सर्वदा बारम्बार लोक लोकान्तरों में आता जाता रहता है । फिर अपने स्वभाव से इस पृथ्वी पर भी लौट कर आ जाता है । वह अनेक प्रकार के भावों से प्रेम करता है तथा नाना प्रकार के आकार को धारण करता है, इतना ही नहीं, वह अनेक प्रकार के धर्म से भी प्रेम करता है शुद्ध एवं अशुद्ध वेष धारण करता है, किं बहुना, वह महान् भी है ॥ ३५-३७ ॥

**कन्दर्पनिलयो योगी स योगी परमार्थवित् ।**
**स ज्ञानी निरहङ्कारी[५] सोऽहङ्कारी शरीरधृक् ॥ ३८ ॥**
**सर्वगन्धप्रियोऽदृश्यो भावयेत्तां[६] रहस्यवित् ।**
**स एव निष्कलः शुद्धः सदा ध्यानपरायणः ॥ ३९ ॥**

वह जीव समस्त कामनाओं का स्थान है, योगी है, परमार्थ वेत्ता है, ज्ञानी है, निरहङ्कारी एवं अहङ्कारी भी है वही शरीर भी धारण करता है । वह समस्त गन्धों से प्रेम करता है और अदृश्य है, रहस्यवेत्ता साधक इस प्रकार के जीव का ध्यान करे । इस प्रकार ध्यान परायण होने पर वह निष्फल एवं शुद्ध हो जाता है ॥ ३८-३९ ॥

**यदा[७] चात्मनि ब्रह्माण्डे[८] ब्रह्मणि त्वयि शङ्करे[९] ।**
**तन्मयो विलयं याति [१०]तदा भावो [११]महान् स्मृतः ॥ ४० ॥**

---

१. महान् भागो यस्य ।
२. जीव एव हि कालेन योगानां मोक्षबन्धनः महाकाल — ख० ।
३. अवनीमिति — क० । — अवति रक्षति सर्व जीवजातमित्यवनिः ।
४. प्रियः शुद्धः शुद्धवेशद्यंशे महानिति — क० ।
५. नाहङ्कारी — क० । — अहंकारोऽहंभावोऽस्ति यस्य सः, इनिप्रत्ययो मत्वर्थीयः ।
६. ता— क० । — भावयेत्, मनसा चिन्तयेत् ।
७. सदा — क० ।
८. ब्रह्माण्ड — ग० ।
९. ब्रह्मण्यद्वय — ख० ।
१०. यदभाव तदभाव — ख० ।
११. महास्मृतः — ग० ।

तद्भावः परमं ज्ञानं न कथ्यं[१] विपरीतकम् ।
आधारं[२] सुसुखं नित्यं स्वल्प[३]कालविवर्जितम् ॥ ४१ ॥
अत्यन्तधर्म सन्धानं[४] प्राप्य योगी भवेन्नरः ।
शनैः शनैः प्रगन्तव्यं तत्र तत्र [५]सुदर्शनम् ॥ ४२ ॥

जब आत्मा में, ब्रह्माण्ड में और ब्रह्मस्वरूप आप शङ्कर में साधक का मन विलीन हो जावे तो वही महान् भाव कहा गया है। वही भाव सर्वश्रेष्ठ ज्ञान है उससे विपरीत कुछ हो ही नहीं सकता। वही आधार है, सुन्दर सुख देने वाला है, नित्य है, स्वल्प है किन्तु काल का उसमें प्रवेश नहीं। वह अत्यन्त धर्म से जुड़ा हुआ है, जिसे प्राप्त करते ही साधक नर योगी बन जाता है। वहाँ धीरे धीरे पहुँचना चाहिए, जिससे उस ब्रह्म का सुदर्शन प्राप्त हो सके ॥ ४०-४२ ॥

तत्र तत्र महासिद्धो भूत्वा संसारपुत्रवान्[६] ।
योगिनां बहुकालस्थं मृतानामल्पकालकम् ॥ ४३ ॥
श्वासधारणमाकृत्य बहुकालं सुखी भवेत् ।
यथा बृहस्पतिः श्रीमान् यथा[७] सूर्यो दिवाकरः ॥ ४४ ॥
तथा प्रकाशमाकुर्यात् कोटिभिः [८]स्तोत्रनामभिः ।
स्तुत्वा भूत्वा महाद्रव्यैस्तर्पयित्वा यथाक्रमम् ॥ ४५ ॥
अभिषिक्तः[९] पुनर्ध्यात्वा पूजयित्वा यथाविधि ।
मानसोपचारद्रव्यैः स्वधायुक्तैरथापि वा ॥ ४६ ॥
परमानन्दितो भूत्वा भावयेत् पीठदेवताः ।
भावयित्वा ततो जप्त्वा धर्माधर्मौ विचिन्तयेत् ॥ ४७ ॥

वहाँ वह महासिद्ध होकर सारे संसार को अपना पुत्र समझता है। योगियों के लिए बहुत काल तक व मरे हुओं को अल्पकाल तक रहने वाले श्वास को धारण कर साधक बहुत काल के लिए सुखी हो जाता है। जिस प्रकार बृहस्पति श्री से सम्पन्न हैं और जिस प्रकार सूर्य दिन प्रगट करते हैं, उसी प्रकार साधक को भी देवी के स्तोत्रों एवं करोड़ों नामों से अपना प्रकाश प्रकाशित करना चाहिए। प्रथम स्तुति, फिर भावना, फिर महाद्रव्यों से तर्पण इस क्रम से पुनः अभिषेक, फिर ध्यान, फिर यथाविधि मानसोपचार द्रव्यों से अथवा स्वधावाचन से यथाविधि पूजन कर अत्यन्त आनन्द में परिपूर्ण होकर पीठदेवता का ध्यान करे, इस प्रकार की भावना के पश्चात् जप करे तदनन्तर धर्म एवं अधर्म का चिन्तन करे ॥ ४३-४७ ॥

---

१. मकथ्यमिति — क० । २. स्वाधीन — ख० । — स्वस्याधीनम्।
३. कार्येति — ख० ।
४. पञ्चानमिति — क० । — अत्यन्तं धर्मस्य सन्धानं योजनम् ।
५. स्वदर्शनं — क० । — शोभनं दर्शनम्, स्वस्यात्मनो दर्शनं वा ।
६. युक्तिमानिति — ख० । — संसार एंव पुत्रो भवति इति तद्वानिति भावः ।
७. तथा — ग० । ८. तत्र नामभिः — क० ।
९. अभिषिच्य — क० । — अभिषिक्तः सम्पन्नाभिषेकः ।

देवतायां मनो योज्य स्थापयित्वा स्वपीठके ।
पुनरुत्फुल्लकमलं मुद्रितं [1]परिकारयेत् ॥ ४८ ॥
षड्दलं मूर्च्छितं[2] कृत्वा दलाग्रे संविशेत् सुधीः ।
सदानन्दः सर्वमयो वेदवेदान्तनामभिः ॥ ४९ ॥
स्तवकोटिभिरेकत्र ध्यात्वा संहारमुद्रया ।
अधोमुखे दशदलकमलाग्रे नियोजयेत् ॥ ५० ॥

साधक इष्ट देवता में मन लगावे, फिर अपने हृदय रूप पीठ पर उन्हें स्थापित करे । तदनन्तर उस फूले कमल के सदृश हृदय को मुद्रित ( बन्द ) कर देवे । फिर षड्दल का भेदन कर सुधी साधक आगे के दल में प्रवेश करे फिर सदानन्द एवं सर्वमय हो कर वेद वेदान्त में प्रतिपादित नामों से अथवा अनेक स्तोत्रों से संहारमुद्रा का प्रदर्शन करते हुए अधोमुख वाले दशदल कमल के आगे अपने को उपस्थित करे ॥ ४८-५० ॥

षड्दलाग्रं महाकाल नियोज्य गमनं चरेत् ।
ततो गच्छेत् प्रज्वलिते पद्मे दशदले पुरे[3] ॥ ५१ ॥
प्रविश्य कर्णिकामध्ये तन्मयस्तत्क्षणाद् भवेत् ।
तत्क्षणात्तन्मयो भूत्वा कुण्डलीचक्रसंस्थितः[4] ॥ ५२ ॥
असाध्यसाधनं सर्वं [5]मणिपूरस्थनिर्मलम् ।
मणिपूरे महापीठे ध्यानगम्ये [6]सति प्रभो ॥ ५३ ॥
मनोनिवेशनं कृत्वा नरो मुच्येत सङ्कटात् ।
मनोयोगी मनोभोगी मनोभक्तो [7]मनोयुवा ॥ ५४ ॥

हे महाकाल ! इसके अनन्तर षड्दलों वाले चक्र के आगे अपने को नियुक्त कर अत्यन्त देदीप्यमान दशदल वाले पद्म रूपी पुर में प्रवेश करे । वहाँ कर्णिका के मध्य में प्रविष्ट हो कर तत्क्षण कुण्डली-चक्र पर स्थित रह कर तन्मय हो जावे । मणिपूर में होने वाला ( ज्ञान ) सब कुछ निर्मल है और असाध्य को भी साधने वाला है । हे प्रभो ! ध्यान द्वारा गम्य मणिपूर नामक महापीठ में मन को सन्निविष्ट करने से मनुष्य सङ्कट से मुक्त हो जाता है । क्योंकि यह मन योगी है, मन ही भोगी है, मन ही भक्त है और मन ही युवा है ॥ ५१-५४ ॥

मन एव मनुष्याणां कारणं [8]त्राणमोक्षयोः ।
कारणं सर्वभावानां तद्भावं सन्त्यजेद् बुधः ॥ ५५ ॥

---

१. परिकल्पयेत् – ख० । २. षड्गुणम् – क० ।
३. परे – क० । ४. कुण्डलीचक्रे संस्थित इति सप्तमोघटितः समासः ।
५. मणिपूरं सुनिर्मलमिति – क० । – मणिपूरस्थं निर्मलमित्यर्थः मूलस्थपाठे । मणिपूरं सुनिर्मलमिति भावो द्वितीये पाठे ।
६. सतामिति – क० । ७. मनोवरः – क० ।
८. भोग – ग० ।

सर्वभावं विहायापि महाभावं समाश्रयेत् ।
भावेन लभ्यते मोक्षो भावेन लभ्यते सुखम् ॥ ५६ ॥
एतद्भावं सदा कुर्याद् भावाद् भवति[1] योगिराट्।
भावेन भक्तिमाप्नोति विषयाद् भावमाश्रयेत् ॥ ५७ ॥

मन ही सभी मनुष्यों के संरक्षण एवं मोक्ष का कारण है । अतः बुद्धिमान् साधक सभी भावों के कारणभूत भावों का त्याग कर देवे । भावों में सभी भावों का त्याग कर भी महाभाव का आश्रय लेना ही चाहिए । वस्तुतः भाव से ही मोक्ष प्राप्त होता है, भाव से ही सुख की प्राप्ति संभव है। साधक को इस प्रकार का भाव सदैव करते रहना चाहिए, क्योंकि भाव से ही मनुष्य योगिराज बन जाता है तथा भाव से ही भक्ति प्राप्त होती है । अतः विषय के अनुसार भाव का आश्रय लेना चाहिए ॥ ५५-५७ ॥

विषयं विकृतिग्राह्यं सुकृतिज्ञानवर्जितम् ।
त्यक्त्वा[2] दिव्यं महापीठं मणिपूरं समाश्रयेत् ॥ ५८ ॥
महायन्त्रे मनो दत्वा निर्माणं कारयेद् बुधः ।
मणिभिर्ग्रथनं[3] कृत्वा नानामणिविभूषितम् ॥ ५९ ॥
सुपीठं [4]कुलपीठे वा लिङ्गपीठमथापि वा ।
श्रीविद्यापीठमालिख्य विभाव्य च पुनः पुनः ॥ ६० ॥

जिसमें सुकृति ( पुण्य ) अथवा ज्ञान न हो ऐसे विकृतिपूर्ण विषय का त्याग कर देवे । ऐसे भावापन्न होकर दिव्य मणिपूर नामक महापीठ का आश्रय लेवे । बुद्धिमान् पुरुष महायन्त्र में भली प्रकार मन लगाकर उसकी रचना करे। मणियों से गूथँ कर अनेक मणियों से विभूषित कर सुपीठ की रचना करे । इस प्रकार विरचित कुलपीठ पर अथवा लिङ्ग पीठ पर श्री विद्या के पीठ का बारम्बार सर्वेक्षण करते हुए श्री विद्यापीठ की रचना करे ॥ ५८-६० ॥

ततः प्रस्फुटिते पद्मे दलाग्रे षड्दलस्य च ।
स्थापयित्वा महाविष्णुं पूजयित्वा सुसंयतः ॥ ६१ ॥
जप्त्वा च तन्मयो भूत्वा निधाय मणिपूरके ।
द्वढाकारमूर्ध्वगतं[5] षड्दलं[6] परिरक्षयेत्[7] ॥ ६२ ॥
ततश्चोद्र्ध्वतरे स्थाने महोच्चोत्तरसुन्दरे[8] ।
मनोनिवेशनं कृत्वा शक्तिं रुद्रं समाश्रयेत् ॥ ६३ ॥

---

१. तरति – क० । २. अत – ग० ।
३. ग्रन्थन – ग० ।
४. परमं ध्यात्वा कुलपीठमथापि वा – ग० । कुलपीठे इति पाठे षष्ठीसमासः ।
५. मृदुगत – क० । – ऊर्ध्व गतमिति तात्पर्यम् ।
६. षड्गुणमिति – ग० । – षण्णां गुणानां समाहारः षड्गुणमिति ।
७. परिचिन्तयेत् – ख० । ८. महोध्योद्भवसुन्दरे – ग० ।

चैतन्यरूपिणीं शक्तिं चैतन्यं रुद्ररूपिणम् ।
तत्र[1] भद्रात्मकं रौद्रं रौद्रीं प्रकाशकारिणीम् ॥ ६४ ॥

फिर उस श्री विद्यापीठ पर खिले हुए षड्दल वाले पद्म पर षड्दलों के आगे महाविष्णु को स्थापित कर सावधानी से उनका पूजन कर जप कर तन्मय हो मणिपूर में दृढ़ता युक्त आकार वाले षड्दल को स्थापित कर उसकी रक्षा करे । फिर उससे भी अत्यन्त ऊपर महान् सुन्दर स्थान में मन को सन्निविष्ट कर शक्ति सहित रुद्र को स्थापित करे । शक्ति चेतनास्वरूपा हैं तथा चैतन्य रुद्रस्वरूप हैं । उसमें भी भद्रात्मक रौद्र हैं और उनकी शक्ति रौद्री प्रकाश करने वाली हैं ॥ ६१-६४ ॥

भक्त्या पुनः पुनर्ध्यायेदूर्ध्वरितास्तमीश्वरम्[2] ।
प्रगच्छन्ति चोद्र्ध्वमार्गे[3] ध्येया योगिभिरेव च ॥ ६५ ॥
अहं[4] देवी परानन्दा मणिपूरनिवासिनी ।
तथा श्रीलाकिनीशक्तिः श्रीरुद्रस्त्वं[5] न संशयः ॥ ६६ ॥

ऊर्ध्वरिता साधक भक्तिपूर्वक शक्ति सहित उन रुद्र स्वरूप ईश्वर का ध्यान करे । योगियों को ऊर्ध्व मार्ग से गमन करने वाली रौद्री शक्ति का भी ध्यान करना चाहिए । मणिपूर में निवास करने वाली परानन्दस्वरूपा लाकिनी नामक शक्ति देवी मैं हूँ और हे महाभैरव ! आप रुद्र हो—इसमें संशय नहीं है ॥ ६५-६६ ॥

रुद्ररूपी महादेवो रुद्ररूपा सरस्वती ।
सर्वदा ऊद्र्ध्वगामी च सा शक्तिरूद्र्ध्वगामिनी ॥ ६७ ॥
ऊद्र्ध्वमार्गं काशयन्तीं योगिनीं योगमातरम् ।
महारुद्रं तथा ध्यात्वा मणिपूरे सुनिर्मले ॥ ६८ ॥
ऊद्र्ध्वमुखं समाकुर्याद् महापद्मं मनोरमम् ।
मणिपूरं महाकान्तं मणिकोटिसुनिर्मलम्[6] ॥ ६९ ॥

महादेव रुद्ररूप वाले हैं और सरस्वती रुद्ररूपा हैं । रुद्र सर्वदा ऊर्ध्वगमन करने वाले हैं तथा उनकी शक्ति ऊर्ध्वगामिनी है । ऊर्ध्वभाग को प्रकाशित करती हुई योगियों की माता योगिनी तथा महारुद्र का स्वच्छ मणिपूर में ध्यान कर साधक वहाँ रहने वाले परम सुन्दर अधोमुख वाले कमल को ऊर्ध्वमुख करे । मणिपूर अत्यन्त सुन्दर है और करोड़ों मणियों से विरचित होने से अत्यन्त निर्मल है ॥ ६७-६९ ॥

कोटिकोटिशरच्चन्द्र[7] पूर्णज्योतिःसमाकरम् ।
ऊद्र्ध्वमुखं समाकुर्यात् स्वयंभावेन जायते ॥ ७० ॥

---

१. भद्रं भद्रात्मिकां रौद्रं रौद्रीं प्रकाशकारिणीम् — ग० ।
२. ऊर्ध्वरितारमीश्वरम् — ग० ।
३. ध्यायियोगिवरः सदा — क० ।
४. स्वयमिति — ग० ।
५. श्रीरुद्रस्यामिति — ग० ।
६. मणीनां कोटिसु सुनिर्मलम् ।
७. चन्द्र — ग० ।

यदि चोद्दूर्ध्वमुखं पद्मं [१]यन्त्रमण्डलसंयुतम् ।
अतिकोमलपत्रेषु भाति चात्यद्भुतङ्करम् ॥ ७१ ॥

मणिपूर चक्र करोड़ों करोड़ शरत्कालीन चन्द्रमा की पूर्ण ज्योति से देदीप्यमान है । उस चक्र पर रहने वाले अधोमुख कमल को साधक ऊर्ध्वमुख करे क्योंकि यह कार्य स्वयं अपनी भावना से संभव है। यह यन्त्र मण्डल से संयुक्त ऊर्ध्वमुख पद्म अत्यन्त कोमल पत्र पर अत्यन्त अद्भुत रूप से शोभित होता है ॥ ७०-७१ ॥

लेपयित्वा योजयित्वा[२] स्थापयित्वा पुनः पुनः ।
प्रापयित्वा महारुद्रं त्रैलोक्यजननीं शिवाम् ॥ ७२ ॥
रुद्राणीं रौद्रशक्तिञ्च लाकिनीं[३] लोकसाक्षिणीम् ।
कुम्भकं प्राणवायोश्च प्राणवायोश्च योजनम् ॥ ७३ ॥
एकत्र मिलनं कृत्वा भावनं [४]परिकारयेत् ।
भावेन लभ्यते मोक्षो भाव एव निजप्रियः ॥ ७४ ॥

उस ऊर्ध्वमुख कमल का लेपन करे, एक में योजना करे और उसे बारम्बार अच्छी तरह स्थापित करे । तदनन्तर उस पर महारुद्र तथा त्रैलोक्य जननी शिवा को उस पर पधरावे। रुद्राणी रौद्रशक्ति वाली लोकसाक्षिणी लाकिनी को तथा प्राणवायु के कुम्भक को प्राणवायु से संयुक्त करे । इन दोनों को एक में मिलाकर उनकी भावना करे । क्योंकि भाव से मोक्ष प्राप्त होता है भाव ही इष्टदेवता को प्रिय भी है ॥ ७३-७४ ॥

मनो निवेश्य तत्रस्थो रुद्राराधनमाचरेत्[५] ।
तथा श्रीलाकिनीदेव्याः परमाद्भुतसाधनम् ॥ ७५ ॥

उसमें अपने मन को सन्निविष्ट कर रुद्राराधन करे । इसी प्रकार श्री लाकिनीदेवी का भी परमाद्भुत साधन करे ॥ ७५ ॥

शृणुष्व परमानन्द भैरव प्रियवल्लभ[६] ।
ममोपदेशं[७] सन्त्यज्य कोऽपि सिद्धो न सम्भवेत् ॥ ७६ ॥
ममाज्ञाबलयोगेन[८] सिद्धो भवति मानवः ।
मुक्तिमूलं महाभावं मुक्तिमूलं हि साधनम् ॥ ७७ ॥

---

१. यन्त्रचन्द्रमण्डसंयुतम् – ग० । – यन्त्राणां मण्डलानि तैः संयुतम् ।
२. च तत्सर्वमिति – ग० ।
३. लोकरक्षिणीम् – ग० । – लोकानां साक्षिणीम् रक्षिणीं वा ।
४. परिकल्पयेत् – क० ।
५. माश्रयेत् इति – क० । – रुद्रस्याराधनं समाचरेत् ।
६. प्राणवल्लभ इति – क० । – प्राणानां वल्लभः, प्रियः ।
७. ममोपदेशविधिना इति – क०, ग० ।
८. मम आज्ञाया बलं तस्य योगेन सम्बन्धेनेत्यर्थः ।

मुक्तिक्रमेण कालेन सिद्धो भवति साधकः ।
मम योगक्रमेणैव मम [1]तन्त्रावलोकनात् ॥ ७८ ॥

हे भैरव ! हे प्राणवल्लभ ! हे परमानन्द ! मेरी एक बात और सुनिए । मेरे उपदेश का परित्याग कर कोई भी सिद्ध नहीं हो सकता । केवल मेरी आज्ञा के बल से ही मनुष्य सिद्ध हो सकता है । महाभाव मुक्ति का मूल है और मुक्ति का मूल साधन ही है । मुक्ति क्रम से प्राप्त होती है तथा साधक काल आने पर सिद्ध होता है और ऐसा हमारे योग के क्रम से तथा हमारे तन्त्र के अवलोकन से होता है ॥ ७६-७८ ॥

कोऽपि नाथ ब्रह्मयोगी भवत्येव न चाखिले ।
सर्वे च योगिनः शीघ्रं प्रभवन्ति[2] न संशयः ॥ ७९ ॥

हे नाथ ! इस अखिल ब्रह्माण्ड में कोई भी 'ब्रह्मयोगी' नहीं होता, योगी तो सब हो ही सकते हैं इसमें संशय नहीं ॥ ७९ ॥

स्फुटाकारदलं कृत्वा विन्यासं तत्र कारयेत् ।
महायोगिकुलन्यासं विद्यान्यासं समाचरेत् ॥ ८० ॥
सर्वन्यासं निजन्यासं [3]ज्ञानजालं समाचरेत् ।
मानसक्रियया व्याप्तं देहं [4]मधुरसम्प्लुतम् ॥ ८१ ॥
शिवरूपिणमात्मानं वैष्णवं ज्ञानचक्षुषम् ।
एकाकारं[5] मूलमन्त्रध्यानं तत्र समाचरेत् ॥ ८२ ॥

उस दल को स्पष्ट रूप में परिणत कर विशिष्ट न्यास करे, फिर महायोगि कुलन्यास करे, तदनन्तर विद्यान्यास करे । तदनन्तर सर्वन्यास, निजन्यास एवं विभिन्न ज्ञान जाल का अनुष्ठान करे । मानस क्रिया से व्याप्त माधुर्य में डूबे हुए इस शरीर को, शिव स्वरूप आत्मा को ज्ञानचक्षु वाले विष्णु को एकाकार कर मूलमन्त्र का ध्यान करे ॥ ८०-८२ ॥

ध्यात्वा चार्घ्यं समाकुर्यात् कुलचक्रक्रमेण तु ।
आत्मानमपरिच्छिन्नं विचिन्त्य पुनरेव च ॥ ८३ ॥
सन्ध्यायेन्निजचैतन्यदेवतां कुलदेवताम् ।
पाद्यार्घ्यादिक्रमेणैव पूजयित्वाऽप्यहर्निशम् ॥ ८४ ॥
परिवारांस्ततो ध्यात्वा तत्सर्वान् परिपूजयेत् ।
धूपदीपौ ततो दद्याद् निजपूजाविधानतः ॥ ८५ ॥

---

१. मन्त्रविलोकनमिति – ख०, ग० ।– तन्त्राणामवलोकनात्, मन्त्रस्य विलोकनमिति वा।
२. भवन्ति च इति – ग० ।
३. न्यासजालमिति – ग० ।– न्यासानां जालं समूहम् ।
४. मधुरसंयुतमिति – क० ।– मधुरेणं संयुतम् ।
५. एकाकारं मूलमन्त्रं ध्यानमिति – ग० ।– एक आकारो यस्य तम् ।

इस प्रकार ध्यान कर शक्ति चक्र के अनुसार उन्हे अर्घ्य प्रदान करे । फिर अपनी आत्मा को अपरिच्छिन्न समझकर अपने चैतन्य देवता ( रुद्र ) तथा कुल देवता ( लाकिनी शक्ति ) का ध्यान करे । दिन रात पाद्य अर्घ्य आदि क्रम से पूजन कर उनके आवरण देवता का भी ध्यान करे और उन सभी का उक्त क्रम से पूजन भी करे । फिर शाक्त तन्त्रानुसार उन्हें धूप दीप प्रदान करे ॥ ८४-८५ ॥

**प्राणायामं दीपनादौ[१] कुर्यात् साधक एव च ।**
**भक्त्या ध्यात्वा मनुं जप्त्वा मणिपूरस्थदैवते[२] ॥ ८६ ॥**
**जपं समर्प्य[३] विधिना प्राणायामं पुनस्त्रयम्[४] ।**
**प्रणम्य स्तोत्रकवचैः स्वदेवीं हृदि चार्पयेत्[५] ॥ ८७ ॥**

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धिमन्त्रप्रकरणे भैरवभैरवीसंवादे मणिपूरचक्रभेदप्रकारो नाम [६]त्रिचत्वारिंशत्तमः पटलः ॥ ४३ ॥**



साधक फिर प्राणायाम कर आरती कर नाद ( घण्टा घड़ियाल ) करे इस प्रकार मणिपूर में रहने वाले देवता का भक्तिपूर्वक ध्यान कर मन्त्र का जप करे । तदनन्तर विधिपूर्वक उन्हें जप समर्पण कर तीन प्राणायाम करे । उन देवताओं के स्तोत्र एवं कवचों से उन्हें प्रणाम कर अपनी इष्टदेवी लाकिनी को अपने हृदय में पधरावे ॥ ८६-८७ ॥

**॥ श्रीरुद्रयामल के उत्तरतन्त्र में महातन्त्रोद्दीपन में सिद्धमन्त्रप्रकरण में भैरव-भैरवी संवाद में मणिपूरचक्रभेदप्रकार नामक तिरालिसवें पटल की डा० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ ४३ ॥**



---

१. द्वादशादौ — ग० । २. मणिपूरस्थं दैवतं तत्रेत्यर्थः ।
३. समाप्येति — ग० । — समर्पणं समापनं वा कृत्वा ।
४. पुनर्द्वयमिति — ग० । — त्रयमित्यस्य स्थाने द्वयमिति पाठो ज्ञातव्यः ।
५. चालयेत् — ग० । — अर्पयेदिति शोभनः पाठः ।
६. चतुश्चत्वारिंशदिति — ख० पु० पाठः ।

# अथ चतुश्चत्वारिंशः पटलः

आनन्दभैरवी उवाच

मणिपूरविभेदार्थं[१] शृणु वक्ष्यामि तत्त्वतः ।
यं ज्ञात्वा मूढलोकाश्च प्रविशन्ति महाघटे ॥ १ ॥
अमूढत्वं प्राप्नुवन्ति[२] भवन्ति योगिनोऽमराः ।
खेचरत्वं प्राप्नुवन्ति[३] सांख्ययोगनिषेविणः[४] ॥ २ ॥
महापातकमुख्यानां नाशं शीघ्रं महारिपुम् ।
कियत्कालेऽनले दोषे जले पर्वतकानने ॥ ३ ॥
कुर्वन्ति च [५] दिदृक्षूणां देवतावशमेव च ।
मणिपूरं महापीठं ध्यायेद् यः [६]प्राणसंयमम् ॥ ४ ॥

**आनन्दभैरवी ने कहा**—हे आनन्दभैरव ! अब मणिपूर के भेदन के लिए जिन बातों को कह रही हूँ, उसे सावधानी पूर्वक सुनिए । जिसे जानकर मूर्ख लोग भी महाकाश ( निराकार आत्मा ) में प्रवेश करते हैं । वे ज्ञान प्राप्त कर ज्ञानी बन जाते हैं, अमर योगी बन जाते हैं । ज्ञान और योग की सेवा करते हुए खेचरता भी प्राप्त कर लेते हैं । उनके द्वारा किए गए समस्त बड़े बड़े पाप, शीघ्र नष्ट हो जाते हैं और उनके शत्रु कुछ ही काल में अग्नि में जल जाते हैं अथवा अपने पापों से मर जाते हैं, अथवा जल में डूब जाते हैं अथवा पर्वत से गिर कर नष्ट हो जाते हैं, किं वा वन में भटक जाते हैं । ऐसे लोग जो प्राणसंयम कर मणिपूर महापीठ का ध्यान करते हैं, देखने वालों को तथा देवताओं को अपने वश में कर लेते हैं ॥ १-४ ॥

मणिपूरचक्रभेदनम्

तथा [७]पञ्चाऽऽसवासिद्धिं कृत्वा पूरं विभेदयेत् ।
त्रिलोक [८]जननीं सत्यां शिवामाद्यां त्रियोगिनीम् ॥ ५ ॥

---

६. चतुश्चत्वारिंशदिति – ख० पु० पाठः ।
१. विभेदाय – क० ।
२. अमूढत्वमवाप्नोतीति – ख०, ग० । – मुहधातुर्वैचित्यार्थकः, ततः क्तप्रत्यये कृते सति ढत्वधत्व–ष्टुत्व–ढलोप–दीर्घेषु कृतेषु मूढशब्दो निष्पद्यते । तदर्थश्च अस्थिरचित्तः । न मूढोऽमूढः तस्य भावोऽमूढत्वम् ।
३. मवाप्नोति – ख० , ग० ।
४. सांख्यतत्त्वनिषेविणः – ख०, ग० ।
५. दिग्विदिक्षूणामिति – क० ।
६. प्राणसंयमः – क० ।
७. पञ्चाशवासिद्धमिति – ख०, ग० । –पञ्च च ते आशवाश्च पञ्चाशवाः, तैरसिद्धम् ।

मूलाधारात् समुत्पत्य गच्छन्ती[१] रसषड्दले ।
प्रकाशं षड्दलं कृत्वा प्रगच्छन्ती [२]प्रभान्विता ॥ ६ ॥

साधक सर्वप्रथम पञ्च आसव की सिद्धि करे । तदनन्तर मणिपूर का विभेदन करे । मूलाधार से उठकर षड्दल कमल पर जाती हुई और उसे प्रकाशित करती हुई प्रभा से युक्त त्रिलोक जननी सत्या, आद्या, शिवा, त्रियोगिनी का ध्यान करे ॥ ५-६ ॥

**विमर्श**—पञ्च आसव—अमरलता, काली तुलसी, भाँग, दूर्वा, मेउड़ी ( निर्गुण्डी ) और बिल्व पत्र हैं ( द्र० ५०. ३२-३३ ) ।

मणिपूरे महाचक्रे त्रैलोक्यजपसाधने ।
सिद्धीनां[३] निलये काम्ये कमनीये मनःप्रिये ॥ ७ ॥
मनः[४] प्रिया महादेवी [५]सर्वोल्लासनकारिणी ।
खेचरी महदानन्दमण्डिता मन्त्रयोगिनी ॥ ८ ॥
अनुग्रहकरी सिद्धा विभाव्या तत[६] एव हि ।
आनन्दघन [७]सन्दोहमात्मज्ञानं सुनिर्मलम् ॥ ९ ॥
मणिपूरं संविभाव्य किन्न सिद्ध्यति भूतले ।
अणिमा लघिमा व्याप्तिर्महाश्रेष्ठादिसिद्धिभाक् ॥ १० ॥

यह मणिपूर महाचक्र त्रैलोक्य के जप का साधन है, सिद्धियों की निवास भूमि है, कामना प्रदान करने वाला है, कमनीय एवं मन को सुख देने वाला है । वहाँ पर महादेवी, सर्वोल्लासकारिणी, मनःप्रिया, खेचरी, महदानन्दमण्डिता, अनुग्रहकारिणी, सिद्धा एवं मन्त्रयोगिनी देवी का ध्यान करना चाहिए । यह मणिपूर आनन्द घन संदोह है । अत्यन्त निर्मल आत्मज्ञान का स्वरूप है । उसका ध्यान करने से इस भूतल में कौन सी सिद्धि नहीं होती ? मणिपूर का ध्यान करने वाला साधक अणिमा, लघिमा, व्याप्ति तथा अन्य महाश्रेष्ठ सिद्धियों को प्राप्त कर लेता है ॥ ७-१० ॥

कौलो वा वार[८]मुख्यो वा ज्ञानी वा साधकोत्तमः ।
योगाभ्यासं यः करोति मणिपूरं समाश्रयेत् ॥ ११ ॥
मणिपूरस्थितं देवं यः स्तौति नियतः शुचिः ।
स्तवराजस्य पाठेन प्रबुद्धा कुण्डली भवेत् ॥ १२ ॥
सा देवी परमा माया मणिपूरे [९]स्थिता शिवा ।
प्रबुद्धां कास्यत्येव ततः सिद्धो भवेन्मनुः ॥ १३ ॥

साधक कौल हो अथवा वारमुख्य ( गवैया या नर्तक ) हो, ज्ञानी हो अथवा साधकोत्तम

९. पुस्तके नास्ति – क० ।
१. प्रगच्छन्ति रसच्छदे । २. प्रपूर्वकाद् गमेर्लटः, शत्रादेशे स्त्रीत्वविवक्षायां ङीप् ।
३. सिद्धिशून्यालये – क० । ४. पुनः प्रिया – ख०, ग० ।
५. सर्वोल्लघनकारिणी – क० । ६. तत एवाहि – क० ।
७. घट – ख०, ग० । ८. नारकाख्यो वा ।

हो, जिसे योगाभ्यास करना हो उसे मणिपूर का आश्रय अवश्य ग्रहण करना चाहिए । जो नियमपूर्वक पवित्र हो कर मणिपूर में स्थित होकर स्तुति करता है, इस स्तवराज के पाठ से उसकी कुण्डलिनी शक्ति जागृत हो जाती है । वह कुण्डली परमा माया है, मणिपूर में स्थित रहने वाली शिवा देवी है । वह प्रबुद्ध हो जाने पर प्रकाश उत्पन्न करती है, जिससे मन्त्र सिद्ध हो जाता है ॥ ११-१३ ॥

**सिद्धे मनौ पराप्राप्तिरिति मे तन्त्रनिर्णयः ।**
**यदि चैतन्यमिच्छन्ति कुण्डलिन्याः पराक्रमम् ॥ १४ ॥**
**जानाति निजदेहे च [1] महोदयमनुत्तमम् [2] ।**
**तेषां चैतन्यहेतोश्च देवतानां कुलेश्वर ॥ १५ ॥**
**महास्तोत्रं समाकुर्यात् प्रत्यहं सिद्धिहेतुना ।**
**सिद्धिकार्यं धर्मकार्यं मणिपूरे [3] समाप्नुयात् ॥ १६ ॥**

मन्त्र के सिद्ध होने पर पराशक्ति की प्राप्ति होती है, ऐसा तन्त्र शास्त्र का निर्णय है । साधक गण जब कुण्डलिनी को चेतन कर लेते हैं, तब उन्हें कुण्डलिनी के पराक्रम का ज्ञान होने लगता है । उसे अपने देह में महान् अभ्युदय प्राप्त होने लगता है । अतः हे कुलेश्वर ! साधक को कुण्डलिनी को जागरूक करने के लिए तथा सिद्धि प्राप्त करने के लिए मणिपूर स्थित उन-उन देवताओं के महास्तोत्र का पाठ प्रतिदिन करते रहना चाहिए । ऐसा करने से वह सिद्धि-कार्य तथा धर्म-कार्य मणिपूर में प्राप्त कर लेता है ॥ १४-१६ ॥

**मणिपूर [4] निवासिन्याः भेदनं ज्ञानसाधनम् ।**
**सहस्रनाममलं सिद्धिद्रव्यनिरूपणम् ॥ १७ ॥**
**नित्यसिद्धिं काम्यसिद्धिं मणिपूरे समाश्रयेत् ।**
**प्राणबुद्ध्या स्वेष्टदेवीं पूजयेल्लाकिनीं पराम् ॥ १८ ॥**

मणिपूर में स्थित महादेवी का भेदन समस्त ज्ञान का साधन है । उनका परम पवित्र सहस्रनाम सिद्धि प्रदान करने वाले समस्त द्रव्यों का निरूपण करने वाला है । नित्यसिद्धि तथा काम्यसिद्धि प्रदान करता है । अतः मणिपूर का आश्रय अवश्य लेना चाहिए और अपने प्राणों की बुद्धि से स्वेष्ट देवी परा लाकिनी का पूजन करना चाहिए ॥ १७-१८ ॥

**स्वदेवतां पूजयेद्‌ वै मणिपूरे महालये ।**
**मणिपूरस्थितां रौद्रीं महाशक्तिं महोदयाम् ॥ १९ ॥**
**सर्वसञ्चारिणीं योग्यां महायोगिप्रियां पराम् ।**
**निजदेवीपदाम्भोज [5] पूजावत् पूजनं चरेत् ॥ २० ॥**

---

१. महानुदयो महोदयः, सन्महदिति कर्मधारयसमासः ।

२. नास्ति उत्तमो यस्मादिति बहुव्रीहिसमासः, न तु नञ्तत्पुरुषः ।

३. समाश्रयेत् — क० ।

४. मणिपूरनिवासिन्या इत्यारभ्य मणिपूरे समाश्रयेदित्यन्तं कपुस्तके नास्ति ।

५. पदाम्भोजमिति — ग० ।

नेत्र हैं - ऐसी दश दल कला के ऊपर रहने वाली एवं महान् प्रकाश वाली लाकिनी का ब्रह्मदेव ध्यान करते हैं ॥ २५ ॥

**मृणालान्तर्ध्वान्तः[१] प्रकटतटसंहारसुभगां**
**कुलक्षेत्रोल्लासां[२] चरमपददां दीपकलिकाम् ।**
**सदानन्दाकारां [३]गतिगुणहरां चारुकिरणां**
**प्रभावर्णश्यामां[४] रुचिरवदनां भावयति[५] कः ॥ २६ ॥**

जो मृणाल के भीतर रहने वाले अन्धकार को स्पष्ट रूप से संहार करने में कुशल हैं, कुल क्षेत्र ( मूलाधार ) को प्रकाशित करने वाली, मोक्ष प्रदान करने वाली दीपकलिका हैं, सदा आनन्द के आकार वाली, ज्ञान रूप गुणों वाली तथा सुन्दर किरणों वाली हैं, प्रभा तथा वर्ण से श्याम रङ्गवाली हैं, ऐसी मनोहर मुख वाली, चन्द्रवदना भगवती का ब्रह्मदेव ध्यान करते हैं ॥ २६ ॥

**प्रतीक्षानन्दाब्धि[६] प्रकटचरणाम्भोजयुगलां**
**वियद्वर्णां कान्तां सुरवरसुपूजाविधिरताम् ।**
**महासूक्ष्मद्वारप्रचलनकरीं भेदनकरीं**
**दिवायोगाह्लादप्रियजनशिवां भावयति कः ॥ २७ ॥**

जो ( सिद्धि की ) प्रतीक्षा रूप से आनन्द का समुद्र हैं, जो अपने दोनों चरण कमलों से प्रकाश करती हैं, आकाश के समान वर्ण वाली, कमनीय शोभा से युक्त जो सुरवरों ( इन्द्रादि देवगण ) द्वारा की गई पूजा विधि को ग्रहण करने वाली हैं, जो महासूक्ष्मद्वार में चलने वाली तथा भेदन करने वाली हैं, ऐसी दिवायोग में प्राणियों को आह्लादित करने वाली एवं प्रियजनों का कल्याण करने वाली भगवती का ब्रह्मदेव ध्यान करते हैं ॥ २७ ॥

**अयोध्यापीठस्थामरुणकमनीं प्रेमगलितां**
**महारौद्रीं भीमां शतशतरविप्रेमनिकराम् ।**
**महादुःखार्तानां[७] नयनशुभगां भावविरहां**
**सतीं सीतामिन्द्रोत्सवनवषटां भावयति कः ॥ २८ ॥**

---

१. सदान्तर्दत्तध्यानविषयपरामिति – ख० । मूलान्तर्वा क ..................... इति ।
२. कुलल्रेत्रोन्यत्रा मिति ख कुरुक्षेत्रोलासा – ग० ।
३. मतिगुणाहरामिति क तया तारकमयीमिति – क० ।
४. महारौप्यादिस्थां सकलकरुणामिति – ग० ।– प्रभावर्णश्यामामिति पाठे प्रभावर्णेन श्यामामिति विग्रहः ।
५. प्रसन्नां स्वे देहे कुलपथगतां गीतरमितां परानन्दश्रेणीं नवरवलतां तामसहराम् । महारुद्राक्षिप्तां क्षितिमयहरां चारुकिरणां महारौप्याद्रिस्थां सकलकरुणां भावयति कः ॥
– क पुस्तकपाठः । किन्तु मूले देयः ।
६. प्रतीक्षानन्दां विप्रगतचरणां कोटिविधुगां वियद्वर्णा स्वस्थां निखिलवसुपूजा ...... ।
७. .... ... प्रचलनपराम् – ग० । – महादुःखार्तानामिति पाठे महान्ति दुःखानि महादुःखानि, तैरार्तानाम्, महादुःखार्तानाम् ।

जो अयोध्या पीठ में निवास करने वाली, रक्त होने से प्रेम से आर्द्र होने वाली हैं, महारौद्री एवं भीमा हैं, महान् दु:खी जनों के लिए दर्शन में कमनीय लगने वाली, सौ सौ सूर्यों के समान अगाध प्रेम से परिपूर्ण, नेत्रों को शीतल करने वाली, भाव से परिपूर्ण, सती सीता स्वरूपा तथा इन्द्र धनुष युक्त नवीन घटाओं वाली - ऐसी श्री भगवती लाकिनी का ब्रह्मदेव ध्यान करते हैं ॥ २८ ॥

सुधाब्धेराह्लादप्रकरणसुरां सौरभकरां
क्रियारूपां योग्यां [१]भुवमणिपूरप्रकृतिगाम् ।
गुरोः स्थानोद्योगां समनदहनां[२] शीतलवरां
त्रितत्त्वां तत्त्वज्ञां स(श)मरहरशक्तिं[३] भजति कः ॥ २९ ॥

सुधा समुद्र को आह्लादित करने के लिए सुरा के समान, सुगन्धित किरणों वाली, क्रियास्वरूपा, योग्या, भुवन की मणि से परिपूर्ण, प्रकृति में निवास करने वाली, गुरुगणों के स्थानों से युक्त, समन अर्थात् अहङ्कार सहित पाप को अथवा शमन काल को भी जला देने वाली, अतएव अत्यन्त शीतल, त्रितत्त्वा, तत्त्वज्ञान से परिपूर्ण तथा समर में शत्रु शक्ति का नाश करने वाली ऐसी भगवती का ब्रह्मदेव पूजन करते हैं ॥ २९ ॥

विकाराकाराङ्गीं[४] तरुणरविकोटिश्रियमिमां
कुलाधारां सारां परमरसधारां [५]जयवराम् ।
कृपाच्छन्नाकामां[६] परमरसभाण्डेषु शुभदां
भजेदिन्द्रां[७] रुद्रां शशिमुखकराह्लादनिकराम् ॥ ३० ॥

प्रकृति के विकारों के आकार वाली, मध्याह्नकालीन करोड़ों सूर्यों के समान शोभा वाली, मूलाधार स्वरूपा, सारा, परमरस धारा, जयदात्री, कृपा सें आच्छन्न, कामरहित एवं परब्रह्म-रस चाहने वाले भक्तों का कल्याण करने वाली, इन्द्राणी, रुद्राणी, अपने चन्द्रमुख से समस्त जगत् को आह्लादित करने वाली जो हैं - ऐसी भगवती की सेवा करनी चाहिए ॥ ३० ॥

रसाब्धौ विश्रान्तिं कुपितजनशान्तिं सकरुणां
त्रिलोकज्ञानस्थां मदननिलयां योगनिकराम् ।
मणिद्वीपच्छायां दशदलकलां केवलभवां
भवानीं [८]रुद्राणीं [९]वरदमणिपूरे भजति कः ॥ ३१ ॥

रस के समुद्र में विश्राम करने वाली, क्रोधी जनों को शान्ति प्रदान करने वाली, करुणा

---

१. सतां शीतामिति – ग० ।
२. दमनां शीतलवरामिति – ग० ।
३. मुक्तिमिति – क० । – हरतीति हरः, हृधातोः पचाद्यच् – प्रत्ययः । समरस्य कामादिसंग्रामस्य हरो विजेता, तस्य शक्तिम्, भवानीम् ।
४. धाराङ्गीम् – ग० ।
५. जयवरामिति – ग० ।
६. मग्नामिति – ग० ।
७. भवोदभद्रामाद्यां – ग० ।
८. रौद्राणीमिति – क० ।
९. वसदेति – क० ।

से परिपूर्ण, त्रिलोकज्ञान में रहने वाली, काम कला, योगिनी, मणिद्वीप को आच्छादित करने वाली, दश दल रूप कला वाली, एकमात्र ब्रह्मस्वरूपा, भवानी, रुद्राणीरूपा भगवती की सेवा वरद मणिपूर में ब्रह्मदेव करते हैं ॥ ३१ ॥

**कृपाब्धौ[१] किं किं किमनुगतसुतां मौलिनमितां**
**शिवाङ्कां [२]मूलस्थां सकलमणिपूरस्थिरभवाम् ।**
**हिरण्याक्षीं तक्षां[३] क्षयकरणरश्मिच्छविशतां**
**विनोदीं पञ्चास्यप्रियगुणधरां[४] भावयति कः ॥ ३२ ॥**

कृपा के समुद्र में 'किं किं किं', इस मन्त्र से उत्पन्न होने वाली, भक्तों द्वारा शिरों से नमस्कृत, शिव के अङ्क में निवास करने वाली, मूलाधार में स्थित रहने वाली, समस्त मणिपूर में स्थिर रूप से रहने वाली, हिरण्याक्षी, पापों को काटने वाली (तक्षा), संहार के लिए सैकड़ों रश्मि से संयुक्त छवि वाली, विनोदिनी, पंचमुख सदाशिव की प्रिया, गुणधारिणी श्री भगवती का ब्रह्मदेव ध्यान करते हैं ॥ ३२ ॥

**महापद्माख्यां सकलधनदानाकुलचलां**
**चलानन्दोद्रेक-प्रचयरससिन्धूद्भवहृदि[५] ।**
**हृदानन्दो ध्यायेत् सकलगुणदात्रीं[६] सुखमयीं**
**कलां सूक्ष्मात्यन्तां तिमिरदहनां कोटिधनदाम् ॥ ३३ ॥**

महापद्म नाम से पुकारी जाने वाली, सम्पूर्ण धन देने के लिए आकुल एवं चञ्चल, सुखमयी, सकल गुणदात्री, कला, सूक्ष्मा, अत्यन्त अन्धकार का नाश करने वाली, करोड़ों कुबेर के समान श्री भगवती का निश्चल आनन्द के उद्रेक से एकत्रित रस सिन्धु स्वरूप हृदय में, हृदय से आनन्दित हुआ भक्त ध्यान करे ॥ ३३ ॥

**दशकं यः पठेन्नित्यं श्रीविद्यां सुखदायिनीम्[७] ।**
**ध्यात्वा हृदयपद्माधो निर्मलात्मा सदा पठेत् ॥ ३४ ॥**

सुखदायिनी श्रीविद्या का हृदय पद्म के नीचे ध्यान कर निर्मलात्मा साधक उक्त दश श्लोकों (द्र०. ४४. २५-३४) का सर्वदा पाठ करे ॥ ३४ ॥

---

१. कृपासारां दीर्घामनुगत—मौननमितमिति — ग० । — कृपाब्धौ इति पाठे षष्ठीतत्पुरुषः ।
२. शिवाय्यां चनाद्यां ... ... स्थल — ग० । — शिवाङ्कामिति पाठे शिवस्याङ्कः चिह्नं यस्यां सा ।
३. सूक्ष्मां ...... राश्यां स्थितिकरीम्, रश्मिमविशतीम् — ग० ।
४. पञ्च आस्यानि मुखानि यस्य सः पञ्चास्यः, तस्य ते प्रिया गुणाः तेजस्वितादयः, तेषां धराम् । धराशब्दः पचाद्यजन्तः ।
५. सिन्धुरसहृदा मिति — क० ।
६. धात्रीमिति — क० ।
७. दायित्रीमिति — ग० ।

मणिपूरस्थितं देवं रुद्रं पश्यति योगिराट् ।
रुद्राणीसहितं शम्भुं दृष्ट्वा मुक्तो भवेत् क्षणात् ॥ ३५ ॥

ऐसा योगिराज मणिपूर में स्थित रुद्राणी सहित रुद्र का दर्शन कर लेता है, फिर रुद्राणी सहित रुद्र का दर्शन कर क्षण भर में मुक्त हो जाता है ॥ ३५ ॥

जीवन्मुक्तः स एवात्मा योगिनीवल्लभो भवेत् ।
योगात्मा परमात्मा च स हि साक्षादनीश्वरः ॥ ३६ ॥
स भित्वा मणि[1]पूराब्धिं निर्मलं ज्योतिरुज्ज्वलम् ।
शम्भोरीश्वरयोगज्ञक्रियानाथस्य [2] श्रीपतेः ॥ ३७ ॥
निकटे याति देव्याश्च स्थाने योगी न संशयः ॥ ३८ ॥

॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे मणिपूरभेदने भैरवीभैरवसंवादे त्रितत्त्वलाकिनीशक्तिस्तवनं नाम चतुश्चत्वारिंशत्तमः पटलः ॥ ४४ ॥



वह साधक जीवन्मुक्त हो जाता है, स्वयं योगिनीवल्लभ बन जाता है, वही योगात्मा एवं परमात्मा होता है और अन्ततः उसका कोई ईश्वर नहीं होता । ऐसा योगी साधक मणिपूर नामक महासमुद्र का भेदन कर, निर्मल उज्ज्वल ज्योति प्राप्त कर, योग के ज्ञाता ईश्वर क्रियानाथ श्री पति शम्भु के तथा श्री महादेवी के धाम में जाकर उनके निकट निवास करता है, इसमें संशय नहीं ॥ ३६-३८ ॥

**॥ श्री रुद्रयामल तन्त्र के उत्तरतन्त्र में महातन्त्रोद्दीपन में सिद्धमन्त्र प्रकरण में षट्चक्र प्रकाश में मणिपूर भेदन में भैरवभैरवीसंवाद में त्रितत्त्व-लाकिनी-शक्तिस्तवन नामक चौवालिसवें पटल की डा० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ ४४ ॥**



---

१. मणिपूरस्याधिः समुद्रः, तमिति यावत् ।
२. ईश्वरस्य योगः, तं जानातीति ईश्वरयोगज्ञः तस्य याः क्रियाः, तासां नाथः, तस्येति यावत् ।

# अथ पञ्चचत्वारिंशः पटलः

**आनन्दभैरवी उवाच**

**अथ कालक्रमं वक्ष्ये यत्काले योगिराड् भवेत् ।**
**तत्कालं प्राणवायूनां निलयं सूक्ष्मसञ्चयम् ॥ १ ॥**

**आनन्दभैरवी ने कहा**—हे महाभैरव ! अब इसके बाद उस कालक्रम को कहती हूँ, जिस काल में साधक योगिराज बन जाता है । वह काल सूक्ष्म सञ्चय युक्त वायु का स्थान है ॥ १ ॥

**पुनः पुनः सञ्चयने दृढो भवति संवशी[1] ।**
**क्रियायां सञ्चरन्त्येव योगिन्यो योगमातरः ॥ २ ॥**

जितेन्द्रिय साधक बारम्बार वायु के सञ्चयन से दृढ़ हो जाता है क्योंकि वायुसञ्चयन रूप क्रिया में योगमातायें योगिनियाँ सञ्चरण करती हैं ॥ २ ॥

**यत्काले[2] यत्प्रकर्त्तव्यं भानुरूप्यकुलार्णव ।**
**काले काले वशो याति परमात्मा निरामयः ॥ ३ ॥**

हे सूर्यस्वरूप, हे कुलार्णव ! जिस काल में जो करना चाहिए, अब उसे सुनिए क्योंकि निरामय परमात्मा उचित काल में क्रिया करने से वश में हो जाता है ॥ ३ ॥

**विना प्रयोगसारेण विना जाप्येन शङ्कर ।**
**कः सिद्धो जायते ज्ञानी योगी भवति कुत्र वा ॥ ४ ॥**
**अभ्यासमन्त्रयोगेन शनैर्योगी भवेन्नरः ।**
**प्रभाते ज्ञानशौचञ्च कुण्डलीभावनादिकम् ॥ ५ ॥**
**तन्मध्ये चापि संस्कुर्याद् योगं [3]पञ्चामरादिकम् ।**
**ततो मन्त्रस्नानकार्यं मस्तके जलसेचनम् ॥ ६ ॥**

हे शङ्कर ! बिना प्रयोग सार ( अनुष्ठान ) के तथा बिना जप के कौन साधक सिद्ध हो सकता है ? और कौन ज्ञानी या योगी बना है ? मनुष्य धीरे धीरे अभ्यास एवं मन्त्र के प्रयोग से योगी बनता है, सर्वप्रथम साधक प्रभातकाल में ज्ञान की बात सोंचे, फिर शौचादि नित्यक्रिया करे, तदनन्तर कुण्डली का ध्यान करे । उसी के बीच पञ्चामरादि योग का भी संस्कार करे । इसके बाद मस्तक पर जल छिड़कते हुए मन्त्र स्नान का कार्य करे ॥ ४-६ ॥

---

१. साधकः — ख० । २. तत्काले तत्कर्तव्यमिति तन्निरूपा — ग० ।
३. पञ्चासवादिकम् — ग० । पञ्चामरादिकम् — पञ्च अमरा आदयो यस्य तत्तथा ।
अन्यपाठेऽपि इयमेव समासस्थितिः ।

सन्ध्यावन्दन कार्यञ्च ततः कुर्यात् पृथक् पृथक् ।
तत उत्थाय सद्भूमौ[1] [2]शुद्धकोमलजासने ॥ ७ ॥
उपविश्य सदाभ्यासी शुद्धकायासनञ्चरेत् ।
तत्कार्यसमये नाथ ध्यानं चैतन्यमेव च ॥ ८ ॥
कुण्डलिन्याः[3] सदा कुर्यात् तन्मध्ये जपमेव च ।
आसनं सुन्दरं कुर्यात् [4]सव्यापसव्यभेदतः ॥ ९ ॥

इसके बाद पृथक् पृथक् सन्ध्यावन्दन का कार्य करे । फिर वहाँ से उठकर शुद्ध और कोमल वस्तुओं से निर्मित आसन पर बैठकर सदाभ्यासी पुरुष, शुद्ध शरीर से आसन की क्रिया करे । हे नाथ ! उसी कार्य के समय कुण्डली का ध्यान तथा उसे चैतन्य भी करे और उसी बीच जप कार्य भी करे । सव्य और अपसव्य भेद ( बायें एवं दाहिने के क्रम ) से सुन्दर आसन करे ॥ ७-९ ॥

आसनादिकमाकृत्य शेषे [5]सुस्थासनं चरेत् ।
सुस्थासनं समाकृत्य चोर्ध्वपद्मासनं चरेत् ॥ १० ॥
मस्तकाधः केशमध्ये हस्तौ दत्त्वा मनुं जपेत् ।

आसन करने के बाद अन्त में पद्मासन करे । पुनः पद्मासन के बाद ऊर्ध्वपद्मासन करे । फिर मस्तक से नीचे केशों के मध्य में दोनों हाथ रखकर मन्त्र जप करे ॥ १०-११ ॥

चतुरशीतित्रिगुणमासनं भञ्जनं तथा ॥ ११ ॥
प्रत्यासनं क्रमेणैव एतेषां द्विगुणं पुनः ।
एतेषामासनादीनां वक्तव्या [6]सङ्ख्यका पुनः ॥ १२ ॥

इस प्रकार चौरासी का तिगुना आसन ( २५२ ) तथा उसका भञ्जन ( तोड़ना आदि) कहा गया है । पुनः इन प्रत्येक आसनों की ( सव्यापसव्य ) भेद से द्विगुनी भी संख्या कही गई है । अतः इन आसनों की संख्या पुनः ( ५०४ ) कहनी चाहिए ॥ ११-१२ ॥

अष्टाङ्गसाधने नाथ वक्तव्यं सर्वमासनम् ।
प्राणायामं षोडशकमथ[7]वा द्वादशादिकम् ॥ १३ ॥

---

१. सम्भूभाविति — ग० ।
२. ऊर्ध्व — ग० ।— शुद्धं कोमलजमासनं तस्मिन् इत्यर्थः ।
३. कुण्डलिन्यामिति — ग० ।
४. सव्यासव्यविभेदतः — ग० ।
५. चोर्द्धर्वे पद्मासनमिति — ग० ।
६. वक्तव्याः संख्यकाः पुनः — ख० ।
आसनं यः करोत्येव वज्रकायः स एव हि । समाप्य चासनं सर्वं बद्धपद्मासने विशेत् ॥
चिबुकं वक्षसि श्रीमान् दत्त्वा कालीं विभावयेत् । ततः पद्मासनं कृत्वा प्राणायामं मुद्राचरेत् ॥
— क० पुस्तके अधिकः, किन्तु मूले देयः।
७. तथा वा—ग० ।

हे नाथ ! अष्टाङ्ग योग साधन के प्रकरण में हम सभी आसनों को कहेंगे । इसके बाद सोलह अथवा बारह प्राणायाम करना चाहिए ॥ १३ ॥

स्वकर्णागोचरं कृत्वा पिबेद्वायुं सदा बुधः ।
ततः समाप्य तत्कार्यं मन्त्रयोगं समभ्यसेत् ॥ १४ ॥
समाप्य मन्त्रयोगं च प्राणायामत्रयं चरेत् ।
तत उत्थाय नद्यादिं[1] विलोक्य चान्तरात्मनि ॥ १५ ॥
स्नानं कृत्वा महायोगी मानसादिक्रमेण[2] तु ।
तत्रैव मानसं जापं समाप्य जपमेव च ॥ १६ ॥
एकप्राणायामं[3] कुर्यात् कृत्वा तीरे विशेत् सुधीः ।
पिधाय पीतवसनं धर्माधर्मं विचिन्तयेत् ॥ १७ ॥

बुद्धिमान् साधक अपने कानों को सुनाते हुए वायु का आकर्षण कर पान करे । इसके बाद उस कार्य को समाप्त कर मन्त्र योग का अभ्यास करे । तदनन्तर मन्त्र योग समाप्त कर तीन प्राणायाम करे । फिर वहाँ से उठकर महायोगी नद्यादि देखकर अथवा स्वयं अन्तरात्मा में मानसादि स्नान कर मानस जप करे । फिर मानस जप समाप्त कर लेने के पश्चात् एक प्राणायाम और करे । फिर विद्वान् साधक पीताम्बर पहन कर तीर पर बैठ जावे और धर्माधर्म का विचार करे ॥ १४-१७ ॥

ततः सन्ध्यावन्दनं च कृत्वा पूजाविधिं चरेत् ।
सर्वत्र कुम्भकं कृत्वा भावयित्त्वा पुनः पुनः ॥ १८ ॥
मणिपूरे महापीठे ध्यात्वा देवीं कुलेश्वरीम् ।
पूजयित्त्वा विधानेन प्राणायामं पुनश्चरेत् ॥ १९ ॥

इसके बाद सन्ध्यावन्दन कर पूजा का कार्य सम्पन्न करे । पूजाविधि में सर्वत्र कुम्भक कर मणिपूर महापीठ में कुलेश्वरी ( कुण्डलिनी अथवा लाकिनी ) देवी का बारम्बार ध्यान करते हुए विधानपूर्वक उनकी पूजा करे, फिर पुनः प्राणायाम करे ॥ १८-१९ ॥

ततः कुर्यात् साधकेन्द्रो विधिना कवचस्तवम् ।
सर्वत्र प्राणसंयोगाद् योगी भवति निश्चितम् ॥ २० ॥
अथवा कालजालानां वारणाय महर्षिभिः[4] ।
एतत् कार्यं समाकुर्याद् [5]योगनिर्णयसिद्धये ॥ २१ ॥

---

१. मद्यादि — ग० । — नदी आदिर्यस्य तत् ।

२. मानसमादिर्यस्य तेन क्रमेणेत्यर्थः ।

३. एकं प्राणायामकार्यमिति — ग० । — अयं पाठः समीचीनः प्रतीयते ।

४. महाऋषिः — ग० ।

५. योगिना योगसिद्धये — क० । — योगनिर्णयसिद्धये इत्यपि पाठः समीचीन एव, अर्थसमन्वयात् ।

विना योगप्रसादेन (न) कालः[१] संवशो भवेत् ।
कालेन योगमाप्नोति[२] योगध्यानं स्वकालकम् ॥ २२ ॥

इसके बाद साधकेन्द्र विधिपूर्वक कवच तथा स्तोत्रों का पाठ करे । सर्वत्र अपने प्राणवायु का संयोग ( संयमन ) करने से वह निश्चित ही योगी बन जाता है, अथवा काल से होने वाले कष्टों के कारण के लिए महर्षियों को यह कार्य ( कवच एवं स्तोत्र पाठ ) करना चाहिए, अथवा योग में ( संदिग्ध स्थानों की ) निर्णय सिद्धि के लिए मनुष्यों को यह कार्य करना चाहिए । योगसिद्धि के बिना काल वश में नहीं होता और वह योग काल प्राप्त होने पर सिद्ध होता है, इस प्रकार योग एवं ध्यान अपने अपने काल में होता है ॥ २०-२२ ॥

योगाधीनं परं ब्रह्म योगाधीनं परन्तपः ।
यौगाधीना सर्वसिद्धिस्तस्माद् योगं समाश्रयेत् ॥ २३ ॥
योगेन ज्ञानमाप्नोति ज्ञानान्मोक्षमवाप्नुयात् ।
तत्क्रमं शृणु भूचक्रे [३]सर्वसिद्ध्यादिसाधनम् ॥ २४ ॥

परब्रह्म योग के अधीन है, बहुत बड़ी तपस्या भी योगाधीन है सारी सिद्धियाँ योगाधीन हैं, इसलिए योग का आश्रय अवश्य ग्रहण करना चाहिए । योग से ज्ञान प्राप्त होता है और ज्ञान से मोक्ष की प्राप्ति होती है । हे भैरव ! इसी क्रम में सभी सिद्धियों आदि के साधन को भूचक्र में सुनिए ॥ २३-२४ ॥

सिद्धिसाधनमन्त्रेण योगी भवति भूपतिः ।
शीघ्रं राजा भवेद् योगी शीघ्रं योगी भवेद् यतिः ॥ २५ ॥
शीघ्रं योगी भवेद्विप्रो यदि स्वधर्ममाश्रयेत् ।
स्वधर्मनिष्ठताज्ञानं [४]सज्ज्ञानं परमात्मनः ॥ २६ ॥
तज्ज्ञानेन लभेद् योगं योगाधीनाश्च सिद्धयः ।
सिद्ध्यधीनं परं ब्रह्म तस्माद् योगं समाश्रयेत् ॥ २७ ॥
स्वधर्मनिष्ठताज्ञानं स तज्ज्ञानं[५] समाश्रयेत् ।
योगयोगाद्भवेन्मोक्षो मम तन्त्रार्थनिर्णयः ॥ २८ ॥

सिद्धि के साधनभूत मन्त्र से योगी भी राजा बन जाता है तथा राजा भी शीघ्र योगी बन जाता है किं बहुना उस ( मन्त्रयोग ) से योगी भी शीघ्र यति बन जाता है । यदि ब्राह्मण अपने धर्म का आश्रय ग्रहण करे तो वह भी शीघ्र ही योगी बन जाता है, क्योंकि अपने धर्म में

---

१. न कालस्य वशो भवेदिति – ग० । २. योगाधीनमिति – ग० ।
३. सर्वसिद्धादिसाधनमिति – क० । – सर्वासां सिद्धीनामादि प्रमुखं साधनमित्यर्थः । अथवा, सर्वाः सिद्धय आदिभूता यासां सिद्धीनां तासां साधनम् । अन्यपदार्थभूताः सिद्धयो दिव्या इत्यर्थः ।
४. स्वज्ञानमिति – ग० । – स्वस्यात्मनो ज्ञानं स्वज्ञानम् । अथवा सतः परमात्मनो ज्ञानं सज्ज्ञानम् ।
५. सत्यज्ञानमिति – क० ।

निष्ठा का ज्ञान होना ही परमात्मा का ज्ञान है । परमात्मा का ज्ञान होने पर ही योग प्राप्त होता है और समस्त सिद्धियाँ योग के अधीन हैं तथा परब्रह्म परमात्मा सिद्धियों के आधीन है । इसलिए योग का आश्रय अवश्य ग्रहण करना चाहिए । अतः साधक को स्वधर्मनिष्ठता एवं उस धर्म के ज्ञान का आश्रय अवश्य ग्रहण करना चाहिए । हे भैरव ! योग से युक्त होने पर ही मोक्ष संभव है - ऐसा हमारे तन्त्रों के अर्थ का आशय है ॥ २५-२८ ॥

**योगी ब्रह्मा मुरारिश्च[1] तथा योगी महेश्वरः ।**
**तथा योगी महाकालः[2] कौलो योगी न संशयः ॥ २९ ॥**

ब्रह्मा तथा मुरारी योगी हैं, इतना ही नहीं महेश्वर भी योगी हैं, महाकाल भी योगी हैं, कौल ( शक्ति का उपासक ) भी योगी हैं इसमें संशय नहीं ॥ २९ ॥

**मणिपूरभेदने तु यत्नं कुर्यात् सदा बुधः ।**
**यदि चेन्मणिपूरस्थदेवताभेदको भवेत् ॥ ३० ॥**
**सर्वक्षणं सुखी भूत्वा चिरं तिष्ठति निश्चितम् ।**

बुद्धिमान् साधक को मणिपूर चक्र के भेदन का सर्वदा प्रयत्न करना चाहिए । यदि वह मणिपूरस्थ देवता के भेदन में सफल हो जाता है, तो वह सदैव सुखी रहकर दीर्घकाल पर्यन्त जीवित रहता है ॥ ३०-३१ ॥

**महाप्रभं सुन्दरञ्च महामोहनिघातनम् ॥ ३१ ॥**
**मेघाभं विद्युताभं च पूर्णतेजोमयं परम् ।**
**मणिभिर्ग्रथितं पद्मं मणीनां पूरमेव च ॥ ३२ ॥**
**सूर्यकान्तै[3]श्चन्द्रकान्तैर्वह्निकान्तैर्महोज्ज्वलैः ।**
**इत्यादिमणिभिः सर्वं परं कान्तिगुणोदयम् ॥ ३३ ॥**
**निविडे जलदे मेघे कोटिविद्युत्प्रभा यथा ।**
**तत्प्रकारं भावनीयं सिद्धानां ज्ञानगोचरम् ॥ ३४ ॥**

मणिपूर चक्र अत्यन्त प्रकाशयुक्त है, मनोहर है महामोह को नष्ट करने वाला है, मेघ के समान शीतल तथा विद्युत् के समान जाज्वल्यमान है । पूर्णतेज से परिपूर्ण है, वहाँ के पद्म ( विभिन्न ) मणियों से गूँथे ( पूर ) गए हैं ऐसा है वह मणि से पूर अर्थात् पूर्ण । सूर्यकान्त, चन्द्रकान्त, वह्निकान्त आदि महाप्रकाश करने वाली मणियों से सारा स्थान देदीप्यमान है । जहाँ से सब प्रकार की कान्ति एवं गुणों का उदय हुआ है । अत्यन्त काले घने बादल में जैसे करोड़ों बिजलियों का प्रकाश होता है, उस प्रकार से 'मणिपूर' का ध्यान करना चाहिए । इस प्रकार का मणिपूर सिद्धों के ज्ञान का गोचर हैं ॥ ३१-३४ ॥

---

१. ब्रह्माद्यवादी चेति — ग० ।

२. भवेत्काल — ग० ।

३. सूर्यकान्तचन्द्रकान्तवह्निकान्तमहोज्ज्वलः इत्यादि मणिभिः सर्व पूर्व कान्तिगुणो दश—कं० ।

**अत्यन्तसूक्ष्ममार्गस्थं[१] नित्यस्थानं हि योगिनाम् ।**
**मणिभिः शोभितं पद्मं मणिपूरं तथोच्यते ॥ ३५ ॥**
**दशकोमलपत्रैश्च समायुक्तं मनोहरम् ।**
**डादिफान्तवर्णयुक्तं स्थिरविद्युत्समाकुलम् ॥ ३६ ॥**

योगियों के द्वारा अत्यन्त सूक्ष्म मार्ग से वहाँ जाया जाता है । वही योगियों का नित्य निवास है । वहाँ के पद्म मणियों से शोभित हैं, इसलिए उसे 'मणिपूर' कहते हैं । वह मणिपूर दश कमल के पत्रों से युक्त एवं मनोहर है । 'ड' से लेकर 'फ' पर्यन्त दश वर्ण उस कमल पत्र पर रहते हैं । वह स्थिर विद्युत् से परिपूर्ण हैं ॥ ३५-३६ ॥

**शिवेनाधिष्ठितं पद्मं विश्वालोकनकारकम् ।**
**आदौ वर्णरूपकाणां[२] ध्यानं कुर्यात् [३]स्वधामयः॥ ३७ ॥**
**महापद्मे मनो दत्वा निर्मलं परिभावयेत् ।**
**डादिफान्ताक्षराणां[४] च ध्यानाज्ज्ञानस्थिरो भवेत् ॥ ३८ ॥**
**मनोधैर्यमुपागम्य[५] दिव्यभक्तिं समालभेत् ।**
**वर्णध्यानं प्रवक्ष्यामि शृणुष्व परमेश्वर ॥ ३९ ॥**

वे पद्म सदाशिव से अधिष्ठित हैं और सारे विश्व को आलोकित करते रहते हैं । साधक को चाहिए कि वह सर्वप्रथम उन वर्णों का ध्यान स्वधामय करे । महापद्म में मन लगाकर उन वर्णों के निर्मल रूप का ध्यान करना चाहिए । 'ड' से लेकर 'फ' पर्यन्त दश वर्णों के ध्यान से ज्ञान में स्थिरता आता है । मन में धैर्य आता है, जिससे साधक दिव्यभक्ति प्राप्त कर लेता है । हे परमेश्वर ! अब उन वर्णों का ध्यान कहती हूँ । उसे सुनिए ॥ ३७-३९ ॥

**यद्विभाव्यामरो[६] भूत्वा चिरं तिष्ठति मानवः ।**
**महाधैर्यक्रियां कुर्याद् वायुपानं शनैः शनैः ॥ ४० ॥**
**यत्र यत्र मनो याति तन्मयस्तत्क्षणाद् भवेत् ।**
**पूर्वादिदलमारभ्य ध्यानं कुर्यात् पृथग् पृथक् ॥ ४१ ॥**

जिसका ध्यान कर मनुष्य अमर होकर दीर्घकाल पर्यन्त ( इस लोक में ) जीवित रहता है । इस क्रिया को बहुत धीरज के साथ करे और धीरे धीरे वायुपान करे । जहाँ जहाँ मन जावे, तत्क्षण तन्मय हो जावे । प्रथमतः, पूर्वदल से आरम्भ कर पृथक् पृथक् वर्णों का इस प्रकार ध्यान करना चाहिए ॥ ४०-४१ ॥

---

१. अत्यन्तं सूक्ष्मो यो मार्गस्तत्र तिष्ठतीति भावः ।
२. वल्गुरूपकाणामिति – क० । ३. सुधाशयः – क० ।
४. डादिभान्ताक्षराणां च – ख० ।– ड आदिर्येषां तानि डादीनि, भ अन्तो येषां तानि भान्तानि, द्वयोरनयोरितरेतरयोगद्वन्द्वं कृत्वा अक्षरशब्देन सह पुनः कर्मधारयः ।
५. मनोश्चर्यमिति – ग० । ६. यदि भाव्यामर – ग० ।

डां डां डां डाकिनीन्ता डमरुवररतां[१] तारिणींताररूपां
डिं डिं डिं डामरस्थां डमरुडमगृहे डङ्कडिंकिं[२] मनुस्थाम् ।
डं डं डं डामरेशीं डिमिडिमिडिमिगध्वाननिर्माणडोरां
डों डों डों डाकडं डः प्रडुम[३] डमुडां दाडिमामाश्रयामि ॥ ४२ ॥

**'ड' वर्ण का ध्यान**—डां डां डां डमरु धारण करने वाली डाकिनी ताररूपा तारिणी डिं डिं डिं डामर में स्थित रहने वाली डमरु डम गृह में डङ्क डिकि मन्त्र में रहने वाली, डं डं डं डामरेशी डिमि डिमि डिमि में रहने वाले डोरा शब्द का निर्माण करने वाली, डों डों डों डाक डं डः प्रडुम डमुडा दाडिमा का मैं आश्रय लेता हूँ ॥ ४२ ॥

ढां ढां ढां गाढढक्कां वरनिकरकरां बाढमाबाढमन्त्रां
ढिं ढिं ढिं नागरूपां भज भज विमलानन्दचित्तप्रकाशः[४] ।
श्रीं ढें ढं वज्रढूं खा खवट मटमरं स्वाहया टोंटबीजां
ढों ढों ढों ढक्कढक्कः प्रियढुन्नकरुणाकामिनीं लाकिनीं ताम् ॥ ४३ ॥

**'ढ' वर्ण का ध्यान**—स्वच्छ आनन्द से अपने चित्त को प्रकाशित करते हुए हे भक्त ! आप ढां ढां ढां गाढ ढक्का ( नगाड़ा ), हाथ में वर समूह को धारण करने वाली, बाढमाबाढ मन्त्ररूप ढिं ढिं ढिं बीज मन्त्र वाली नागरूपा का भजन कीजिए । श्रीं ढें ढं वज्र ढूं खा ख ब ट मटमरं स्वाहया टोंटबीजा ढों ढों ढों ढक्कढक्कः प्रियढुन करुणा कामिनी उस लाकिनी का भजन कीजिए ॥ ४३ ॥

बाणस्थित्यसंस्थां रुचिनकरवणाकारणा वाणवाणिं
वीणां वेणूत्सवाढ्यां मणिगुणकरुणां नं खटीजप्रवीणम् ।
वेणुस्थानां सुमानां मणिमयपवमामन्त्रमालाविलोलां
सिन्दूरारक्तवर्णां तरुणघननवीनामलां भावयामि ॥ ४४ ॥

**'ण' वर्ण का ध्यान**—मैं बाण में स्थित रहने वाली, अन्यत्र न रहने वाली, रूचिनकर वणाकारणा, वाणपाणि, वीणा और वेणु के उत्सव से नित्य समृद्धा, मणिगुण वाली, करुणा नं खटीज प्रवीणं वेणुस्थाना का, सुमाना, मणिमय पवमामन्त्र माला, विलोला सिन्दूर से आरक्त वर्ण वाली देवी, तरुण बादल के समान नवीना एवं सर्वथा स्वच्छ वर्णा लाकिनी का ध्यान करता हूँ ॥ ४४ ॥

तारां तारकमञ्जालविमलां तालादिसिद्धिप्रदां
ताडङ्कामति[५]तेजसा मुनिमनोयोगं वहन्तीं पराम् ।

---

१. करामिति – ख० ।
२. डंकडोंमिगां मनुस्थमिति – क० ।
३. प्रडुममुडुमडुंमिति – क० ।
४. विमल आनन्दो यस्मिन्, तादृशे चित्ते प्रकाशः, परमात्मप्रकाश एव सम्भाव्यते ।
५. ता।तङ्क – ग० ।

तां[1] तारां तुलसीं तुलां तनुतटां[2] तर्कोद्भवां तान्त्रिकां
श्रीसूर्यायुततेजसीं भज मनः श्रीमातरं तापसीम् ॥ ४५ ॥

**'त' का ध्यान**—तारा, तारकमञ्जजाल, विमला एवं तालादि से सिद्धि प्रदान करने वाली, अत्यन्त तेजस्विनी, ताडङ्कवाली मुनियों के मनोयोग का वहन करने वाली, पराशक्ति तां, तारां, तुलसीं, तुला, तनुतटा, तर्कोद्भवा, तान्त्रिका, अयुतसूर्य के समान तेजस्विनी तपस्विनी श्री ( विद्या ) माता का, हे मन ! भजन कीजिए ॥ ४५ ॥

व्यग्रस्थां[3] स्थानसुस्थां स्थितिपथपथिकां थार्णकूटां थमालीं
गाथां योगां विपथां थमिति थमिति थं वह्निजायां स्थिरासाम् ।
चन्द्रज्योत्स्नास्थलस्थां[4] स्थिरपदमथनामुज्ज्वलामासनस्थां
स्थैर्यां स्थैर्याभिरामां प्रणव नव[5] सुधां चन्द्रवर्णां भजामि ॥ ४६ ॥

**'थ' वर्ण का ध्यान**—व्यग्रों के चित्त में रहने वाली, स्थानसुस्था, स्थितिपथपथिका, थार्णकूटा, थमाली, गाथा, योगा, विपथा, थं थं थं वह्निजाया, स्थिरासा, चन्द्रज्योत्स्ना, स्थलस्था, स्थिरपदमथना, उज्ज्वला, आसनस्था स्थैर्या, स्थैर्याभिरामा एवं प्रणव रूप नव सुधा वाली, चन्द्रवर्णा, श्री ( विद्या ) माता का, हे मन ! भजन कीजिए ॥ ४६ ॥

द्रां द्रीं द्रूं दीर्घदंष्ट्रां दशनभयकरां साट्टहासां कुलेशीं
दोषच्छत्रापहन्त्रीं दिवितरणदशा[6]दायिनीमादरस्थाम् ।
श्लिष्टाह्लादप्रदीप्तामखिलधनपदां दीपनीं भावयामि ॥ ४७ ॥

**'द' वर्ण का ध्यान**—द्रां द्रीं द्रूं दीर्घ दाँतों वाली, अपने दाँतों से भय उत्पन्न करने वाली, अट्टहास करने वाली, कुल मार्ग की स्वामिनी, दोषरूप छत्र को हटाने वाली, आकाश में भी तैरने की शक्ति प्रदान करने वाली, आदर से स्थित रहने वाली, शिव के श्लेषयुक्त आह्लाद से प्रदीप्त, सम्पूर्ण धन पर अधिकार करने वाली और दीपनी भगवती लाकिनी का ध्यान करता हूँ ॥ ४७ ॥

**विमर्श**—द वर्ण के श्लोक में एक चरण की कमी है । शोधित्सुओं को इसे दूसरे तन्त्रों से लेकर लिखना चाहिए ॥ ४७ ॥

---

१. तातङ्कानिभतेजसामिति – ख० ।
२. तातीयामिति – ख० ।
३. व्यग्रस्थं स्थानसुस्थं .......... थमानीं – व्यग्रस्थामिति पाठे तु व्यग्रेषु जनेषु सन्तोषार्थं शान्त्यर्थं च तिष्ठति या सा, ताम्। गाथां गाथां विमोथामिति – ख० योथामिति – ग०।
४. स्थिरास्थामिति – क० ।
५. प्रणवनवसुजामिति ग०, सृजामिति क० ।
६. दोषैर्वृत्रापहन्ती दिविदरणादशा दायिनी मादस्थाम् । शिष्टाह्लादप्रदीप्तामखिलधन-मदनमिति – ग० ।– दिवि स्वर्गे तरणस्य या दशा, तां ददाति, तच्छीलाम् ।

धर्मां[१] श्रीं ध्यानशिक्षां धरणिधरधरां धूमधूमावतीं तां
धूस्तूराकारवक्त्रां कुवलयधरणीं धारयन्तीं कराब्जम् ।
विद्युन्मध्यार्ककोटिज्वलनधरसुधां कोकिलाक्षीं सुसूक्ष्मां
ध्यात्वा ह्लादैकसिद्धिं धरणिधननिधिं सिद्धिविद्यां भजामि ॥ ४८ ॥

**'ध' वर्ण का ध्यान**—धर्मस्वरूपा महाश्री ध्यानशिक्षा धरणी को धारण करने वाले शेष को भी धारण करने वाली, धूम्र से धूमवती, धतूर के आकार के मुखों वाली, अपने कर कमलों में दो कमल को धारण करने वाली, विद्युत् के मध्य में करोड़ों सूर्यों के समान अग्नि धारण करने वाली, सुधा, कोकिलाक्षी और सुसूक्ष्मा देवी का ध्यान कर आह्लाद की एकमात्र सिद्धि एवं धरणी रूप धन की निधान तथा सिद्धविद्या का मैं भजन करता हूँ ॥ ४८ ॥

नित्यां नित्यपरायणां त्रिनयनां बन्धूकपुष्पोज्ज्वलां
कोट्यर्कायुतसंस्थिरां नवनवां हस्तद्वयाम्भोरुहाम् ।
नानालक्षणधारणामलविधुश्रीकोटिरश्मिस्थितां
सानन्दां नगनन्दिनीं त्रिगुणगां नं नं प्रभां भावये[२] ॥ ४९ ॥

**'न' वर्ण का ध्यान**—नित्या, नित्य परायणा, त्रिनयना, बन्धूक पुष्प के समान उज्ज्वल वर्ण वाली, करोड़ों सूर्यायुत के प्रकाश से संस्थिता, नव नवा, अपने दोनों हाथों में कमल धारण करने वाली, अनेक लक्षणों को धारण करने वाली, शुभ्र वर्ण वाले चन्द्रमा के करोड़ों श्री रश्मि से संस्थित, सानन्दा त्रिगुणात्मिका, नं नं वर्ण में रहने वाली, प्रभा वाली नगनन्दिनी भगवती का मैं ध्यान करता हूँ ॥ ४९ ॥

प्रीतिं प्रेममयीं [३]परात्परतरां प्रेष्ठप्रभापूरितां
पूर्णां पूर्णगुणोपरि प्रलपनां[४] मांसप्रियां पञ्चमाम् ।
व्यापारोपनिपातकापलपना[५] पानाय पीयूषपां
चित्तं प्रापय[६] पीतकान्तवसनां पौराणिकीं पार्वतीम् ॥ ५० ॥

**'प' वर्ण का ध्यान**—प्रीति, प्रेममयी पर से भी परतरा, श्रेष्ठ प्रभापूरिता, पूर्णा, पूर्णगुणोपरि प्रलपना, मांसप्रिया, पञ्चमा, व्यापारोपनिपातकापलपना, पान के लिए पीयूष पीने वाली, स्वच्छ पीताम्बर धारिणी, पौराणिकी पार्वती में हे भक्तों अपने चित्त को लगाओं ॥ ५० ॥

स्फें स्फें[७] समें फणिवाहनां फणफणां[८] फुल्लारविन्दाननां

---

१. धक्षां श्रीध्यानसिद्धां .... वस्त्रां .... ध्यानाह्लादादि सिद्धि धवनघत......इति—ग०।
२. भावयेदिति – ग० ।
३. परां तपसियाञ्चालामिति – क० । – परात् = परापेक्षया परतराम्, उत्कृष्टतराम्
४. प्रपलनामिति – ग० ।
५. कापललपा पानापपीयूषपामिति – ग० ।
६. चित्तप्रापकपीव ..... पौराणिकामिति – ग० ।
७. स्फामिति – क० ।
८. फलफलामिति – क० ।

फेरूणां वरघोरनादविकटास्फालप्रफुल्लेन्मुखीम् ।
फं फं फं फणिकङ्कणां फणिति फं[1] मन्त्रैकसिद्धेः[2] फलां
भक्त्या ध्यानमहं करोमि नियतं वाञ्छाफलप्राप्तये[3] ॥ ५१ ॥

**'फ' वर्ण का ध्यान**—स्फें स्फें समें फणिवाहना, फणफणा, फुल्लारविन्दानना शृङ्गालों के ऊँचे घोरनाद के विकट आस्फालन में प्रफुल्ल मुख वाली देवी फं फं फं फणियों का कङ्कण धारण करने वाली, फणिति फं मन्त्र से एकमात्र सिद्धि का फल देने वाली, ऐसी फ स्वरूपा भगवती का मैं अपनी वाञ्छा फल की प्राप्ति के लिए भक्तिपूर्वक ध्यान करता हूँ ॥ ५१ ॥

विद्युताङ्कारमध्ये तु बिजलीरक्तवर्णकान् ।
एवं ध्यात्वाखिलान् वर्णान्रक्तविद्युद्[4]दलोद्यताम् ॥ ५२ ॥
सदा ध्यायेत् कुण्डलिनीं कर्णिकामध्यगामिनीम्[5] ।
वरहस्तां[6]विशालाक्षीं चन्द्रावयवलक्षणाम् ॥ ५३ ॥
चारुचन्दनदिग्धाङ्गीं[7] फणिहारविभूषणाम् ।
द्विभुजां कोटिकिरणां भालसिन्दूरशोभिताम् ॥ ५४ ॥
त्रिनेत्रां कालरूपस्थां लाकिनीं लयकारिणीम् ।
सिद्धिमार्गसाधनाय ध्यायेद् वर्णान् दश क्रमात्[8] ॥ ५५ ॥

विद्युत् के आकार के मध्य में बिजली के समान रक्त वर्ण वाले एवं रक्तवर्ण वाले विद्युद्दलों के ऊपर रहने वाले, 'डं' से लेकर 'फ' पर्यन्त सभी दश वर्णों का ध्यान कर साधक कर्णिका के मध्य में रहने वाली कुण्डलिनी का सदा ध्यान करे । फिर हाथ में वर मुद्रा धारण करने वाली विशालाक्षी, चन्द्रमा के सदृश आह्लादकारक कान्ति वाली मनोहर चन्दन से अनुलिप्त, सर्पों के हार का आभूषण धारण करने वाली, द्विभुज, कोटिकिरणा, मस्तक में स्थित सिन्दूर से सुशोभित, त्रिनेत्रा, कालरूपस्था, लयकारिणी, लाकिनी का ध्यान करे तथा सिद्धिमार्ग के साधन के लिए दश वर्णों का उपर्युक्त श्लोकों से ध्यान करे ॥ ५२-५५ ॥

चतुर्भुजां षड्भुजां च अष्टहस्तां [9]परापराम् ।
दुर्गां दशभुजां देवीं निजवाहनसुस्थिताम्[10] ॥ ५६ ॥

---

१. फणामिति – ग० । २. फणामिति – ग० ।
३. वाञ्छानामिच्छानां फलानि इच्छाविषयप्रयोजनानि, तेषां प्राप्तये।
४. विद्युद्गणो .... ख० ।
५. काशिनीमिति – ग० । – कार्णकामध्यगामिनीमिति पाठे कर्णिकानां मध्ये गच्छति तच्छीला ताम् ।
६. बहुहस्तामिति – ग०। ७. दीर्घाङ्गीमिति – ग० ।
८. दशच्छदे – क० । ९. प्रभा – ख० ।
१०. सुप्रियामिति – ग० ।

सर्वास्त्रधारिणीं सर्वां [१]हस्तद्वादशशोभिताम् ।
चतुर्दशभुजां रौद्रीं तथा षोडशपालिनीम् ॥ ५७ ॥
अष्टादशभुजां श्यामां हस्तविंशतिधारिणीम् ।
एवं ध्यात्वा पूजयित्वा रुद्राणीस्तोत्रमापठेत् ॥ ५८ ॥

॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धिमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे वर्णध्यानकथनं नाम [२] पञ्चचत्वारिंशत्तम: पटल: ॥४५ ॥



प्रत्येक वर्णों पर द्विभुजा पहले ( द्र० ४५ . ५४ ) कह आये हैं -

१. चतुर्भुजा, २. षड्भुजा, ३. परापरा, ४. अष्टभुजा, ५. अपने वाहन पर स्थित दशभुजा दुर्गा, ६. सर्वास्त्रधारिणी सर्वभूता द्वादशभुजा से शोभिता, ७. चतुर्दशभुजा, ८. षोडशभुजा, ९. अष्टादशभुजा, १०. विंशति भुजाधारिणी श्यामा रौद्री लाकिनी देवी का ध्यान करे । इस प्रकार लाकिनी देवी का ध्यान कर पूजन कर रुद्राणी स्तोत्र का पाठ करे ॥ ५६-५८ ॥

**॥ श्री रुद्रयामल तन्त्र के उत्तर तन्त्र में महातन्त्रोद्दीपन में सिद्धमन्त्र प्रकरण में षट्चक्र प्रकाश में भैरवीभैरवसंवाद में वर्ण ध्यान नामक पैंतालिसवें पटल की डा० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ ४५ ॥**



---

१. दशहस्तास्त्र — ग० ।— हस्ताद्वादशशोभितामिति पाठे द्वादशहस्तै: शोभितामिति विग्रह: । तत्र द्वादशपदस्य परनिपात: । पूर्वनिपातस्यानित्यत्वात् । 'समुद्राभ्राद्घ' इति सूत्रं तत्र प्रमाणम् ।

२. षट्चत्त्वारिंशत्तम: — ख० ।